# श्री आचार्य विजयः



गोस्वामी हरिकृष्ण शास्त्री

श्रीरामाय नमः

# श्री - आचार्य - विजयः

## [ भारते-पञ्चमं-गद्यकाव्यम् ]

लेखकः

शीघ्रकविः कविचूडामणिः गद्यपद्यसम्राट्

न्यायोपाध्यायः शुद्धाद्वैत वेदान्ताचार्यः

साहित्याचार्यः गोस्वामी हरिकृष्ण

शास्त्री महापुरा, जयपुर

राजस्थान, भारत

प्रकाशकः

सद्ग्रंथ प्रचार केन्द्र, अयोध्या

मूल्य : २०

● श्री-आचार्य-विजयः

● लेखकः—गोस्वामी हरिकृष्ण शास्त्री
महापुरा, जयपुर, राजस्थान, भारत



● प्रकाशकः—सद्ग्रंथ प्रचार केन्द्र
जानकीघाट, अयोध्या

● प्रथम संस्करण : १९७७

● मूल्यम् : २० रुपये

● पुस्तक प्राप्ति स्थान
सद्ग्रंथ प्रचार केन्द्र,
जानकीघाट, अयोध्या

साहित्यकार प्रेस,
भदैनी, वाराणसी

गोस्वामी हरिकृष्ण शास्त्री
महापुरा, जयपुर, राजस्थान

● मुद्रकः साहित्यकार प्रेस,
भदैनी, वाराणसी



रत्नैप्रेङ्खितशातकुम्भकलिते सिंहासने संस्थितं
दण्डं दक्षकरे वहन्तमपरं जानौकरं विभ्रतम्
द्विव्यद्वादशशोभिताङ्गतिलकं सिद्धा[illegible]नोल्लासिनं
रामानन्दगुरुं नमामि भगवद्रामस्वरूपं परम् ॥

## "ग्रन्थकर्तृ-विनिवेदनन्त्विदम्"

आस्मकीने संस्कृतवाङ्मये जगति बहूनि समुपलभ्यन्ते पद्यकाव्यानि तु, तत्-तल्लेखकानां भव्यकलाकलापसुभगानि, तेषां यशश्चन्द्रचन्द्रिकाऽवदातीकृत-भुवनवलयानि, महामहाकविकुलकलितानि सुललितानि ।

किन्तुन तावन्मात्राणि सरससरलसुमधुर मधुमयानि तथाविधानि सुहृद्यानि गद्यकाव्यानि । सन्त्यपि परिगणितान्येव त्रीणि चत्वारि वा यथा "कथासरित सागरः एकऽ । द्वितीया च श्रीवाणभट्टस्य सुयशः सुधांशुमरीचि - निचयाऽऽनन्दितसतल सहृदय-हृदयपटलविलासितसाम्राज्यवैभवा, युवकजनमानसोन्मादिनी सुकृतिजनपुण्यपरिपाकोप-भोग्या रसिकजनोपयोग्याऽतीवमधुरमधुमदा कादम्बरी कादम्बकुसुमसौरभाऽकर्षितसुर-सिकविद्वन्मधुपपटलाजरीजृम्भते भुवनविभवा । तृतीया च सुकविसुकृतिमणिमण्डितऽव पंडितोत्तंस सुदण्डिविरचिता,समुद्दण्ड ताण्डवायित सुविदित दशराजकुमारचरितचित्रित-कथाकदम्बविलसिता सिताशतगुणितमधुरा, नानाविधकलाकौशलोल्लासम्भृता प्रसृताऽवनिपटले "दशकुमारचरिताऽभिधा" ललिताकृतिः । तदनन्तरञ्चैकं शताव-धानाद्यनेक पाण्डित्यप्रकाशनपाटवपटीयो घण्टाशतकाद्यनेकोपाधिसमलङ्कृत-श्रीमदम्बिकादत्तव्यासीय वैदुष्यंविकासकं 'श्रीशिवराजविजय"-नामकं चतुर्थं गद्यकाव्यं वर्वति साम्प्रतम् । नातः परं किमप्यपरं विलोक्यते सुललितप्रबन्धायितं गद्यकाव्यम् । इत्थमेकदा प्रासरद् विद्वत्परिषदि विचारसञ्चारः ।

किन्तु-"नाधुनाऽपि वसुन्धरा निर्वीरे" ति जनजगति प्रसिद्धमात्राणक-मनुसृत्य-सहृदय सुहृद्वर समीरणसमुल्लासितः सुलभसुरसरस्वतीसमाराधनोपलब्धघ-नायितोद्गारि समुत्तुङ्गतरलतमतरङ्गरङ्गः समुद्गतोऽभून्नितान्त प्रशान्तमानसे लेखक-स्याऽपि । किमस्तिदुर्लभतमम् भगवद्दत्त प्रतिभाद्युद्युमबन्धु प्रभापुञ्जपिञ्जरित पुण्परिपा-कोल्लासित वाग्विलासानां,-सर्वदापद्य-गद्य-रचन विस्तारित - विलक्षणप्रकाशानां, विज्ञानज्ञान-विजृम्भित - विविधभावनोद्भासिताऽभिनवनिर्मितकाव्य चम्पू-नाटको-पन्यास-कथाकल्पतानां, जनताऽभिनन्दितानां, विपश्चिदभिश्रिमानाम् ।

अत एवाऽऽभ्यन्तरप्रेरणयोद्दीपितां गद्यकाव्यरचनांचिकीर्षुः "शिवराज-विजय" मेव्(ा)ऽऽधुनिक गद्यकाव्यरत्नमक्षिलक्ष्यीकृत्य श्रीमद्रामानन्दाचार्यं - चरित्र-चित्रणे विहितप्रतिभोपयोगः पंक्तिलेखकोऽयं "आचार्य-विजयः" इति नाम्ना तदीय पवित्र-चरित्रचित्रितं तत्साम्प्रदायिकसकल सिद्धान्तसमलङ्कृतम्, स्थाने-स्थाने च श्रुति-स्मृति-गीतोपनिषद् - पुराणादि प्रमाणोपबृंहितम् वैश्वानरविद्याप्रभृत्यनेक वैदिक-विज्ञान-विलसितं, द्विजानां यज्ञोपवीत-( ब्रह्मसूत्र ) माहात्म्य-सिद्धान्ताद्यनेकोपासनादि-रहस्यप्रकाशनविध्वंसिताऽन्तर्ध्वान्तनिवह सर्वदाश्रीमद्राघवेन्द्रचरणशरणमेवाभयप्रदं समासादनीयं जीवात्मनःश्रेयस्करंसुकरं भक्तिवर्त्मेति प्रतिपादकं नवीनं पञ्चमं गद्य-काव्यं समुट्टङ्कितवान् । निवेदयत च साञ्जलि—यत्—

"सिद्धान्तप्रतिपादने क्वचिदहो दृश्येत काचित् त्रुटिः
किंवा व्याकरणाऽञ्चिता विकृति रप्यक्षीक्षिता स्यात् क्वचित् ।
कारुण्य स्रुति निर्झराः सहृदया विद्वद्वरेण्याः समे
बालं मुग्धमवेक्ष्य, बालमणिति मत्वाऽनुगृह्णन्तुमाम् ।१ ॥

लेखकः—
गोस्वामी हरिकृष्ण शास्त्री
ग्राम—महापुरा, जयपुर, राजस्थान, भारत



राजस्थानवसुन्धराधरलसत्पाण्डित्यपाथोनिधिः
सद्यः काव्यकलाकलापकलने सिद्धः प्रसिद्धः कविः ।
तैलङ्गद्विजवंशलब्धजननः सद्गद्य-पद्याधिराट्
गोस्वामी हरिकृष्ण आशुकविताकल्लोलिनीकेलिकृत् ॥

॥ श्री हरिः ॥

# धन्यवादाञ्जलयः

एतावतापि धन्यवादाऽभिनन्दनप्रकाशनमन्तरा नहि विश्रान्तिमुपैति चञ्चच्चटुलचारु चञ्चु समञ्चिताऽपि वञ्चिता स्थातुं वा समुत्सहते सुलेखिनीलेखिनीति ।

ग्रन्थस्याऽस्य प्रकाशने प्रदत्तसहयोगानां सतां महतां गीर्वाणवाणीविलासरसिकानां संस्कृतानुरागिणां समस्त-अयोध्यानिवासिनां विद्वद्धुरीणानां श्रीमद्रामानन्दाचार्याऽऽचरित - भक्तिपारावारपारीणानां, सर्वथा विरक्तानामपि स्वकीयाचार्यसेवाऽनुरक्तानां, सुरसरस्वती-समाराधनाऽऽसक्तानां, भगद्भक्तानां, द्रव्यसाहाय्यदाने विमुक्तहस्तानां, सहस्रावधिमुद्रादातृप्रशस्तानां, न विस्मर्य्यंते, समुदार दानधाराऽऽसारसमुन्मेषिताऽभिनवग्रन्थलेखनव्यसनिलेखकप्रवर्द्धितसमुत्साहोल्लासः ।

इत्थमेतावद्द्रव्यदानविलासवैभवानां तथाविधोदारचरितानां सतां, महतां श्रद्धालुमहात्मनां कृते तु केवलमिमेव विनिवेदयामि यत् :—

आचार्याऽङ्घ्रिनिषेवणे दृढतर श्रद्धा समृद्धाऽऽदरैः
सद्यो हृद्य सुगद्यमुद्रणकृते मुद्रासहस्र - प्रदैः ।
यैर्वा पञ्चशतैः शतद्वयमितैः किंवा शतोल्लासिभिः
साहाय्यं विहितं, करोमि सकलान् सद्धन्यवादाञ्चितान् ॥

स्वाचार्यं प्रति दर्शयद्भिरनिशं श्रद्धां गुणग्राहितां,
यैर्वाऽप्यर्धशतेन, पञ्च-दशभिः साहाय्यमुद्भावितम् ।
सोत्साहं पदधारणेन समितौ कार्यं समसादितं
भक्त्या तानभिनन्दयामि भगवद्रूपान् स्वधन्योक्तिभिः ॥

येऽयोध्यापुरवासिनः सहृदयाः सन्तो महान्तः समे
स्वाचार्याः किमु सम्प्रदायमहिताः श्रद्धालवः साधवः ।
सोत्साहं समुदं स्वशक्तिभरितं द्रव्यात्मकं व्यादधुः
साहाय्यं, ह्यभिनन्दयामि निखिलान् सद्धन्यवादाऽयुतैः ॥

समेषामाभारनतकन्धरः

लेखकः—गोस्वामी हरिकृष्ण शास्त्री

महापुरा, जयपुर, राजस्थान, भारत

# विषयाऽनुक्रमणिका

—

# मङ्गलाचरणम्

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।।–श्वे०अ० ६ मंत्र १८ ।

ब्रह्माणं व्यदधात् पुरा स्ववदनाद्वेदांश्च यः प्राहिणोत्
तस्मै तं विभुमात्मबुद्धिजनकं सर्गक्रियोद्भासकम् ।।
सत्यं ज्ञानमनन्तमेकपरमानन्दस्वरूपात्मकं,
कर्तारं जगतां नमामि निखिलब्रह्माण्डसन्नायकम् ।। १ ।।

अनन्तकोटिब्रह्माण्डनायकविनिर्मिते समन्ततः प्रसृतविततविस्तारसारेऽस्मिन् धरणिमण्डले सततसुकृतसमासादनैकलभ्ये, भव्ये, सभ्यजनाधारे धर्मप्रसारासारे साकारेऽस्मिन् भूतलतलस्थिताशेषतीर्थमौलिमण्डनायिते परितो विराजमान-मानोन्नत-धर्मप्राणभूतपरिपूतसाधुसमाजे तीर्थराजे प्रयागनाम्नि पुण्यधाम्नि निवसति स्म वर्णाश्रमविभागानुसारं स्व-स्व-सदाचारपरिपालनपटीयान् विविधजातीयो मनुज-समाजः । यत्र च प्रवहति प्रबलपातकपुञ्जप्रक्षालनपटीयसी मञ्जुलामोघमाहात्म्य-महीयसी मन्दमन्दाऽमन्दतरङ्गरङ्गाञ्चिताऽप्यनङ्गारिजटाजूटविहारिणी सकलजन-सन्तारिणी पापापहारिणी भगवती भागीरथी । चिरविरहविधुराप्यतिमधुरा निज सहोदरीसमागमसुखलाभातुरा सत्वरावेगप्रसारा प्रबलतमधारावाहिनी सकलजन-वन्दिनी कलिन्दगिरिनन्दिनी सहसा समागत्य प्रेमोद्रेकवशंवदेव प्रियभगिन्याः सुरसरितः शरीरे प्रविष्टेव सुसङ्गता समभूत् । सस्नेहं द्वयोः भगिन्योः समागमोल्लाससौख्यं दिदृक्षुरिव प्रच्छन्नशरीरा स्रोतस्वती सरस्वती चापि सुसम्मिलिता संवृत्तेति त्रिभुवन-ललामभूतानां रमणीनां त्रिविधमल्लिकादिकुसुमैः समुद्ग्रथिता मञ्जुला वेणीव सम्मिलिता त्रिवेणी विराजते वसुधातले ।

तत्रैव दुर्दम्यदानवायितानां दयादानादिधर्मविमुखानां दीनदमनादिदुष्कर्म-कुटिलानां, अविरलपाखण्डताण्डवप्रसारितनिजकुटिलकुचक्रचक्रवालनिपतितमुग्धजन-सर्वस्वापहारिणां कुकर्मकारिणां कृते, कुप्रवृत्तिचेष्टानिचयचूर्णनचातुरीचणानां मध्ये चक्रपाणिरिव करुणाकूपारः अत्याचारापहारणः सुभगकर्मकारणीभूतसुचरित-प्रसारणो दीनैकरक्षणसक्षणः कान्यकुब्जद्विजवंशावतंसो विद्वज्जनमानसहंसो रुचिर-कर्मकलापाऽऽलापतोषितनिजपोषितवर्गे विधातुरद्भुतसर्गे इवापवर्गमार्गाऽनुचरितः परितः प्रवृत्तदुरितदुष्कृतिकदनः पुण्यसदनो नाम पण्डितप्रवरः प्रतिवसति स्म ।

स हि पुण्यसदनः पुण्यसदन एव यथानाम तथागुण आसीत् । तस्य च प्रखर-प्रतापतापसन्तप्ततमीचराऽधर्मवादान्धकारसुखितचक्षुषः चर्मचटकायमानचरिताः विपक्ष-विधर्मकर्मोलूकनिचयाः तदीयविज्ञानसदाचारसन्तानज्ञानज्योतिर्विलुप्तवीक्षणाः न तत्सम्मुखमीक्षितुं प्रभवो भवन्तो निजान्धकारगुहान्तर्निलीना एव समयं यापयन्तो दृग्गोचराः प्रभवन्ति स्म ।

अनेकशः अकारणाऽऽविष्कृतवैरदारुणा वारुणासवपानमत्ताः विधर्माचरण-परम्परापरायणाः सर्वदोपद्रवव्यसनिनो निशि निशि निशाचराऽऽचारा दुराचाराः सहृत्य समाक्रान्तुं, विविधरासायनिकविस्फोटकपदार्थोद्भूतप्रचण्डानलज्वालामाला-वलीढं भव्यभवनं भस्मसात् कर्तुकामा अपि तदीयप्रासादे प्रवेष्टुमनसोऽपि न पार-यन्ति स्म स्वस्वव्यापारे साफल्यावाप्तये किमपि कर्तुम् ।

सर्वत्र साक्षाद्भगवद्-भगवद्भक्तभगवदीयसच्चरितसुधासेकसिञ्चितसदाचारिवर्ग-परिराजितप्रदेशे प्रतिनगरं प्रतिग्रामं प्रत्येकपावनप्रान्ते नासीत् किमपि एतादृशं निर्मलं निरुपद्रवं निरातङ्कं निष्पङ्कं निष्कम्पं निराबाधं स्थानम्—यद् दुर्वृत्तदुर्दान्तदुरा-चारिदुर्जनदुर्व्यसनिदुश्चेष्टाऽऽखेटलक्ष्यं नाऽभवत् । न वा तादृशं पवित्रतमं स्थान-मपि लोचनगोचरीभवति स्म क्वचन, यन्न म्लेच्छाऽऽक्रान्तं न वा भयङ्कराऽत्याचार-कुकृत्यकलुषितकलेवरं भवेत् । किं बहुना प्रत्यहं धर्मधुरन्धरा धार्मिकाः धूयन्ते स्म । गावो गृयन्ते स्म । धनिनो धूर्यन्ते स्म । दार्यन्ते स्म देवतायतनानि । पण्डिताः पीड्यन्ते स्म । पाल्यन्ते स्म च पाषण्डाः । लाल्यन्ते स्म लुण्टाकाः लूयन्ते स्म ललिता-लताः । लुठ्यन्ते स्म ललनाः । पात्यन्ते स्म च पतिपरायणाः । बाध्यन्ते स्म विद्वांसो विवेकिनश्च । तथापि परमपावनस्य पण्डितपुण्यसदनस्य प्रबलप्रतापपुंजप्रभावेण प्रयागराजस्थाः पुण्यप्रदेशाः पवित्राणि च देवनायतनानि निराबाधान्येवासन् । तौशील्यसाद्गुण्यसम्पद्भिः सम्पन्नं सदाचारपरायणं पुण्यसदनं दर्शं दर्शं तत्प्रति-वेशिनः सर्वे एव सुकृतिनः सुभद्राचाराः समजायन्त । यादृशः सकलसाद्गुण्य-

ग्न्यतमः पुण्यसदन आसीत् तदनुरूपा सुस्वरूपा सुलभसुभगसद्गुणकूपारा, पारावारानुकारिगाम्भीर्योदारा धर्मदारा कर्मवाङ्मनःपवित्रा प्रशस्तसच्चरित्रा, समस्तमहिलासमाजशुभाऽऽदर्शभूता, परिपूताचारा सर्वथाऽनुकूला धर्ममूलाधारा, अनुकरणीयशीला सुशीलादेवीति तस्य कुलश्रेयसी प्रेयसी आसीत्। सा हि सर्वात्मना सुखिनः सम्पन्नस्य परिवारस्य गृहस्वामिन्यपि सततं सामान्यवेषविन्यासप्रिया पूर्णा तपस्विनीव सौशील्यसद्भावनाभाविताऽन्तःकरणा, नितान्तमेकान्तपतिसेवापरायण-त्वेनैवोतप्रोतजीवना जीवनाधारामेव भगवत्सेवां धर्माचरणमेव श्रेयस्करं मन्वाना श्रीसीतासनाथरघुनाथपादपङ्कजपरागानुरागरसिका गुरुशास्त्रवाक्यादौ परमश्रद्धा-विश्वासधारिणी सर्वदादयितमनोहारिणी शमदमदयादानादिदत्तचित्ता, वित्तानुरूप-परिजनमनस्तोषिणी सेवककुलपोषिणी प्रशस्तगुणगणगरिष्ठा वरिष्ठा सुभगशेमुषी विदुषी निजकुलक्रमागतमर्यादापालनप्रवीणा, सर्वदासमर्हणीयश्वशुरश्वश्रूसेवन-संरता ह्यविरताऽखिलकौटुम्बिकजनानुपालनप्रीणनपरमघना, प्रतिसवनाऽऽचरित-श्रीसीतारामचरणारविन्दोपासना, वासनाविरहितभक्तिभूषणा, विगलितसकलदूषणा, त्रिदशरमणीव शीला सुशीलादेवी दीव्यति स्म दैनंदिनं देवसदन इव पुण्यसदन-सदने।

पण्डितपुण्यसदनोऽपि तादृशीमशेषतरुणीजनाऽलभ्यगुणगणगौरवां साक्षा-दरुन्धतीमिव सन्ततस्वामिसेवापरायणां पतिव्रतां मैत्रेयीमिव निरस्तमायामोहपटलां ब्रह्मज्ञानगभीराम् धीरां धरणिमिव राजमानाम् विद्योत्तमामिव, विज्जिकामिव वैदु-ष्यपूरपूरितान्तरालाम् हंसीमिव परिसेवितधर्मपङ्कजाम् चारुशीलां सुशीलां धर्मपत्नीं लब्ध्वा स्वात्मानं यथा परमसौभाग्यशालिनं मनुते स्म, तथैव साऽपि तादृशं परमभागवतं श्रद्धालुम् तपोमूर्तिम् विद्वांसम् ज्ञानविज्ञानविशिष्टम् सर्वतोवरिष्ठम् अरुन्धतीव वशिष्ठम् प्रसादसुमुखी क्षीरासगरकन्यका प्रशान्तमनोहरं नारायणमिव, सकलजनवन्दिनी गिरिराजनन्दिनी तपःसमाधिनिष्ठं वृषभध्वजमिव पातिव्रत्य-प्रभापुञ्जप्रकाशितप्रदेशा तेजोविशेषा प्रभा प्रभाकरमिव, सौशील्यादिसद्गुणोल्लासित-परमाह्लादविकासिनी चन्द्रिका चन्द्रमसमिव अभिन्नाऽऽकारां चेतोवृत्तिं दधानम् शरीरद्वयेऽप्येकाश्रिताविकरणं सर्वथाचेतोहरणम् विहितात्मवरणम् तमेव नितान्तं प्रियकान्तं प्राप्य प्रत्यहं मोदमानाच्छायेवानुसरन्ती तमनुरञ्जयति स्म। तयोः परस्परं देवशक्त्योरिव विजयश्रियोरिव गुण-कीर्त्योरिव धर्माऽपूर्वयोरिव सुमनःसुरभ्योरिव सितामधुरतयोरिव सर्पिःस्निग्धतयोरिव दम्पत्योः सुदृढानुरागपुरःसरं सर्वदैवैक्य-मनुबभूवे जनैः।

द्विजराज इव नक्षत्रमालापरिमण्डितपरिवेषः सविशेषः श्रीद्विजराजः पुण्यसदनः सकलमनुजोपभोगसामग्रीसमलङ्कृतविशालाऽट्टालिकाऽनेकपरिराजितप्रकामप्रास्तृतप्रकोष्ठसमन्वितप्रासादे निवसन्नपि कुटीरचरमेवात्मानममन्यत् । स हि तात्कालिकेषु घनकुबेरेष्वपि लब्धप्रतिष्ठोऽपि साधारणमानवजीवनानुकूलदैनिकक्रियाकलापः सकलदीनजनदैन्यापहारणायैव सञ्चितधननिवहो नैवात्मोपभोगाय, असहायक्षुधापीडितानां क्षुधोपशमनायैव कृतविविधान्नसंग्रहो न केवलमात्मनः पोषाय अपि तु परितोपाय प्राणिनाम् । समासादितबहुविधवस्त्रविशेषसम्भृतविशिष्टप्रकोष्ठोऽपि सामान्यधौतोत्तरीयमात्रविहितरतिः निखिलवसनविहीनमानवसेवायै पर्य्यकल्पयन्नैवात्मोपयोगाय वसनजातम् । अहर्निशं गोब्राह्मणपरिचर्यापरायणान्तःकरणः समारब्धाहरहो यज्ञयागाऽनुष्ठानपरम्परोपासनासमाराधिताऽनूचाननिचयः; अनारतप्रचारितातिथिसेवामिषेण अविरतमनुजोपकारकरणमेव द्रव्यस्य सदुपयोगं चिन्तयन् समाराधयामास सकलसाधारणमानवसेवन-सवनम् । पुण्यसदनस्य प्रतिभापाटवमपि धर्मोपदेशशास्त्राऽऽलाप-शौचाचारज्ञानप्रचारप्रसारायैव प्रतिभाति स्म, न केवलं पाषण्डघटाटोपाडम्बराय । वैदिकक्रियाकलापकलनायैव वैदुष्योद्भासनम् मानवसमाजे च बन्धुत्वभावनाजागरणमिव विज्ञानज्योतिः परिस्फुरणम्, प्रतिरथ्यम्, प्रतिसौधम्, प्रतिजनम्, परस्परस्नेहसद्भावनया सहैव समागतसमापत्तिकाले सहसैवैकीभूय मिथः सहयोगप्रदानेन सङ्घटनभावनया वर्तितव्यम् न द्वेषबुद्ध्येति तदुपदेशः प्रवचनादयो वा प्रसरन्ति स्म । "यतो धर्मस्ततो जयः" इत्येव सर्वदोद्घोषमाकोणकोणम् प्रसारयति स्म स महानुभावः ।

सर्वतः प्रथमं दृढात्मज्ञानस्योपयोगस्त्वनेन स्वात्मन्येव विहितः यतो हि "भूमौ धनानि कोषे एव सुरक्षितानि, तत्रैव स्थितानि स्थास्यन्ति नहि योजयित्रा सह यास्यन्ति, पशवोऽपि गोष्ठे एव स्थिता नहि स्वामिना सह यास्यन्ति, प्राणप्रियाभार्याऽपि स्वसौख्यानि स्मरन्ती रुदन्ती क्रोशन्ती गृहद्वारं यावदेव प्रस्थास्यति नाधिकम्, स्वजनबन्धुबान्धवाः मित्राण्यपि श्मशानपर्यन्तं शवशरीरेण सह यास्यन्ति, किम्बहुना स्वकीयमिदं शरीरमपि यदाश्रित्य सकलं यावज्जीवनं सौख्यं सम्पादितवान् यच्च वस्त्रालंकारपरिमण्डितं विधाय नानाविधसौख्यसामग्रीभिः स्वर्गीयसौख्यमन्वभावयम् तदपि चिताधिष्ठानमात्रपर्य्यन्तं सहचरं भविष्यति नाधिकम्, तत ऊर्ध्वं तु केवलं केशवस्मरणपुरःसरं सुकृतचरिताऽपूर्वसहित सप्तदशतत्त्वात्मकं सूक्ष्मसुकृतदेहमाश्रित्यैवैकाकी यास्यामीति व्यर्थ एवैतेषां व्यामोहः इति । अतः सर्वदा नित्यश्रीनित्यमङ्गलस्य सर्वदानन्दमयस्य श्रीसाकेतविहारिणश्चरणारविन्दमकरन्दरसाऽञ्चि-

ताऽगणिताऽऽनन्दमयी निरुपमाभक्तिरेववरीयसी सर्वतो गरीयसी-यस्यास्ति मुक्तिरपि-दासीति। एतदतिरिक्तं सकलं लौकिकसुखसमाकलनं क्षुद्रम् अस्थिरम् मृगमरीचिकेव चाकचक्यमात्रम् व्यामोहकमेव न क्षेमङ्करमिति।

अत उभावेव दम्पती (श्रीपुण्यसदनः सुशीला चेति) सर्वदैव सदाचारपरायणौ जप-दानयज्ञयागादिविविधधार्मिकव्यापारेषु निरन्तरमविच्छिन्नप्रवाहेण निरतौ स्वकीयद्रव्यस्य च विकलाङ्गानाथासहायजनसंरक्षणाऽऽजीवनसामग्रीसमाहरणाद्युपकरणसाधनादावुपयोगं चक्रतुः। स्वयं निरभिमानमयं सामान्यजनकल्पं स्वल्पसाधनमयमप्यनल्पमिवाऽकल्पयताम् स्वकीयजीवनचर्याचयम्।

तदानीं तयोः स्वर्गीयस्पृह्यां दिनचर्यां विलोक्य जनाः साश्चर्यं विलोकयन्तो न श्रद्धधिरे यत् सरस्वतीलक्ष्म्योर्विद्यते सर्वदा वैयधिकरण्यमिति, उभे एव (लक्ष्मी सरस्वती च) परस्परमहमहमिकया एकत्रैव पुण्यसदने पुण्यसदनवदने "मुखमण्डनावच्छेदेन, कोषावच्छेदेन वा, लक्ष्मी (द्रव्यरूपा कान्तिभूता च) तथैव जिह्वावच्छेदेन सरस्वतीति" सस्नेहं सोल्लासम् सानुरागम् प्रतिवसतः स्म।

विद्यमानेऽपि दासदासीपरिजने स्वहस्ताभ्यामेव सकलं लौकिकालौकिकाचरणम्-भगवदाराधनोपयुक्त-सेवासामग्रीसमासादनव्यापारविशेषं कलयन्तौ भगवच्चरणाविन्दमकरन्दास्वादोन्माद-विस्मृतलौकिकश्चिन्तानिचयौ, भजन-पूजन-स्मरण-श्रवण-स्तवन-पठन-पाठन-कथाश्रवण-श्रावणसमासक्तौ भगवति सीतासनाथे श्रीरघुनाथे निरन्तरानुरक्तौ स्वकीयादर्शौदार्यगुणविस्तारितशुभ्रयशश्चन्द्रचन्द्रिकावदातीकृतदिगन्तौ सन्तावतिष्ठताम्।

—o—

# द्वितीयः परिच्छेदः

सर्वात्मना सकलसाध्यसम्पन्ने सुलभसौख्योपकरणे परिमण्डितानेकविघसुकृताभरणे स्वभवने समनुष्ठितदैनंदिनप्रतिसवनसवने निवसतोः सतोस्तयोर्भगवदाराघने तदनुकम्पासाघने संलग्नयोः यदा कदाचनोपलब्ध - भगवद्दर्शनानन्दनिमग्नयोः परमार्थसमासादने संरतयोः वयसस्त्रिभागा व्यतीयुः ।

किन्त्वद्यावधि नालभेताम् दम्पती स्व-स्वचेतसि मनोरथानुकूलं स्ववंशवर्घनमूलम् । विद्यमानेष्वपि विविधरत्ननिचयेषु नापश्यताम् कृतप्रयत्नावपि स्वगृहरत्नम् । वहुविघदीपकदीपिकाप्रकाशवलिभिः परितः प्रकाशमानेऽपि सुखसवने कुलदीपकाऽभावे घनान्धकारप्रसारानवलोकितवस्तुजाते भवने, निखिलपरिंजनाऽऽलापसमुज्जृम्भितकलकलमयेऽपि शून्यमिवान्वभवताम् समस्तं निवासभवनम् । तयोः सुशीला स्वान्ते नितान्तं खिद्यमानाऽपि नादर्शयत् कदाचन स्वखेदकारणं क्वचन मालिन्यमपि मनसि विद्यमानं निगूहमाना सर्वदा प्रसन्नवदनैव प्रतिभाति स्म । यतो हि स्वप्राणप्रियस्य चेतसि तज्जन्या चिन्ता कदाचन न चेतयेत, इति । परञ्च ततोऽधिकविचा विवेकविदोऽपि विज्ञानबहुलस्याऽपि वारं वारं तनयाभावोद्भूताभावना सरलहृदस्यापि पुण्यसदनस्य चेतसि समुद्भूताऽभवत् । स च सततं सन्तानचिन्तासन्तानसंतप्तमानसः समुल्लासितामपि स्वर्गीयसौख्यसमां सम्पत्समृद्धिसौभाग्यवृद्धिमपि घनान्धकारे शृङ्गारसज्जासुषमामिव, न चेतोहारिणीममन्यत । यथाहि समन्ततो नृत्यन् विस्तारितचन्द्रकनिचयपरिमण्डलः प्रकटितलास्यकलः, कलापी, प्रसादप्रमोदपूरिताऽन्तरालोऽपि विलोकितनिजपादयुगलः, सपदि स्खलयति निजनयनाऽम्बुविन्दुयुगलम् तद्वदेव, महानुभावोऽपि स्वनिवासाऽऽवासितसर्वविवसम्पत्पटलम्, परितः प्रसारितप्रतापपुञ्जम्, विस्तारितसुयशस्तति विलोक्य प्रहृष्टवदनोऽपि पुण्यसदनः सञ्चितसुखोऽपि स्वात्मजसुखदालिङ्गनसौख्यवञ्चितो व्यथते स्म अहरहो म्लानवदनः साश्रुलोचनो नालोक्यत कष्टमोचनोपायम ।

इत्थम् पुत्राऽभावजनितया व्यथया व्यथितः प्रथितयशा अपि अकथितव्यथोऽपि भृशं पीडितो भवतीति विचिन्त्य धीरो गम्भीरोऽप्यधीर इव स्वप्रियां सुशीलां श्रावयितुमारभत-देवि ! किं भणामि, धीरस्याऽप्यद्य विचलति धैर्यम्, सुस्थिरस्यापि स्खलति स्थैर्यम् सम्प्रति दुराशापिशाची परिग्रस्तास्त्रस्ताः, वार्धक्यधवलीकृतकेशाः शिथिलितसकलसन्धिप्रदेशाः विवलितवदनविशेषाः शेषायुर्भोगे चतुर्थभागमात्राऽवशेषा संवृत्ताः किन्तु न जाने कस्मिन्वा जनुषि, समुपार्जितवृजिनविशेषविपाकभोगः कियानवशिष्यते, येन नाद्यावधि समुपलभ्यते सुतमुखावलोकनैकलोचनमनोरथः। न जाने कदाऽयं चिरप्ररोपितोऽहरहःसुकृतसलिलसुसेचनसंवर्द्धितो निखिलार्हणीजनसेवन-समासादिताशीःपरम्परापल्लवितः पुष्पितश्चापूर्वसौभाग्यसद्भाग्यकल्पद्रुमः सत्प्रसवो भविष्यतीति पूर्वजाचरितपुण्यपरिणामजन्यधन्यदिवसोदयदर्शनमहोत्सवः सम्पत्स्यते, येन सद्यो वयमपि स्वकुलदीपकोद्भासमानम् निःसारितदुरितध्वान्तपटलम्, विलोकयेम निजभवनम्, तरेम च पितृजनर्णसागरम्, लभेमहि च सुचरित-समाचरित-पुण्यपरिपाकनाकलोकातीतसौख्यनिवहम् ।

किं बहुना गृहरत्नेन येन बिना समस्तोऽयं रत्नराशिः अपूर्ण इव प्रतिसवनं प्रतिभाति, सहस्ररश्मिजालप्रसारापसारितध्वान्तेन भास्करमण्डलेन समुद्भासमानमपि भवनं नितान्ततामिस्रवितानाऽऽवृतमिव विलोकयामि। लोकमपि शोकसन्ततिसंवलितमिव पलितकेशोऽनुमिनोमि। भविष्य जीवनमपि जीवनाऽनाधायकम् वन्यजनाऽऽकुलितमिवावलोकयामि ।

लोकान्तरेऽपि नास्ति गतिर्जीवस्य किं पुनः स्वर्गसौख्यानुभूतिः। प्रत्युत दिव्याऽदिव्यलोकानुधावनस्खलितगतिर्वासनावासितान्तःकरणो मरणानन्तरमिहैव परिचङ्क्रमते भूतादियोनिषु पुत्रविहीनो दीनो जनः। यथाकथञ्चित् सम्पादितसुकृतसञ्चयोऽपि विगतरयः कथं कथञ्चन प्राप्तपितृलोकोऽपि कवोष्णमेवोपभुञ्जते पिबति कदुष्णमेव वारि। न तत्रोपलभते पुण्यपर्वण्यपि पुत्रादिप्रदत्तपिण्डप्रदानादिकोदकमपि। ताम्यति च सन्तप्तोदकपाननिरतो विरतः शीतलोदकलाभात्। देवि ! किं कथयामि स्मारं स्मारं सततमसुतानामलब्धपार्वणादिविधिविहितहव्यकव्यान्नानाम्, पितृलोकेऽप्यप्राप्तनिवासानाम्, त्रिशंकुरिवान्तराल एवावलम्बितानाम् निःसन्ततिकानां प्राप्तगतीनाम्, दुर्दशां श्रावं श्रावञ्च वेपते मे हृदयम्। न पारयन्ति ते स्वच्छन्दं निजविहितवृजिनसंघप्रायश्चित्तमपि परिभोक्तुम्। सर्वदाऽवदातशुचिशातकर्मोपजाताऽपूर्वशर्ममर्माऽनुभवभाग्यवत्ता तु कुतः।

देवि ! को नामास्मात् अस्मज्जीवनात् परम्-अस्मत्पूर्वजानामग्निष्वात्ता सोमपा आज्यपा-बर्हिषदूष्मपानामात्मना सहितानामक्षय्यतृप्तिहेतवे स्ववंशोद्भूतस्वकुलप्रसूत-

विहित-शास्त्रानुमत-गोत्रप्रवरोच्चारणपुरःसराहूतनामनिर्देशपूर्वकप्रदत्तपिण्डतोयप्रेप्सूनां प्रीतये दास्यति तिलोदकयवोदकादीनि। कश्च ब्राह्मणाग्निगवाद्यतिथिवायसादिपञ्चग्रासनिष्काशनविधानेन ब्राह्मणवटुचटश्राद्धसमाराधनेन प्रीणयिष्यति को वाऽस्मात् पितृमयादृणादुद्धारयिष्यन्नुत्तारयिष्यति वैतरण्याः परं पारमिति निरन्तरचिन्तासन्तानज्वालामालाकुलितस्वान्तो नितान्तविक्लान्तमेवात्मानमनुभवामि, न लभे च मनागपि शर्मलेशमिति।

पितृणां परमावश्यकप्रदेयादस्मादृणात् स एव विमुक्तो भवति यः पुत्रवान् भवति भाग्यवान्। किमस्मत्पर्यन्तमेवप्रचलिताऽस्ति पितृपरम्परा नातोऽधिकानि प्रसरिष्यन्ति-किमु आस्माकीनवंशवल्लीमतल्लीप्रतानसन्तानानि। अतः किं करणीयम् किमाचरणीयम् किं विधेयम् किमनुष्ठेयम् कः शरणीकरणीयः कः समुपास्यः इति नावगच्छामि, क्व यामीति ?

इत्थम्, स्वपत्युः खेदकारणमसाधारणमाश्रुत्य, पूर्वत एव तादृशचिन्तासन्तानसन्तप्तस्वान्ताऽपि शोकावेगमसहमानाऽपि स्वहृदये यथा कथञ्चनेश्वरेच्छाऽधीनविषयं मन्वाना स्तम्भयित्वोच्छलदश्रुप्रसारम् विनीतपरिभाषया प्रणतिपुरःसरं मधुरमधुरमधरस्पन्दनपुरःसरमभाषत—

स्वामिन्! धैर्याऽवधीरितधरणीधरोऽपि धीरधरधौरेयोऽपि साधारणाधीरजन इव धैर्यधुरामवपात्य किमेवं कदर्य्यकर्मकारिण्याऽनयाचिन्तया समाक्रान्तः समभवद्धीराग्रगण्यः परमधन्यः। यः खलु सर्वदा हासप्रसादोल्लासविकासविकसितवदनः अहरहःसमागतचिन्तापिशाचीकरपञ्जरनिपतितविस्मृतविवेकाऽऽतिरेकाऽऽधिग्रहग्रस्तानपि समस्तान् स्वकीयवचनमन्त्रोज्जृम्भितचातुर्यतन्त्रापसारित सहसागतविचारजम्बालपतितान्, विद्याविवेकाद्‌भुतदृष्टान्तदार्ष्टान्ताद्योतप्रोतसुदृढविज्ञानपोतारूढान् विधाय, दुष्पारमपि शोकपारावारं प्रोत्तारयन् चिन्ताव्याकुलानपि प्रसादसुमुखान् कलयन् स्वयं समुपदेशकुशलोऽप्यद्य कथमविवेकिजनोचितमनुचितं पन्थानमाश्रयते धीराग्रगण्योऽपि। कथमद्य विस्मर्यते, समुपदिष्टं दिष्टाधीनमेवैतत्सर्वं सुखं वा दुःखं वा प्रारब्धकर्मफलमेव भोगेनैवोपशमनीयं भगवदिच्छयैव तत्प्रेरणया समायातं प्रभुप्रसादमेव मत्वा, सोढव्यमिति मुहुर्मुहुरात्मनो वचनविन्यासः समातुरजनायौषधोपमः स्वान्तःस्थितरोगोपशमः।

अस्ति सुखदुःखप्रदाता कश्चिदन्य इति चिन्तयत एव मौढ्यम्। अहमेव सर्वस्य समुत्पादको जनक इत्यप्यभिमानविजृम्भितमात्रमेव। वस्तुतस्तु समस्त एव संसारः स्वस्वशुभाशुभकर्मपरतन्त्रो न स्वतन्त्रतया किमपि कर्तुं प्रभुर्भवति। अतोऽपि नाऽस्ति

शुभाशुभकर्मपारतन्त्र्यमपि लोके । नहि कर्मभिः किमपि कर्तुमलम्; यतो हि कर्मणामपि जडत्वात् किंचित्करत्वाभावान् न स्वातन्त्र्यम् । तान्यपि नियन्तुरपेक्षाधीनानि भवन्ति नहि तानि भगवत्प्रेरणाविरहितानि भर्जितबीजानीवाङ्कुरोत्पादनविरसानि सन्ति किमपि कर्तुं प्रभवाणि भवन्ति । तत्रापि भगवदिच्छैव कारणम् । सा च कर्तुमकर्तुमन्यथाकर्तुं सर्वसमर्था भवति । अस्माकं तु सर्वात्मना प्रभुरेव सकलशुभाशुभविधाता, वयं तु तदधीना एव दासाः स्मः तर्हि पुनः कथं दुराशापिशाचीकरपञ्जरपतिता भवेम । को जानीते जनो भगवान् किं विधातुमुद्यतः, कां वा रचनां रचयितुकामः श्री सीताभामः । स्वजनाय सर्वदा कलिताऽऽनन्दधामा, स्वयमेव विधास्यति सकलकामान् ! कथं स करुणावरुणालयः, सहिष्यते तथाविधं स्वभक्तं परिक्लान्तं नितान्तं खिन्नं विलोकितुम् । भक्तोऽपि विनिवेदितसकलसुखसाधनः समर्पितदारागारपुत्रावाप्तिदेहगेहवित्तादिसमस्तलौकिकाऽलौकिकसाधनकर्मफलादि विविधनिजव्यापारः, सर्वथा निर्द्वन्द्वो, निश्चिन्तो निष्क्लेशः सर्वभावेन भगवच्चरणारविन्दमकरन्दरसास्वादनमात्रलक्ष्यः सन्ततभगवदुपासनामात्राऽऽधारोऽसाधारणरतिमांस्तिष्ठति, तर्हि कुतः तस्य मनसि दुर्विनीतैपाऽनुकृतकुटिलाऽश्वपुच्छा तुच्छा सुतादिमुखावलोकनमयी दुरन्ता चिन्ताऽकिञ्चित्करी, भगवदावेशहरी पिशाचकिंकरीति । किमतः परं निवेदयेयम्, स्वामी तु स्वयमेव भगवदीयो विज्ञातसकलभक्तिरहस्यः । इति सा प्रहस्य किंचित् स्मेरानना तस्यान्तिकमुपविवेश ।

पण्डितः पुण्यसदनोऽपि, शीतलमंदसुरभितसमीर संसेवनादपगतमूर्च्छ इव, स्वप्रियतमा वदनपङ्कजान्निःष्यन्दितसुधानिर्भरायित वचनामृतसेकनिर्धौतसकल चिन्तापङ्कः, समुल्लसितमृदुलदलसन्ततिः, समुद्भूताद्भुतसुमनःपुंजविलसित भावनाकल्पद्रुमः, सहसा प्रफुल्लितोऽभूत् । अवदच्च-देवि ! यो ह्यद्यावधि निष्कामभावनाभावितान्तःकरणः, समागतेऽपि महति सङ्कटसम्मर्दे समाश्रिताकामदयासागरश्रीसीताजानि-श्रीकोसलाधीशचरणे; नाऽगणयमपारमापतितमपि कृच्छ्रम् । सोहमद्य, चिन्ताचक्रनिपतितो, विस्मृतवान् निखिलसमुपार्जितशास्त्रविज्ञानम् । नाऽवबुद्धोऽपि स्थिरोऽभवम् भगवदाश्रयोऽप्यनन्यः । समपसृताऽभूत् समाराधिताद्यावधि समुत्पादितादृढानुरक्तिः । पराहतोऽभूत् सहसा प्रभुपदकमलाश्रयानुरागः । कथमीदृक् समुन्मत्तइवाऽभवम् । धिग्धिगिमामपक्वभावनाम् । कथम् विचलितोऽभवमीदृशोऽज्ञजनसामान्यः ।

मन्ये हि सहस्राङ्कुरः खलु संसारः नाना शाखाप्रशाखापरिमण्डितं प्रफुल्लिताऽनेकविधकुसुमगुच्छः, समवलम्बितानन्तफलप्रकारः, नवनव - भावनामयोल्लास-

-युत-नानारागपरिरञ्जिताहमहमिकया समापतितानन्त-जातीयकल्पना मनोरथशकुन्त-सहस्रविहितानन्तनीडनिचयो, विशालः सुरसाल तरुतल्लजोऽतीवमनोमोहकः समाकृष्टाऽनन्त विज्ञानराशि - विलासि - विद्वद्वरपरिकरो, नितरां प्रसीदतीति मादृशान् विमुग्धान् कलयन्नित्यत्र को विशेषः। विचित्रा खलु विचित्रचित्ररचना चतुरस्य भगवतो भ्रूविजृम्भरणमात्रविसृष्टनिःशेष-चराऽचर-जगतोलीलास्थली सकलासृष्टिस्तत्र मादृशानां व्यामोहोऽपि विनोद एवास्मत्प्रभोः।

परमधुना त्वदीयवदनसरोजान्निसृत-वाक्सुधयाऽऽप्लावितसकलेन्द्रियगणः सद्य एव प्रकृतिस्थः सममवम्। नाधुनाऽमुना कल्पनामनोरथेन भ्रान्तः क्वचन भविष्यामीति। देवि! धन्योऽस्मि संवृत्तः। योहि पुरातनजन्मार्जित-पुण्यपरिपाक-फलात्मिकां, स्वविज्ञान-विवस्वत्-किरण-निकरायित-वचन-स्पर्शोन्मीलिताऽस्मन्न-यनोत्पलामविकलाऽऽनन्द-सुधावर्षिणीं सर्वदाहर्षिणीं प्रतिपलप्रसेदुषीं विदुषीं विधातृ-विरचिताऽद्भुतललना-सृष्टि-प्रकृतिं भवादृशीं धर्मपत्नीं प्रणयिनीं प्राप्यात्मानं परमभाग्यवन्तं मन्ये। भवादृश्य एव पतिव्रताः पतिप्राणाः पतिधर्मपरायणाः भगवद्भक्तिमहिताः भगवच्चरणारविन्दमकरन्दाऽऽस्वादननिरताः विजितमायामोहपटलाः प्रभुसेवापरायणा भगवदाराधनामेव परमां साधनां मन्वानाः चराचरनियन्तारं जगत्कर्तारं त्रैलोक्यभर्तारं भक्तजातत्रातविधातारं दुर्दान्तदुष्टजन-दानवादि-निहन्तारं परमात्मानमपि स्वोदरे धारणसमर्था भवन्ति भूतलतले। भवादृशीनामेवाङ्के क्रीडति कामयते च कलित-ललित-लीलो लोलितुं विलसितुं विहर्तुं वा लास्योल्लासी श्रीनित्यसाकेतविलासी। इति।

श्रुत्वैव भगवद्वर इव स्वकान्त - मुखनिःसृताममोघां अश्रुतपूर्वां, नितान्तमानन्दाऽऽह्लाद - जननीं, पियूषवृष्टिमिवाकस्मिकीं मन्यमाना परमानन्दसंप्लुतेव विस्मृतसंसारा, ह्यनधिगतपरिवारा, ब्रह्मानन्दविहारिणी, योगिनीव, विधृतसमाधिमौना, निमीलितलोचना भगवत्प्रादुर्भावमेव विचिन्तयन्ती, परमानन्दकन्दसंपृक्तेव, क्षणं ध्यानमग्ना सजाता चारुशीला सुशीला।

व्यचिन्तयच्च किमेषा भगवतैव प्रेरिता, साक्षाद्भगवतैवोद्गीरिता तथ्यैवैषा-भविष्यतीति वाणी, यतो हि नाद्यावधि क्वचन पत्युर्मुखादेषा विनिःसृता पुरा, विलास-ह्रासोल्लासावसरेऽपि ब्रह्माऽऽस्वादसहोदरानन्दानुभव-वेलायामपि, अनङ्गरङ्गकौतुक-कलाकलापाकलनेऽपि क्वचनाऽऽकर्णिता कमनीया परमरमणीया कान्तैकान्तनितान्ता-ह्लादिनी समुन्मादिनीमहिलामानस्य। विधास्यति नः प्रभुरिमां स्वभक्त्याऽनुगृहीतां सीतानाथस्तादृशीं सौभाग्यशालिनीं श्रीकौसल्या श्रीदेवकी श्रीअनुसूयादि-सदृशां महा-

महाभागां भगवतो जननीपदभागिनीमनुरागिणीं सर्वांग - बालस्वरूपेण प्रादुर्भूतस्य बालरूपस्य सर्वाङ्ग-सेवाहेवाकिनीमिति। स्वोत्सङ्गे समुद्वह्य लालयन्ती सफलयिष्यामि स्वकीय-मानस-मनोरथ-कल्पवल्लरीम्। मधुरमधुरां स्वानन्दनिर्झरीमिवस्खलितपदामस्पष्टगिरं श्रोष्यामि घ्रास्यामि च तद्वदनारविन्दविनिःसृत - पद्मकिञ्जल्कसुरभिमपि ? ईषदुन्मीलिताङ्कुरितैकरदनतारकाञ्चितमुखचन्द्रमालोक्य वारंवारमवितृप्ततृषादृशा मुहुर्मुहुश्चुम्बनानन्दमुपेत्य स्वात्मानं कृतकृत्यमेव मंस्ये। अस्माकं प्रभुः परमदयालुः कृतप्रतिज्ञो भक्तवत्सलश्च "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्यादि समुद्घुष्टवांश्चेति अवश्यमेव पूरयिष्यति मे मनोरथान्। स एव विधास्यति स्वानां मानसेषु दृढां तदनुरूपां भक्तिं भावनाञ्च, स्वचरणारविन्देषु तादृशीमनन्यामासक्तिम् व्यसनञ्चेति येन सः स्वयं सद्यःप्रसन्नः संस्तथाविधां स्वलीलां प्रकटयितुं मदीये क्रोडे क्रीडयितुञ्चाऽवतरेत्। स एव हि अघटितघटनापटीयान् कल्पयिष्यति, तथाविधामेव स्वकीय - नाटयरङ्गस्थलीं स्वयमेवेति मे सुदृढोविश्वासः स्वयमेव हि कर्तुमकर्तुमन्यथाकर्तुं समर्थश्चेत्तर्हि कुतः शङ्कावलेशः। अविश्वासे तु दार्ढ्यहानिः। सर्वात्मना समर्पितसर्वस्वस्य जनस्य अवितर्कि-करुणासागरे कुतोनाम नैराश्यलेशोऽपि। स तु नीरसामपि प्रमदवनालीं विविधकल्पपादपमनोहरां अनुद्भूततोयराशिमयीमपि मेघमालामनन्तरसदाम् सकलकृषकजनमनोरथपूरयित्रीम्, प्रचण्ड - मार्तण्डप्रतापानल - परिप्लुष्टामपि, माधवीलतामनुपमविविधपुष्पोद्गममञ्जुलां, मधुमासमनोहारिणीम्, मदनमोहिनीम्, मानव-मानसोन्मादिनीम् रसिक-युवक-युवतिकुल-केलिकमनीयाम् मधुकर-निकर-गुञ्जितगुणगौरवां, सद्यो-विधास्यति। इति। विविध विचारधारा-प्रवाहितामिव नैकस्थलस्थितां तां विलोक्य प्रहसन् पुण्यसदनः सहसा तां स्पृष्ट्वा समाधिनिरतामिव तां विशेषवचनविन्यासविलासहासोल्लासिनीं विधातुमुवाच—

प्रिये किमेवं समाधिनिरता बाह्येन्द्रियविरता भगवतीव सरता एकाकिनीव कीदृशमानन्दातिशयमनुभवन्ती मौनमासाद्य परिपूरितमनोरथेव निभृतं रसमग्ना अपूर्वानन्दापारपारावारीय-लोलकल्लोलकेलि-कुतूहलिनी संवृत्तेति श्रावणव्यापारमात्रेणैव, अस्मानपि किञ्चित् कतिभिश्चिदानन्दविन्दुभिराप्याययेति—

श्रुत्वैतल्लज्जावनतवदना, भावनोद्भुताऽऽनन्दसदना किञ्चित् विकसितरदना सस्मिताऽवलोकनोल्लासित - विव्वोकाञ्चितमदना प्रोवाच चारुशीला सुशीला— देव ! किम् निवेदयेयम्:—स्वाभाविकी भवत्येतादृशी प्रवृत्तिर्नारीणाम्—यदनुपस्थितेऽपि हर्षावसरे तदागमनात् प्रागेव मनोरथसहस्रसम्पूरितान्तर्हृदयाः कल्पनाकल्पद्रुमसमुच्चयोपचितसुषमावितान-सन्तानित-माहात्म्यानि कलयन्ति सर्वदास्वात्मानु-

कूलानि विविधनन्दनकाननानि। यत्र विहरति च सततानन्ताऽऽनन्दैकलीलाविग्रहः सविग्रहोऽवतीर्णो विशीर्णभक्तचिन्तोऽचिन्त्याद्भुतमाहात्म्य-विस्तारितनिजवैभवो राघवः। किन्तु सम्प्रति मामकीनां भावनामयीमनागतसुखदश्रेयोवेलां हेलां श्रुत्वा सपदि स्मेरमुखो भविष्यति सुमुखो देवः। अतः प्रकाशयितुमप्यनर्हां जिह्रेमि प्रवक्तुम्।

इति समाकर्ण्य समुत्पन्नशुश्रूषाकौतुको निजप्रेयसीभावमनुभाव्य तदिङ्गितैक-विदितवेदितव्योऽपि सुस्फीतमतिप्रीतवचनरचनयोद्गीतमेवाऽऽकर्णितुकामो भामां वर्णयितुं विवशीचकार प्रियनिकेतनः पुण्यसदनः।

सुशीलाऽपि सञ्जात-हृदयोत्कर्षं हर्षप्रकर्षमवष्टभ्यत्रपापरवशाऽपि शील-विनयानुस्यूत-परिपूत-वामनीकृत-वचनविलासा निजाशासलिलसेक-प्रवर्द्धमान-सहस्रशाखिनं सद्योजायमानश्रीजानकीजानि करुणाधीनजनिमनोरथपादपं सफलमुपलब्ध-मिव मङ्गमयानि भविकानीवोज्जगार वचनानि।

देव! सहसा देवमुखाद्विनिःसृतां सुधासहोदरीमिवोत्पादितनवजीवनां सञ्जीवनीमिव समुपचीयमानप्रवलप्राणवलां निर्मलां समपसारितचिन्तामलां "भवादृश्य एव सततानुरक्ति-भक्ति-भावनापरितोषित-वसुमतीसुताधिपतिकाः सुमतिकाः ह्यदिति कौशलायिताः कामिन्यो धारयितुं प्रभवन्ति स्वगर्भे दयासागरं क्षीर-सागरशायिनमपीति" सौभाग्यसंवर्द्धिनीं वाचं निभृतमाचम्य श्रुतियुगलेन, विस्मृत-सकल लौकिकव्यवसायव्यवहारा, कल्पनापारावार निमग्नेव संवृत्ता; व्यचिन्तयच्च किमेवं भर्तृनिगदितमाहोस्वित् निःसीमकरुणावरुणालयेन लोकाभिरामेण श्रीरामेणैव प्रकटितमिदं वरदानमिति विचारोपवनविहरणशीलेव सौख्यसम्पदन्वभवम्। सत्यमेव तथाविधा, निजोत्सङ्गनिधृतसुतेवानन्दसम्प्लुता, सतीव नाऽविलोकयं कमप्यन्य-मुपस्थितमपि तत्क्षणम्। इति सस्मित-प्रसाद-सुमुखी सम्मुखं प्रहसिताननं स्वकान्त-मुदीक्ष्य मन्दाक्षभावाऽऽगूरितेङ्गितं निदर्शयन्ती—"प्रायः सर्वदाचिञ्चिमनोरथानां समेषामेव भवन्ति भावनामयास्तादृशा भावाः, ये हि काले काले कुतश्चन श्रुतिपथमुपगते तादृशे भविकभावे, तासां मानसेषु सपदि राजहंसा इव मनोरथाः केलिकुतूहलिनो भवन्ती" ति न तच्चित्रमिति। एतादृक् प्रकृतयो भवन्ति कामिन्यः कामना पूरपूरिताः। इति समाकार्ण्य—

प्रहसितवदनः पुण्यसदनः सहसा प्रोवाच—प्रिये सत्यमेतत् शास्त्रेष्वपि वर्णितम्—"मन एव मनुष्याणां पूर्वरूपाणि शंसति" इति।

अतोऽहं निश्चिनोमि यदधुनाऽपारकृपाकूपारः श्रीरामचन्द्रः स्वकीयपरमौदार्य्य-भक्तवात्सल्यवरदाऽनुग्रहानुपमपीयूषपूरपूरणपूर्वकमस्मान् सपद्येवानुग्रहीष्यतीति पूर्वसूचनात्मकमिदं ते मनसि मनोरथशतकल्पनम्। कुतोऽन्यथा तादृशपरिकल्पना-

कौतुहलम् ? कथं नाद्यावधि पुरा समुद्भूतम् । देवि भगवदनुग्रहभाजनानां कृते न किमपि दुर्लभम् । क्षणमात्रेण क्षणिकभ्रू विजृम्भणेनैव जगदुदय-पालन प्रीणनोपसंहरण-करण कौतुकिनो यदि प्रसरति कारुण्यस्रोतस्तदा न किञ्चन कस्यचनापि दीन-कृपकस्य क्षेत्रमप्यसिञ्चितमिव स्थास्यतीति विद्यते मे दृढो विश्वासो—यद् दया-पारावारः स्वयमेव पूरयिष्यति चिरमभिलषितमिमं मनोरथम् । सर्वञ्चैतत् सर्वात्मना गृहीतशरणोऽनन्यगतिकः सुदृढाऽनुरक्तिमतिकः सदासक्तो भक्तः कर्तुं कारयितुं स्वयं प्रभुर्भवति । प्रभुस्तु स्वयमेव "भक्तवरवशः सर्वस्वं वितरति" इति ।

इत्थं स्वकान्तनिगदितानि नितान्तैकान्त - कान्ततमानि मधुरातिमधुराणि वचांसि श्रुत्वा सपदि समुपजातपूरोद्रेकन्तस्या मानसं सरः समुद्गतमनोरथशततरल-तरङ्गोच्छलच्छीतलजलम् प्रफुल्लितात्मभावनारविन्दमिवाऽभवत् । हर्षसमुत्कर्षा-त्सानन्दमुवाचसुशीला—देव ! तर्हि—

किमस्माभिः समनुष्ठेयं येन सद्यः सुमनोभारभरितो मानसमनोरथकल्पपादपः समन्तात् स्वकीयसुखदसुलभसुरभिणा सर्वान् सन्तर्पयेत् ।

प्रियायाः प्रियतमां वाचं निशम्य प्रमोदोल्लसिताननः समुदभवदत्-प्रियायै प्रियतर कर्तुकामः पुण्यसदनः श्रीरामाऽभिरामःमकामां भक्तिमेव सर्वविधमनोभिलषित-पूरयित्रीं समुपदिशन् "भक्तिप्रियं श्रीसाकेताऽधिपतिं श्रीराममेव सर्वात्मना समुपास्वेति । यतो हि भक्त्याऽहमेकया ग्राह्यः" इति भगवदुक्तिं लक्ष्यीकृत्य—सर्वं त्यक्त्वा हरिं भजेदिति वाक्यमनुसरणीयमस्माभिः । स हि सर्वभावेन भावितः श्रीप्रभुः सद्यः पूरयिष्यत्यभिलषितान्तःकामान् । यतो हि प्रतिज्ञातं स्वयमेव प्रभुणा—"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्युक्त्वा स्वप्रियाऽभिमुखं तस्या मनोभावं विज्ञातुकाम इव संयतवागभूत् सः पुण्यसदनः ।

साऽपि स्वप्रियाऽभिलषितं तदिङ्गितेनैव विज्ञाय स्वाभिप्रायानुरूपमेव वचन-माकर्ण्य सद्योऽब्रवीत् सुशीला, देव ! तर्हि 'शुभस्य शीघ्रमेवे" ति नियमानुसारं न हि विलम्बः करणीयः "श्रेयांसि बहुविघ्नानि भवन्ति" अतो न श्रेयसि व्यवसाये विलम्बो विधेयः । यदि गृहे प्रभवति चेत्कश्चनाऽन्तरायस्तर्हि, इतो दूरं क्वचन सुरसरित्तटे कुटीं विधाय तत्रैव नितान्तमेकान्ते यमनियमादिपूर्विका विधातव्या भगवतः समाराधनेति ।

इति स्वप्रवृत्त्यनुवर्तिनीं निःश्रेयसकरीं प्रियायाः प्रियवचनसन्ततिमाकर्ण्य प्रहसितवदनः पुण्यसदनः प्रियया प्राप्तसमर्थनः सद्य एव सधर्मपत्नीको द्विगुणतर-विधानेन श्रीसाकेताधिपतेः समुपासनायां समासक्तः समभवत् ।

———

# तृतीयः परिच्छेदः

यो हि जगति निर्लिप्तभावेन निवसन् सर्वदा स्वस्ववर्णाश्रमानुसारं स्वधर्ममनुपालयन् सर्वदा सर्वात्मभावेन निष्कारणमित्रं मित्रवंशावतंसं नित्यश्रीनित्यमङ्गलं श्रीसाकेताधिपतिं परिसेवमानोऽनन्यशरण्यशरणः समुपास्ते तमेव निष्कामभक्तं सर्वदाऽनुरक्तं स्वयं भगवानपि तथैव सेवते, तस्यैवाऽमले मानसे राजहंसायमानो-निजभक्तजनमानसविहारी विहरतीति न मनागपि सन्देहः ।

इत्थं विनिश्चितनिर्णयः श्रीपुण्यसदनः सकलजनमनःसन्तापहारिणीं सर्वसम्पत्कारिणीं, तरोर्मूलनिषेचनत एव सन्तृप्यत्सकलशाखाप्रशाखा निवहमिव परिसेवितसकलदेवां भगवतः सेवां विधातुकामः संगृहीतनिजवामः परिहृतनिजधामा ह्यकाममेव भक्तिवामाविलोकनमात्रलक्ष्यो जाह्नवीतटमनुसृत्य, विरचितपर्णशालो विशालहृदयो बभूव भगवदाराधनतत्परः सत्वरसमासादितपरिकरः ।

विद्यमानेष्वपि निखिल-सेवासामग्रीं समाकलनसंरतेषु परिजनपटलेषु, तौ स्वयमेव स्वहस्तसमाहृतनिःशेषसेवोपयोगि - वस्तुनिचयेनैव भगवदाराधनसाधनसम्पन्नावभूताम् । अहरहर्दम्पती, भागैकमात्रावशिष्टायां, विशिष्टायां, रजन्याम्-समुत्थाय, विहितदैहिकाशेषशौचाचमनदन्तधावनादिव्यापारौ, परमश्रद्धया विवृद्धया भक्त्या, भगवतीं सुरवरतरङ्गिणीं, प्रदर्शितविविधभगवदावेशभावविभावरङ्गिणीं निःसङ्गसङ्गिनीं प्रणम्य, विरचितस्नपन - मार्जनाऽऽह्निकक्रियाकलापौ, भगवत्सेवार्थं सम्भृतकलशौ स्वयमेव निजनिजस्कन्धौ निधाय पर्णकुटीमागत्य विहितसंस्कारां तां कुटीं गङ्गाऽम्भोभिः संसिच्य ( परिषिच्य ) पात्राणि संमार्ज्य विहितसकलनियमित-जपहोम-स्तवन-पठन-प्रयोगौ, गन्धाक्षतपुष्पधूपदीप - नैवेद्यफल - ताम्बूलादि - लवङ्गैलाकर्पूरसुवासितोदक - गन्धनिर्यासाऽऽवासोपकरणसम्भारसमाहारैः सम्पूज्य त्रैलोक्यैकनाथं श्रीरघुनाथं वासोऽलङ्कारादिभिरलंकृत्य दीपोपहारबलिभिर्नीराजनादिभिःसमर्च्य

सैन्धवराजिकामुष्टिकावतारणपुरःसरं प्रदक्षिणा प्रणामपरम्परादिभिः प्रतोष्य, संस्तूय नित्यनियमानुरूपध्यानधारणादिविधाने संसक्तावभूताम्।

इत्थम्, दैनिकक्रमेण परिवर्तितनिजाऽशनक्रियाकलापौ क्वचित्-क्वचिदेकाऽसनेन, कतिचिद्दिनानि दुग्धाऽशनेन, कियन्तिचित् केवलं फलाऽऽहारेण, कतिपयानि पर्णाऽशनेन, कतिचिच्च सुरसरितः सलिलपानमात्रेण कृतवृत्तिकौ, पुनश्च भगवच्चरणारविन्दामृतमात्राऽऽचमनेन धृतप्राणौ, दृढानुराग-भगवदासक्तियोग-संसिद्धौ ध्यान-योग-समाधिसाधनाभ्यस्तौ प्रशस्तौ ध्यानावस्थितौ यदा कदाचन स्वाराध्यदेवाराधनावसरे लब्धाऽवभासनौ, जितासनौ समायोजितान्तरात्मानौ, निरन्तर-ध्यानैकतानौ समुपजातभगवदनुग्रहौ यदा आस्ताम् तदानीं व्यतीतप्रायायां रजन्याः चरमप्रहरे समाराधनाय समुत्थानावसरे सहसा तौ, भक्तकल्पद्रुमस्य करुणाम्बुधेः श्रीराघवेन्द्रस्य निःशेषसंक्लेशसंशोषिणीं, जन्मजन्मान्तरीयवृजिनपरिमोषिणीं शरणागतभक्तमनस्तोषिणीं मनोरथशतकल्पपादपपरिपोषिणीं प्रकटयितुं निजपरम्परां सत्वरां वरदानतत्परां, स्वस्वरूपावलोकनकृपामन्वभूताम्। तत्क्षण च करुणामयीं निजतनुत्विषं विभावयामास श्रीसीतापतिः।

सहसोद्यद्भास्कराऽवलोकनाहतिप्रतिहतलोचनौ सद्योवितरिताऽलौकिकदिव्य-दर्शनोपयुक्ताऽपूर्वविभाभासुरौ समुपजातशक्तिकौ दिव्यलोचनौ प्राप्य यथेष्टं निजतपःफलं स्वरूपस्वेष्टदेवदर्शनेन कृतकृत्यो बभूवतुः। सद्यः प्रदत्तदर्शनेन किंकर्तव्यविमूढाविव केवलं भगवद्वदनारविन्दावलोकन-निहितनिर्निमेषलोचनावेव तस्थतुर्न किमपि स्तवन-वचनविकासनपरौ समभूताम्। तथात्रिवस्थितिमन्तौ विलोक्य भक्तदम्पती, स्वयमेव मधुरमधुरां, मन्दमन्दामपि सुस्फीतामभीतां सुलभश्रवणयुगलपेयां गेयां ध्येयां सपद्यमृतवर्षिणीं हर्षिणीं व्याजहार श्रवणमङ्गलां गिरं करुणार्णवः।

प्रीतोस्मि भोः परित्यक्तसमस्तलौकिकसुखयोरविगणिततपः क्लेशविशषयोः समर्पिताऽशेषमनोवाक्कायकर्मणोः सततमविचलभक्तिश्रद्धयोस्तपस्यतोः युवयो-रनुपमस्नेह-परम्पराऽऽकृष्टचेताः सचेता वामुपागतः। सम्प्रति सिद्धाः वां मनोरथाः। माऽधिकं तपःश्रमं समाचरतम्। सर्वविधकामनापूरकोऽहमुपस्थितो नाऽधुनाऽव-शिष्यते काऽपि कामना जनाऽभिलषिता। देवि, प्रसन्नोऽस्मि ते विशुद्धानुरागरसितया महितया भक्त्या, सद्य एव पूरयिष्यामि तेऽभिलषितां कामनाम्। अलङ्करिष्यामि च ते शुभोत्सङ्गम्। समाकलयिष्यामि नवनवोल्लासविलासिनीमनुपमाऽऽनन्द-विकासिनीं प्रकाशिनीं लोकातीतसौभाग्यसम्पदाम् विविधबालहेलाम्। तदुत्सङ्ग-रङ्गस्थलीमधिश्रित्य सन्तनिष्ये पुनरपि श्रीकौशल्याऽङ्कविहिताऽनुकारिणीं कामपि

कमनीयां युवतिजनमनोहारिणीं ललनादुर्लभामलौकिकविभाविकासिनीं मनोरमां लीलाम् ।

भगवन् ! पुण्यसदन ! वस्तुतो भवान् पुण्यसदन एव । यो हि निरन्तरं श्रवण-कीर्तन-स्मरण-पादसेवनाऽर्चन-वन्दनादिविधानैः समर्पितसकलकर्मकलापो दास्यमनुसरन् नवविधभक्तिसाधनासमाराधनागुणगणैः, सख्यतामुपगतेन च प्राग्जन्मजातेन निजगुणेन सम्पन्नः सम्प्रति विस्मृतप्रायं पुनःस्मारयितुमेव प्रकटितोऽहमुपस्थित-स्तेऽभिमुखं स्मर मां पूर्वसखायं तमेव लीलारसिकम्, येन सह बाल्यभावे परित्यक्त-निजगेहो वने निवसन्नप्राप्तपौगण्डोऽपि शुष्क-पक्वाऽपक्व स्वाद्वस्वादुफलाशी ( शनो ) भूत्वा भक्तिनिरतो ह्यविज्ञातमन्त्रतन्त्रोऽपि स्वतन्त्रः स्वेच्छया ज्ञाताऽज्ञातविषयोऽपि समाराधनतत्परो यथाश्रुतमेव मे रामनाम जपन् सर्वं दिनमेकाकी क्रीडन् विमनस्कः क्वचिद्धसन् क्वचिद्रुदन् क्वचिद्गायन् क्वचिन्नृत्यन्, शकाकीनाशजामपि विनिर्धूय निर्जनवने नाऽन्यसहचरो विचचार वनाद्वनमेव । तदा सकरुणोऽहं त्वत्समवयस्कः तवैव सहचरत्व कलयन्नेव, त्वया सह स्वबालोचितां लीलां विदधत् प्रत्यह क्रीड़ति स्म । यदा चाहं त्वामेकाकिनं तत्रैव वने विहाय गन्तुमुद्यतोऽभवम् तदा सोच्चघोषं रुदन् मां रोद्धुमशक्तः प्रार्थयामास, स्वात्मना सहैव त्वामपि नेतुमिति । तदाऽहं त्वां निजसपान्थमकलयन् तुभ्यमन्यस्मिन् जन्मनि स्वकीयबालक्रीडनयाऽ-नुरञ्जयिष्यामीत्युक्त्वा वरं दत्वान्तर्हितोऽभवम् । स एवायमुपस्थितोऽस्मि ते वरप्रदाता, स एव बालरूपधारी वटुः सम्प्रति त्वदुपासितः । स एव च त्वमपि मे तदानींतनो-मनसुखनामा सखेति । अतः सम्प्रति नवधाभक्तिस्ते सुसिद्धा समभवत्, अहम् तव भवनमलङ्कर्तुं सद्य एवाऽस्याश्चारुशीलायाः सुशीलायाः गर्भगः सन् प्रकटितो भविष्यामि हरिष्यामि च ते मनसः सन्तापम् । भारते च प्रवर्द्धमानां दुर्जन-दुर्दान्तदानवायितैर्दारुणैः समुत्पादितां दुःसहामत्याचारपरम्पराम् । प्रहरिष्यामि गोब्राह्मणादिघातुकान् । परिहरिष्यामि भारतीयसंस्कृतिविध्वंसकपटलीम् । अपहरिष्यामि च विधर्मबहुल-प्रचारप्रवर्तकविषमविषमयाऽधर्माचरणप्रसारणपरम्पराम् । चूर्णयिष्यामि च चार्वाकाऽऽ-चरितकुचक्रचक्रवालम् । प्रथयिष्यामि-मिथ्यावादिवादिताऽधर्मपद्धतिम् । पुनः प्रवर्त-यिष्यामि सनातनधर्माऽनुगतां मर्य्यादाम् । दुष्टैर्नष्ट-भ्रष्टीकृतां सदाचारपरम्परां पुनरुद्धरिष्यामि । उन्मूलयिष्यामि च भारतीयेषु व्याप्तां परस्परद्वेष - द्रोहेर्ष्याऽसूया-च्छलच्छिद्रान्वेषणाऽकर्मण्यता - कातरत्व-वैरभावकौटिल्य - कुकर्म-प्रमाद-मिथ्यापाषण्ड-हिंसा-स्वेच्छाचाराद्यखिलसंस्कृत-संस्कृति-समाज - विघातकतत्वानि समूलमिति । तदानीं तव पुत्रभावं प्राप्य स्वभक्ति ( रामभक्ति ) महितां सर्वत्र प्रस्पन्दयिष्यामि

भक्ति-पताकाम्। प्रचारयिष्यामि च भगवद्भक्ति - माहात्म्यम्। कलयिष्यामि च निखिलं कृतकृत्यं मानवसमाजम्। अतो यथानियमं स्वधर्माऽनुष्ठानपरम्परां पालयन् पूर्वं यथाव्यवहृतवान् स्वभवने, तथैव सानन्दं सोल्लासं सविवेकं सपत्नीकः ससुखं निवर्तस्व समलङ्कुरु निजसौधम्। अनुरञ्जय सर्वाननुयायिनः। प्रीणयस्व प्रणयभाजनजनान्। तत्रैव च अचिरमेव करिष्यसि मे साक्षात्कारम्। सुगुप्तञ्चैतद्रक्षणीयं वृत्तान्तम्। ससुखं निवर्तेथां स्वगृहम्। इति। इत्थम् नीशीथे घनान्धकारे घनघटाच्छन्नेऽम्बरे विधुरिव प्रकाश्य समाश्वास्य ताभ्यामिमं वरं दत्वा च सद्योऽन्तर्हितः प्रभुः श्रीसाकेताधिपतिः।

तावपि सद्यः स्वप्नवदुत्थितौ-सहसा स्वस्वाऽऽसने समुपविश्य तौ परस्परं नावदताम् किमपि, केवलं मौनावेव परस्परमुखावलोकनतत्परावास्ताम्। साश्चर्यचकितौ नयनोन्मीलनमीलनैरेवव्यापारैः क्षणं स्थित्वा समालपताम्—देवि श्रुतम्, दृष्टम्, अवगतम्, अनुभूतम्, किमपि—किमद्भुतममदिति विक्षिप्ताविवालपताम्। इति निगदतः प्रियस्य मुखारविन्दमुत्फुल्लेन्दीवरयुगलं विलोक्य हर्षातिरेकं कथञ्चिदवरुद्ध्य—सविस्मयं, सोत्कण्ठं, सोल्लासमुवाच सुशीला—

देव यज्जातम्, यच्छ्रुतं, यदृष्टं, तत्स्वप्नन्तु न भवितुमर्हति, यतो हि साक्षादवलोकितुं सावधानौ तत्र स्थिताविवास्तामुभौ। तदनन्तरमपि तथैव स्थितिभाजौ स्वः, नहि सुप्तोत्थितौ। प्रत्यक्षमेव देदीप्यमानां अद्भुतप्रकाशमयीं कुटीं व्यलोकावहि। अत्रैव सम्मुखे, भवतो दक्षिणभागे, अस्यामेव अचर्नापीठिकायां विराजमानैः प्रभुचरणैः पर्य्याप्तकालं समालापः कृतः, पूर्वं मया सह पश्चादार्येणसहैव। स्पष्टमेव वरोऽपि दत्तः सोऽपि श्रुतः, प्रादुर्भावानन्तरं यत्करणीयं विद्यते तदपि स्पष्टं प्रतिपादितं प्रभुचरणैरेव, किञ्च पूर्वजननवृत्तान्तेन भवानपि प्रतिबोधितो वरदानकथयाऽपि श्राविताऽशेषपूर्वचरितस्तर्हिसर्वमतेत् कथमन्यथा भवितुमर्हति। नाथ! इयं त्वस्माकमाराध्यदेवस्य सुस्पष्टमनुकम्पैव समजनि, नात्रसन्देहाऽवलेशः। अतो यदाज्ञप्तमाराध्येदेवेन तथैवाचरणीयमस्माभिः। अग्रे श्रीमानेव प्रमाणं, किमहमधिकं ब्रूयामज्ञेति। हर्षावरुद्धकण्ठोऽपि अकुण्ठ एवाब्रवीत् पुण्यसदनः—सत्यमेतत् देवि! सत्यम्। यदुक्तम् भवत्या सर्वं तदविकलं सत्यमेव। त्वया सह समालापः समभूत्। यदाज्ञप्तवान् प्रभुस्त्वाम्, सर्वं तन्मया सुस्पष्ट श्रुतम्। पुनर्मां सम्बोध्य यदाज्ञा जाता साऽपि उभाभ्यामेव श्रुता। अतो ध्रुव-सत्यमेतत् यदस्माकं प्रार्थना देवदेवेनाङ्गीकृता श्रुतेति। तदर्थं स्वावतारणप्रयोजनमपि निर्दिष्टम्। अवतारदशायां

करणीयकार्याणामपि सङ्केतः प्रदत्तः। अचिरमेव तव गर्भतः प्रकटीभूय स्वकीय-वालचरितैरनुरञ्जयिष्यत्यस्माकम् प्रभुर्नः। सम्प्रति कृतार्थाः सञ्जाता वयम्। अतः स्वभवनं चलित्वा भगवतः प्रादुर्भावानुरूपम्-भवनं परिमार्जयावः। पूर्वरङ्गव्यवस्था सत्वरं विधातव्या तदनन्तरं स लीलाकौतुकी स्वपदधारणाऽनुग्रहेण समुपकृतान् विधास्यत्यस्मान्। अतो यथापूर्वं किंवा ततोऽपि द्विगुणतरं दानधर्मादिकर्मसमाकलनीयमिति निश्चित्य स्वभवनमाजग्मतुः सहर्षमिति।

---

# चतुर्थः परिच्छेदः

सुभगशीलया श्रीसुशीलया स्वधर्मपत्न्या सह श्रीसीताकान्तकान्ताङ्घ्रिसेवापरायणोऽहरहः श्रवण-स्मरण-कीर्तनमनन संरतो, विरतश्च लौकिक - व्यवसाय जटिलादानप्रदानादिनानाविधकर्मकलापेभ्यः, सन्तत सुविशाल-विस्तृत निजकौटम्बिक-मनुजपरिकरपालनपोषणलालनप्रीणनादिसकलगार्हस्थ्यभारवहनसंलग्नोऽपि निरन्तरं निमग्नः श्रीमद्भगवच्चरणारविन्दामन्दमकरन्दरसास्वादने, सर्वदाऽविच्छिन्नरूपेणदीन-जनदैन्यापहारणे दृढ़प्रतिज्ञः। क्षुत्पिपासापिशाचीपददलित - विध्वस्ताध्ययनाऽध्यापनाद्यवरुद्धोन्नतिप्रगतिकद्विजकुलोद्धारणनिवद्धकटितटीकः श्रीसाकेतविहारिप्रसाधनाय प्रणतित प्रतिपल वहुविधभावनानटीकः वितरितार्थिगणाऽभिलापिताऽऽवरणाऽऽच्छादनाऽनुरूपानन्त-वस्त्रधौतादि विविधपटीकः स्वयमपि वारितद्विपटीकः, अविरत-समागताऽतिथिनिवह - समाराधन-भोजन-पानाऽऽसनादिभिर्विहितपूजनः, यथायोग्यं यथागुणं यथावयो यथारूपं सम्मानदानमानादिभिः परितोषिताऽऽवालवृद्धनिजनागरिकजन, विवुधवृन्दपरिमण्डिताङ्गणेन्द्रभवनायितनिजसदनो नवनवाऽद्भुतवैभवोल्लसितविकसितश्रद्धारविन्द-सुमनोमनोरथशतोत्सवैः प्रहसितवदनः पुण्यसदनः समाचचार जनता जनार्दनसेवया सह श्रीजानकीजानिसमुपासनाम्, परिहृतवासनाम्। अहर्निशं श्रीपुण्यसदनस्य समयो भगवत्कथायाम् सतां महतां विदुषाञ्च सत्सङ्गे विविध-विधशास्त्रप्रसङ्गे, यापितो मोदमानि आसीत्। स्वयञ्च सांसारिक व्यापारपरिष्वक्तोऽपि विरक्त इव स्वकीयपरिजनसम्पर्के लिप्तोऽपि निर्लिप्त इव सकामनिष्ठाऽनुकूलमपि कर्म निष्कामनिष्ठया भक्त्या सर्वं भगवदर्थमेव कार्यं कुर्वन् सपत्नीकः सानन्दं निवसति स्म।

चारुशीला सुशीला च समये, समये अदितिः कश्यपमिव कौशल्या दशरथमिव विविधविधिना धर्मार्थौ निषेवमाणाऽपि सर्वत्र सर्वकालं प्रतिक्षणं साकेताधिपतिं कौसलेन्द्रं कौशल्याहृदयनन्दनं सर्वात्मानमभिरामं श्रीरामं ध्यायमाना सौरतैः

सुविलासोल्लासहासादिभिः सदेकान्तवल्लभं वल्लभं सर्वगुणसदनं श्रीपुण्यसदनं सेवमाना, समुदं सोत्साहं भावगम्यमिव भगवन्तं सम्प्राप्तमिव गर्भं श्री पुण्यसदनोऽपि धारयितुमसेवत। अनवरतभक्तिध्यानयोगेन लब्धभगवद्भावेन निरन्तरं श्रवण-मनन-निदिध्यासनाद्यैर्हृदयदेशे विराजमानं भगवन्तं श्रीसीतानाथं ध्यायमानोंऽशांशेन मनसि प्रविष्टं तमेव स्मृत्वा दाम्पत्यव्यापारं परिचरन् श्रीकश्यपोऽदित्यामिव सुचिरतपः सम्भृतं सुशीलायां वीर्यमाधत्त। ततश्च सा सुशीला निरन्तरं प्रसन्नचित्ता यथानिदेशं यथाशास्त्रं, यथाचारं, स्वकुलवृद्धैर्यथाज्ञप्तं, व्यापारं स्वगर्भरक्षणहेतवेऽचेष्टत।

इत्थम् शनैः शनैः यातेषु च कतिपुचिद्दिनेषु प्रवर्द्धमानपुण्यप्रक्रमेण सह प्रशस्तचरितायाः सुशीलायाः गर्भवृद्ध्या सहैव शीलस्वभावे दयादाक्षिण्यादीनां, शरीरे सुखदाऽऽलस्यस्य, गृहप्रसाधने शैथिल्यस्य, गोब्राह्मणाऽतिथिसेवादौ समुत्साहस्य, भगवद्भक्तौ दार्ढ्यस्य, श्रीमद्रामचरितादिश्रवणेऽनुरागस्य प्रतिक्षण वृद्धिः प्रारभत।

तथाहि तस्याः कलधौताऽयमाने मुखमण्डले प्रासरत् पाण्डुरत्वम्। समुत्पन्ना च पीवरता पयोधरयोः, दृष्ट्वा च तौ सद्योजातनवमधुर पयः पूरपूरितौ माङ्गलिक सुवर्णकलशावपि विलज्जेते स्म, प्रथिमानत्वञ्च तनूदरे, पर्य्यस्तविततताच नितम्वमण्डले। सशैथिल्यञ्च माधुर्यं सरससमालापे, वैदग्ध्यञ्च वाचि, गुरुभूततामावहति च पादविन्यासः मन्दमदमन्थरे गतिविलासे च प्रावर्द्धत मरालमानमर्दनमहोल्लासः।

सहसाऽपससार च सुभगाऽपत्रपाभारमन्थरोऽपि सहाससुलभप्रेक्षणप्रकारो निजदयितसम्मुखे, मुखाऽवलोकनक्षणे। यथा यथा हि मन्दाक्षत्वमक्षियुगलमावृत्य प्रावर्द्धते स्म तथा तथाऽपूर्वं किमपि प्रशान्त-शीतलं भास्वरं ज्योतिर्मुखमण्डलमावृणुते स्म। सुशोभते स्म च प्राभातिक सुधाधरविम्वमिव तस्याः शुभ्राऽऽस्यमण्डलम्।

इत्थम् नवमासाऽवसानकाले साऽवलोकते स्म प्राभातिकं स्वप्नम्। एकदा आसन्नारुणोदयावसरे ब्राह्मे मुहूर्त्ताऽऽरम्भे व्यलोकयत्, यद्-कश्चनापूर्वः-परम तेजस्वी परितःप्रसरितप्रभापटलः विविधमणिगणमौक्तिक-माणिक्य-गारुत्मतवज्रप्रेङ्खिताऽलङ्कार सम्भारभासुरः परममनोहरः शिशुः स्वभवनप्राङ्गण एव क्रीडति। तद्वदेव सर्वाऽऽभरणभूषिता वृन्दारकवृन्दरमण्य इव भूयस्यो विलासवत्यः सुदत्यो हासोल्लास-

विनोदमोदमहिताः समन्ततस्तं परिवृत्य, अङ्कादङ्कमुपादाय-क्वाचिदालिङ्ग्य, क्वचिन्निगूह्य, क्वचिदुच्चैः प्रोच्छाल्य (प्रोत्क्षिप्य) पुनर्हस्ताभ्यामुपगृह्य मुहुर्मुहुश्चुम्बन्त्यो लालायन्त्यः क्रीडयन्ति। पुनः काश्चित्तं सुगन्धिद्रव्यैः सुवासितेन शीतलसुरभिणा वारिणा स्नापयित्वा-केसर हरिचन्दनकर्पूरादिक्षोदैः सुरभितं विधाय, रत्नप्रेङ्खिते दिव्येऽपूर्वे सिंहासने संस्थाप्य तस्य विशालभाले तिलकं दत्वा विविधोपचारैः समर्चयन्ति। मनोविनोदाय च शिशोः सम्मुखे विचित्रवेषवसनो दिव्यस्वरूपः साक्षाद्देवाधिदेवः श्रीशङ्करः स्वडमरुनिनादपुरःसरं स्वलास्येन समुल्लासयति तमेव कन्दर्पकोटिसुन्दरं शिशुम्। स्तवनपराश्चान्येवृन्दारकाः शक्रपुरोगमाः नन्दनोद्यानोद्भूतसुमनःपुञ्जैः मन्त्रपुष्पाञ्जलिभिः कुर्वन्ति कुसुमवृष्टिम्। विश्वविभूतयो विश्वावसुप्रमुखाः गायन्ति गुणगणगौरवम्। नृत्यन्ति सुरपुर-विलासिन्यो मेनकातिलोत्तमाघृताचीरम्भोर्वशीसुकेशी - प्रभृतयो हाव - भावादि-विविधवल्लभप्रियान् भावान् विभावयन्त्यः। त्रिभुवनवन्दनीयाः श्रीकमलोमा-सरस्वतीशची-प्रभृतयो जगद्विभूतयो लालयन्ति, अवतारयन्ति च शिरश्चुम्बनपुरः-सरं सैन्धवराजिका मुष्टिकावतरणानि दृष्टिर्निर्हरणानि। परितः प्रसरति चाकाशमण्डले समन्ताज्जयध्वनिः। पुनस्तत्क्षणमेव स एव बालस्तरुणः सन् दण्डकमण्डलु मेखलाऽजिनपरिवृतः सोपवीती मधुरस्निग्धवीक्षणः समुन्नतपीठेः स्थितः समुपदिशन् सुशिष्यमण्डलमण्डितो विद्वज्जनानुगम्यमानमाहात्म्यः समन्तात् परिव्रजन् विस्तारयति च विश्वस्मिन् विश्वे श्रीरामभक्तिप्रचारम्। स्थापयति च स्थाने स्थाने भूमण्डले विजयस्तम्भान्। स्वयमपि च तदुपदेशामृतपानानन्दनिमग्ना, अपूर्ववचन-सुरसनिर्भरीसमास्वादनसन्तृप्तसमस्तेन्द्रियगणो न गणयति लौकिकालौकिसुखसन्ततिम्। अधिकाधिकाऽऽनन्दमवाप्तुं प्रयतमाना स्वयमग्रे समुपसृत्य तत्समीपं गन्तुकामेवाऽऽसीत् तदानीमेव प्राभातिकी माङ्गलिकभेरीनिनादोऽश्रूयत। सहसैव सा जागरिता ह्यभूत् सद्यः सः सुखस्वप्नोऽप्यलक्षित एवाभूत्। तदानीं स्वप्नाऽवलोकनाऽपूर्वाऽऽनन्द-महोदधितरलतमतरङ्गोल्लासाऽवलोकनसौख्यनिमग्नेदृशी समभवत् या हि न व्यजानात् ब्राह्ममुहूर्त एव सर्वदोत्थाय निवृत्ताह्निकसकलव्यापारा, अरुणोदयकालेऽहरहर्भगवद्दर्शन-स्तोत्रपठनादिदैनिकनियमकार्यं कुर्वन्त्यासीत्, कदा निर्गतः स कालः इति। सम्प्रति गर्भभारावसन्नां प्रसन्नामेव तां द्रष्टुकामः सः पुण्यसदनोऽपि न जागरयति स्म सुखसुप्ताम्, सञ्जातेऽपि प्रभाते।

यदा हि श्रीपुण्यसदनः कृतस्नानसन्ध्योपासनादिदैनन्दिनकृत्यः स्वकीयोपासना-प्रकोष्ठाद्वहिर्निर्गतस्तदाऽपश्यच्चत्वारश्चारुवेषान् सुकेशान् विहित स्वं-स्व शाखानुसारं पदक्रमजटाघनपठननिरतान् भास्वत्प्रभापुञ्जप्रसारितकिरणान् तेजस्विनो द्विजकुला-

वतंसान् ब्रह्मणोंऽशान्। विलोक्य व्यतर्कयच्च किमेते सनक-सनन्दन-सनातन-सनत्कुमाराः सन्ति ? नहि नहि ते तु पञ्चहायनाः दिगम्बराः सन्ति, महानुभावास्त्वेते तु सुस्पष्टं स्पृष्टतारुण्याः लावण्याऽनुरूपविधृतवाससस्तापसोत्तंसाः हंसारूढाऽनुकारिणो मञ्जुलाऽऽकृतिधारिणः समस्तज्ञानविज्ञानपारावारपारीणाः प्रशस्ताः पुस्तकहस्ताः ध्वस्ताऽखिलमालिन्याः मन्दस्मितविकसितरदनाः प्रसन्नवदनाः। इति तर्कयन् यावत् स तेषां मविधे समायाति तावत्ते सद्यः समुपसृत्य वेदमन्त्रान पठन्त आशीः परम्परा प्रसारणपुरस्सरं जयघोषमघोषयन् "विजयतां महाभागः सुकृतसदनः पुण्यसदनः"।

यावत्ते शुभाशीः परम्पराभिरभिनन्दन्ति तम्, तावत् स पुण्यसदनः सपदि स्वपूजोपासनागृहाद्वहिर्निर्गच्छन् सहसोपसृत्य पादयोस्तेषां प्रणतिपुरःसरं न्यपतत् ससम्मानञ्च तान् स्वयं ह्योपासनाशालां नीत्वा समर्हणीयोन्नताऽऽसने सुखासीनान् विधाय, मधुपर्काद्यैर्यथानियमं समभ्यर्च्य, कुशलप्रश्नपुरःसरं तदीयभवनपर्य्यन्तं पदधारणश्रमकरणकारणम् सविनय पप्रच्छ।

तेऽपि स्वात्मानं प्रच्छन्नमेव रक्षित्वा केवलं ज्योतिर्विद एवेत्युक्त्वा भूतभविष्यद्वक्तार एव स्वात्मानं न्यवोधन्त। जगदुश्च ते यत् भवतो दिक्षु प्रसृतामुज्ज्वलां कीर्तिमुपाकर्ण्य भविष्यत् फलं वोधयितुकामा एव वयमत्र समुपस्थिताः स्म। अनुमतिश्चेन्निवेदयामः। इति।

साञ्जलिः प्रत्युवाच पुण्यसदनः—सेवकः सावधानः श्रोतुकामः सन्नद्ध एव, भगवद्भिर्दयालुभिरनुगृहीतश्चेत् कस्तत्र प्रश्नः। परवानयं चरणारविन्दमकरन्दमिलिन्दायमानोऽकिञ्चित्करः सेवकः।

स्वस्तीत्युक्त्वा प्रोचुस्ते-महानुभाव, यथा ते नाम तथैव त्वं गुणगणगरिष्ठोऽपि। यदर्थं त्वमचरत्तपः, तेन तुष्टः सः प्रभुः स्वयमेव प्रादुर्भूय तव पुत्रत्वं प्राप्स्यति। स हि पुत्रो जगद्विख्यातो महाप्रतापी, सूर्य इव स्वप्रचण्डतेजःपुञ्जप्रसारणापनीतदुर्मतपापण्डचण्डान्धकारपटलः, प्रभानिकरविस्फुरणविस्तारित वैदुष्यविभवोल्लासोल्लासितभक्तजनमानसाऽङ्कुरितभक्त्यङ्कुरः, सौन्दर्याऽतिरेकावधीरितकन्दर्पदर्पः। धीरधिषणाऽवधीरितधीरधिपणः। श्रीकर्दमसूनुरिव सर्वविधाऽज्ञानकर्दमप्रक्षालनपटीयान्. महान् ब्रह्मज्ञानी योगिराजः, परिव्राजाचार्यो, ह्यपारकरुणासागरो, मनुजोद्धारपरायणः, प्रादुर्भविष्यति विश्ववन्दनीयपदारविन्दः, समुद्धारकश्चार्यसंस्कृतेः। स्वप्रभया प्रतिभोद्रेकेण च पराजयिष्यते वैदिकधर्मविरोधिनः पाषण्डप्रचारकान्, भविष्यति च जगद्गुरुपदासीनः।

महानुभाव ! यथा भवान् सम्प्रति लोके महामहिमशाली, अहो ! अहो भाग्यवान् ततोऽपि द्विगुणिततरा भवतो धर्मपत्नी श्रीसुशीलादेवीति । वयं मन्यामहे-यतोहि धारणा-ध्यान - समाधि - निरता अपि महामहायोगिनी यद्दर्शनार्थं सततं यतमाना अपि तपो-योग-साधनाद्यैर्विधृतहठयोगा अपि नाऽलभन्त यथेष्टं तद्दर्शन-सौभाग्यम् । किम्बहुना ब्रह्मेन्द्ररुद्रादयोऽपि यदङ्गसङ्गमसुखाऽवाप्तये सततं यतन्ते-स एव साक्षात् परब्रह्म भगवान् नित्यश्रीसाकेताऽधिपतिर्जगदभिरामः श्रीरामः साक्षादक्षिविषय इवाऽभवद्युवयोः कृतार्थौ च कृतवान्, निजप्रसादस्वरूपाऽपूर्ववरप्रदानेनेति कथयति लग्नवेलाऽस्मिन् क्षणजन्या, नाऽधुनाऽस्ति विलम्बो यत् स एव कौसल्याहृदयनन्दनो जगद्वन्दनो भगवान् श्रीसुशीलोत्सङ्गमेवरङ्गभूमिं परिकल्प्य तनयिष्यत्यमन्दाऽऽनन्दस्रुतिनिष्यन्दिनीं प्रणयानुशीलां स्वकीयां बाललीलामिति । प्रसारयिष्यति जगच्छ्रेयस्ततिम् । वितरिष्यति म्लेच्छाक्रमणात्याचारादिभीतिनिर्मुक्तिम् । स्थापयिष्यति सुस्थिरां शान्तिमपाकरिष्यति चाऽशान्तिवातावरणम् । जनतामानसपटले सुचिरमङ्कयिष्यतिधर्मदार्ढ्यम्, वर्द्धयिष्यति बलम् । समुत्तनिष्यते च सत्साहसम् । समेधिष्यते चापूर्वशौर्यसमुन्नाहम् । विकासयिष्यति मानवेषु सद्भावना-सुमनांसि समर्द्धयिष्यति च गोब्राह्मणादौ नितान्तजनतायाः श्रद्धासम्मानाऽर्हणा-परम्परापरिपालनपद्धतिम् । अनन्तगुणस्ते भविता तनूजः । इत्युक्त्वा, "स्वस्तिः स्वस्तिः स्वस्तिः" पुन र्वेदमन्त्रैराशीःस्तवनमपाठिषुः ।

सविनयं प्रणतिपुरःसरं तदुच्चारितमाशीर्वचनमाकर्ण्य तेषां समर्हणार्थं तत्स्वरूपाऽनुरूपं वस्त्राऽऽकल्पाद्यानयनाय गेहाऽभ्यन्तर प्रविष्टः समभूत् तस्मिन् क्षणे ते सद्योऽन्तर्हिताः सम्बभूवुः । यावत्परावृत्य पश्यति श्रीपुण्यसदनः स्वकराऽऽहृता-र्हणसम्मानस्थालिकोऽनालोकितद्विजचतुष्टयदर्शनः नितान्ताश्चर्यपतितः समभवत् । क्व ते गताश्चत्वारश्चारुदर्शनाः कृतसमालापाः महात्मानः, इति खेदाकुलः समजनि, तदानीमेव प्रासरदशरीरिणी वाक्—"भोः भोः सुकृतसदन ! पुण्यसदन ! न वयं सामान्याः दानदक्षिणासक्षणावेदविदो ब्राह्मणा आस्म । अपितु तव दर्शनार्थमेव तवाङ्गणे समागतानस्मान् "ऋग्-यजुः सामाथर्वणः" एव वेदान् चतुरोऽवेहि । गर्भस्थस्यैव तस्य तेऽर्भकस्य स्तवनकीर्तनरक्षण - स्वस्त्ययनार्थमेवाऽऽगतान् जानीहीति माऽन्यथा चिन्ताविषाद परवशोऽभूः" इति ।

तस्मिन्नेव क्षणे सुशीलादेवी समागत्य पादाऽभिवन्दनपुरःसरं स्वहृदयाऽऽनन्दनं स्वप्नवृत्तान्तं समाकर्णयितुमुपस्थिता विस्मयाऽऽविष्टमानसं हर्षविषादाश्चर्याऽद्भुताननं स्वकान्तं मोदोल्लासप्रहसिताऽऽन्तरमालोक्य कारणं जिज्ञासमानाऽ-

पृच्छत् "कथमपूर्वदर्शनकुतूहलीव विविधभावनाविभावितान्तरात्मेवाऽऽभाति देवः" इति।

स्वान्तर्निभृतगूढतेजोविशेषां सविशेषामशेषाऽऽनन्दसहचरीं चारुशीलां सुशीलां सबहुमानं स्वपार्श्ववर्तिनीं विधाय, सद्यः समुद्भूताममभूतपूर्वां द्विजस्वरूपेण समायातानां पुनः प्रयातानाञ्चतुर्णां वेदानामावागमनसद्योऽन्तर्धानविधानमुपवर्णयितुमारब्धवान् श्रीपुण्यसदनः। श्रुत्वा च जातप्रमोदमहोत्साहाऽपि स्वप्नाऽनुभूतं परिपूतं वृत्तान्तमुपान्तमासेवमाना समुदं संश्रावयामास। दम्पत्योः परस्परमेकलक्ष्यं शुभलक्षणलक्षितं मनोरथपूरकं शुभदृश्यं विचिन्त्य स्वाऽभिलषितमग्रेतनं प्रवर्तमानं कर्तव्यमचिरप्रसारणार्थं निवेदयामास स्वकान्तमनुपान्तं सुशीला।

देव! सम्प्रति समागतः सः पुष्पोद्गमसमयो मनोरथपादपानाम्। अतो भगवतः प्रसादार्थं राजोपचारेण श्रीरामार्चा - महोत्सवम् तदङ्गभूतश्च साधूनां सतां महताञ्च समस्तनगरवासिनां ब्राह्मणानामामन्त्रणपुरःसरं सश्रद्धं सदक्षिणाको महाभाण्डागारयज्ञः समाराधनीयः। तदङ्गभूतानि च दीनानां कृते दैन्यापहरणायाऽभिलषित वस्तुप्रदानादीनि 'अन्न-धन-वस्त्र-कम्बलादीनि पर्य्याप्तानि प्रदाय-निखिलदेवायतनेष्वखण्डहरिकीतन-जप-पाठ-होमानुष्ठानादीनां सद्यो व्यवस्था विधातव्या। सर्वत्र च सामूहिकी चारुनृत्यवाद्यविशेषा भगवतः प्रार्थनाऽपि करणीया। किञ्च समागतेभ्योऽतिथि-ब्राह्मण-वटुभ्योऽप्यभिलषितवस्तु प्रदानात्मिकी व्यवस्थाऽपि मुक्तहस्तेन प्रवर्तनीया देवेनेति। इति श्रुत्वा सहृदयः समुदारहृदयो महामनाः पुण्यसदनः सहर्षं तदनुसारमेव सर्वं कृतवान्।



# पञ्चमः परिच्छेदः

## अथ जन्म-महोत्सवः

यस्य कालस्य सुचिरप्रतीक्षा आसीत्, यदवलोकनाय जपतपःसमाधि-निरतयोः, अनवरतदानदक्षिणादिसमभ्यर्चित - द्विज - देवातिथिविबुधवृन्दप्रदत्ताशीःशतानुमोदितयोर्भगवदर्चनापरप्रसादानुगुणितयोर्दम्पत्योः लब्धवरप्रादुर्भावजनिताऽमन्दाऽऽनन्दमहोत्सवोल्लामयः सविलासमयः सम्प्रति समागतः। अद्य विक्रमार्क-राज्यात् द्वादशशतोत्तर षट्पञ्चाशत्तमेऽब्दे माघकृष्णायाः सप्तम्याः शुभे मङ्गलमये दिवसे प्रभातकालमारभ्यैव समस्तेऽस्मिन् प्रयागनगरे सर्वे मार्गाः रथ्याः प्रतोल्योऽपि समन्तात्सुसज्जिताः नवनवाऽऽम्रपल्लवानां वन्दनमालिकाभिः सुमनोगुच्छैश्चैलतोमर-पताकाद्यैः समलङ्कृतद्वारदेशा सर्वे भवनविशेषा इव शोभन्ते स्म देवभवनप्रतीकाः।

तत्र सर्वाणि भवनद्वाराणि नवरङ्गरञ्जितचित्रवल्लीवितान-समञ्चितानि, ललितरसालदलशोभित दूर्वाङ्कुरसुमनोगुच्छविलसितविविधकलशराजिपरिमण्डिता-न्यासन्। प्रासादशिखरोपरि परिस्फुरच्चञ्चल - चीनांशुकचैलोल्लसितध्वजाः वाताऽऽन्दोलिता आकारयन्ति स्म सुदूरवर्तिनो मनुजान् महोत्सवसमारम्भे सम्मेलनाय। क्वचिद्दूर्ध्वाऽभिमुखीभूताः परिस्फुरन्त्यः मङ्गलमहोद्भवे माङ्गलिक-गीत - वाद्यलास्योत्सवे सज्जीभूय समागमनाय पुरन्दरपुरवास्तव्या विलासवत्योः समाह्वयन्ति स्म दिव्याऽप्सरसो, गन्धर्वगणान् वा। सर्वत्र स्वच्छाः परिमार्जिता संसिक्तजलाः प्रसूनप्रकरपरिमण्डिताः लघुपादपाः क्षुपाः चित्रविचित्ररङ्गरञ्जिताः विविधधातुमयाः, मृण्मयाः, दारुमयाः प्ररूढक्षुपाः पात्रविशेषाः पंक्तिबद्धाः सुसज्जिता उभयपार्श्वतः शोभमाना आसन् प्रतिपन्थानमिति।

तदानीम्-पुण्यसदनस्य प्रासादस्तु महेन्द्रभवनमिव राजतेस्म मङ्गलवाद्यनिनादेन निनदमय इव, समस्तपुरपुरन्ध्रीगणसङ्कुलः सुभगसीमन्तिनीसम्मर्दसमुल्लसितः सुरवरललनामय इव, ललितलास्य-प्रयोग-प्रदर्शनपराहताप्सरस्सहस्रषोडशीभिः समुल्ल-

-सदप्सरोलोकमय इव, विविधवाद्यविशेषैः सङ्गीतकलाकौशलप्रकाशनप्रवीणैः गन्धर्वलोकमय इव, विविधमाङ्गलिकवेषभूषालङ्कृतविबुधवृन्दपरिराजित पुरन्दरपुरसभाभवनमिव, संस्तूयमान - द्विजकुलानुमोदित - सूतमागध - वन्दीगणसमुद्गीत - प्रशस्तिसहस्त्रै र्राजप्रासाद इव, समागत —"ऋग्-यजुः साम-अथर्व" वेदाऽध्येतृवैदिकविद्वत्कुलोद्गीत पृथक् पृथक् स्वर-पद-क्रम-घन जटा-क्रमेणोद्घुष्यमाणोच्चतरस्वराऽऽपूर्यमाणाऽऽशीर्वचनश्रुतिध्वनिध्वनितब्रह्मलोक इवाशोभत। क्वचित्सुरभितशीतलसलिलसम्भृत जलोत्क्षेपणयन्त्रसमुत्क्षिप्यमाणा-मधुर - सुगन्धिशीकरगणप्रसारणेनान्वकारितजलधरसमय इव प्रतीयते स्म। नागरिकजनैश्च निजनिजभवनीयसुसज्जापाटवप्रदर्शनाऽवलोकनानुमीयमानविश्वकर्मकलाकौशलानुभूतिरिव कार्यते स्म। देवायतनेषु च दीव्यन्ते स्म द्विजदेवोदीरिताः दिव्याः स्तुतयः। धार्यन्ते स्म धार्मिकस्थलेषु धर्मप्रवृत्तयो धार्मिकैः। भूयो भूयो भाव्यन्ते स्म भक्तिभावनाः भावुकैर्भगवन्मन्दिरेषु। यज्यते स्म याज्ञिकैर्यज्ञनारायणो यज्ञशालासु। एतस्मिन्नेव परमरमणीये सुखदे मङ्गलमये सकलजनमानसमुल्लासमये समये शुभे लग्ने सौभाग्यशालिन्याः महाभागायाः श्रीसुशीलादेव्याः कुक्षितः परमकारुणिकः करुणावरुणालयो लोकाऽभिरामः श्रीरामः सकललाक कल्याणाय प्रादुरभूत्।

प्रादुर्भूतञ्च तं नितान्तसुन्दरं कन्दर्पदर्पोपशमनायैव प्रकटितमिव निकामसुन्दरं निर्निमेषालसया दृशा त्रिलोकयन्त्वेवाऽन्वभवत् तदेव भागीरथीतीरस्थ कुटीरस्थिता तपश्चरणकाले प्रदृष्टं रूपं सशराऽऽसनचाप-तूणीरसमलङ्कृतं श्रीसाकेताधिपतेः स्वरूपमनुपमिति। यावत्प्रणयविह्वला विस्फारितनयना समुदं सहर्षं सोल्लासं सोत्कण्ठमुपकण्ठमुपसृत्य चरणारविन्दे प्रणतिनिवेदनाय हस्तप्रसारणादिव्या पार व्यवसाययति श्रीसुशीलादेवी तावदपश्यत् तमेव सामान्यशिशुरूप सद्यः प्रकटितं परमरमणीयमात्मजम्। तदानीं प्रधानगृहदासी सद्यः श्रीपुण्यसदनं शुभसूचनया समुदमसूसुचत् प्रसन्नचेताः सोऽपि तस्यै स्वगलहारमवतार्य ददौ।

अर्भकस्य जननसमये गगनतोऽपि मन्द मन्दं मेघगर्जनमिवाकर्णितम् जनैरनभ्रमयाऽऽकाशे। उद्यानेषु सुभगसहकार-समुद्भूत-मञ्जुमञ्जरीपरागरागरञ्जिताः माकन्दमञ्जरीरसपानमत्ताः पुंस्कोकिलाः प्रतिशाखं प्रस्फुरन्तो नृत्यन्तः कूजन्ति स्म। समस्ताः वल्लीमतल्ल्योऽपि सुमनोभारपरिमण्डिताः सीमन्तिन्य इव आनन्दरससम्पृक्ता इव मन्दवातान्दोलिताः नृत्यन्त्य इव शोभन्ते स्म। निःशेषाः पादपाः सपदि प्रफुल्लिताः समभवत्। लघवः क्षुपा अपि कुसुमसमूहैः सुसज्जिताः सुरभिताः सञ्जाताः। पाटला अपि प्रसूनपटलैः प्रस्फुरितमकरन्दाः समाकर्षन्ति स्म

मधुकरनिकरम्। कूजन्तः कोकिलाः कलयन्ति स्म भगवज्जनन-सुखदसंवाद-प्रसारम् समस्तवनोपवनेषु गुञ्जन्त्यो मधुकरमालाः श्रावयन्ति सकल वनोपवनवल्लरीः प्रादुर्भावप्रशस्ति-ततिम्। सुमनः समयोऽपि समर्पयति सर्वत्र सुमनोभरैः सुरभिमयीं स्वकीयां सेवाम्। गंगा-यमुना-सरस्वतीभिरपि स्वसङ्गमस्थले समारभ्यत तरङ्गरङ्गोद्भूत-विविध-केलिकल्लोल - कलकलः शीतलो मन्दः सुरभितः सुखदः समीरोऽपि धीरोगभीरो वहति स्म जनानानन्दयन्नवनितले। तदानीं तीर्थराजः प्रयागोऽपि षष्टि-सहस्रतीर्थसमन्वितः सार्थकः समभवत्।

महामहापुरुषस्य प्रादुर्भावमाकर्ण्य तदीयमाङ्गलिकस्वागतसज्जायै सुसज्जिताः सुवर्णरजतसूत्रसमञ्चित विविध सुभगप्रसूनगुच्छक - पुञ्जसमलङ्कृतचित्रलता-ललित - चीनांशुकपरिवृताः नैकविध-रत्नराजिप्रेङ्खित-कटक - कुण्डल-केयूरग्रैवेयक-त्रिमणिसुमण्डिता काञ्जीकलापकलनूपुरोट्टङ्कितक्वणत्किङ्किणीकाः, स्वकरकलित-विविधरत्न - मौक्तिक-सम्भृत - सुवर्णस्थालिकाः विलुलितमालिकाः, प्रतिष्ठितकुल-प्रसूताः वरवर्णिन्योऽभिजनकुलवध्वः स्वस्वोच्चतम हर्म्याट्टालिकाभ्योऽवतरन्त्य, सुरवरललनाऽनुकारिण्य आकाशादवतरन्त्य इव राजमानाः मङ्गलगीतकानि मधुर-लयताल - समन्वितानि गायन्त्यः किन्नरगन्धर्वराजमहिष्य इव यूथशः श्रीपुण्यसदन-भवनद्वारमुपेत्य नृत्यन्त्यो नवशिशोर्दर्शनार्थं सङ्घशः समायान्ति स्म। हरितदूर्वाङ्कुर-सार्षपसुमनगुच्छाञ्चित - पवित्रपुण्यतमसुरसरित्सलिलसम्भृतसुवर्णकलशैः शोभितशिरः-सुछायाः मङ्गलमुख्यः सुमुख्यो बहुविध-वर्धापनाऽभ्युदयोचितगीतवादित्रपरिभूषिताः समलञ्चक्रुः श्रीपुण्यसदनप्रासादम्।

त्रिकालज्ञा महर्षिकल्पा मौहूर्तिका ज्योतिर्विदो जन्मलग्नं निर्ममुः सन्ततशुभा-शीर्वचनस्तावकवैदिकमन्त्रोच्चारणापसारितसकलभुवनाऽमङ्गलवृजिनघनाः वैदिका ब्राह्मणा ब्रह्मकल्पा ह्यनल्पविज्ञानविदः समागत्य स्वस्तिवाचनपरायणा वेदमन्त्रैश्च बालरक्षामाचेरुः।

अन्येऽपि नागरिकाः पुरपुरन्ध्र्यः समागत्य नानोपायनपाणयः सोल्लासं समुदं वर्धापनेन श्रीपुण्यसदनम् श्रीसुशीलाञ्चाऽभिनन्दयामासुः। अद्भुतस्वरूपं सुदीर्घसमयानन्तरं चरमे वयसि समुद्भूतम्, महदाश्चर्यंकरमिति मत्वा सङ्घशः नवकिशोर्य्यस्तरुण्यो वृद्धाः सज्जितविविधवसनाः परिधृतानेकरत्नाऽऽभरणा माङ्गलिक वर्धापन गीतानि संहृत्य प्रगायन्त्यः समाययुः। तत्र सूतिकागृहाऽभ्यन्तरे श्रीसुशीलोत्सङ्गे विलसन्तं विधृतनयनकज्जलं कमलदललोचनम् जगदघमोचनम्, विलोक्य नवशिशुम् विद्याविवेकवैभवविभासित वाग्वैभवा काचित् प्रशस्तिपरा

सरस्वतीव गुणगणगौरव - वर्णने प्रदर्शितप्रागल्भ्या प्रस्तौति स्म। काचित्स्वकीय-श्रीविलासोल्लासिनी, करधृतनानारत्ननिकरप्रभापुञ्जप्रसारणापसारितध्वान्तसमूहा, तदर्भकलावण्याऽवलोकनमात्राकृष्टहृदया, परिभूषयति लक्ष्मीरिव स्वरत्नाभरणै-स्तदङ्गलक्ष्मीम्। काचिद् गौरीव गुणगौरी, स्वकीयाऽभयकरावतारितराजिकालवण-मुष्टिकाऽरिष्टनिःसारण-प्रदत्ताऽभयवरा, स्वकराऽऽमर्शाऽऽधूताऽसकृद्दृष्टिदोषा, मुहुर्मुहु-र्लालयन्तीव, वालं वहुमन्यते स्म सुशीलायाः सौभाग्यमहत्ताम्। काचिच्च शचीव प्रदर्शिताऽपूर्वैश्वर्य्यगौरवा समर्पयामास प्रस्फुरत्समुज्ज्वल - द्युतिमदिन्दु - हारावलीम् बालस्योरःस्थलीपरिमण्डनाय। भूयस्यो भव्यभावोल्लासानन्दनिमग्ना बहुविध मुक्तारत्नराजिराजित नीराजनस्थालीं विविधदीपमालाभिःसुसज्जितां विधाय नवजात-शाततनुशिशुसमलङ्कृतोत्सङ्गायास्तरङ्गायितमुक्तकेश - कलापायाः प्रसूतिकायाः सुशीलायाः आरार्तिकमवतारयन्ति स्म।

समवयस्काः प्रतिवेशिनः श्रेष्ठिनो व्यापारिणो धनिकनिवहश्च श्रीपुण्यसदन-द्वारमुपेत्य श्रीपुण्यसदनं दधि - हरिद्राचूर्णनवनीत - काश्मीरजपङ्क-चन्दनक्षोदादिभिः संलिपन्तो नृत्यन्तो गायन्तो जयध्वनिभिर्गगनमपि गुञ्जयन्तः नन्दमहोत्सवमिव सम्मानयन्ति स्म। वर्णयन्ति स्म सौभाग्यपरम्परां पुण्यसदनस्य। इत्थम् दैनन्दिनं नवनवमहोत्सवैर्द्वादशदिवसात्मको महामोदोत्सवः सम्पन्नः समभवत्। सम्पन्ना च सञ्जाता प्रायो याचकपटलस्योत्कृष्टमनोरथानां परिपूर्तिः।

अद्य प्रभातमारभ्यैव सुदूरदूराद् दर्शनकुतूहलिनो हलिनः श्रीपुण्यसदनस्या-धिकारे तदीयशासने तत्संरक्षणे प्रवर्तमानाः समुपायनार्थं करविधृतनानाविध वस्तुजातप्रकटितशातसौभाग्यभाग्यवन्तो गायन्तो नृत्यन्तो हसन्तश्च मोदमुदितस्वान्ताः यूथशः समाजग्मुः।

केचिद् दधिहण्डिकां नवनीतपात्राणि सुपिच्छलदधिसम्भृतां कुण्डिकाञ्च निधाय शिरसि वर्धापनप्रदानाय नन्दोत्सवमनोरथसमाराधनाय तदानींतने मञ्जुले समये समुपस्थातुमशक्ताः प्रसक्ताः स्वस्वकृषिकर्मणि, सम्प्रति बालजातकर्म-नामकर्म-संस्कारमहोत्सवे भागमाधातुमुपस्थिताः समभूवन्।

भूयांसश्च हस्तकलाकलापकुशलाः कारुकाः वयनकर्मदक्षाः बहुविध स्वहस्त-निर्मित शातकुम्भसूत्रपरिकल्पित - प्रान्तभागप्रशस्तांशुकानि समुपायनयोग्यान्यादाय 'कुविन्द' कुलमूर्द्धन्याः समवेताः सम्बभूवुः। "कतिपयाः विविधदारुकर्मचातुर्यचणाः, नैकविधकुसुमगुच्छसमञ्चितव्रततितानि समुट्टङ्कितचित्रविचित्र शकुन्तमण्डलपरिमण्डित

हरिचन्दनदारुविनिर्मित - परितोऽवलम्वित - क्षुद्रघण्टिकाशतसमलङ्कृत झञ्झणायमान मृदुलतूलास्तरण सुखसेव्य पल्यङ्किकायुगलमुपायनमुपादाय मङ्गलगीतकान्युद्गायन्तः समागत्योपायनीकुर्वन्ति स्म ।

अन्ये तु नागदन्तकारुकाः - मातङ्गमुखमण्डलमण्डनायित - विशद दन्तावला-दिव्यदन्तखण्डकलिताद्भुतकृतिकलाकौशलोल्लासि - कमनीय - क्रीडोपस्करमयानि क्रीडनकौतुकानि विविध-हस्ति-तुरङ्गम-धेनु-क्रमेलक-वलीवर्द, वाद्यवादक-नर्तक-नर्तकीगण - सैनिकादिनाना - क्रीडनकानि, नानाविध शुक - मयूर - हंस - सारस-चक्रवाक - चटक - पारावत - युगलानि समुपादाय स्वहस्तनिर्मितानि समुपायनी कुर्वन्ति स्म ।

केचन-पित्तल-कांस्य - रजत - रङ्गादिधातुमयानि वालोचितानि पादोट्टङ्कित चक्राणि - रथ - तुरङ्ग-धेनु - गजादिक्रीडासाधनान्यादाय समुपाहरन्ति स्म धातुकला-प्रवीणाः काम्बविकशौल्विकादयः ।

अन्ये च जाम्वूनद - रजत - सम्मिश्रितद्विविधधातुकलितानि, कतिपयानि विशुद्धहिरण्यमयरचितानि नानाविध - पशुपक्षिसमाकृतिविशेषाणि, कतिचन रजतरचितानि, कतिपयानि च सुवर्णनिर्मित - रत्नावचितानि - हरिण्मणिमयपत्राणि इन्द्रनीलमणिमयनयनगोलकानि, इन्द्रनीलमणिकण्ठानि त्रिविधमणिरचितशिखानि रत्नमयूरकुलान्युपादाय समर्पयन्ति स्म स्वर्णकार-रत्नपरीक्षकाः । इति ॥

"अथ-एकादशे द्वादशे वाऽहनि पिता नामकर्म कुर्या" दितिश्रुतेः चतुर्वेदावतारैश्चतुर्वेदिभिः वैदिकश्रौत्रियैः सानन्दं जातकर्मसंस्कारः सम्पादितः । सूतिकास्नानानन्तरञ्च त्रिविधाऽन्न-रत्नादीनां दानानि घृततिल - तैलादिदानानि सप्तधातुमयानि दानानि सूतिकायाः करस्पृष्टानि कारयित्वा सूर्याद्यवलोकना-नन्तरं च बालकमुखनिरीक्षणादि सम्पद्य नूतनवस्त्रधारण - पल्यङ्किकाधिशयन-रत्नाऽऽकल्पाऽञ्जनादि धारणानि सम्पाद्य ऋषिकल्पैर्भविष्यद्वक्तृभिर्ज्योतिर्विद्भि-र्विधविद्भिश्च वेद्यावतारैः जन्मलग्न - पत्रिकापूजनादि कृत्वा कारयित्वा च भाविफलश्रावणविधिं चकार ।

वालकश्चायं सुभगसद्गुणगरिष्ठो वरिष्ठश्च भविता वशिष्ठ इव महाज्ञान-विज्ञानराशिः । साक्षात् कपिल इव सकलमायाग्रन्थिभेत्ता छेत्ता च सर्वसंशयानाम् । श्रीशङ्कराचार्य इव जगद्गुरुर्विश्वविजयी विद्वद्वरिष्ठो योगिराट् परिव्राजकाचार्यश्चेति अस्य विमताः विरोधिनोऽपि नितान्तमस्य पादपद्मपरागनिषेविणः एव ससुखं स्थास्यन्ति नान्यथेति । सकलजीवलोकाय सुगमतया ज्ञानज्योतिः प्रदाय हरिष्यत्यज्ञान-

दारिद्र्यध्वान्तम् । प्रायोऽस्य दृष्टिपथमुपगतानां समेषामेव चिन्ता - क्लेश - दैन्य-दासत्वमहाबन्धनादि दुर्दिनानि सद्यो दूरतरं प्रयास्यन्ति । अखिलविश्वसम्मान्योऽयं वदान्यो महामान्यः सर्वप्राणिमात्रकृतेऽपूर्वाऽऽनन्द - सौख्यवर्द्धनपरः तत्परश्चायं श्रीरामभक्तिसमाराधन - प्रसारण - प्रचारे सकलमनुजोद्धारणे । शरणाऽऽगत सकल-जीवनिकाय-समुद्धारणधृतव्रतः श्रीराम इव सर्वाऽऽनन्दप्रदः "श्रीरामानन्द" नाम्नैव जगति प्रसिद्धोऽखिलाऽऽश्वचाण्डाल समुद्धारकः सुसिद्धो भविष्यतीति ग्रहस्थिति-विलोकनेनाऽयममितगुणगणमहार्णवोऽगाध गाम्भीर्यो वर्णयितुमक्षमः सक्षमोऽनन्त-चमत्कृतिप्रकाशनपटीयान् गोब्राह्मण-धर्म मर्यादारक्षणदक्षिणः प्रदक्षिणापरायणः पृथिव्याः भवितेति कियन्निवेदयाम इति ।

इत्थं स्वसुतसमुदयमहोदयमाकर्ण्याऽतीव प्रमुदितमना महामनाः श्रीपुण्य-सदनो मुक्तहस्तेन पुष्कलसुवर्णमुद्रा - रत्नाऽऽभरणादिमहोपस्करैः सम्पूज्य, वस्त्राऽलङ्कारसमलङ्कृतधेनुदानादिभिः सम्मान्य - बालकस्योदयार्थमभ्युदयानुकूलाचार-कुलाचारमाचर्य्य सर्वान् ससम्मानं विसर्जयामास ।

# षष्ठः परिच्छेदः

## बाल-लीला

यथा यथा श्रीरामानन्दः शुक्लपक्षस्थसुधाकरकलासदृक्षप्रवर्द्धिततनुविस्तारः प्रदर्शिताऽनन्तमाहात्म्यवैभवस्ततान जननी-जनकयोः प्रमोदसन्ततिम्। अनुरञ्जयति स्म मन्दस्मितमधुरमुखारविन्ददिदृक्षूणां चेतांसि।

एकदा सः स्वपल्यङ्किकामधिशयानः स्वकरकञ्जावलम्बितनिजवदनविधृतपादाङ्गुष्ठचूषणाऽऽनन्दानुभवामोदेषन्निमीलितदृक्पुटः, एकाकी स्वतन्त्रः कलयति स्म शिशुकुलकमनीयां कामपि किलकिञ्जितरञ्जितां कामिनीकदम्बोन्मादिनीं शैशवहेलाम्। तदानीमेव काचन चकोराङ्गनेव शिशुवदनसुधाधाराऽवलोकनैकमनोरथा, विलुलिताऽमलकपोलप्रतिविम्बितश्रुतिभूषणा, श्रुतिस्वरूपा, तदीयाऽऽननसरसिजसुलभ-सुरभिसमाघ्रातुकामा, सपद्यवनमितनिजाननगण्डमण्डलोपरिविलम्बिताऽलकाऽलिमालिका, चुचुम्ब चिरं तदीयाननचन्द्रचन्द्रिकासुधाऽऽसवम्। काचन विविधभाषाविशारदा शारदाऽनुकारिणी शारदेन्दीवराऽऽलोललोचना, सुहास-विकास-प्रसारिताऽमन्दनिजसौहार्दसुरभितकुसुमप्रकरा, लालयति स्म ललितललितानि, बालप्रियाणि, मधुरतमगीतकानि गायन्त्येव।

काचनाऽन्याऽनन्यगतिकाऽगतिकाऽऽगत्य महिलाजनस्वाभाव्यलज्जा-सौशील्यस्नेहसद्भावाऽवनी, ह्यवनिस्वरूपा नवनवाऽनुपमसुभगसौन्दर्यमालोक्य मनसि मोदमाना मानयति स्म नयनेक्षणसौभाग्यम्।

अपरा काचन निजनिर्मितरुचिररचनाललितां सम्भृताऽनन्तसामयिकप्रवर्तितदुरूहदुर्दमव्यवहृतिकृतिकलुषितवृत्तिमतिजनताततिमानसिकवेदनाविजृम्भितोन्मादमन्दमतिमहितां मन्दं मन्दममन्दगतिकां गीतिकां गायन्ती ज्ञापयामास सामाजिकीं प्रवर्तमान विषमां समस्याम्।

एका च भव्यभावनाविभावितभारतीविभूतिभूता सन्ततसंस्कृतशेवधिप्रसूतां-पल्यङ्कोपकण्ठमुपेत्य बालोचितवार्ताव्याजेन वर्णयामास बालभाषयैव वर्ण्यमाना-मशेषविषयम् ।

"बालस्त्वं मे प्राणाधारः ।
प्रादुर्भूतो ज्ञानाऽऽगारः । १।।
संस्कृतशेवधिरक्षाभारः !
त्वयि निहितोऽयं जगदाधारः ।।२।।
नाऽन्यः कोऽपि शरण्यो लोके ।
नैवाऽऽधारो विस्मृतशोके ।।३।।
त्वं करुणायाः पारावारः
संस्कृति - संस्कृतयोराधारः ।।४।।
हिंस्रा म्लेच्छाः स्वेच्छाचाराः ।
ज्वलयन्त्येते ग्रन्थाऽऽगाराः ।।५।।
भारायन्ते सद्व्यवहाराः ।
मुग्धा जाता धर्माऽऽधाराः ।।६।।
तरुणो भूत्वा लघु भूतेशः ।
ध्वंसतु दुर्नतिमवधूतेशः ।।७।।
ज्ञानज्योतिरुदीयाल्लोके
भक्तिर्भूयात् पुण्यश्लोके ।।८।।

तदानीमेवैका प्रतिवेशिनी विभूतिमन्तं कञ्चन पुरुषविशेषं धृतावतारमगणित-गुणाधारम् बालरूपेऽपि चेष्टाविशेषां महापुरुषतां दधानं समुदीक्ष्य भृशं लालयन्ती व्याजहार - भगवन् ! कथमेवं विचेष्टसे सामान्यार्भकत्वम् ? लोके तु दुराऽऽरम्भै-र्धूर्तदुराचारैर्धूर्य्यन्ते धार्मिकाऽऽचाराः ! समुत्सार्यन्ते संस्कृतसंस्कृत्योः प्रसाराः। समुच्छिन्ना खलु भारतीया संस्कृतिः । विरोद्ध्यन्ते पुराणप्रवचनप्रथाः । नाधुना दृश्यते व्यासाऽवतरणाऽऽशा । व्यासोऽपि भगवान् विलीन एव जातः । न दृग्गोचरीभवति कुत्रापि गौतमः । जैमिनिस्तु पुरैव जीर्णतां गतवान् । कणादोऽपि कथञ्चन कुत्रापि कलयति कणादनमेव । कपिलस्तु कल्पितसमाधिः कुरुते कूपाराऽभ्यन्ते वसतिम् । पाणिनिस्तु पुरन्दरपुरे प्रणिधाय प्रतिष्ठां, पर्थयति पाणिनीये प्रक्षिप्तसूत्राणि । पतञ्जलिरपि पातयति प्रवृत्तिं पारावारपरपारे भाष्यात्मिकाम् । किम्बहुना गार्गी चाऽपि गारयमाणा निजगुणगौरवं गृणाति गिरिगह्वरे। येषां वाचि विराजमाना, गीर्वाणवाणी, सदैव नृत्यति स्म रसनारङ्गे, तेऽपि ब्रह्मविदो ब्राह्मणा स्व-स्वबालकान् म्लेच्छभाषाऽभ्यसनिनो, विभावयन्ति भारतभूमौ, सर्वदाऽवहेलयन्ति च सुरवरगिरम् । मृतेति मत्वाऽप्यवमानयन्ति, बहुमानयन्ति च वैदेशिकीं भाषावधूम् । वीरवरो विक्रमादित्योऽपि वृन्दारकवृन्देन सह विहरति विबुधाग्रणीर्विबुधालये । महाराजभोजोऽपि ऋतुभुग्भिः सह भुनक्ति भोगान् । नाऽधुना विद्यते कोऽपि सुरभारत्याः धुरन्धरधौरेयो महीतले महीपतिप्रवरः यो हि विदध्यात् संरक्षणं सुरसरस्वत्याः । प्रायः क्षत्रिया अपि म्लेच्छसंस्कृतिपरिपोषकाः विशोषकाः, स्वकीयभारतीयायाः संस्कृतेः संवृत्ताः । नाऽस्ति कश्चिच्छ्रेष्ठिप्रवरो वणिग्वरः, यो हि संस्कृतसंस्कृत्योः कृते सदु-

प्रयोगं कुर्यात् संस्कृतप्रसारप्रचाराय, वा परिपालनाय, संस्कृतेः स्वीयधनस्य। ये खलु भारतीयसंस्कृत्युपजीविनः शास्त्रोपदिष्टपन्थानं समाश्रिताः त्रिवर्णसेवापराः, तदुपासनयैव स्वात्मोद्धारं मन्वानाः शास्त्रमर्यादां पालयन्त एवाऽऽसन् तुरीयवर्णाः तेऽपि धूर्तम्लेच्छतत्त्वान्धपरिपोषकमायिकजालपतिताः बाह्यचाकचक्यप्रतिहतचक्षुर्व्यापारा, परम्पराऽऽयातां प्रणालीं परित्यज्य तदुपदिष्टपथा स्वयं द्विजायन्तो नाऽवजानन्ति स्वात्मनस्त्रिशङ्कुसमानां गतिम्। किमतः परं विद्यते कमनीयम्। स्वयमेव दृग्गोचरीकरिष्यति भवान्। इति।

प्रायः सकला जनता पाश्चात्य-पौरस्त्यादिनवनवागतबाह्यचाकचक्योद्भासनविमोहकवचनजालपतिता न गणयति स्वकुलक्रमाऽऽगताऽऽचारपरिपाटीम्। न मानयति धर्माऽनुकूलपरम्पराम्। नाऽऽकर्णयति गुरुजनोदीरितवचनविन्यासम्। न मनुते शास्त्रोक्त-मर्यादाम्।

किम्बहुना विमत-विरुद्धधर्मप्रचारकास्तु स्वेच्छाऽनुरूपमेव धर्मस्वरूपं प्रतिपाद्य, "यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्। भस्मीभूतस्य देहस्य पुनरागमनं कुतः" इत्यादि मधुमधुरमुखां वाचं सर्वनाशसम्भृतां सम्मुखीकृत्य प्रवञ्चना - प्रतारणगर्भां नाऽस्ति देहादिभिन्नः कश्चनाऽन्य ईश्वरः किमर्थं व्यर्थं विभिषिकापञ्जरपतिताः व्यथिताः सन्तस्तिष्ठन्तीति "खज्जे-पिज्जे" हि मोक्षः "नास्ति वा कश्चनालौकिको मोक्षपदार्थः, अरे मरणमेव मोक्षः" इत्यादिभ्रमे पातयन्तो मुग्धां, अनभिज्ञां बालस्वभावां जनतां व्यामोहयन्ति पाषण्डाः।

अतः शीघ्रं वयस्काः सम्भूय समुन्मूलयन्तु दुर्दानवायितान् घातुकान्, विच्छेदकान् दुर्विनीतान्। नायं प्रतीक्षाकालः इति आकुला नरा नार्यश्च नितान्तं खिन्नाः मुग्धमपि विदग्धम्, बालमपि तरुणम्, मन्वानाः एकवचनस्थाने बहुवचनविन्यासेन कथयन्तः सूचयन्ति पल्यङ्किकाऽधिष्ठितस्यापि महापुरुषताम्।

यदा शिशुः श्रीरामानन्दो वर्षद्वयात्मकं निजवयः समतीत्य तृतीयं प्रविविक्षुरासीत् तदैकदा पद्भ्यां स्खलितगतिकः क्वचित् पतन् क्वचिदुत्थितश्चलन् द्वयोरेव कोमलपल्लवानुकारिणोर्हस्तयोः मोदकयुगलं धृत्वा क्वचिद् भक्षन् कञ्चिदंशं भूमौ विकिरन् क्रीडति स्म भवनप्राङ्गणे कश्चन काकः समुत्पतन् प्रोत्प्लुत्य भूमिस्थान् विकीरितान् मोदककणान् चायं चायं भक्षन् नृत्यन् कदाचन् हस्तादाछिद्य मोक्तुं चेष्टमानः परममुदमवाप्य मोदयते स्म श्रीरामानन्दं शिशुम्। शिशुरपि तेन सह स्वाभाविकीं बाललीलां कुरुते स्म मन्ये तदानीम् स्वयं श्रीकाकभुशुण्डः साक्षाद्

राघवेण सहैव बाल्यभावजनितस्वाभाविकभक्तजनमानसमोहिनीं स्वप्रभोःलीलारसास्वादनमेव विदधाति स्म।

तदानीमेव नितान्तमेकान्तमुदीक्ष्य कश्चन वानरोऽपि तत्र समागत्य शिशोः सामीप्यमुपेत्य निभृतं शिशुवदनं समीक्षमाणः तदीयमखात् कराद्वा विस्खलितानि मोदकखण्डानि समुत्थाप्य स्वयं खादति स्म, बालश्च तद्वालधिं सङ्गृह्य परितो लोलयन् समाकर्षन् क्रीडति स्म। क्वचित् स्वयं शिशुः स्वहस्तविधृतं मोदकखण्डं स्वहस्तेनैव तं खादयति, सोऽपि बालकेन सह क्रीडति स्म। क्वचिद् बालकस्याङ्के लुठति स्म। क्वचिद्बालकश्च तस्य पृष्ठ पृष्ठतः स्पृशन्नुपरि-पादौ धृत्वाऽऽरोहति स्म, सोऽपि हेलामिव कुर्वन् स्वमस्तकं नीचैः कृत्वा स्वपृष्ठात् पातयति, पुनरुत्थाय बालस्तस्य कर्णौ गृह्णाति स च मस्तकं व्याधूय मोचयित्वाऽन्यत्र कूर्दति पुनः समीपमागत्य बालकस्य पादौ गृहीत्वाऽऽकर्षति क्वचिल्लुठति क्वचित् कूर्दते क्वचिल्लोलयति लाङ्गूलम्, मन्ये हि स्वयमेव वातात्मजः श्रीहनूमान् स्वस्वामिनं रघुकुलनायकं बालरूपधारिणं विज्ञाय, तेन सह क्रीडनानन्दमनुभवितुमेव तथाविधं रूपं विधाय समुपासत इव लोललाङ्गूललोलनेन दंशमक्षिकादिनिवारणमेव कलयति मोदमयते चेति, तथाविधं नर-वानरविक्रीडनमालोक्य, गृहव्यापारनिरताऽपि विचित्रतमां लीलामालोक्य, सभयचकिता-मातृस्नेहाद्विद्रुतहृदया, सहृदयाऽपि तमपसारयितुं प्लवङ्गमपुङ्गवं, यष्टिकामानेतुं सत्वरमभ्यन्तरं प्रविष्टा। यावत् सा यष्टिमादाय ह्यविलम्बमेवाऽनुपदं प्रतिनिवृत्ता विलोकते यत् नाऽस्ति कोऽपि कपीशो, न वा काक एव, एकाकी शिशुः रामानन्दः पल्यङ्किकापृष्ठमधिरुह्याऽवरुह्य विक्रीडति, निपतितांश्च मोदककणान् स्वयं चित्वा क्वचित् खादति, क्वचिच्च स्वहस्तं भूमौ भ्रामयन्, मोदककणान् सुदूरं दूरं प्रसारयति, लोलकरपल्लवव्यापारेणैव। पुनरपि सा यष्टिकां प्रक्षिप्य, स्वकार्यसंलग्ना सती, कार्यव्यापारेण प्राङ्गणे आयाति, तदा पुनरपि तथैव, स एव मर्कटः, स एव हि काकस्तथैव चेष्टेते स्म, शिशुश्च किलकिलं कृत्वा हसन्, मर्कटोपरि आरोढुं प्रयतते। मर्कटश्च हस्तेन शिशोश्चरणौ गृहीत्वा शनैरुत्थापयति, मन्दं पातयति, चेति, तादृशीं तां द्वयोः मर्कट-बालयोः, चेष्टां दृष्ट्वा नितान्तं भयभीता सती चुक्रोश। यन्मर्कटो न क्वचिद् दन्ताघातं नखाघातं वा शिशौ विदध्यात्, इति भयेन यावदाकारयति काञ्चन भृत्यां तावत्पुनस्तद् दृश्यमदृश्यमेव भवति; इति विलोक्य सद्यो धावमाना सुशीला बालकं स्वोत्सङ्गे समुद्धृह्य स्वकीयशाटिकाञ्चलेन शिशोः शिरः समाच्छाद्य, भवनाऽभ्यन्तरं प्रविश्य, वृत्तान्तमिमं श्रावयितुं श्रीपुण्यसदनसान्निध्यमसेवत।

सर्वमेतत् जाग्रत्स्वप्नमिव प्रत्यक्षदृष्टामिमां लीलां विलोक्य अविकलं वेपथुमती सती पुण्यसदनाय श्रावयित्वा प्रसन्नमधुरं तदीयाऽऽननमानन्देन वारं वारं चुम्बन्ती लालयन्ती स्नेहस्नुतपयोधरा पाययामास तं स्वकीयं स्तन्यम्। परञ्च नाधुनाऽपि कम्पनं शान्तमभूत्।

सहर्षं सगद्गदं सोल्लासं सस्नेहं बालकं स्पृष्ट्वा परमं सौभाग्यं मन्यमानः साक्षाद्भवगद्रूपमेव तं चिन्तयन्नुवाच-प्रिये! मैवं कस्यचन सम्मुखे इत्थं ब्रूयाः। लीलैवैषा बालरामस्येति।

---

# सप्तमः परिच्छेदः

## उपनयनसंस्कारः

सर्वत्रैव धरणिमण्डले नगरेषु ग्रामेषु ग्रामठिकासु वनेषु चोपवनेषु यत्र यत्रैव दृष्टिः प्रसरति तत्रैव मदनमहीपतेः सुकुमारस्य कुमारस्य सकलर्तुनायकस्य कुसुमसायकसायकायितस्य वनोपवनवल्लरीप्रणयिनोऽभिनवमृदुलदलपरिमण्डनोपकरणोपहारकस्य सुरभितबहुविधवर्णालङ्कृतकुसुममयसमृद्धिसम्पादनकारकस्य विश्वविभासिनोऽशेषचराचरशोभाधायकस्य महीमण्डलमण्डनायितमहिलाजनमानसमोदप्रमोदोल्लासहासविकासनपाटवप्रदायकस्य, समस्तजगज्जाड्यविपदन्तस्य वसन्तस्य साम्राज्यसौभाग्यमेव प्रवर्द्धमानमक्षिविषयतामुपयाति। सम्प्रति परितः पादपततिर्नवपल्लवाऽञ्चिता समभवन् व्रततिततयोऽपि नवोद्भूत-प्रभूत-पुष्पपटलैः समलङ्कृताः मन्दमन्दमारुताऽऽन्दोलिताः दोलायिताङ्गलतिका अनङ्गरङ्गरञ्जिताः इव पार्श्वस्यपादपपुञ्जेषु सुदृढं संश्लिष्यन्त्यो द्रुततरद्रुमान्तरङ्गभावनिगूढहृदया एव विधृतशाश्वतिकसङ्गा इव धृताद्भुतरङ्गा राजन्ते प्रकाशयन्त्यो वसन्तवैशिष्टयम्।

क्षेत्रं क्षेत्रञ्च प्रणयिजनागमनचिरप्रतीक्षापरवशा दिङ्मासावधिकविरहविधुरा अपि सद्यःसमागमसुखाऽऽशाप्रसन्नविकसिताऽऽनन्तसर्षपसस्यसम्पदङ्गनाऽप्यनङ्गोल्लासिनीव विस्तारितपीतपुष्पपरागपटला ललनाऽनुकारिणी धीरसमीरप्रस्फुरदङ्गरङ्गा मोदयते स्म मदनमहोत्सवसमाराधनाय मानवतीकदम्बकम्।

समन्ततो रसालतरवोऽपि मधुमयमञ्जरीनिचयमण्डिताः मादयन्ते मनांसि मानवानाम्। माकन्दशाखामारुह्य मधुरमञ्जरीमधुसमास्वादन-कलकण्ठानां कलकोकिलानां "कू···हू,- कूहू···" इति कूजनम् समन्ततः श्रुतिपथमुपगतं पूरयति श्रोतृणां श्रवणपुटेषु सुधापूरपूरम्।

प्रसूनपुञ्जेषु परितः परिचङ्क्रमणचतुरचणानां चञ्चरीकाणाम् निभृतमकरन्दपानमत्ताभिर्मधुकरीभिः सह कुसुमैकपात्रे परिपीतरसानां कलगुञ्जनैः साकं कलयन्ति स्म कामपि कामिनीसमुन्मादिनीं केलिमिव पाटलाप्रसूनपटलीप्रोत्साहिता लोलां हेलाम् काञ्चनार-कुन्दकुसुमकलिकाः।

इत्थम् समन्ततः प्रसृतं सुरभिमयं सुरभिसमयं समालोक्य प्रहृष्टवदनः पुण्यसदनः स्वात्मजं कुसुमशरशरावधिकवयस्कं विलोक्य शास्त्रवचनम्—

"ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥"

इति स्मारं स्मारं निजकुलपुरोहितं समाहूय "वसन्ते ब्राह्मणमुपनयीत तमध्यापयेत्" इति नियमानुसारं "वसन्तपञ्चमी" ति सर्वतोभद्रं सुभद्रं यज्ञोपवीतार्थं मङ्गलमयं समयमेव सुमुहूर्तं निश्चितवान्। तदनुरूपमेवसामग्री समासादनाय प्रसज्जनाय च समस्त-भवनस्य समादिष्टवान् परिजननिचयम्। विद्यमानेऽपि पर्य्याप्तविस्तृते निजप्रासादप्राङ्गणादौ - महापुरुषतामुपयातानां महामभिशालिनां पवित्रपुण्यमयं संस्कारमङ्गलम्-पुण्यतमप्रदेशे एव भवितव्यमिति विचारविमर्शं विधाय त्रिवेणीसङ्गमाञ्चले सुविशालतमे तटे सुविस्तृततमपटमण्डपव्यवस्था विहिता। तत्रैव गगनस्पर्शिन्यो हि महामहाध्वजाः प्रस्फोरिताः संवृत्ताः। सहस्रशश्च पताकाः प्रास्थाद्यनन्त विचित्राश्चित्रवर्णाः। शतशश्च लघवः पटमण्डपाः निर्मापिताः समाहूतप्राघूर्णकानां महामनसां कृते। अनेकशश्च महर्षिकल्पानां सतां महतां योगिनां सुयोगिनां समाराधनायकुटीरमयानि लघुगृहाणि परिरचितानि। स्थाने स्थाने च कदलीस्तम्भैः समशोभन्त प्रवेशद्वाराणि। सर्वत्रार्द्धक्रोशपरिमितं स्थलन्तु नाना सहकारदलैरशोकपल्लवैः सुमनोगुच्छकैः सुसज्जितं कारितम्। मन्ये हि कुसुमाकरः स्वयमेव स्वकीयसुमनःसम्पदं प्रसार्य निजसमागमनसूचनाप्रदर्शनप्रयोगं प्रयुञ्जन्निव प्रतिहारिपणं पालयन्निव प्रहरीव समुपस्थितः प्रतिभाति स्म। मण्डपेषु यथायोग्यम्, यथास्वरूपम्, यथाऽऽचारम्, यथाव्यवहारं, यथाजनम्-पृथक् पृथगेव निवासाऽऽवासपरिकल्पना प्रवर्तिताऽऽसीत्। सर्वत्रैव रुचिराऽऽस्यन्दिकानां, पर्य्यङ्कानां-आस्तरणानां मनोहराणां मखमल्लमयानामासनानाम्, ऋषीणां मुनीनां कृते सुभगमृदुलतमकम्बलाऽऽस्तरणानां, मृगचर्मणाम्-कुशासनानां, समुचिता व्यवस्था सम्पादिता आसीत्।

यज्ञोपवीतोपयुक्तयज्ञमण्डपे च परितः, होतुः, अध्वर्य्योः उद्गातुर्ब्रह्मणः, आचार्यस्य कृते यथायोग्यं राजतादिपीठिकानां चतुष्किकानां समीचीना व्यवस्था

कारिताऽऽसीत् । यज्ञोपवीतार्थं तदानीं वृतस्य वटोः कृते, मोदमानस्याचार्यस्य गायत्र्युपदेशकृस्य कृते मिथोऽभिमुखं सुवर्णमयपीठिकाद्वयं समासादितम् । पटमण्डपेषु च विविधविधाकारमयाः क्षुद्रपादपाकाराः परितः प्रसारितभुजाः रजतमयाः काचमणिमयविविधहण्डिकाऽञ्चिताः दीपसमुद्गकाः विलुलितकाचमणिमालिकाऽऽवृताः राजन्ते स्म शोभाऽऽधायकाः । मण्डपद्वारेषु स्थाने स्थाने भेरी-मृदङ्ग-पटहपणवानकगोमुखदुन्दुभिप्रभृतयो नैकविधवाद्यविशेषास्तूर्यादयश्च वाद्यन्ते स्म । भूयांसश्च देशविदेशतः समाहूताः समायाताः सङ्गीतनर्तनविशेषलब्धप्रतिष्ठा विशिष्ट-कलाकोविदा नर्तक्यश्च राजन्ते स्म तत्रैकत्रोन्नतसङ्गीतरङ्गमञ्चे--दर्शयन्ति स्म निजनिजकलाकौशलम् कलाकाराः प्रकटितप्रकाराः ।

सम्प्रति सावित्र्युपदेशलग्नवेलायामवशिष्यते दिवसद्वयी । सकला सज्जाविधा सुसम्पन्ना समभवत् । आमन्त्रिताः सभ्याः सुदूरवर्तिनः समाहूताः सम्बन्धिनः समवेताः समभूवन् । प्रायः पटमण्डपाः सर्वे सुसम्भृताः, परिपूर्णाः, समलङ्कृताः सञ्जाता बन्धुबान्धवैः, बटोः मातृपक्षस्थैः, महामहिमभिश्चेति प्रदर्शनीयमभूत् सुरम्यनिखिलप्रदेशम् । सादरं समामन्त्रितब्राह्मणैर्याज्ञिकै - र्याजकैर्ऋत्विग्भिश्च सुमण्डिता समभूदतिथिशालावली । त्रिवेणीसङ्गमस्था नवनिर्मापिताः पर्णशालाः विशाला अपि सुशोभिताः सम्भृताः समजायन्त । यथा महामहापर्वणि भास्करस्य मकरादिराशौ सङ्क्रमणाऽवसरे, महाकुम्भपर्वपुण्यसमासादनाय समवेताः, सन्तो महान्तो मुनिवरा इव राजन्ते स्म । समुत्सवदिदृक्षवो यूथशः सहस्रशो नरा नार्यो, बाला-वृद्धाश्च प्रयागराजनिवासिनः समुपगताः, आनन्दातिरेकेण स्वात्मनः सौभाग्यममन्यन्त ।

अथ स एव चिरप्रतीक्षितो मनोरथपूरको महोत्सवमयः समयः "वसन्त-पञ्चमी-दिवस" समागतः । प्रशस्तादुषःकालादेव कार्यारम्भः समजनि । यथाविधि चौलादिकर्म सम्पाद्य कृतोद्वर्तनाऽभ्यङ्गमार्जनस्नानादिक्रियाकलापः, पयः फेननिभांशुक-युग्मेन, समञ्चितहरिद्रादिमाङ्गलिकद्रव्यरञ्जितप्रान्तभागेन चीनांशुकेन पीताम्बरेण वा सुरञ्जितो दिव्यभास्वत्तेजाः परमाद्भुतदर्शनीयरूपः कान्तिमान् वटुः श्रीरामानन्दः सपदि मण्डपमलङ्कुरुते स्म । दर्शकाश्च सर्वेऽद्भुतरूपमालोक्य विमुग्धाः स्तब्धाः समभूवन्-लब्धवन्तश्च नेत्रसाफल्यम् । तदानीं स्वशाखीयान् वेदमन्त्रान् पठन्तः सर्वे श्रोत्रियाः ब्राह्मणाः स्वस्तिवचनैः, ऋषिमुनिगणः शुभाशीर्भिः, वटुमभिमन्त्रयन्तो मार्जनाऽभिषेकादिभिः पवित्रीकृत्य पृथक् पृथक्मन्त्रैः मौञ्जीम्, मेखलाम्, दण्डम्, कमण्डलुम्, तत्तत्स्थाने संयोज्य समलङ्कृत्य च वटुम् शुभे अभिजिति मुहूर्ते यज्ञोपवीतं

परिधाप्य सावित्र्युपदेश यथानिदेशं श्रीपुण्यसदनः स्वयं दत्तवान्। दर्शकैश्च सकलैः जयजय - शब्दपुरःसरं हर्षोत्कर्षप्रदर्शनपूर्वक पुष्पवृष्टिः कृता। प्रासरच्च मङ्गल-मुखीनां सुमुखीनां, समागतानां नगरसीमन्तिनीनां श्रुतिसुखावहः शुभावहो माङ्ग-लिकगीतविधिः। तदानीमाचार्याऽभिमुखं साक्षाद् भगवन्तंश्रीत्रिविक्रममिव विराजमानं राजमानं श्रीरामानन्दवटुं आचार्यः सस्नेहमिदमुपयुक्तम् समयोचित-मावश्यकमुपदेशम् सहर्षं सोल्लासं समुपदिष्टवान्—

अयि चिरायुष्मन्, वत्स, रामानन्द, वटो! अवहितो भव, हृद्यमुपदेश-मवधारयः—"जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते।" (अत्रिः स्मृतिः १३८) सम्प्रति भवान् द्विजत्वं लब्धवान्। अयं तेऽध्ययनकालः, "वस द्वादश षोडश वर्षाणि वा ब्रह्मचर्य्यम् यथासाम्नम् यथारुचम् द्वात्रिंद्वर्षाणि ततोऽप्यधिकानि वा" पालयैनां ब्राह्मणपरम्पराम्। चतुर्णामाश्रमाणां मध्येऽयमेकः आरम्भिकः आश्रमः। सर्वेषानाधारभूतः। अस्मिन् समाराधिते सुसाधितेसति सर्वेऽन्ये स्वतः, एव सुसाधिता भविष्यन्ति। अयमेव सर्वविधज्ञानविज्ञान-सम्पादनसमुपार्जन-कारणीभूतो यावज्जीवनं सौख्याकरोऽप्यपूर्वफलसमाहारकः, तारकः समुद्धारकश्चेति नितान्तमुप-कारकः सम्यगव्युच्छिन्नेन कर्मणा सम्पादनीयो ह्यप्रमादेन परिपालनीयः। अयमेव सर्वेषामाश्रमाणां सर्वेषां वा मार्गाणाम् [कर्म-ज्ञान-भक्तिमयानाम्] आधार-शिलोपमः। सर्वदैव अप्रमादेन, अनालस्येन, अनुपेक्षया, अवश्यकर्तव्यताकत्वेन च समुपसेव्यः। श्रुतिस्मृतिपुराणादिवाक्येषु गुरुवाक्येषु च श्रद्धां विश्वासं विधाय दृढाऽनुरागेण परिपालनीयः—तथाहि—

"अहरहः सन्ध्यामुपासीत" इतिवाक्याऽनुसारं प्रातः ब्राह्मे मुहूर्ते समुत्थाय, शौचादिदन्तधावनादिकं कृत्वा सुस्नायी भूत्वा कौपीनं-र्बहिर्वासः सोत्तरीयं विशुद्धं प्रक्षालितं अनस्पृष्टं परिधाय यथाऽऽचारं यथावेदं-यथाकुलक्रमं यथाशाखम् गुरुपम्पराऽनुकूलां "सन्ध्याम्" समाराध्य आचमनम्-प्राणायामम्, आसनशुद्धि शिखाबन्धनादिकं विधाय, त्रिः, सकृत्, पञ्च वा यथोपदेशं प्राणायमं कृत्वा मार्जनम् आचमनम्-पुनर्मार्जनं अपामुपस्पर्शनम्, आघ्राणञ्च। अघमर्षणम्-सूर्यार्घ्यदानम्, गायत्र्या आवाहनञ्च कृत्वा पुन प्राणायामं आचमनञ्च सम्पाद्य न्यासान् मुद्राप्रदर्शनं कृत्वा यथाशक्ति सहस्र-त्रिशतं अष्टोत्तरशतं वा यथाकालं त्रिपदीं चतुष्पदां वा गायत्री जप्त्वा स्वेष्टदेवतायै समर्प्य पुनर्न्यासान् कृत्वा-सूर्योपस्थानं-(प्रतिसन्ध्यं पृथक् पृथक्, वर्णितं) विधाय विसर्जनं कृत्वा-पुनः अग्निसमाराधनम् कुर्यात् (प्रातः सायं अग्निहोत्रं कुर्यात्।) 'न दिवा स्वपेत्" नाऽनृतं ब्रूयात्" "न विवसनः स्नायात्"

"न शयेन्नानृतं वेदत्" नाऽऽप्सुमूत्र-पुरीषं कुर्यात् "नाऽधौत-पाणिपादो भुञ्जीत" पुरोडाश प्रार्थनया-परिवेषितान्नं प्रार्थयेत्" स्योनं ते सदनं कृणोमि, घृतस्य धारया-सुषेवं परिकल्पयामि। तस्मिन् सीदाऽमृते प्रतितिष्ठमेधाः सुमस्यमानः॥" ततः भोजनस्थालीं परितो जलेन ( जलधारया ) वर्तुलं सिञ्चेत्। ततः पञ्च चित्रा-हूतीर्दत्वा ( चित्राय स्वाहा चित्रगुप्ताय स्वाहा यमाय स्वाहा, यमधर्मराजाय स्वाहा सर्वेभ्यो भूतेभ्यः स्वाहा ) इति ततः अमृतोपस्तरणमसि स्वाहा इत्याचामेत्। तदनन्तरम्—पञ्च प्राणाऽऽहूतीः स्वमुखे क्रमेण दद्यात्—

"ॐ प्राणाय स्वाहा" एतेन-क्रमशः प्राणः चक्षुः आदित्यः द्यौः तृप्यन्ति इति भावयेत्।

"ॐ व्यानाय स्वाहा" एतेन श्रोत्रम् चन्द्रमाः दिशः तदन्तर्गतदेवास्तृप्यन्ती तदन्तर्गताः देवास्तृ०।

इति भावयेत् "ॐ अपानाय स्वाहा" एतेन क्रमशः वाक् अग्निः पृथिवी तदन्तर्गतादेवाः तृप्यन्ति

" "ॐ समानाय स्वाहा" एतेन " मनः पर्जन्यः विद्युत् तदन्तः स्थिताः तृप्यन्ति

" "ॐ उदनाय स्वाहा" एतेन " त्वक् वायुः आकाशः तदन्तःस्था देवाः तृप्यन्ति

ततो मौनं धृत्वा भुञ्जीत भोजयेत्, भोजनान्ते "अमृताऽपिधानमसि स्वाहा" इति आचम्य हस्ते जलमादाय रौरवे पूयनिलये पद्मार्बुदनिवासिनाम्, अर्थिना-मुदकं दत्तं मक्षय्यमुपतिष्ठतु। इत्युक्त्वा क्षिपेत्। पश्चादुत्थाय गण्डूषादीन् विधाय हस्तौपादौ प्रक्षाल्य। विश्रामं अध्ययनादिकं कुर्यात्। इति। "सर्वदा शुचिस्तिष्ठेत्" जलपात्रं गृहीत्वैव लघुशङ्कां ( मूत्रोत्सर्जनम् ) कुर्यात्। मूत्रान्ते जलेन मूत्रविसर्गस्थानं प्रक्षाल्य। उत्थाय अन्यजलेन हस्तपादौ प्रक्षाल्य, गण्डूषान् कृत्वा। तिष्ठेत्—। शौचगमनावसरेऽपि पुरीषोत्सर्गाऽनन्तरं, मृत्तिकया - एकवारं लिङ्म्-त्रिवारं गुदम् दशवारं वामहस्तम्, सप्तवारं हस्तद्वयं सम्मिलितं, मृत्तिकालेपनपुरःसरं प्रक्षालयेत्। द्वादशगण्डूषादीन् कुर्यात्। "नैकान्ते स्त्रीमात्रेण सह समालपेत्" न वा स्त्रैणैः सह ( स्त्रीसङ्गिभिः सह ) समालपेत्"। "न वा क्वचन काष्ठनिर्मिता स्त्रीप्रतिकृतिमपि वामपादाङ्गुष्ठेनाऽपि स्पृशेत् किम् पुनर्हस्तेन।" नवा क्वचन स्त्रीसम्बन्धिभिः सह वार्ताऽऽलापं, स्मरणादिकमपि, विदध्यात्" एतेनाऽपि ब्रह्मचर्य्यं खण्डितंभवति। उक्तञ्च" "स्मर[१]णम्, की[२]र्तनं, केलिः[३], प्रे[४]क्षणं, गुह्य[५]भाषणम्। स[६]ङ्कल्पोऽ

व्यव॰सायश्च, क्रि॰यानिर्वृ॰तिरेव च। एतन्मैथुनमष्टाङ्गा प्रवदन्ति मनीषिणः।
"सर्वमेतत् परित्यज्य ब्रह्मचर्य्यञ्च रक्षयेत्" "रेतो नाऽवकिरेज्जातु"।

तत्र चतुर्विधाः भवन्ति ब्रह्मचारिणः। एके केवलं सैन्धवमात्रं प्राश्य त्रिरात्रं यावदहर्निशं त्रिपदीं गायत्रीं जपन्तस्तिष्ठन्ति, ते "गायत्री ब्रह्मचारिणो भवन्ति।" अन्ये च समस्त वेदाध्ययनान्तं ब्रह्मचर्य्येण वसन्ति ते "बाह्म ब्रह्मचारिणः। अपरे उपनयनानन्तरं संवत्सरपर्य्यन्तम् ब्रह्मचर्य्यं धारयित्वा वेदाध्ययनं कुर्वन्ति ते प्राजापत्याः ब्रह्मचारिणः। केचनैतादृशा अपि भवन्ति नैष्ठिका ब्रह्मचारिणः, ये उपनयनानन्तरम् यावज्जीवनं गुरुकुले निवसन्तो ह्यध्ययनं संरता एव तिष्ठन्ति। इति बटुक! ब्रह्मचर्य्यं हि सर्वोत्कृष्टं परमं तपो विद्यते, "ब्रह्मचर्य्येण समं नास्त्यन्यत्. "न तपस्तप इत्याहुर्ब्रह्मचर्य्यं परंतपः (तदुच्यते) इति ज्ञान संकलनीतन्त्रे वर्णितम्. फलमप्यस्य मृत्युञ्जयत्वम् - अथर्ववेदे—"ब्रह्मचर्य्येण तपसा देवा मृत्युमुपाघ्नत।" इति। एतेन हि देवाः अमरा जाताः तथा च—"पार्थिवा दिव्याः पशवः आरण्या ग्राम्याश्च ये। ............ये ते जाताः ब्रह्मचारिणः "इति (अथर्व॰ सं॰ ११। ३ ७।) तथा च "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः।" (योगसूत्रम् २। ३८) वीर्याऽभिवृद्धौ - शरीरे, मनसि, इन्द्रियादिषु च बलप्राप्तिस्तेन, अजरामरत्वम् नैरुज्यञ्च। मेधाऽभिवर्द्धनम्, स्मरणाशक्त्युपबृंहणम् धारणाशक्तेः प्राबल्यम्। आयुषो वृद्धिः। मृत्योरपमृत्योर्वानिर्भयत्वम् स्वेच्छामृत्युत्वञ्च लभते सम्यक् ब्रह्मचर्यधारी यथा भीष्मपितामहो गाङ्गेयः। किंबहुना स हि "सदाधार-पृथिवीं दिवं, स आचार्यं तपसा पिपर्त्ति" (अथर्व सं॰ ११। ७। १) एतादृशो नैष्ठिक ब्रह्मचारी स्वतपसा, स्वात्मबलेन हि विश्वविधात्रीं सकलां पृथ्वीम्, दिवं (स्वर्गम्) आचार्यं (स्वगुरुम्) सः पालयति।

सम्प्रति त्वम् उपवीती संवृत्तः। अतो गुरुकुले वसन् ब्रह्मचर्य्येण वेदाध्ययन-माचर। आश्रमस्थान् नियमान् सम्यक् परिपालय। तानपि प्रकाशयामि तेजस्विन्. वटो! तत्रत्या नियमाः सन्त्येते अवधेहि—

"नोद्यन्तं सूर्यं पश्येः नैवास्तम्" सूर्योदयात् प्रागुत्थातव्यम्. दैनिककृत्यं शारीरिकं सम्पाद्य – उद्यतं भास्करं अर्घ्यदानादिभिरुपतिष्ठेत्। प्रातः मध्याह्न-सायं सन्ध्यां समाराधयेत् प्रातः सायं अग्निहोत्रश्च प्रत्यहम्। भिक्षाऽटनादिकमपि यथाऽऽश्रमविधानम्। वनात् फल-पुष्प-कन्दमूलाद्याहरणम् गुरवे निवेद्य तदाज्ञया; तद्दत्तञ्च यत् यावत्परिमाणं वा गृहीत्वा सन्तुष्टः सन् तावतैव, आहारं विधाय; शान्त्या, अध्ययनं समाचरेत्। समिधाहरणादिकं कृत्वा आश्रमाग्नेः संरक्षणीकरणम् निम्नाङ्कितानाञ्च परित्यागः सर्वथाः—

"सुगन्धिद्रव्यसेवनम्, मधु, पुष्पमाला अञ्जन, पादुका, छत्र, चामर, नृत्य, गीत, द्यूतक्रीडा, परनिन्दा असत्यभाषणम्, आलस्यम्, कामः क्रोध, लोभः, मोहः, प्रमादः अभिमानम्, मदः दिवास्वप्नम्, मादकद्रव्यसेवनम्, अश्लीलग्रन्थपठनम्-भाषणम् एकान्ते स्त्रीसङ्गमः सनालापः स्पर्शः पुनः पुनः प्रेक्षणम्, खट्वाशयनम् तत्स्मरणम्, स्त्रीसङ्गी पुरुषैः सहापि सम्भाषणम् मिथ्या पाषण्ड, वितण्डा, प्रतारण, मिथ्याध्यवसायादयः सर्वे त्याज्याः।

गुरोराज्ञयैव युक्ताहारादिकम्, सर्वदैव परब्रह्मभावनयैव गुरोः सेवनम् तदाज्ञानुसारमेव शयनोत्थापनादिकम्। गुरोः सम्मान रक्षणम् - मितभाषणम्। गुरोः सम्मुखे नोत्तमासनस्थितिर्विधातव्या। सर्वात्मना गुरोराज्ञां पालयतो ब्रह्मचारिणो वटोः सर्वे देवाः पितरश्च प्रसन्ना भवन्ति।

ब्रह्मचारिन्! सम्प्रति भवान् नूतनयज्ञोपवीती संवृत्तोऽस्ति। अतो यज्ञोपवीतविषयमवलम्ब्य किञ्चिद्वक्तव्यमस्तीति विवेचयामि तदपि सावधानेन भवता श्रोतव्यमेव, किं स्वरूपं यज्ञोपवीतम् कथमस्य निर्माणम् कियत्तन्तुनिर्मित किमर्थं किं स्वरूपा तादृशी तावती संख्येति—

तत्र प्रथमं द्विजातीनामयं मुख्यतमः संस्कारः। अनेनैव संस्कारेण द्विजत्वं सम्पद्यते द्विजेषु। अतः स्वर्णरत्नाऽऽभरणेभ्योऽप्याधिकतमं अमूल्यरत्नं सर्वस्वभूतं साक्षाद्ब्रह्मरूपमेव वेदाद्यधिकार - यज्ञयागाद्यपूर्व - फलानुसन्धान - ब्रह्मज्ञानाद्यखिलयोग्यताधायकोऽयं यज्ञोपवीत संस्कारः। "यज्ञो नारायणः साक्षाद् भगवानिति शुश्रुम" 'यज्ञो हवै नारायण' इत्यादि श्रुति स्मृति सिद्धो भगवान्, तस्यैव प्रतिपादकं वचनम् स्मृतिसारेऽपि "यज्ञाख्यः परमात्माय उच्यते चैव होतृभिः। उपवीतं ततोऽस्येदं तस्माद्यज्ञोपवीतकम्।" किञ्च "यज्ञो वै विष्णुः" विष्णुर्यज्ञः" इति यज्ञपुरुषः परमा तत् समीपं (उप) प्रापयति वीत) 'भगवत्प्राप्तिकरः'. इति यज्ञयागाद्यधिकार-सम्पादको भगवानेव वा" तस्यैव प्रतीकमेतत् सूत्रम्। विनाऽस्य धारणेन न किमपि कर्तुं शक्यते। बहिष्कार्यश्च सर्वकर्मसु ह्यनुपवती उक्तञ्च— "सदोपवीतिना भाव्यं सदा बद्धशिखेन वा।" विशिखो व्युपवीती च यः करोति, न तत्कृतम्।" अतो यावज्जीवनमेवैतद्धारणीयमेव न क्षणमपि त्याज्यम्-त्यागे तु-प्रायश्चित्ती भवति—

""विना यज्ञोपवीतेन तोयं यः पिबति द्विजः।
उपवासेन चैकेन पञ्चगव्येन शुध्यति॥
'विना यज्ञोपवीतेन विण्मूत्रोत्सर्गकृद्यदि।
उपवासद्वयं कृत्वा दानैर्होमैस्तु शुद्धयति॥"

नियतोऽधिककालं किंवा त्रिरात्रानन्तरं तु "अनुपवीती" पुनः संस्कारेणैव शुद्ध्यति अतः सर्वदा धारणसमयादारभ्य मरणान्तमेव धारणमावश्यकम् द्विजस्य तु सोपवीतिन एव शवदाहोपि भवतीति लोकपरम्परा। . निर्माणप्रकारस्त्वित्थम्:- सौभाग्यवत्याः किंवा कुमारिकायाः स्वयं आत्मनो हस्तेन वा निर्मितस्यैव सूत्रस्य षण्णवति अङ्गुलमितलम्बायमानस्यचतुर्गुणमितेन सूत्रेणाऽस्य निर्माणम् [-अर्थात् सान्द्रघनमिलिचतुरङ्गुलीनां परितः षण्णवतिवारं परिवृत्तेन सूत्रेण निर्मीयते] तात्पर्य्यमस्यैतदेव-यत् चतुर्णां वेदानां श्रुतयो लक्षसंख्यकाः सन्ति, तासु कर्मकाण्ड प्रवर्तकाः अशीति सहस्राणि" सन्ति श्रुतयः एवं षोडशसहस्राणि उपासनाकाण्ड-प्रवर्तकाः तथा चतुःसहस्रमिताः श्रुतयो ज्ञानकाण्डप्रवर्तका सन्ति अतो ज्ञानकाण्ड-मितानां श्रुतीनामुपयोगन्तु त्यक्तशिखासूत्रवन्तः संन्यासिनोऽपि कुर्वन्त्येव, अतः तद् विहाय शेषाणां षण्णवतीनामेवात्र यज्ञोपवीते निवेशः अतः षण्णवतिसंख्याक अङ्गुलचतुष्टयावृत्तसूत्रपरिमाणकमेव विधीयते।

किंवा—मनुष्यमानम् चतुरशीति अङ्गुलमितं भवति। देवमानञ्च षण्णवति अङ्गुलिमितं भवति। अतो देवमानेनैव सूत्रगणना, देवरूपत्वात्सूत्रस्येति। यतो हि मनुष्यः कदाचित् सम्यक्कर्मसम्पादयितु प्रभुर्न भवेत् तदा सः स्वाङ्गुलमाप-प्रमाणेनोपवीतधारी चतुरशीतिलक्षयोनिषु जन्ममरणादिकष्टं त्वनुभविष्यत्येव। अतो न तत्कष्टं भवेत् एतदर्थं देवमानमापमितेनैव सूत्रेण तन्निर्माणं भवति, येन तद् धारण-कर्ता देवबलमपि प्राप्तुं पारयेत्।

अपरश्चायमाशयः वेदमाता गायत्री स्वयं चतुर्विंशत्यक्षरा भवति-ततः समुद्भूता वेदाश्चत्वारः सन्ति अतश्चतुर्षु व्याप्ता चतुर्विंशत्यक्षरा चतुर्गुणिता षण्णवतिमिता प्रतिवेदं चतुर्वारं पठिता तावत्परिमाणऽक्षरा संवृत्तेति उक्तञ्चः-

"चतुर्वेदेषु गायत्री चतुर्विंशतिकाऽक्षरा।
तस्माच्चतुर्गुणं कृत्वा ब्रह्मतन्तुमुदीरयेत्"॥

अपरोभावश्च—"तिथिवारञ्च नक्षत्रं तत्व-वेद-गुणान्वितम्।
कालत्रयञ्च मासाश्च ब्रह्मसूत्रं हि षण्णवम्॥"

अर्थात् प्रतिपदाद्यास्तिथयः १५ वाराः ७ नक्षत्राणि २७ तत्वानि २५ वेदाः ४ गुणाः ३ सत्वं रजःस्तम इति भूत-भविष्यत् वर्तमानेतिकालः ३ त्रिविधः, मासाः १२ इति संहृत्य ९६ मिता भवन्ति।

ततः—त्रिरावृत्तं कृत्वा सूत्रं त्रिवृत्तमेव सिद्धं भवति तेन पुनः त्रिरावृतं तत् नवतान्तवं भवति उक्तञ्च—"यज्ञोपवीतं कुर्वीत सूत्रेण नवतान्तवम्॥ छान्दोग्य-परिशिष्ट। तेषु नवसु तन्तुषु नवानां देवानामाविर्भावः क्रियतेः—

"ॐ कारोऽग्निश्च नागश्च सोमः पितृ-प्रजापति ।
वायुः सूर्यश्च शर्वश्च तन्तुदेवा अमी नव ॥"

तथाहि द्वयोरेवहस्तयोरङ्गुष्ठ-कनिष्ठिकयोर्मध्ये यज्ञोपवीरतं धृत्वा

१ ओं ओंकारं प्रथमतन्तौ न्यसामि । प्रणव ब्रह्मणो निवासं भावयेत्
२ अग्निं द्वितीयतन्तौ न्यसामि— अग्निंतेजोदातारं भावयेत्
३ नागं ( शेषाख्यं ) तृतीयतन्तौ न्यसामि—– धैर्यस्थैर्यप्रदं भावयेत्
४ सोमं चतुर्थतन्तौ न्यसामि—– सर्वप्रियत्वगुणदातारं भावयेत्
५ विद्वान् पञ्चतन्तौ न्यसामि— स्नेह सौशील्यसद्भावदातृन् भावयेत्
६ प्रजापतिं ( ब्रह्माणं ) षष्ठतन्तौ न्यसामि, — प्रजाप्रीणमपालनशक्तिदातारं
७ वायुं सप्तमतन्तौ न्यसामि = अतुलितबलदातारं भावयेत्
८ सूर्यं अष्टमतन्तौ न्यसामि= प्रकाशप्रदातर भावयेत्
९ शर्वं ( शिवं ) नवमतन्तौ न्यसामि तपोबलदातार भावयेत् ।

तत्र यज्ञोपवीते त्रिगुणिततन्तुमति त्रीण्येव सूत्राणि भवन्ति तेषां भावः— ( छान्दोग्य अ० ४ खंड १७ मं० १-४ ) "प्रजापयतिलोकानभ्यतपत्० )" इत्थम्–यथा त्रिलोक्यां त्रयोलोकाः त्रीणि वा मण्डलानि भवन्ति, त्रयो गुणाश्च, "पृथ्वीमण्डलम्" अन्तरिक्षम् "द्यौः" ( सूर्यमण्डलम् ) 'तथा च सत्वम्, रजः, तमः इति । गुणाः उक्तानां एषां मण्डलानां सारभूतं तत्त्वम् गृहीत्वा सृष्टिक्रमः प्रचलति-तथाहि पृथिव्याः सारः "अग्निः" अन्तरिक्षस्य सारोवायुः, दिवः सार आदित्यः इति त्रय एव अग्निः, वायुः, आदित्यः, इति, समभूवन् एभ्यः त्रिभ्य एव, अग्नेः ऋग्वेदः, वायोः यजुर्वेदः, आदित्यात् सामवेदः, इति त्रयो वेदाः, समजायन्त । ततः ऋग्वेदात्, "भूः" यजुर्वेदात् "भुवः" सामवेदात् "स्वः" इति लोकाः व्याहृतयो वा प्रजायन्त । इत्थम् त्रिभ्यः त्रिभ्यः एव त्रयोलोकाः, त्रयोदेवाः, त्रयोवेदाः, तिस्रोव्याहृतयः, समुत्पन्नाः समभूवन् । ततो यज्ञक्रमः-एवमेव सर्वेषां त्रयाणां लोकानां, त्रयाणां मण्डलानां त्रयाणां देवानां त्रयाणां तिसृणां व्याहृतीनां प्रतीकभूताः, त्रयो गुणाः, ( तनयः ) यज्ञोपवीते विद्यन्ते । येभ्यः यज्ञक्रमः प्रसरति यज्ञविधायकाः वेदस्वरूपाः त्रिसराः, सन्ति । अतोऽस्यसमूहभूतस्यनाम यज्ञोपवीतमिति । यज्ञेऽपि अग्नयः त्रिविधा एव भवन्ति, गार्हपत्यनामा, दक्षिणाऽग्निः आहवनीयनामा च । तत्प्रतीकाश्च त्रयः सराः । किंवा ब्रह्मा विष्णुः शिवश्चेति त्रयः सृष्टिस्थिति-संहार-कारकाः सन्ति तेषां प्रतीकरूपातिस्रो ग्रन्थयो भवन्ति मस्तके । [ ब्रह्मग्रन्थिः विष्णुग्रन्थिः शिवेग्रन्थिः ] "अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु" "इति

प्रामाण्यात् मूर्द्धि ग्रन्थिषु" "अमृतम् क्षेमम् अभयम्" इति भावना मध्यः-तिस्रोग्रन्थयः।

किञ्च—यज्ञोपवीतस्य अपरंनाम ब्रह्मसूत्रम्, अतः ब्रह्मणः सच्चिदानन्द-रूपत्वात् "सत, चित् आनन्द" रूपास्त्रयः सराः सन्ति।

किंवाः—"जडजीव अन्तर्यामी" रूपा त्रयः। अथवा—"क्षर, अक्षर, अव्यय" पुरुषरूपास्त्रयः अथवा चित् अचित् ईश्वरश्चेति। इत्थम् सर्वलोकानां तत्त्वानां, (साराणाम्) वेदानां व्याहृतीनां देवानां गुणानां यज्ञाग्नीनां तेजःपुञ्जभूतम् चेदं यज्ञोपवीतम् विद्यते। एतेनैव द्विजाः द्विजत्वं लभन्ते। एतेनैव त्रिभ्य एव-ऋणेभ्यो मुक्तिं लभन्ते। (जन्मत एव त्रयाणां ऋणानां भारः शिरसि निबद्धः) "देव ऋणम्, ऋषि ऋणम्, पितृणञ्चेति" अतः ब्रह्मचर्य्येण ऋषिऋणाद् भवित मुक्तिः। यज्ञेन देवऋणात्। प्रजयाच (गृहस्थाश्रमनिर्वहणत्) पितृऋणाद् भवति मुक्तिः। अतः सर्वकामसम्पादकमेव यज्ञोपवीतम्। यज्ञोपवीतिनां "ब्रह्मचारिणां त्रिकालात्मिका सन्ध्या नित्यं समुपासनीया अग्निहोत्रञ्चेति। ब्रह्मचर्यं हि सौम्य तपः" एतेनैव कायिकं तपः सिद्धयति। सत्यभाषणत्, मितभाषणात् वाक्तपः। इन्द्रियाणां जपात् ऐन्द्रियकं तपः। मनसो वृत्तीनाञ्च जयात् (विषयेभ्यश्चित्त-वृत्तिनिरोधात्) मानसं तपः सिद्धयति। इति त्रिविध (कायिक वाचनिक मानसिक) तपः सिद्धि प्रतीकाः त्रिसराः सन्ति। किञ्च "कर्म, ज्ञान-उपासना" इति त्रीणि काण्डानि वेदानाम्। (कर्मकाण्ड, ज्ञानकाण्ड उपासनाकाण्ड) तत्प्रातिनिध्यमपि कुरुते यज्ञोपवीतम्। अतः अग्नेः उपासनातः तेजोबलम्, वायोः उपासनातः वीर्यबलम्। आदित्यस्य उपासनातः आयुर्बलम् लभते वटुः। अतः सर्वदा एवमेव ध्यातव्यम्-यद्-ब्रह्मणानिर्मितं त्रिगुणात्मकं, (त्रिसरम्) ततो विष्णुना त्रिगुणात्मकं त्रिसरात्मकं कृतम्। ततश्च शिवेन ग्रन्थितम् (ग्रन्थिर्दत्ता शिवेन हि) तदनन्तरं सावि-त्र्याऽप्यभिमन्त्रितम्। इत्थम् सर्वतेजोमयं यज्ञसूत्रमिदं दधाति द्विजन्मा ब्राह्मणो वटुः।

किञ्च—"सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयं ब्रह्म" इति (छान्दोग्य-अ० ६ खंड २ मन्त्र १-४) "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत॥" "तत्तेज ऐक्षत बहुस्यां प्रजायेयेति तदपोऽसृजत।" तस्माद् यत्र क्वचन शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते॥ ३॥ ता आप ऐक्षन्त, बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त। [अन्नाद्यधिष्ठानभूतां पृथिवीमसृजन्त आप एव अन्नोत्पादकाः—] तस्माद् यत्रक्वचन वर्षति, तदेव भूयिष्ठमन्नं भवति। अद्भ्य एव तदध्यन्नाद्यं जायते॥ ४॥

अतः सृष्टेः प्राक् सदेव ब्रह्म आसीत् तत सृष्टि करणेच्छया तदेव ब्रह्म ( स एव परमात्मा परब्रह्म ) तेजः ( अग्निम् आदित्यम् वा ) असृजत । अग्नेः तेजसः जलम्, जलात् पृथिवीमिति । इत्थ-"अग्नि-जल-पृथ्वी" इति त्रितावात्मकं तत्प्रतीकमेव त्रिसूत्रम् यज्ञोपवीतम् छान्दोग्य अ० ६ खं ३ मन्त्र ३-४- ( "सेयं देवतैक्षल० इत्युक्रम्य-तासां त्रिवृत्तमेकैकां करवाणीति"० ) इति त्रिवृत्कृताः ( तेजः आपः पृथ्वी० ) ४२ ति परस्परं त्रिवृदताभवन्तीति तत्प्रतीकाः त्रयः सराः । एकैकस्मिन् सरे त्रिवृद्भूतरूपाणि त्रिसूत्राणि भवन्तीति ( तेजोवन्नरूपं यज्ञोपवीतम् किंवा आद्या सृष्टिः त्रिविधा = "ऋषिरूपा-देवमयी, मानवमयी" तितद्रूपास्त्रयः सराः । इत्थम्-सूक्ष्म शरीरस्थ - सप्तदशतत्त्वानुकारिण्यः सप्तदश भावना भवन्ति यज्ञोपवीते । अस्य प्रभावः--

"दैव कर्माणि युक्तो हि विभर्तीदं चराचरम् । (मनुस्मृ० अ० ३ श्लो० ७५ )
मन्त्र—"त्रयः पोषास्त्रिवृत्ति श्रयन्तामनक्तु पूषा पयसा घृतेन ।
अन्नस्य भूमा पुरुषस्य भूमा पशूनां त इह श्रयन्ताम् ॥"

इत्यनेन-यज्ञोपवीतिनः समुपासकस्य गृहे-पोषणकर्ता प्रभुः "अन्नस्य दुग्धस्य घृतस्य भूयिष्ठां विपुलताम् पशूनां पुरुषाणाञ्च विपुलताम् समृद्धि सुस्थिरां कुरुते प्रवर्द्धते । इति स्थूलं फलम् सूक्ष्मन्तु--"स्वस्ति, "श्रद्धां मेधां यशः प्रज्ञां, विद्यां बुद्धि श्रियं बलम् । आयुष्यम् तेजः आरोग्य, मित्यादीनि बहूनि च ।" इति भूयांसि लौकिकाऽलौकिक साधनानि फलानि ।

अतः सम्यगननुशिष्टोऽसि साम्प्रतम् सौम्य, रामानन्द, ब्रह्मचारिन् ! सर्वात्मभावेन यज्ञोपवीतस्यपवित्रतायाः रक्षा त्वया कर्तव्या । अप्रमादेन वसता त्वया अनुशासने गुरोः वर्तमानेन आश्रमस्थाः नियमोपनियमाः पालनीयाः, सर्वात्मना ब्रह्मचर्य्यम् स्वाध्यायः, स्वतपःकर्म सम्पादनीयम् । सर्वात्मकः, सर्वनियन्ता, सर्वाश्रमप्रवर्तकः, सर्वान्तर्यामी, सर्वाधिष्ठाता सर्वसाक्षी सर्वाध्यक्षः पुरुषोत्तमः प्रभुः श्रीरामस्ते सद्बुद्धि विवेकं मेधां यशः ब्रह्मवर्चः अप्रतिहतशक्ति अमोघवीर्यं तेजः प्रतापं प्रभावं च प्रयच्छतात् । अस्माक मेषा परम-मङ्गलमयी शुभा कामना । "स्वस्तिः स्ताद् वत्स ते" । इति ।

इत्थम् आचार्यमुखोतोदीरितान् उपदेशान्, तत्वपूर्णानि सकलशास्त्रसम्मत-ज्ञानविज्ञान-विजृम्भितानि ब्रह्मचर्योपवीतादिमाहात्म्य - प्रदर्शनपूर्वकाऽनन्त-ब्रह्मज्ञान-सम्भृतानि वचनामृतानि श्रुत्वा वटुः श्रीरामानन्दोऽतीवप्रमुदितस्वान्तः सश्रद्ध सुदृढानुरागभक्त्या च स्वाचार्यचरणेषु प्रणतिं विधाय श्रद्धां प्रकटितवान् ।

तत आचार्यः स्ववटुं भिक्षार्थमाज्ञप्तवान् तदाज्ञां स्वीकृत्य नवविधृतयज्ञोपवीतराजितवपुः, मेखलाऽजिनमण्डितः करगतीकृतदण्डकमण्डलुः धृतपादुकः शनैः शनैः पद्भ्यां पद्मपलाशाभ्यां प्रचलन् तथा रराज यथा स भगवान् वामनः धृत्वासदण्डंछत्रं सजलं कमण्डलुं, "जगाम तत्राऽखिलसारसम्भृतो भारेण गांसं नमयन् पदे पदे" इति बलेरध्वरे प्रवेशोद्यतः विवेश।

यदा वटुः स स्वमातुः सविधे समागत्य "भवति भिक्षां देहि" इति प्रावोचत् तदा माता सुशीला तादृशं साक्षाद्वामनावतारमिव विलोक्य परमानन्दनिमग्ना प्रस्नवद्धर्षाश्रुलोचना सती भिक्षासामग्री - सम्भृतं नानापक्वान्नपूर्णं दृढवंशपात्रं पीतवस्त्रपरिवेष्टितं नानाऽलङ्कृति - मणिमयविविधरत्नखचितां मौक्तिकालिराजिमादायार्चनस्थालीं जलभृङ्गारकसहितां निधाय समागतस्य वटोः वदनारविन्ददर्शनोल्लसितलोचना भालपट्टे साक्षतकुंकुमतिलकं विधाय समानितां रत्नाऽऽभरणमालिकां - कनककुण्डलकनकाङ्गुलीय - कटिसूत्र - केयूर - ग्रैवेयकादि परिधाप्य भिक्षां प्रायच्छत्। तदानीं गृहीतभिक्षस्य नवब्रह्मचारिणोऽलौकिकीं छविं विलोक्य मुहुर्मुहुः पश्यन्त्याः अपि नितान्ताऽनुराग - स्नेह - वात्सल्य भावभावितान्तःकरणायाः कीदृशी मानसिकी स्थितिरासीत् सा न केवलं लेखिन्याः जिह्वया व वर्णनीयो विषयो भवितुमर्हतीति तदानीं प्रत्यक्षद्रष्टार एवाऽनुभवितुं शक्नुवन्ति स्म न तेऽपि वर्णयितुं समर्था आसन्।

किंबहुना नवब्रह्मचारिणोऽपूर्वद्युतिधर-वदनचन्द्रचन्द्रिकाऽऽचमन-चटुलचञ्चुचणचकोरायमाणचक्षुषः, मधुरसौन्दर्यसुधाऽऽस्वादनसमासादन - समुपार्जितसुकृतकृतिनः, तदीयाऽऽननारविन्दमकरन्दमिलिन्दायमानमानसाः समागतदिदृक्षवो नागरिका नराः नार्यश्च विलोक्याऽभूतपूर्वरसार्णवतरलतमतरङ्गतरङ्गायितत्तनवः संवृत्ताः स्तब्धाश्चित्रलिखिता इवाऽऽसन्।

सजलजलद-पटल-परिच्छन्न-चन्द्रचन्द्रिकेव चञ्चलता चपलचक्षुषां चञ्चति स्म परितः सभामण्डपम्। सकलाः सभासदः सहसा समागत्य "अहं पूर्वमहं पूर्वम् न त्वं न त्वमिति प्रभो!" वदन्तोऽग्रे प्रसरन्तो धावन्तः स्पर्द्धमानाः प्रवर्द्धमानाः पराहत्यैकमग्रेयातुं प्रयतमानाः कलयन्ति स्म कलकलम्।

तदा सहसैव वटुकाद्भुतचमत्कृतिमद्दर्शनस्पर्शनान्वीक्षणतद्वचनश्रवणरसवारुणीपानमत्ता इव भावनाविभावोद्भावितभूरिभावाः भावुकाः सद्यः प्रकटितप्रभाव - प्रभापुञ्जप्रेक्षणपराहतगति प्रगतिकाः स्व - स्वस्थानस्थिता एवान्वभूवन् यद् ब्रह्मचारी श्रीरामनन्दस्तेषामभिमुखमेव समुपस्थितो वदति—"भवान् भिक्षां ददातु" इति सर्वे सस्नेहं समुदं सोल्लासं सपदि प्रायच्छन्।

ततः श्रीरामानन्दः शनैः शनैः सविनयमागत्य गुरोः समीपे प्रणम्य तम् भिक्षा-सम्भृतां निःशेषां सविशेषां भिक्षा - पोट्टलिकां गुरवे समर्पयत् ।

चिन्तामणिलाभाद् यथा प्राप्तकर्तुः सहसा दारिद्र्यमगत्या पलायते तद्वदेव गुरोराचार्यस्यापि सकलं दैन्यमेव दैन्यमलभत। नितान्तमानन्दमोदमुदितः आचार्यं वटुकं श्रीरामानन्दाचार्यमाशीः परम्पराभिरभिनन्द्य, यज्ञोपवीतसंस्कारविधि सम्पन्नं कृतवान् ।

श्रीपुण्यसदनः समागतान् समाहूतान् द्विजान् - ऋत्विजो यथायोग्यं यथास्वरूपं सर्वानामन्त्रितान् सम्पूज्य वस्त्रालङ्कारवासो गोधनादिभिः सन्तर्प्य सम्मान्य यथा-समयं विसर्जितवान् ।

## ब्रह्मसूत्रे - यज्ञोपवीतेसप्तदश भावनाः

१. "पृथ्वी अन्तरिक्षम् द्यौः" इति मण्डलमयी
२. अग्निः वायुः आदित्यः अधिष्ठात् देवतामयी ( सारभूताः सराः )
३. अग्नेः वायोः आदित्यात् ऋगवेदः यजुर्वेदः सामवेदः तन्मयी भावना
४. ऋग्वेदात् यजुर्वेदात् सामवेदात् भूः, भुवः स्वः लोकमयी
५. ऋषिऋण देवऋण पितृऋण ब्रह्मचर्यात् यज्ञकरणात् गार्हस्थात् ऋणमुक्तिः
६. त्रिकालसन्ध्या अग्निहोत्र-कर्त्तव्यबोधका त्रयः सराः
७. अग्नित्रय-"गार्हपत्य," दाक्षिणाग्नि "आहवनीय"
८. कायिक वाचनिक मानसिक तिस्रः भावना
९. त्रिकाण्ड=कर्म - ज्ञान उपासना काण्ड भावना
१०. सत्वम् रजः तमः इति त्रिगुणमयी भावना
११. सत् चित् - आनन्द-ब्रह्म धर्मभावना
१२. 'जड़' जीव अन्तर्यामीति त्रिसरभावना
१३. क्षर-अक्षर अव्यय ब्रह्मेति त्रिसराः
१४. ऋषिरूपा देवरूपामानवरूपेति सृष्टिभावना
१५. भूतसृष्टिः तेजः आपः पृथ्वीतित्रिसराः; प्रत्येकस्मिन् त्रिवृत्तिकरणरूपाणि त्रिसूत्राणि
१६. यज्ञोपवीतग्रन्थिषु - ब्रह्मणः "अमृतं क्षेमम् अभयं त्रिमूर्ध्नोऽधायि मूर्धसु-इति
१७. तथा च ब्रह्मा विष्णुः महेशरूपास्त्रिग्रन्थयः । इति ।

---

# अष्टमः परिच्छेदः

अथ विधृत-सावर्ण्यव्रतः, सम्यगनुशिक्षितोऽनुशिष्टोविशिष्टब्रह्मतेजाः, प्रविष्टः प्रथमाश्रमे, दण्ड-कमण्डलु - मेखलाऽजिनोत्तरीयोद्भासित - विभासित - ब्रह्मवर्चाः, समर्चाऽऽराधितभगवदनुग्रहोपपादितनवनवोन्मेष - प्रस्फुरद्वाग्वैभवः, समनुष्ठिताऽग्न्युपासनोपलब्धाऽद्भुतसमेधमानमेधः, श्रवणमात्रगृहीतशब्दसमुदायोज्जृम्भितवेदाऽध्ययनरुचिकः शुचिकर्मनैपुण्य-जागरित-कर्नंठ-प्रवृत्तिको गृहेऽपि महितमहाऽनुभावोद्भावितमहर्षिकुलानुरूपचरितः परितः प्रतिभाप्रकाशित-पठनपाठनपाटवोऽप्याटविकमुनिजनाऽऽश्रमनिवासानुरूपशीलः सुशीलः श्रीरामाङ्घ्रिसरोजसेवनाऽऽनन्द-कन्दलितस्वान्तो नितान्तमशोभत श्रीरामानन्दः।

इत्थं प्रतिक्षण-विलक्षण-समेधमानाऽसमानशेमुषीकं, बालाऽऽचरणप्रत्यनीकं, पञ्चहायनमपि सभाऽयन-स्वभावं समीक्ष्य स्वसुतम्, तदीयाऽनुपमगुणगणालोकनोपचीयमानप्रमोदाऽऽमोदमुदितवदनः पुण्यसदनो व्यचिन्तयत्, यद् रूपयौवनसम्पन्ना सुशीलाचरितधन्या कन्या यथा श्वशुरगृहे एव सुशोभते तद्वदयनपि ब्रह्मचारी सर्वदाऽद्भुतविभा - प्रतिभासम्पन्नो गुरुकुल एवोपचीयमानविद्यावैभवः समुद्भासते भास्वानिव समासादितसावित्रिकः। अतोऽस्य वटोस्तादृशेऽद्भुतचमत्कारिणि प्रशान्त - मधुरवातावरणपरिराजित - वटुककुलमण्डिते निवास एव श्रेयस्करो विद्यापीठे।

इति स्वपत्युर्निश्चयं विज्ञाय चारुशीला सुशीला प्रावोचन्निजस्वामिनम् भगवन्! सुचिरकालिकोपासनोपार्जिताऽनुपमसुतस्नेहसम्बद्धसकलभावं स्वभावं, वात्सल्यपूरपूरितं हृदयमपि संरुध्य स्वान्तःशकलं, बहिश्चरमपर - प्राणमिव वितरिताऽऽनन्दं श्रीरामानन्दं स्वात्मनः पृथक्कृत्य कियत्कष्टमनुभविष्यामीति न विभातुं शक्नोमि। किन्तु भगवदाराधनोपलब्धमपूर्वं लोकातीतंमिममात्मजं, लोकातीतमेव महापुरुषं द्रष्टुकामा, कामारिमिव सकलविद्याधीशं, वाचस्पतिमिवाऽपरं, वेदव्यासमिव सकलशास्त्रविज्ञानभाण्डागार - विकासकम्, प्रकाशकञ्च स्वेष्टदेवाऽपारकरुणासागर - श्रीरामभक्तेः, सकलजनमानससन्तापहारकं, प्रचलित-

पाखण्ड प्रचण्डसंहारकं, शरणागत-भक्तजनसन्तारकं, सनातनधर्मप्रचारकं, सुकृतकृति-धृति-संस्कृति-परिपोषकं, विद्वज्जनमानसतोषकं, अनवरत - कर्मज्ञानीन्द्रियाश्वनिचय-सादिनं, सर्वदाऽऽदर्शवादिनं, दुरूहदैन्यदावानलदग्धदीनजनदैन्याऽऽपन्निवारकं, सकल-सहायकं, सन्मार्गोपदेशाऽऽधायकं, कुशलनायक, कायिक-वाचनिक-मानसिकादि-वितत-बहुविधशोकमपि भूलोकं, सुलभसौख्यसम्पदोकं, सुश्लोकं विधातुं सक्षमं, गुणगण-गभीरं, परमधीरं, कर्मवीरं, समुत्खातित - विपक्षपक्षकं, संस्थापितनिगमागमपक्षकं, निजधर्मरक्षकं, समपसारित - मानवाऽन्तःस्थितदुर्भावदानवं, कमप्यलौकिकमानवं विलोकयितुं कामये।

अतोऽस्माकमस्य नयनगोलकस्य कृते स्वस्वरूपाऽनुरूपमेव, कमपि विनिः-सारिताऽप्रतिबुद्धतत्त्वम्, विशुद्धसत्त्वं, परिपूरित - सुसंस्कृतधार्मिकतत्त्वं, लब्धप्रतिष्ठं विद्यापीठं, निराऽऽबाधनं सर्वविधसुलभसाधनमन्विष्य सत्वरमेवाऽस्य प्रवेशव्यवस्था विधातव्येति।

इत्थं स्वकीय भवनसौभाग्यलक्ष्म्याः लक्ष्म्यागाराऽपारसद्गुणशीलायाः सुशीलायाः प्रेरणात्मक-परामर्शगभीरां धीरां गिरमाकर्ण्यातीव प्रहृष्टवदनः स्फुरित-रदनः श्रीपुण्यसदनः सुलभसत्कार-सम्भृतगौरवप्रकटनप्रवीणां वीणाऽनुरणनश्रुतिसौख्य-वहां वाणीं प्रस्तुतीकृत्य समर्थयन् प्रियतमाप्रस्तावितप्रेरणाप्रवर्द्धिनीं समर्द्धिनीं श्रेयस्ततः सारगर्भितां तदीयोक्तिं सरसं व्याजहार—प्रियतमे! सर्वमविकलमहमपि तथैव चिन्तयामि यत् सन्ति समन्ततो भुवस्तले नैकशः सामान्येन विद्यापीठाऽऽश्रमादयः किन्तु सर्वत्रैव न हि ते विशुद्धसत्त्वप्रधानाः प्राचीनपरम्पराऽनुगतसनातनधर्ममर्यादा-ऽनुकूलसत्संस्कृतवाङ्मयभारतीयसंस्कृतिमूलसिद्धान्तशुद्धान्तःपरिपोषक - प्रकृतप्रवृत्तिकाः प्रायः सर्वेषामेव प्रवृत्तिव्यापाराऽवयवेषु विकृतम्लेच्छसंस्कारपरिपुष्टदुष्टभावनाविभूता-परिपूतप्रकाराकार-सञ्चाराः स्फुटं प्रतिभान्ति। तेषां धमनि धोरणीषु धावति धूर्त्त-धौर्त्य-धूसरित-शोणितधाराऽऽधाराऽःसारभ्रान्तोध्वान्तः तेषां सांस्कृतिकीपरम्पराऽपि सम्प्रति म्लेच्छसंस्कृतिसंवलिता समभवत्। वर्तमानस्वरूपमपि तेषां "विषकुम्भं पयोमुखम्" इव प्रतीयते। किं बहुनां तादृशेभ्यो विद्यापीठाऽभिधाऽविद्यापीठमयेभ्यस्तु धर्मनीति-मर्यादा-सदाचार-सज्ज्ञानजन्य-धन्यतम-प्रबोधाऽऽशाकरणन्तु गगनकुसुमसुरभि-समाघ्राणघ्राणसन्तर्पणानन्दलाभसदृशमेव। किमेतादृशेभ्यो भारतस्योपकारशुभाशा? यद्येतादृशेष्वपि सनातनधर्ममर्यादापरिरक्षणम् दृश्येत तर्हि किमर्थं भगवान् श्रीरामः श्रीकृष्णः प्रादुर्भवेत् न वा भारतमपि दुर्दशाग्रस्तं त्रस्तं निरस्तसकलमर्याद भवेत्। यदित्रा म्लेच्छानां सुदूरतोऽपि निजमनोनुकूल-भारतीयधर्मनिर्मूलीकरणकलाकोविदानां शिक्षा - दीक्षा-प्रसारित - चाकचक्य - चकिताऽऽहृतचाक्षुषीकारितनिजधर्ममर्यादाऽऽचारै-

रेव भारतीयैः समापादितस्त्वकीय व्यापाराणां स्वस्वानुरूप-कर्मकारिणां सर्वस्वाऽपहारिणां दुर्नीतिः कथं सफलसाधना प्रभवेत् ।

एषामेव प्रदेशवास्तव्यानां शासकानामेवैतत्कर्म यदेते समे सदाचारा अपि दुराचाराः स्वकीया अपि परकीया इव संजाता भारतीयसंस्कृति-परिपोषका अपि शोषकाः सवृत्ताः आस्माकीनाः शिक्षणालयाः येषु प्रत्यब्दमेकान्तदेशभक्ताः धर्माऽधाराः सदाचाराः शास्त्रैक-मर्यादासंरक्षकाः भूयांसो नरोत्तमाः प्रकटिताः भवन्ति स्म. तेष्वेव सम्प्रति वैदेशिक-शिक्षादीक्षा-परिणिष्ठितास्तदनुकूलाचारविचाराः परस्परं निजदेश-जाति-धर्म - मर्यादा - सौहार्दादिकं परित्यज्य तत् सम्पर्कजनित-दुर्भावपरिपुष्टहृदयाः तदीयमपि निजदेशानुरागं स्वधर्म - मर्यादापालन - निजजनपक्षपात - पराघात-निजजातीय - सुज्ञातसाधनसमाराधनैकलक्ष्यमप्यनङ्गीकृत्य स्वदेश - जनमूलोच्छेदक-कर्मनिपुणाः परस्परं द्वेषेर्ष्याभूताविष्टाः स्वात्मनि निर्विष्ट-कातरताऽसहयोग क्लेशाः, लुण्टाकत्व - परिवञ्चनादिविषमविपतत्त्वसंश्लिष्ट-निकृष्ट - भावनाभाविताऽन्तःकरणा दूरीकृतशीलाऽऽभरणा निःसरन्तीति हन्त !

विद्यापीठानामीदृग् दशायामपि कारणं वैदेशिकशासनमेव । यावत् कालं भारतीयाः विद्यापीठाऽऽश्रमा आस्माकीनानामृषिवर्याणामधिकारे मर्यादिता आसन् न तावत्तेषु किमपि वैगुण्यमापतितमभूत् । तदानीं भारतीया सर्वविधा सामाजिकी नैतिकी प्रशासनिकी मर्यादा सुव्यवस्थिता सद्गुणा विनयनयाऽनुकूला सर्वसौख्य-मूलाऽप्यक्षुण्णा प्रचलिता आसीत् । परञ्च यदा म्लेच्छशासकाः प्रवलतमा समभूवन् तदा तैः सकलशिक्षणालयानां सञ्चालनपरिपाटी स्वकरतलीकृता ततः प्रभृतिरेव तैः स्वकीयाऽभिलषित - निजदासायितीकरणमनोरथसिद्ध्यै तदनुरूपा ह्येव सकला पठनपाठन-प्रणाली स्वप्रकाराऽनुकूला कारिता । किंवहुना भारतीयमितिहासमपि तथा परिवर्तितं कारयित्वा मुद्रापयित्वा च पाठ्यग्रन्थेषु तैः प्रचारितो येन भारतीया-अपि परस्परं द्वेषभावनापिशाचीपञ्जरपतिताः विषीदेयुर्न कदाचित्सौहार्दं संस्थाप्य परस्परं मिलेयुरिति । तदानींतने काले प्रसारितो विषप्रयोगो नाऽद्यापि प्रशाम्यति भारतीयेषु । ततः प्रभृतिरेव भारतीयायाः संस्कृतेर्नाशः प्रारब्धो नाद्यावधि तादवस्थ्यं लभते संस्कृतिः ।

अतो रामानन्दकृते यादृशस्य विद्यापीठस्य विद्यतेऽभीप्सा तादृश एवैको दृश्यते वाराणस्यां श्रीराघवानन्दाचार्याणां पञ्चगङ्गातटे । ते परमनैष्ठिका ब्रह्म-चारिणो विद्वांसोऽद्भुतप्रतिभाशालिनः प्रतापिनः । तेषां चरणसन्निधानेऽस्य भविता स्वरूपाऽनुरूपा सर्वविधा व्यवस्थेति ।

---

# नवमः परिच्छेदः

अद्य प्रातःकालादारभ्यैव दर्शनाभिलाषिणां सम्मर्दः श्रीपुण्यसदनमहात्मनः प्रासादसम्मुखे समवेतः समभवत्। एकतः पुरुषाणां समूहः अपरतः सुभगसौभाग्य-सम्पत्समृद्धसीमन्तिनानां समवायः अन्यतश्च वालक्रीडाऽनुरक्तपरमासक्त-समवयस्क-सहचराणां निवहः, केवलं कमनीयकेलिकौतुककलापाऽऽलापिनीनां कुसुमसम्भृतकर-पुटानां कदम्बः शोभयामास मङ्गलयात्रा-प्रस्थानवेलां नूतनब्रह्मचारिणः।

प्रस्थानसमये दर्शनोत्सुक-समुपस्थित-नरनारीपटलेन पुष्पाञ्जलिभिः कुसुम-वृष्टिं विधाय समन्ततो मङ्गलगीत-वाद्यव्यापारैः, माङ्गलिककामनाभिः विविधाशीः-परम्पराभिश्च, सम्मानसत्कारसदाचारैः, समलमक्रियत वटुः श्रीरामानन्दः सकल-हृदयानन्दनः, सपुण्यसदनः।

तदानीमेव पुत्रप्रस्थानावसरे विद्याऽध्ययनाय जिगमिषन्तं, वहिश्चरं स्वकीय-हृदयं, नववटुवेषसमलङ्कृतवपुषं दर्शं दर्शं, नितान्त हर्षप्रकर्षसमुत्पन्नानन्दाश्रुकण-कलुषितपक्ष्मला, पुत्रवत्सला, चारुशीला सुशीला सहसोपसृत्य, वृतमाङ्गलिकोपचार-सम्भारसुसज्जितार्चनस्थालिका, समासादितसुमनोमालिका, सविधि समर्च्य भाग्यवतो भास्वद्भालपट्टे कौङ्कुमं तिलकं साक्षतं विधाय, सुमनोमालिकया समलङ्कृत्य तदीयकन्धराम् साफल्यसूचकं श्रीफलं माङ्गल्यपटवेष्टितं वटोर्हस्ते दत्वा, शुभाशीर्भि-र्मुहुर्मुहुस्तं निजनयनतारकं समभिनन्द्य, वाहुभ्यामाश्लिष्य, मुखं परिचुम्व्य, हृदयेन संयोज्य प्राब्रवीत्; वत्स ! सानन्द विधेहि मङ्गलप्रस्थानम्। सर्वदैवाहं तव साफल्याय भगवन्तमर्चयन्ती, दैनन्दिनं प्रार्थयिष्ये। यद्यपि नाहं क्षणमात्रमपि निजनयन-व्यापृतपथात्सुदूरवर्तिनं विधातुं कामये त्वाम् का नाम सीमन्तिनी निजहृदयखण्डं हृदयाद्भिन्नं कलयितुं कामयते। निजनयनगोलकं वा काऽपसारयितुं यतते। नाहं निमिषार्द्धमात्रक्षणमपि लोचनागोचरीकर्तुमीहे। किन्तु वत्स ! केवलं मोहपाशा-वृतविग्रहा, दुराग्रहा, कामिनी, या, हि स्वस्नेहपाशपतितमेव निजसुतमकर्मण्यं,

विज्ञानविहीनं, सर्वशक्तिमन्तमपि कुण्ठितकृतिं कलयितुं कामये, कामये च विश्वविख्यातकीर्तिं, निजविद्यावैभवविभाभासितभुवनं प्रतिसवनं . जगद्वन्दनीयपदाऽऽसीनं विलोकयितुं निजतनयम्। अतः सहर्षं प्रेषयन्ती त्वां, समुपार्जितजगदनवद्यविद्यं, सकलजनहृद्यं, लब्ध्वाप्रधृष्यं वैदुष्यं, स्वस्वरूपाऽनुरूपलब्धप्रतिष्ठं, प्रकृष्टगुणगणगरिष्ठं, वरिष्ठं, पुनः स्वभवनमायान्तं, विश्वभान्तं, विलोकयिष्ये। स्वाऽभिन्नस्वान्तं प्रयान्तमनुमोदये सद्यः समागमनायेति। शुभाः सन्तु ते पन्थानः।

इत्थं स्वजनन्या समाज्ञप्तो नवब्रह्मचारी श्रीरामानन्दः स्वमातृवात्सल्योतप्रोतहृदयः स्पृष्ट्वा स्वजनन्याश्चरणौ स्नेहकातराक्षियुगलो धैर्यमालम्ब्य सश्रद्धमुवाच अम्ब ! तव चरणौ स्पृष्ट्वैव प्रतिजाने यदहं ते स्तन्यं पीतवान् त्वदुत्सङ्गे चैतावत्कालं विलसितवान् त्वदीयलालने पालने प्रवर्तमानो लोकातिगं सौख्यं ब्रह्मानन्दादप्यतिशयं ते सुलभवात्सल्याऽऽनन्दमनुभूतवान् - आगर्भाऽऽधानादेतावत्कालपर्य्यन्तं पालनलालनप्रीणनपोषणादिविविधक्रियाकलापेषु स्वयं कष्टमनुभूय मामेव सर्वस्वं मत्वा सर्वविधसौख्यसमासादनाय प्रयतमाना तपस्तप्त्वा मामद्यापि निजसौहार्दस्नेहसम्भारैः सह सर्वात्मना सुयोग्यं सर्वजगदुपकारकं विश्वविपन्निवारकं मानवकल्याणकारकं विधातुं गुरुकुलनिवासाय प्रेषयतीति स्नेहवशंवदायाश्चेतसि कियतीं मद्वियोगवेदनामनुभवन्ती भवती साश्रुलोचनाऽस्तीत्यहं जाने प्रतिजाने च नाहं स्वप्नेऽपि ते निपीतंस्तन्यमन्यथा कल्पयिष्ये, येन ते हृदये क्वचन त्रपा लोकवाच्यता वा वसतिं कलयेदिति सर्वदाऽप्रमत्तः सर्वविधधर्माचरण - नीतिरीति - परम्परापालन - सदाचार - सौशील्यसच्चारित्र्यादिपरिपालनरतो विरतश्च निन्द्यकर्मभ्यः सतत विद्याध्ययनमात्रैकलक्ष्यस्तनयिष्ये ते सत्पुत्रत्वयशस्सन्ततिम्। स्मरिष्यामि च सर्वदा गुरूपदिष्टं स्मृतिवाक्यम्:

"श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखमिति ॥" (मनुस्मृ० २।८)

सम्पादयिष्ये च सकलं, यद्भवत्योदितम्। सफलयिष्यामि ते मनोरथशतकल्पपादपावलीम्। सद्यः पल्लवितां कुसुमिताञ्च प्रदर्शयिष्यामि त्वदाशालतां भुवनोद्याने इत्युक्त्वा मातृचरणे प्रणतिपुरःसरं पादपद्मपरागं शिरसि धृत्वा, पार्श्वस्थानाप्तजनानपि प्रणम्य तेभ्यः शुभाशीर्वादानुपलभ्य-सम्मुखस्थां स्ववयस्यमण्डलीं विलोक्य सस्नेहं तान् साश्रुनयनान् सम्बोध्य बालभाषयैव सम्प्रीणयन् तदुदितान् प्रश्नोत्तरान् विधाय सम्प्रतोष्यनिखिलान् यथास्वरूपं यथायोग्यं यथाऽऽलापं प्रीणयति स्म श्रीरामानन्दः। बालानामपि तथाविधं पारस्परिकं स्नेहसौहार्दसमालापमाकर्ण्य स्वकीयबालव्यवहारजनितसौख्यं स्मारं स्मारं साम्प्रतिकविरहवेदनामसहमानाम् सहैव गमनार्थञ्च प्रार्थयमानान्

प्रणयाश्रुधाराकलुषितकपोलानालोक्य सकलं वातावरणमपारकरुणावतरणमिव समभवद्दयायाः शरणम्। जगाद च मधुरमधुरम् अयि ! वयस्याः ! अहं गुरुकुले पठनार्थं गच्छामि यावदहं न प्रत्यावर्तयेय तावद्भवन्तः प्रत्यहं अत्रागत्य पुत्रवत्सलायाः मातुश्चरणौ शरणीकृत्य मत्प्रातिनिध्यं विदधतो मातुः पुत्राऽभिन्नं स्नेहोपायन-मिष्टान्नं प्राप्नुयुः क्रीडयेयुः। इति।

बालकान् सम्बोध्य अग्रे प्रस्थानपरायणयोः जनकतनययोः पृष्ठतः समनुयातानां नागरिकाणां समुदायमालोक्य वनगमनाऽवसरे भगवतः श्रीरामस्य तमनुधावतो-ऽयोध्यानगरनिवासिनो जनसमुदायस्य दृश्यमिवानुभूतं जनैः। तथाविधं प्रयतमानांश्च तान् समीक्ष्य श्रीपुण्यसदनः प्रावोचत्—बन्धवः ! सम्प्रति सर्वे पर्य्याप्त दूरमुपागताः, यद्यप्यहं जाने, स्नेहवात्सल्यपराधीनाः, न क्षणमात्रमपि, रामानन्दं स्वहृदयानन्द-मिव, दूरीकर्तुं प्रभवन्ति निजनयनपथात्। स्नेहपराधीनानां भवत्येतादृश्येव स्थितिः। किन्तु गन्तव्यस्थानं सुदूरमितो गमनमवशिष्टं विद्यते। स्वजनः पापशङ्कीति नियमेन सर्वे वर्तमानम्लेच्छशासकदुर्नीतिमयव्यवहारव्यापारपरिक्लिश्यमानमानसाः, मार्गाऽव-रोधत्रासाऽऽवासक्लेशविशेषदूयमानचेतसः सचेतसः समाकृष्टा इव समागच्छन्तो न प्रत्यावर्त्तितुं पारयन्ति। परञ्च सर्वे मार्गक्लेशं सोढ्वाऽप्मनुयान्तो, न विशेषफलभाजो भविष्यामो वयम् सर्वे। अतः बालकस्याऽस्य संरक्षणार्थमहमेवैकः पर्य्याप्तः, सर्वे भवन्तः ससुखं प्रत्यावर्तन्ताम्।

न मनागपि चिन्ता चिन्तनीया, विश्वसिमो वयं, स्वयात्रां सानन्दं सम्पाद्य ससुखं स्वगन्तव्यस्थलं लप्स्यामहे, श्रीमतां सर्वेषामेव शुभकामनाऽग्रेऽग्रे प्रचलत्यस्माभिः सहैव। स्व-स्वभवनस्थिता एव सर्वे भगवन्तं जानकीजानिं प्रार्थयन्ताम् यदयं भवतां चिरायुष्मान् रामानन्दो लोके विख्यातयशाः विद्वान् भूत्वा पूरयेन्नः सर्वेषां मनोरथा-निति। इत्थं प्रार्थिता अपि स्नेहाऽऽकृष्टा न प्रत्यावर्तिता अभूवन्।

तदा श्रीरामानन्दः प्रोवाच—स्वसुतनिर्विशेषसुलभवात्सल्यभावोद्भूततरलत-मतरङ्गमालोद्वेलितार्णवायितहृदयाः सहृदया पूज्याः स्वात्मीयस्नेहभाजनं मां महार्णवः पर्वणि चन्द्रमसमिवाऽसमञ्जसमनुभवन्तो न विहातुं कामयन्ते मत्सहचरत्वम्। किन्तु श्रीमतां समेषामेषामाशीःपरस्परां गृहीत्वैव यामि, सर्वदैवैषा मा भविष्यति, बलवती भवति खलु गुरुजनानामाशीर्वादसन्ततिः। न कोऽपि मार्गे व्याघातं कर्तुं पारयिष्यति भवद्धाशिषां सुदृढतमकवचसंवृताङ्गं वज्राङ्गमिवाऽभयाङ्गम्। अतो निर्भयं निश्चिन्तं निवर्तन्तामशेषाः, आज्ञापयन्तु नौ प्रस्थातुमग्रे।

इति सर्वान् विसृज्य—विद्यमानेऽपि नानाविधयानादिसाधनसमवाये शास्त्रोक्त-रीत्या गुरूपदेशं—"न वाहनान्युपयुञ्ज्याद्ब्रह्मचारी" ति शास्त्रवाक्यं पुरोधाय, पद्भ्यामेव कतिपयाङ्गरक्षिभिः सह पितापुत्रौ काशीं प्रति प्रस्थितौ।

पादुकाधारणस्य नासीदभ्यासो बालकस्येतिमत्वा प्रकृतिः स्वयं सकल-मानुकूल्यं सम्पादयामास। भूमौ मृदुलता, भानौ नात्युष्णता, वायौ शीतल-मन्द-सुगन्धित्वम्, सर्वत्र वनोपवनेषु कुसुमाकर-समृद्धि-सुषमासम्पन्नत्वम्-प्रावर्द्धत। यत्र-यत्र दृष्टिः प्रसरेत् तत्र तत्रैव नवनवलमृदुलदलैः नैकविधवर्णरञ्जित-प्रसूनपुञ्जैः, गुञ्जन्मधुकरनिकरैः अभिनवमञ्जरीपिञ्जरितशेखरैः सहकारनिवहैः प्रतिशाखं नृत्य-त्पिककुलैः, मन्दमन्दमारुतान्दोलितललितलतिकाततिभिः सद्यः समुन्मीलितनलिनवि-लुलितसुरभितशीतलसलिलसम्भृतसरोवर-समुद्गीयमानमधुकरझङ्कृतिमनोहरैः, नाना-विधमनोरम-शकुन्तकुलसङ्गीतसङ्कुलितपादपततिभिः सुरभितसुमनोभरैः समुल्लसित-क्षुपपुञ्जैर्मञ्जुनिकुञ्जैः विविधफलोद्गमोल्लासकल्पितपाथेयप्रकरैः परितः प्रसारित-निजाऽतिथिसेवासमाहारकल्पनाशतसम्भारैः मनोरमवनोपवनैः समलङ्कृतः, सुसेव्यो मार्गं एवं पथिकजनमनोमोदावहो लोचनलोललीलां समुल्लासयन्निव वटुना जनमानस-मानन्दयन्निव, मार्गगमनोत्साहं प्रवर्द्धयन्निव, सुदूराऽध्वश्रममपहरन्निव नवनवोल्लासं समर्द्धयन्निव, सौख्याकरोऽन्वभूयत।

शनैः शनैः प्रचलन्तो मनोमोहिनीं मधुरमधुरतमां काननीं शोभां समुदीक्षमाणाः मार्गस्थफलपुष्पादिभिर्वटुकं श्रीरामानन्दं समलङ्कुर्वन्तः बालकस्यास्य मनोरञ्जयन्तः विविधां तीर्थसम्बन्धिनीं गुरुकुलनिवासोपयुक्तां नानामहर्षिगण-शिष्यवर्ग-प्रचारित-मनोरमालौकिक-विज्ञान-विजृम्भितां कथाम्, कुर्वन्तः समालपन्तो हसन्तो हासयन्तश्च दिवस्य तृतीयेयामे (प्रहरे) सुरम्ये एकस्मिन् पर्वतीयसरिद्वरातटनिकटरम्यस्थले समुपागताः। अत्रैव सर्वसम्मत्या विश्रामः परिकल्पनीय। सम्प्रति समागतोऽयं साय सन्ध्योपासनासमय इति निश्चित्य तत्रैव सुसमीचीनं स्थानं परिकल्प्य विश्रामो व्यरचि।

——

# दशमः परिच्छेदः

साम्प्रतं म्लेच्छशासनीयात्याचारपरित्रस्तध्वस्तानिजपरम्पराचारविचारा, निरुद्धसकलसुकृतसुलभवर्णाश्रमानुकूलव्यवहारा छिन्नभिन्नीकृतोदरभरणव्यापारा, अपारा हिन्दू-प्रजा निर्जनवन-गिरिकन्दरेषु निलीयात्मानं यापयामास कथञ्चन दिनानि । यत्र यस्याः पर्वतीयायाः शैवलिन्याः सान्द्रच्छाये सघनद्रुमराजिराजिततटप्रदेशे श्रीरामानन्दः श्रीपुष्पसदनेन सह सायं विश्राममकल्पयत् - तदेव स्थलं तादृशानामेव हतभाग्यानां निजनिजधर्ममर्यादापालनेनैव लब्धजन्मसाफल्यानां, सनातनधर्मधुरन्धराणां, मुनिकल्पानामनल्पानां, सुखदा वसतिरासीत्; या हि सम्प्रत्युत्खातिता, दुष्ट-दुःशासनविलुण्ठित-समाकृष्टकेशवसनाद्रुपदराजकन्यकेव ध्वस्तवेषा, निःशेषामूलचूडोन्मथितसौन्दर्यसौभाग्यकोषा, रोषाऽरुणदुष्टनिष्करुण कुटिल-कुशासक-क्रूरकृत्याग्निज्वलज्ज्वालामालावलीढप्रदेशा विलुप्तनामनिर्देशाद्यकारि क्रूराऽऽचारिभिः ।

दोषायामेव तत्र परिच्छिन्न - वेषविन्यासैः कल्पिताऽऽवासैरेव जनैः स्वकीयाऽऽहाराऽऽहरणाय कृतवहुरूपैः परितोऽटव्यां वम्भ्रम्यमाणैः कथं कथञ्च लब्ध-कन्दमूलादिभिरेव सम्पाद्यते स्म स्वकीयाऽऽहारवृत्तिः । प्रच्छन्नवेषेण निजनिजऽऽवासतो बहिर्निर्गताः तस्मिन्नेव व्यालोलूकमयाजिरे निर्जनाऽरण्येऽशरण्ये नवीनामेव काञ्चन-जनसङ्कुलां वसतिमालोक्य महदाश्चर्यचकिताः सुशङ्किता दूरत एव विलोक्य लोकातीतचरितान् धार्मिकधौरेयोपयुक्त - प्रयुक्तसन्ध्योपासनाग्निहोत्राद्युद्भूतपूताऽऽमोदापसारिताऽखिलदुरितान्, विशुद्धगव्याऽऽज्यहव्याद्भुतगन्धप्रसारणव्याजेविस्तारिताध्यात्मिक शक्तिनिचयान्, व्यरचयतो हीनानपि विशिष्टधार्मिकभावनोद्भावकाऽपूर्वोत्साहवल-पौरुषसम्पन्नान् साक्षाद्भगवतो रामस्यैव स्वरूपधारिणो दण्डकारण्य-निवासकारिणः प्रतिरूपकानेव तान् मत्वा शनैः समुपजातपरिचयविश्वासाः स्वस्व-हस्ते विधृतकन्दमूलादिफलोपहाराः प्रणतिपुरःसरं सर्वे समागत्य-समानीतोपायनानि-सम्मुखीकृत्य समासादयामासुः सत्सङ्गसमालापसौख्यानन्दम् ।

अमन्दाऽऽनन्दसन्दोह - सम्भृताम् परितो विस्तारिताऽऽत्मभावनाऽनुरूपां स्नेहसद्भावविशिष्टां शिष्टामातिथ्यसेवाहेवाकानां सत्कारपद्धतिमक्षिविषयीकृत्य बालोऽपि श्रीरामानन्दः सर्वांस्तान् सम्बोध्य मधुरमधुरं व्याजहार—अहो भवन्तः सर्वे सजीवा एव हिन्दूधर्मप्रतीकाः निर्भीका इव सिंहव्याघ्रभयाऽऽकुलेऽपि निर्जनेऽरण्ये भूरिभूरिदुष्टदुःशासन - कुचक्रचक्रनिपतिता नानाविधक्लेशसन्तापतापिता अपि सुवर्णवर्णा भ्राजमाना सुवर्णाऽश्रममर्यादारक्षणसक्षमा यस्मिन् भूमिभागेऽद्यापि राजन्ते धन्य एव स पुण्यतमः प्रदेशः। धन्याश्च वयमपि। ये ह्यत्रापि वयम् निर्मनुजे विपिने भगवतोऽनुग्रहेणैव भवादृशैः सुदृढधार्मिकभावनानिबद्धहृदयैः सह समागमसमालाप सौख्यमनुभवामः। विशेषतश्च विलोक्य भवतामीदृशीमातिथ्य-सत्कार - दृढधारणाम्, नितरां प्रसीदामः। सगर्वश्च वयम्-संवृत्ताः समीक्ष्यैतां दुरूहसङ्कटमयेऽपि समये भवन्तो दुष्टदानवायितमानवाऽधमैर्निपातिताऽऽपत्पर्वतकूट-पोषिताऽपि समपहृतसर्वस्वैकजीवमात्राऽवशिष्टाः पालयन्ति परम्परागतां निजपूर्वजैः सुकृतचरितवारिपूरपूरितमूलां धर्माऽनुकूलां समागताऽतिथिसत्कृतिमयीं मानव-मर्यादाम्। भवादृशानां नररत्नानां जीवनमेव भवति संसारसागरनिपतितानां प्रावाहिकजीवानां कृते आदर्शोदाहरणमूलमिति।

सम्प्रति दुर्भाग्यमस्ति भारतस्य यदत्र यथेच्छाचारविहारात्याचार-परायणस्य म्लेच्छाऽधमस्य राज्यमेव शस्त्रबलेन प्रवर्तते। महद्दुःखाकरन्त्वेतत् प्रायशो जनाः मोहेन लोभेन भयेन स्वार्थाऽन्धतया च विधर्मपरिपोषणप्रवृत्तयः परधर्मान्धदासायिता नैव पश्यन्त्यात्मनः कल्याणपरम्परां, न साधयन्ति सुकृतसाधनानि, न विश्वसन्ति परलोक-पूर्वाऽपरजन्मजातशातसम्भूतिम्, न मानयन्ति निजपूर्वजाऽऽचरितपरम्परा-यातप्राक्तनपरिपाटीम्। मन्वते च कृतकृत्यतां स्वात्मनो भरण-पोषणसमाराधने। प्रयतन्ते च प्रतिक्षणं निजकामलालसाविपोषाय। समर्पयन्ति स्वयमेव विधर्मिहस्ते निजसदाचार - सदश्वप्रग्रहम्। पश्यन्तोऽपि न पश्यन्ति विधर्मिजनविलुण्ठितकुल-वधूजनमानमर्यादाम्।

किमेभिर्दुर्भगभारतीयापसदैस्तादृशविरुद्धाचरणधरणैः धर्मव्याजेनविधर्मिजन-प्रवर्तितधर्माऽऽभासभासितपथानुगमननिरतैः परित्यक्तसनातनधर्ममर्यादैर्विमर्यादैर्भारतस्य क्वचन कल्याणं भविष्यतीति दुराशामात्रम्।

यावदेषां दुर्बुद्धिः सुबुद्धौ न परिवर्तिता भवति, न तावद् दुष्टदुःशासक-म्लेच्छदुःशासनकुचक्रचक्रवालशातनमपि भावि।

"तथाप्याशा बलवती राजन्!" इत्याभाणकमनुस्मृत्य नाऽस्माभि-र्हतप्रयत्नैर्भाव्यम्। नाऽधुनाऽपि प्रवर्द्धितो व्यापृतशरीरी रोगोदुःस्साध्योऽप्यसाध्यो जातः। सम्प्रति सन्ति भूयांसो भवादृशा भावुका भारतभारती-भारतीय - जनता-

भविकाय भावयन्तो भव्यां भावनां भविष्यत्यासन्ते भावयिष्यन्ति भूयोऽपि भारते भविक-भविकानीति ।

सर्वथा विपरीतेऽपि समन्ततः समुत्थितभयावह-प्रतिकूलकादम्बिनीघटाटोप-कोपकम्पितकलेवरेऽपि काले दुर्जनदुःसङ्गसमुद्भूताऽपूर्वदुर्दशापन्नदुर्मतिजात-दुर्गति-महागर्त-निपतितस्याऽपि देशस्य समुत्थानाय सद्भावनाविभाभासितभुवनानां भवादृशां धर्मवीराणामित्थं संस्कृतिरक्षाधुरन्धराणां विद्यमाने नाऽस्ति त्रिकालेऽपि शुभाशा-विनाशाऽऽशेति ।

यथा गगनमण्डले मन्दं मन्दं परिस्फुरतां स्वल्पकान्तिमतां खद्योतायितानामुडुगणानां प्रकाशः सद्यः समुदित-षोडशकलाकलित-शीतलसुखद-प्रकाशपुञ्जपरिराजित कलनिधौ भासमाने स्वयमेव मन्दायतेऽसंख्यकानामपीति, तद्वदेव सनातनधर्म-तेजोमण्डलमण्डितानां सदाचारभास्करविभाभास्वतां सम्मुखे स्वयमेव पराहता भविष्यन्ति लक्षशोऽपि विधर्मान्धचक्षुषो घूकपोताः ।

अपारकरुणाकूपारो भगवान् नित्यसाकेतविहाररसिकः श्रीजानकीजानिः सद्य एव श्रोष्यति धर्मप्राणप्रजायाः करुणक्रन्दनम् । विधास्यति निकन्दनमचिरं दुर्विनीतानां दानवायितानाम् ।

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥"

इति स्वयमेव भगवता प्रतिज्ञातम्, तर्हि कथं न न कृपापारावारः सकल-जगतामाधारो धर्मप्राणप्रजायाः प्राणाधारः सुलभस्नेहभाण्डागारः स्वभक्तजन-रक्षणसक्षणो दुष्टदुर्जनदुःशासनदमनचक्र - चूर्णितसर्वाङ्गानां सर्वदाऽभयदचरणशरणागतानां रक्षणायाऽवतरिष्यति ।

अतोऽस्माकं समेषामेतदेव कर्तव्यमस्ति, यद्धर्मपरिपालनाय सद्धर्मप्रचारायाधर्मोपसंहाराय भारते भारतीयायाः संस्कृतेः सुसमुद्धाराय वयं सर्वे संहत्य प्रत्यहं समासक्तभावनाभावितान्तःकरणेन एकाग्रमनसा भगवन्तं प्रार्थयामहे इति ।

इत्थं पञ्चहायनात्मकवयस्कस्याऽद्भुतशिशोः मुखकमलनिःष्यन्दिताऽमन्दा-लौकिकोपदेशमधुझरीं स्वस्वश्रुतिपुटकचषकैर्निपीय भृशं तृप्ता आश्चर्यचकितचारु-चातकायितचक्षुषः, श्रीरामानन्द-वदनचन्द्रचन्द्रिकानिचयमाचामितुं चटुलचञ्चुपुटाश्चातकायिताः विस्फारितविलोचनाः सततं जागरिता एव सर्वां निशां प्रहरिण इव स्थिता बालकञ्च कमपि भगवदंशमेव मन्यमानाः दत्ताऽवधाना रक्षां कर्तुकामास्तत्रैव स्थिता निशामनैषुः ।

—:—

# एकादशः परिच्छेदः

ततः प्रभाते विहितसकलशौच–स्नान-सन्ध्योपासनाऽग्निहोत्रादि-नित्यनियमाऽऽराधनः, सकलसार्थवाहिजनपरिवृतः, समस्ततारागणपरिराजितद्विजराज इव विभासितकलः, सकल ब्रह्मतेजोदधानः, सुलभमन्दस्मितविलसित - वदनारविन्द-निःष्यन्दितामन्दमकरन्दाऽऽमोदाऽऽमोदिताऽशेषपरिजनमानसः, सरसवचनसुधापानपोषितस्वान्तैः, निर्भ्रान्तैरनुगम्यमानपरिजनपटलैः संसेव्यमानः, शनैः शनैः प्रचलति स्म प्रसृताऽऽनन्दो वटुः श्रीरामानन्दः। मध्याह्ने च प्रचण्ड - मार्तण्ड-चण्डकिरणोद्भूत-प्रबलतापसन्तप्तबालुके पथि, सर्वथाऽसह्यगमनेऽपि प्रचलन् माध्यन्दिनीं-सन्ध्यां समुपासितुं, कस्मिंश्चित् सजलप्रदेशे विश्राम्य, समतीत्य च माध्यन्दिनीं वेलां, प्रशान्ते च चण्डमार्तण्डप्रतापकोपे, जातायाञ्च नात्युष्णायां बालुकायां, पुनः प्रस्थितः, सकलजनपरिवृतः, सायंसन्ध्योपासनासमयेऽतिनिकटे, समायाते, कस्यचन जनावासस्य समीपे प्रवहन्त्याः कस्याश्चन नद्याः सुभगसलिले नातिगभीरे वितततरुततिसमलङ्कृते, सततशीतलसमीरे तीरे कलयामास तत्रैकरात्रनिवासावास-व्यवस्थाम्।

आसीत् तत्रैकदेशे सुमधुरपानीयपूरितोनिपानकूपः। तत्राऽनवरतग्रामसीमन्तिनी-कदम्बपरिराजितो, जलाहरणव्याजेन प्रणर्तितस्तननितम्बमण्डलोल्लसितभुजयुगल-चाञ्चल्यावलोकनकुतूहलकमनीयकेलिकल्लोलिततटः, समाकृष्ट - प्रकृष्ट - धृष्टदर्शक-लोचनो, दर्शनतृषाकुलचातकायितयुवजनाऽऽधिविनिमोचनः, पानीयाऽऽकर्षण-व्याजेन भूलोक-नागलोकस्य कामिनी-कदम्बबिम्ब - विलक्षण-प्रतिबिम्ब-पदेनाभूतपूर्वदर्शनीय-तमसमागमोल्लासप्रदर्शित-सम्मेलनसम्मर्दः, इवातितरां सुशुभे निपानकूपः।

तत्र बहुविधपरिधानपरिमण्डिताभिर्घटयुगलसुशोभितोत्तमाङ्गाभिर्झणझणा-यमानमञ्जीरयुगलाऽऽवर्जितविमुग्धयुवकजनमरालमानसाभिः वरवर्णिनीभिर्विभूषित-तटो मत्तकाशिनीगणवदनारविन्दमकरन्दलोलुप इव सरससमालापकलकलसहकृत-गुणनिबद्धकण्ठाऽवरुद्धाऽस्पष्टपदमयं "गुड गुड" जलभरणकालिकघटशब्दरावविमिश्रित-

सुगुप्तसाङ्केतिकशब्दनिगुम्फितरहस्यालापमिवाकलयन्नपूर्वरसदानदक्षः सरसोऽन्तरङ्गवेदी वयस्य इव प्रणयभूप इव शोभते स्म सः सुभगः कूपः ।

तदानीं कूपात् सलिलमाहरन्तीनां परस्परसमालाप - रसमुद्गिरन्तीनां, संहरन्तीनाञ्च रसिकमनांसि, सहसा निपपात दर्शनीय - तमेऽद्भुतविभा - विभासित-समुन्मीलित - सहस्रदलसदृशस्मितशोभितसरस-सुभगवदने निर्जितमदने प्रकाशितानन्दे श्रीरामानन्दे, रसग्राहिणी रमणीयाऽऽकृष्टिर्दृष्टिः । दृष्टि-निक्षेपण-समकालमेव समर्पितहृदयाः सहृदयाः तदीयाननविलोकनसमुन्मत्ता मत्तकाशिन्यः पुनः पुनर्निर्निमेषविलोकनतोऽप्यतृप्ताः दृप्ता इव न क्षमाः समभूवन् पदमपि चलितुं स्वंगृह प्रति स्वशिरोविधृत - सरसघटा अपि सरसहृदयाः । परिपूर्णषोडशकलं चन्द्रमण्डलमालोक्य, तदीयकरप्रसारितसुधामाचामितुं चटुलचञ्चुपुटाश्चकोर-रमण्यो यथा मुहुर्मुहुश्चन्द्रिकारसास्वादनरसिका इव न तृप्तिमायान्ति स्म तथैव तदा अपि तदीयाऽऽननाऽयस्कान्तमणिसमाऽऽकृष्ट सूचिकायिताऽङ्गवल्ल्यो रमणीमतल्ल्यः ।

तदानीं सद्यः स्मृतिप्रवातविलुलित - विच्छुरिताऽभ्रमाला इव बालाः सर्वाः क्षिप्रगत्या स्वस्वगृहं प्रति जग्मुः । ततस्ताः शीघ्रं शिरःस्थान् वारिसम्भृतघटान् यथास्थानं संरक्ष्य स्व-स्वगेहस्थान् जनान् सम्बोध्य नवागन्तुकाय दर्शनीयकमनीय-वदनसरोजाय नवब्रह्मचारिणे मनुजरूपधारिणेऽतिथिस्वरूपाय भगवते समुपायनी-कर्तुकामा वामा विविधफल-पुष्पोपहार-नैवेद्यादिभिः समलङ्कृत्य समुपहाराय दुग्ध-दधिघृत-नवनीत-सिता-कन्द-कन्दमूलसम्भृतपात्राण्यादाय यूथशो मधुरमङ्गलगीत-कान्याचरन्त्यः पुनः स्वनयनपथपान्थीकर्तुमपाराऽऽनन्दाऽऽह्लादमवाप्तुमुपाजग्मुः । सहैव ताभिः तासां गृहपतयोऽपि सङ्घशः सन्दर्शन - समालापसौख्यानन्दरसं भगवद्गुणश्रवण - सत्सङ्गसमासादन - पुण्यपुञ्जमुपलब्धुमुपसेदुः सौभाग्यशालिनः करधृतकुसुममालिनः समर्पितबहुविधसमुपहारवस्तुनिवहाः सुकुलभवाः ।

सर्वांस्तान् समासादित - निजापूर्वदर्शनाऽऽनन्दलब्धि - समुपजातपूर्णकामान्, विस्मृतनिजदेहगेहोपयुक्तसकलावश्यककामान्, सवामान् पीयूषवर्षिण्या सकलजनमानस-हर्षिण्या स्वचरणनलिनारविन्दनिष्पन्दितमकरन्द-रसाऽऽस्वादन-चटुलपक्षतिदक्षानुगत-मधुकरकुलायित समागतदर्शकपटलाऽऽकर्षिण्या सहृदयहृदयस्पर्शिन्या मधुर-मधुरयाऽति-गभीरया गिरा ससम्मानं प्रावोचत् श्रमापनोदनाय शान्त्या तत्र ससुखमुपवेशनाय ।

ततोऽश्रावयच्च मन्दमन्दममन्दाऽऽनन्दनिर्भर - प्रवाहयन्निव स्वकीयमवि-तथैकान्तं मनोज्ञवृत्तान्तम्—बन्धवः ! सम्प्रत्यहं स्वपितृचरणैः सह जगदघमलाप-हारिण्या प्रबलपातकपुञ्जप्रहारिण्या षष्टिसहस्रावधिकाधिकसगरसन्ततिसन्तारिण्या-

त्रिपथविहारिण्या शीतल-सलिलावगाहनसमुपजातशातपटलप्रसारिण्या संसारसागर-समुत्तारिण्या मनोहारिण्या भगवत्या भागीरथ्या परिपूताऽशेषरथ्यां, प्रतितटमनेक-देवमन्दिर-प्रासादपरिवृतां जगदेकनाथ - श्रीविश्वनाथ - सनाथीकृतां सकलसौभाग्य-पुञ्जराशिं काशीं प्रतिप्रस्थातुमुद्यतः तत्रैव च गुरुकुले सर्वथाऽनुकूले जगदनवद्यां हृद्यां विद्यां लब्धुकामः, समापितानेकयामिनीयामो विद्याधाम यामि ।

मार्गे एव प्रेमप्रकर्षहर्षप्रचुरार्द्रं हार्दं विलोक्य, कामप्यपूर्वां ममवचनरचनां श्रोतुं समुद्भूतपरिपूतोत्कटोत्कण्ठां चाक्षुषीकृत्य भवति मामकीनेऽपि मानसे सुभगसमुपदेशे विशेषप्रसारिणी प्रवृत्तिः ।

किन्तु विलोक्य च समन्तात् प्रवर्तमानां वर्तमानां देश-कालविशेषबोधिनीं स्व-स्व-धर्माचरणविरोधिनीं प्रवृत्तिं जनमनोवृत्तिं स्मारं स्मारं च प्राक्तन-स्वच्छन्द-निर्द्वन्दसदाचार-विचारविवेकबहुलां विज्ञानसङ्कुलां वर्णाश्रमाऽऽचारचर्यां चेखिद्यते चेतः । किञ्च बाल्यभावत्वादविकसितशेमुषीविशेषवैभवो ह्यनधिगतसाम्प्रतिकलोक-वृत्तान्तो नाऽहं पारये किमप्यधिकं जनकल्याणविधायकं वरदायकं समुपदेशं प्रसारयितुं; परन्त्वेतन्त्ववश्यमेव कथनीयमस्ति, यत् यां हि सुप्रजां प्रजामधिकृत्य, यद्बलविज्ञाना-दिसहयोगं समवाप्य समस्तदेशस्य राष्ट्रस्य वा भासते ह्यविकलमस्तित्वम्, या हि विविधदुरूहदैन्यदावानलदग्धदेहानां सामान्यवसनाऽशनसाधनविहीनगेहानाम् सर्वदाऽऽश्रयीभूता, या च देशस्य राष्ट्रस्य च प्रकृतिः कथ्यते, रक्षति च सर्वदा सकल-मानवसंस्कृतिपरम्पराम्, यस्याः समुन्नतिरेव समस्तदेशोन्नतिमूला, या च सर्वात्मना स्वदेशराष्ट्राऽनुकूला शुद्धा मुग्धा वर्वर्ति सर्वदा यदनुग्रहैकमात्रजीवनमूला, तदर्थमेव यदि शूलायेत कश्चन दुःशासकोऽतिदुःशासनसत्ता वा, तद्धितं वा स्वपद्भ्यां सम्मर्दयेत्, तत्कृते कृतघ्नतां वा विदध्यात्, तस्य दुःशासकस्य सद्य एव निपातो निश्चप्रचः । तादृश्याश्च दुःशासनसत्तायाः आसन्नभविष्यत्येव काले समूलोन्मूलनमेव विदधाति विश्वविधाता । नास्ति तत्र विलम्बो, न वा तदानीं करुणाऽवसरोऽपि विधातु-र्नियोगे ।

हिरण्यकशिपुः, रावणः, कंसः, दुर्योधनादयश्च बहवः सन्ति समुदाहरणभूता दुर्वृत्ताः राजानः सम्राजो वा ये हि निःशेषं विश्वं विजित्य, स्वकीयमखण्डं साम्राज्य-मखण्डब्रह्माण्डे संस्थापयामासुः । किं बहुना मृत्युमप्येकदा विजित्य जगर्जुः, तेषामपि विश्वव्यापिसाम्राज्यं, दीनप्रजाजनस्यान्तरसन्तापशापोपजातप्रकोपज्वलनज्वालामाला-वलीढं सत् सद्यो भस्मसात्समभूतम् । तेऽपि तत्क्षणमेव शमननिलयातिथिभूताः संवृत्ताः महान्तोऽपि बलशालिनो दानवाः, तर्हि का कथा खलु मानवानां सामान्यप्राणिनाम् ।

किञ्च धर्मदृष्टया न्यायान्वेषणेन च प्रजापालको राजा भवति उक्तञ्च— "राजा प्रकृति रञ्जनात्"। शास्त्रदृष्टया प्रजापतिः स प्रजानां पिता कथ्यते। यथा पिता स्वकीयं सन्तानपटलं प्रत्यहं पालयति, सन्तानशरीरजं यत् किमपि कष्ट-मपसारयति। सुखयति सर्वदा सर्वात्मना च। तथैव च राजनोऽपि प्रजां प्रजामिव परितः पालयन्ति, न ते केवलमात्मनः सौख्यचिन्तनसमञ्चितचित्ताः भवन्ति। प्रजायाः सौख्यमेव स्वकीयं सौख्यं मन्वते। यदि प्रजा सुखिनी विद्यते स्वराज्ये, तदा ते वात्मानं कुशलशासकं, सफलं वा प्रजासेवकं, राज्यभारवहनसमर्थञ्च मन्यन्ते स्म। अतएव ये दिवानिशं प्रजार्थं सर्वदैव सुखसाधन-समासादनपराधीनप्रवृत्तय एव तिष्ठन्ति स्म, त एव महामहिमशालिनः प्रसारितविशदयशोराशयः भवन्ति स्म। राजानो हि ईश्वरावतारा मन्यन्ते प्राणिभिः, ये हि नयेन धर्मेण त्यागेन नीत्या च सन्ततप्रणयातिरेकप्रसारितविविधप्रजाजनीनसुलभसाधनाः स्वकीयैः सद्गुणोल्लासैः प्रजापालनप्रीणन पोषणोपायैः समाराधनसंरताः सन्तः, तां सर्वथा सुखिनीं विधातुं यत्नतत्परा भवन्ति। अहोरात्रञ्च प्रजायाः कल्याणकामनामेव चिन्तयन्ति यथा श्रीरामः—

"स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥ १॥

किन्तु नितान्तं खेदस्याऽयं विषयः आस्माकीनस्याऽस्यभारतवर्षस्य दौर्भाग्येन स्वेच्छाऽऽचारविहारिणो म्लेच्छहतकस्यैव भारतीयभूमौ शुद्धमुग्धस्वभावानां देवायितानां मानवानामुपरि दानवायितेयं नितान्त-विक्लान्तिदा राजसत्ता दुर्वृत्तायते दुराचारा प्रसारितशोषणव्यापारा। न तत्र दृश्यते क्वचन राज्ञः प्रजायाश्च परस्परं स्वामिसेवकभावविस्तारः। न हि पालक-पाल्यविभावसञ्चारः। न पिता-पुत्रवत् स्वात्मीयस्नेहवात्सल्यादिव्यवहारः प्रत्युत विपरीतमेवास्य-प्रत्यहं प्रजोपरि सर्वदैव केनाऽपि व्याजेन प्रवर्तन्ते दुराचारिणामत्याचाराः प्रसरति च लुण्टाकानां समन्ततो लुण्ठनम्। वोभवीति करव्याजेन जनतायाः सर्वस्वहरणम्। चोचूष्यते दिवानिशं द्रव्यशोणितम्।

नास्त्यत्र मानवगुणानां गन्धवन्धोऽपि, न वा न्यायेन धर्मेण वा सम्बन्धोऽपि, नहि क्वचनसुरक्षायाः प्रबन्धोऽपि, प्रत्युत सत्ताधारिभिः पारस्परिकद्वेषविशेषप्रवर्द्धन-पाटवपटीयोभिः प्रसार्यते मिथो वैमनस्यविषमविषप्रतानसन्तानम्। जरीगृह्यते चाधिकाऽधिकः सर्वविधो लाभः।

परमपाविन्यामेवास्यां भारतभूमौ भारतीयानां परिस्पारिकवैमनस्यविद्रोहोज्जृम्भितद्वैधीभवनप्रवृत्तिमालोक्य प्रविष्टा वैदेशिकीदुःसत्ता, ततः प्रभृत्येव सरलस्वभावां विस्तृतमुग्धभावां भारतीयां जनतामत्यधिकं विलुण्ठ्य सपदि रसातलं प्रेषयितुमेव प्रवृत्ता संवृत्ता। नाद्यापि विश्राम्यति स्वदुराचारव्यापारात्। न परिवर्तयति स्वनीतिकौटिल्यपरम्पराम्। न निवर्तयति निजात्याचारप्रसारम्। भारतवर्षोऽयं हि भारतीयानां पावनतमा मातृभूमिः। अस्यान्तु भारतीयानामेव सर्वात्मना स्वाधिकारः। धर्मप्राणभूतायाः भारतीयजनतायाः परमजीवनाऽऽधायको प्राणादप्यधिकप्रियोधार्मिकोविवेकः समुज्जृम्भते च सर्वदैव भारतस्य हानिलाभसम्बन्धोऽपि भारतीयानामेव विवेचना-विषयः। वयं हि भारतीया अस्माकमेवाऽस्ति भारतोपरि जन्मसिद्धोऽधिकारः।

अस्मदधिकाराणामुपेक्षां विधाय, नैजां स्वार्थसिद्धिं प्रणिधाय, भारतोपरि च स्वकीयामखण्डां सत्तां प्रतिष्ठाप्य स्वमनोरथान् पूरयितुं यानेव दुराचारानत्याचारान् प्रयोज्य मुग्धामिमां भारतीयां जनतां, निर्मथ्य न्यायतोऽन्यायतो वा स्वलक्ष्यं संसाधयितुं यत् किमप्याचरितं, तदहर्निशं तस्याऽन्तःकरणे प्रज्वलज्ज्वालामालाकुलितोधगु-धगिति दोधूयमानोधनञ्जयः सर्वदा सन्तापयति तद्धृदयम्। द्रवयति च दुर्भावभावितान्तःकरणम्। नयति च संस्मरणममरताम्। दीनजनतायाः सुदुःसहोऽयमन्तर्दाहः सहसा विस्फोटकपदार्थ इव क्वचन जनयिष्यति विप्लवोपप्लवम्। उन्मूलयिष्यति च समूलमिदं चञ्चलचञ्चलाचाञ्चल्यमिव चन्द्रिकाचाकचक्यं, चन्द्रकतारकोपेतमपि प्रस्फुरद् ध्वजोच्छ्रायमिति-प्रणयिष्यति च केवलमितिहासपृष्ठे कृष्णमषीमये कज्जलविलिप्तकलुषितदले समुट्टङ्कितमेव। विनशिष्यति च नामाऽङ्कनचिह्नमपि दुष्टराज्यस्येति।

रत्नप्रेङ्खित सुवर्णचटकायितमेव चञ्चच्चाकचक्यचणमिमं भारतवर्षमनुचिन्त्याद्यावधि भूयस्यः प्रदेश-विदेशीयाः दुर्धियः सत्ताः समन्तादाक्रान्तुमिमं पददलितञ्च कर्तुकामाः समागताः, वारं वारं लुण्ठयित्वा च गताः, शतधैनं रसातलं प्रहितुकामाः मुहुर्मुहुः प्रयतन्ते स्म, परन्तु नाऽस्य रोमाङ्कुरमपि वक्रं कर्तुं पारयन्ति स्म। न वा भारतस्य भाग्यभानुः कदाचन मन्दद्युतिरेव समभूत्। यद्यपि सः समये समये सुदूरदूरागतघनघोरघटाऽऽटोपान्तर्हितोऽपि क्षणमेव समयसारितघनघटाऽन्धकारः पुनरपि यथापूर्वं सकलगगनतलं स्वभासा भासयन्नेव सर्वदा देदीप्यमान एवाऽऽस्त।

यज्जातं तज्जातम्, नाऽधुना सर्वैरेवाऽस्माभिर्भारतीयसन्तानैः निष्क्रियमव्यापारं, अकर्मण्यमिव स्थातव्यम्। नाऽयं समयो यत्,-सालसं हस्तोपरि हस्त स्थाप्य

बृहन्नलायितैरेव क्वचन भाव्यम् । सर्वदाऽस्माभिर्जागरूकैरेव स्थातव्यम् । न विस्मरणीया पूर्वजानां परिपाटी रक्षणीया च मानमर्यादा, न हातव्यश्च परम्परयापालितः प्रतिष्ठानिष्ठागौरवः । भवत्स्वपि विद्यते सम्मानस्वाऽभिमानः । प्रवहति च भवतां धमनीषु तादृश एव रक्तप्रवाहो यो ह्यासीत् पुरा भीमार्जुनादिषु । भवतां भाविनः वीरा बालका अपि न न्यूना ह्यधुनाप्यभिमन्युवृषसेनादिभ्यः । अतः स्वमानमर्यादा-संरक्षणाय सक्षणा एव तिष्ठन्तु सर्वे ।

प्रजाजनेन तस्या एव राजसत्तायाः सम्मानः क्रियते या हि सर्वदा जगति प्रजायाः सम्मानं कुरुते, रक्षति च सततं तन्मर्यादां मानञ्चेति । यस्याश्चेतसि नाणुमात्रमपि प्रजायाः सम्मानसंरक्षणभावना जागर्ति, कथं तस्याः मानः क्रियेत । तादृशी सत्ता तु सद्य एव धूलिसात् करणीयैव । तथा करणेनैव प्रजायाः गौरवः प्रतिष्ठा चेति ।

यद्यप्यस्माकीना शक्तिः सर्वथा गतसारा समजनि । वयञ्च परितो नवनवागतैर्दुर्वृत्तचरितैः समन्ततो भ्रमद्भिः स्तनयित्नुसमूहैः समाऽऽवृताः, विविधप्रकारैश्च झञ्झावाताऽऽघातैर्जर्जरिता विशकलिता विशृङ्खलिता वा संवृत्ताः । यद्यपि नितान्तं क्लान्ता निर्बला असहाया अपि अत्यनुष्णशोणितसञ्चाराः भूमेर्भारायिता एवाऽभूवन् सर्वे, तथापि यदि संहत्य परस्परं मिलित्वा किमपि कर्तुमुद्युक्ता भविष्यामस्तर्हि पारयिष्यामो बृहत्तरमपि कार्यं संसाधितुम् । यथा पृथक् पृथक् सुदूरमेव निपतितानि तृणानि न किमपि कर्तुं प्रभूनि भवन्ति, परञ्च तान्यपि यदि परस्परं संहतानि मिलितानि भवेयुस्तर्हि महान्तं मदोन्मत्तमपि महामातङ्गं निबद्धुं शक्ष्यन्ति-तथैव यदि वयं समस्तदेशवासिनो जनाः सत्येन मनसा, सुदृढभावनया स्वमान-सम्मान-संरक्षणाय सर्वात्मनः एकीभूय समराङ्गणे प्रवर्तयिष्यामहे तदा न काऽपि विश्वस्य शक्तिरेतादृशी भविष्यति या ह्यस्मान्निरुन्ध्यात् । न वा कोऽप्यस्मत्सम्मुखे च स्थातुमपि प्रभवेत् । अतो बन्धवः ! यदि वयम् स्वकीयां पराधीनतामुन्मूलयितुं कामयामहे तर्हि त्वरितमेव दुर्वृत्तानामेषां म्लेच्छहतकानां सुदृढपञ्जरात् स्वात्मानं मोचयितुं स्वकीयां मातृभूमिञ्च ततो विमुक्तां कारयितुञ्च प्राणपणेन संनद्धा भवेम, स्वात्मनो भारतीयत्वस्य भारतस्य गौरव-प्रतिष्ठाया नाममर्यादायाः संरक्षणाय स्व-स्व-बाहुबलञ्च प्रधने प्रदर्शयेम । परिहरेम चात्मीय-कातरत्वञ्चेति । पुनरप्येकवारमस्माभिः सर्वथैकीभूतैः प्रविदारणे म्लेच्छविदारणकौशलं प्रदर्श्य शिक्षणीयाः म्लेच्छाऽपसदाः, यद् भारते भारतीयैःसह सङ्गरे रदना अपि स्वेदक्लिन्नाः कथं भवन्तीति, कथञ्च देवमन्दिराणां देवमूर्तीनाञ्च खण्डनं, कथं वा धर्मस्थानं वा धर्मग्रन्थानां, धार्मिक-संस्कृतीनाञ्च समुच्छेदे कियन्मूल्यं देयं

भवतीति । नायं हि बालानां विनोदो यद् यथेष्टं यथारुचं वर्तामहे, इति तदर्थं संयतौ प्राणा एव प्रतिमूल्याय दापनीया भवन्तीति । तदैव भवतां समेषां स्वाऽभिमानसंरक्षणम्, प्रतिष्ठानिष्ठाप्रदर्शनम्, गौरवोद्गारः यशोराशेः समुज्जृम्भणम् कीर्तिपताकायाः प्रस्फोरणञ्चेति ।

इत्थं श्रीरामानन्दमहाभागानां वदनारविन्दान्निःसरन्तीममृतनिर्झरीं निपीय रसास्वादन सन्तृप्तामदमत्ता इव सकलसमुपस्थिताः सज्जनाः सहसा श्रीमतां जय-जय महानादेन गगनतलमप्यपूरयन्, प्रासरच्च लतातरुविटपनिलीन-विहङ्गमनिकर-कूजनकलकलः काकलीकलापः । एकतः भारतस्य बहुभिः स्वरैः जयजयध्वनिर्निरसरत्, अपरस्मात् सनातनधर्मस्य जयघोषः, इतरतः श्रीरामानन्दानाम्-भारतीयवीराणाञ्च कृते जयजयनिनादः समन्ततः एकीभूय सकलं वातावरणमेव जयध्वनिमयं समस्तं ग्राममेव जयजयघोषमयं तत्रत्यसभामण्डपम् तन्निकटवर्तिभूतलतलमप्यलञ्चकार ।

यत्र ग्रामप्रान्तभागे श्रीरामानन्दः स्वपितृचरणसनाथः स्वल्पतमनिजपरिकर-परिवृत्तो विश्राममकल्पयत्—तस्मिन्नेव ग्रामे एकः कश्चन यवनशासनसञ्चालिता-जीविकः काजीति नामा तद्धर्मप्रचारकः सपरिकरः साधिकारो भूरियवनशासकभृत्य-वर्गरचितसहायः, परितः प्रसारितनिजप्रभावो भावोद्धताचरणनिरतः स्वकीयाऽऽतङ्क-निरस्त-सकलग्रामीणपरम्परः प्रतिवसति स्म । स हि स्वकीये मस्जिदनाम्नि स्थाने स्थित एवाऽलीकयन्त्र-तन्त्रविस्तारित-यावनसिद्धिकोऽहर्निशं वशीकृतमुग्धग्राम्यजनः, करगतीकृताशेष - यावनशासकपटलः, स्वमाहात्म्यप्रकटन - कथोपकथनप्रलपनसंलग्न-सर्वेन्द्रिय एव सहसा-तत्रत्यं महत्कोलाहलं जयजयारावं कर्णकुहरीकृत्य चकितचकितः समुन्मत्त एव समुद्भ्रान्त इव सपदि दुर्दान्ततामुररीकृत्य कतिपयैः स्वकीयैः परिकरजनैः सह स्वचाटुकारैः साकं सज्जीभूयसाटोपमकाण्डमेघाडम्बर इव महर्षिकुलसमारब्ध-यज्ञावसरे तमीचरनिकर इव घोरघोरतरमुच्चैः प्रलयकालोपयुक्त सांवर्तकमेघगर्जन-मिवाऽऽचरन् मुल्लासहचरः स काजी श्रीरामानन्दसन्निधिमवाप्य, तत्रत्यं सभासदीय-मानसंभावञ्च विज्ञाय जनताया भावावेशवशंवदत्वमालक्ष्य स्वशासनसमालोचनामयीं तत्रत्यां सभोद्भूतां प्रासङ्गिकविपयिणीं वार्तामाकर्ण्य क्रोधाऽभिभूतो भूतावेशभयानकः शोणशोणां ताम्रचूडचूडाद्युतिमिवोपहसन्तीं दृष्टिं निक्षिप्य स्वाऽधिकारसत्ता-प्रदर्शिनीं गर्जनामुच्चरन् प्रोवाच—

किमरे माणवक ! कस्त्वम्, कुत आगतः कस्ते व्यवसायः, कथमत्र समागतः, किं ते समुद्देश्यम्, किमर्थमयमुत्पातखातोऽधुना निखन्यते त्वया, का ते भावना किमर्थं व्यर्थं स्वप्राणान् संहननोपयोग्यान् कलयसि ? नावगच्छसि किमु शाहंशाहपातशाह-

स्येदम् साम्राज्यम्, तदनुकम्पामात्रैकजीविन्यस्तदीयाः प्रजा भयन्त्योऽपि तद्विरुद्धमाचरन्ति, न बिभ्यति मनागपि मृत्युमुखनिपतनादपि, कुत एषा तेऽधोवृत्तिरनुचिता वा कुचेष्टा ? सम्प्रति त्वं बालो, न वेत्सि क्रूरदण्डधरस्य शासननियन्त्रणमपि। अतस्त्वां विज्ञापयामि-येन त्वमीदृशीं कुप्रवृत्तिं परिहरेः। शृणु रे वर्णिन् ! यो हि खलु स्वसाम्राज्यविरोधिनीं समुत्पाताऽङ्कुरप्ररोहिणीं वाचं मुखबिलान्निःसारयति, स सद्य एव यमनिकेतनाऽतिथिः परिकल्प्यते। अतस्त्वं भजसि सम्प्रति मुग्धभावं अविपक्वधिषणः, सर्वथाऽनधिगतराजविद्यः, राजनीतिप्रवेशानर्हो अतः सर्वथैवाऽदण्डच इति कृत्वा सम्प्रति परित्यजसे, अन्यथाऽधुनैव ममाऽस्य खड्गस्य शोणितपिपासोः सपदि तृषापहारकग्रीवासृक्परितर्पणो भवेः एतदर्थं पुनर्बालोपरि दयां दर्शयन् सावधानं विरचयामि। असि चेत् कतिचिद्दिनानि भूमिं स्वपादचिह्नितां कर्तुकामस्तर्हि सर्वमिदं समुपसंहरन् निजवाचि संयमार्गलां विधाय मौनमाचरन् स्थिरोभवेति।

इत्थं निरर्थकं जम्बूकघूकसारमेयाऽनुसारि क्रोशनं कलयन् स्वरञ्च कर्कशतरं सिंहगर्जनसहचरं विधाय प्रावोचद् यदा दुष्कर्मयाजी 'काजी' तदा श्रीरामानन्दजनकः क्लान्तवदनः श्रीपुण्यसदनः सकलनिजपरिकरसहित एव दुरहितकल्पनाशतं परिकल्पयन् किमुत्तरमस्य देयमिति विचारचिन्तननिलीन इवाऽभवत्। तस्मिन्नेव क्षणे सोपेक्षं सस्मेरं, स-रिहास मन्दगम्भीरेणैव स्वरेण स्वकीयान् जनान् हर्षयन्निव मधुरवचनक्रमेणाऽमृतं वर्षयन्निव श्रीरामानन्दवटुः प्रवचनपटुर्जगाद—काजीमहाभागाः !

भवन्त एव ब्रुवन्तु—यद् यदि कश्चन लुण्टाकैर्विलुण्ठचमानं निजभवनं संरक्षितुं प्रयतेत तर्हि किमस्ति तस्य तत् कर्म राजविद्रोहः ?

किं वा सः शासकैः शासितो दण्डभागी सेत्स्यति ?
"काजी" नहि नहि कदाऽपि न, कथमपि न।

पुनः श्रीरामानन्दः—किञ्च कश्चन विदेशीवञ्चकः कथञ्चन भवतां भवने वासं कामयमानो भवतामनुग्रहेण दयापात्रः सन् गृहे वसन्नेव समस्तं भवनं स्वायत्तीकुर्यात। स्वाधिकारे कृत्वा च तद, भवन्तमपि समुपेक्षेत् तदा भवतां किं भविष्यति कर्तव्यम् ?

काजी—किं भविष्यति, किं करिष्यामः इति पृच्छसि चेत्—

शृणु तं लगुडैः ताडयित्वा सकर्णाऽऽकर्षणं, सपादाऽऽघातं, गृहाद् बहिर्निःसारयिष्यामः शिक्षयिष्यामश्च तं सम्यक्।

पुनः श्रीरामानन्दः—अपि च भगवन् ! सुदृढ़ं सः स्वचरणप्रतिष्ठापनं कृत्वा सुस्थितः सर्वाऽधिकारसम्पन्नो भवेत् तर्हि ?

काजी—एवञ्चेत् तं सुस्थितं, हठात्प्रतिष्ठितं, दृढतरञ्चं शत्रुभूतं तं स्वस्वज्ञातेयजनानां साहाय्येन सकलप्रतिवेशिनां सहयोगेन च तदुनुकूलेन वाऽन्येन समुपायेन सद्यो निःसार्य्य धावयिष्यामः।

ततः श्रीरामानन्दः— कल्पयतु भवान्, यदि काचन वैदोशिकीराजसत्तासमागत्य भवतां देशमाक्रम्य यथाकथञ्चभवतः समाकृष्य समस्तं तं देशं स्वकरगतीकुर्वन् स्वयमेव तदधीशः सन् विराजमानः स्यात् तदा किं विधातव्यम् भवद्भिः।

काजी—तदानीं वयं तं ततोऽपसारयितुं, शासनाऽधिकारादपनेतुं प्रयतिष्यामहे। तत्समयानुसारं चेष्टमाना येनकेनापि प्रकारेण-साम-दान-दण्डभेदादि - चतुष्टयेनैवोपायेन, तेन सह युद्ध्वा वा, स्वं देशं पुनरपि स्वहस्तगतं विधातुं प्राणपणेन, चेष्टिष्यामहे। यावत् समस्तं देशं न स्वाधीनं स्वकरगतीकरिष्यामहि न तावद् विश्राममलभिष्यामहि। सर्वदा चेष्टमाना एव भविष्यामः।

श्री रामानन्दः साकूतं प्रहसन्नुपहसन्निव जगाद - भगवन् ! भवतां तथा॰करणं न भविष्यति किमु तदानीं राजविद्रोहः ?

तदा काजी महाशयोऽपि मन्दं हसन्निव प्रत्युवाच—भगवन् ! भवताऽपि किं चिन्तितम् ? अरे ! अस्मिन् व्यापारे को विद्रोहः, यदि कश्चित् स्वं देशमन्यस्मात् तद्धस्तगतं यदि पुनर्लब्धुं यतते सः दीनस्तर्हि किमेतदपि विद्रोहे परिगणितं भविष्यति किमु ? यद्येवं तर्हि—सर्वथा ह्यन्याय एवैषः। व्यापारेऽस्मिस्तु विद्रोहकल्पनैवाऽनुचिता।

श्रीरामानन्दः—अस्तु, अलम्, भवतां मुखेनैव निर्णयो दत्तः। समीचीनमेतत् सर्वम् यदस्माभिः समनुष्ठीयेत।

काजी—सद्यः सचकितस्त्यक्तनिद्र इव ससम्भ्रमं हूँ, किम् जातम् ?

श्रीरामानन्दः—भगवन् ! साम्प्रतं, वर्तमानायां परिस्थितौ आस्माकीने देशे विदेशीयानां राजसत्ता जरीजृम्भते सेवास्माकं देशं समग्रमेव तिमिङ्गिलायिता निगिलितवती। अत्रागत्य स्वाधिकारमारोप्य सर्वं देशं सकलां धर्ममर्य्यादां, समस्तां संस्कृतिं निःशेषां कुलाचारपरम्परामपि सपदि निर्मूलां विधातुं दुश्चेष्टते कटिबद्धाऽनवरत धृतशस्त्रा कृतपणेव सन्नद्धा, आस्ते। तथाप्यद्यावधि वयं न किमपि तत्प्रतीकाराय चेष्टामहे। अनयैव दुराशया यत् सा वैदेशिकीराजसत्ता स्वयमेव मानवोचितं कलयेत् कमपि व्यवहारमस्माभिः सह, तर्हि किमर्थं वयं विरोधमाचरेम। पारस्परिकं सौहार्दसम्बन्धं रिरक्षिषवः एव निश्चेष्टास्तिष्ठामः। किन्तु नैवालोकिता लवमात्राऽपि

काचनस्वानुकूला सुखमूला व्यपगतपरिशूला कुतोऽपि शुभाशा। अस्मत्कृताः प्रयत्ना अपि सकला विकला इव संवृत्ता। अतोऽस्माभिः स्वदेशरक्षायै विचारविमर्शः क्रियते। यद्यपि प्रस्तरशिलाऽधोदृढं निरुद्धं स्वहस्तं कथंकारं कया वा युक्त्या वयं निःसारयिष्यामः, एतदेव चिन्तनीयमस्ति। सम्प्रति परहस्तगतं सकलं देशं पुनः स्वकरगतीभवेत्, विरोधोऽपि न प्रवर्द्धेत मानवतायाः सम्बन्धो व्यवहारोऽपि सुस्थिरो यथावस्थितः सुरक्षितस्तिष्ठेत्। एतावति समीचीनेऽपि व्यवहारे यदि सा सत्ता न स्वकीयं दुराग्रहं त्यक्ष्यति तदा वयमपि सर्वैरेव यथासाध्यैरुपायैः प्राणपणेन चेष्टिष्यमाणाः स्वदेशरक्षार्थं सर्वानिवोपायान् कर्तुं प्रभविष्यामः। तर्हि भवन्त एव कथयन्तु किमस्माकमयं राजद्रोहो विगणयिष्यते?

काजी महाशयः—हा हा, किमरे लघुमाणवक! कायेनाऽतिलघीयान् किन्तु प्रातिभवैभवस्ते कियान् ज्यायान्। अहो वाक्चातुर्य्यम्! अस्मद् दत्तो निर्णयः किमु अस्मदेव मस्तके निपातितः। नैतदुचितम्, नैतद्भवितुमर्हति। वयं स्वसत्तां प्रति कामपि कुतर्कवार्तां श्रोतुं न कामयामहे। न पारयामस्तद्विरुद्धं किमपि क्रियमाणं करिष्यमाणं वा कर्म विलोकयितुम्। अधुना भवन्तः सर्वे स्वप्राणानां क्षेमं कल्याणं वा वाञ्छेयुस्तर्हि तत्क्षणमेवाविलम्बं सर्वं दण्ड-कमण्डल्वादिकं प्रोत्थाप्य कलयन्तु प्रस्थानम्। अन्यथाऽस्मद्भृत्याः सर्वान् वः सद्यः समुत्थाप्य नद्यां प्रवाहयिष्यन्ति। केवलं ममाज्ञामेव प्रतीक्षन्त इमे।

श्रीरामानन्दः—नाऽयं सम्भवः। न वयमधुना गन्तुं प्रभवः। यतो हि सम्प्रति अहं ब्रह्मचारी न रात्रौ प्रस्थास्यामि, न दिनावसाने स्वायत्तीकृतं पदं त्यक्ष्यामः व्रतभङ्गभिया।

काजी—यद्येवं, तर्हि स्वोपदेशं समापय। वाचं संयमय।

श्री रामानन्दः—अयमप्यसम्भवः।

काजी- तर्हि, न ते प्राणानां कुशलंक्षेम।

श्रीरामानन्दः—द्रक्ष्यते तदपि।

इत्थं श्रीरामानन्दमुखान्निःसृतं निर्भीकमुत्तरं श्रुत्वैव काजीमहोदयः, तदीयाश्च सर्वे चाटुकाराः सहचरा धृतखड्गहस्ताः क्रोधावेश - परिभूता-जीमूतानुकारिणो विहितघटाटोपाः सर्वांस्तान् रामानन्दप्रभृतीन् समुत्थाप्य नद्यां प्रवाहयितुं सहसा न्याक्रामन्। सहसैव सर्वे श्रीरामानन्द-सामीप्यं प्राप्यैव स्तब्धाः, रुद्धाः, तदीयतेजः-पुञ्जप्रतापसन्तापतप्त तनवो न पारयाम्बभूवुस्तत्सान्निध्यमवाप्तुम्।

सहसैव चुक्रुशुस्ते ह्यशेषा म्लेच्छाः—आः हताः, हन्त रे दग्धाः, हा हा ज्वाला-मालाऽऽकुलितं जातमशेषं देहम्। अल्लाह, अल्लाह, तोवा, तोबा, परित्रायन्ताम्। अरे, रे मृता रक्षन्तु रक्षन्तु। शतशः शपथानां, रामानन्दस्यैव रे शपथशतम्, प्रशाम्यतु तत्तेजोविशेषो ज्वलनः। इति सर्वे भूमौ विलुलन्ति स्म इतस्ततः क्रोशन्ति स्म करुणं वारं वारमिति।

यदा हि ते यवनहतकाः सश्रद्धं ससम्मानं श्रीरामानन्दस्य शपथशतेन निवेदयन्ति स्म नतमस्तकाः प्राणाद्यपगमनशङ्कया, तदा सद्य एव शान्तोऽभवत् तत्तेजोवह्निः। ततस्ते सर्वे श्रीरामानन्दस्य चरणयोर्मस्तकं वारं वारं निहितवन्तः क्षमां याचयामासुः। सस्मितं विहितक्षमाः सर्वे यवनाः तत्रैव सर्वैः सह स्थित्वा स्वशासकीयं दुरभिमानमपहाय भक्तानम्रतमाः सन्तः शान्त्या तदुपदेशाऽमृतपानसन्तर्पितविग्रहाः परित्यक्तविग्रहाः सुग्रहा इव शीतलपरिग्रहाः सपरिग्रहाः सत्सङ्गानन्दभाजोभूत्वा कृतकृत्या इव बभूवु। श्री रामानन्दस्येदृशं प्रभावमालोक्य सर्वे विस्मिताः सन्तोऽधिकाधिकश्रद्धावन्तः संवृत्ताः।

—:o:—

# द्वादशः परिच्छेदः

अपरेऽह्नि नैशं तमस्तोमं, समुन्मूलयन् समन्तात् सरःसु सारसानि समुन्मीलयन्, समुन्मनस्कां प्राचीं दिगङ्गनां यावन्निशं धनान्धकारायितविरहसन्तापसंप्लुष्टहृदयां सपत्नीभूतप्रतीचीं कामिनीमुपसेवमानमानसं स्वकीयकान्तमनुवीक्ष्य नितान्ततान्तां समुद्गतपरम्परागतेर्ष्याक्लान्तस्वान्तां, निबद्धदृढमानवतीं, समनुरञ्जयन्निव निजप्रणयानुरागरञ्जित - सकलाऽवयवां, स्वकीयकोमलारुणकिरणनिकरकरसहस्रैः समालिङ्गन्निव, कोपसम्भारमपहरन्निव, प्रसादसुमुखीं विकसितकुसुमकोरकसितरदनविकासोल्लासहासां कलयन्निव, समस्तनभोमण्डलमनुरागेणाऽरुणमिव विरचयन् निखिलधरणिमण्डलञ्च प्रभापुञ्जोद्भासितं भासयन्निव, हासयन्निव सुमनांसि, समुदेति स्माऽरुणपुरःसरो भगवान् मरीचिमाली ।

समन्ततः कलकूजननिरते वयसांगणे, जाते चाल्पप्रकाशपुञ्जपिञ्जरिते वसुधातले कलकलशब्दायमाने च सकलाऽऽवासनिवासि - मनुजपटले—श्रीरामानन्द ब्रह्मचारीनिजपरिकरसहितः स्वपितृचरणैः सह प्रयातुमुद्यतोऽभूत् । तदानीं तत्रत्याः सहृदया भक्ताः सपदि समागम्य तं निरोद्धुं प्रार्थितवन्तोऽपि यथाशिष्टाचारं पादयोः प्रणामपरम्पराशतैः सम्मानयन्तः सरसमधुरवचनामृतपानलिप्सवोऽपि तेषामध्ययनार्थं गच्छतां मार्गे विशेषाऽऽग्रहमयान्तरायमुपस्थापयितुं न प्राभवन् । सर्वांश्च तान् सस्नेहं मधुरतमवाग्विनोदैः सम्मानयन्निव सन्तोषयन्निव, नितान्तमाह्लादयन्निव, स्वदेश-धर्म-मानमर्यादापरिक्षणार्थं पुनः पुनः प्रबोधयन्निव तेषां हृदयपटलं भगवद्भक्तिरसेनाप्लावयन्निव सः सर्वान् स्वस्वकार्यार्थं प्रत्यावर्तयन् शनैः-शनैः समुद्दिष्टं तदुद्दिष्टपन्थानमनुसरति स्म ।

पण्डितप्रवरः श्रीपुण्यसदनः स्वात्मजस्य श्रीरामानन्दस्य बुद्धिविकासं प्रतिभापाटवम् स्मारं स्मारं, गतरात्रौ संघटितां तादृशीं घटनां प्रत्यक्षदृष्टां विचिन्तयन्नेव स्वचित्ते परानन्दमनुभवन् प्रमुदितमना अगणितकल्पनां परिकल्पयन् अग्रेऽग्रे प्रचलन् स्वबालकस्य वारं वारं वदनचन्द्रं निरीक्षमाणः सूर्याऽऽतपेऽपि ज्योत्स्नावितानमेवाऽनु

भवन् गच्छति स्म। तथाभूतं स्वजनकं परमाह्लादमयीं कामप्यद्भुतां कल्पनां कलयन्तमालोक्य तद्ध्यानं स्वाऽभिमुखमाकृष्य सहसा पृच्छतिस्म श्रीरामानन्दः सकौतुकम्—

पितृचरणाः ! "शास्त्रेषु श्रूयते—"विद्ययाऽमृतमश्नुते", सा विद्या या विमुक्तये" "तदा विद्वान् पुण्य-पापे विधूय निरञ्जः परमसाम्यमुपैति" "स एवं विद्वान् अस्मात् शरीरभेदा ऊर्द्ध्वं उत्क्रम्य अमुष्मिन् लोके स्वर्गे सर्वान् आप्त्वा अमृतः समभवत् ।" इत्यादि। एतैर्ज्ञायते यद् विद्यायामेतादृशा गुणा विद्यन्ते-यत्ते गुणाः सांसारिकेभ्यो नाश-वद्भ्यः सुखेभ्योऽप्यधिकमुन्नतं तं विद्यावन्तं विधाय क्षणिकसुखप्रलोभन-चक्रनिपतनात्त-मुद्धृत्य नित्यानन्दसच्चिदानन्दघनेन परब्रह्मणा सह संयोज्य तमगणिताऽऽनन्दानुभवं-कारयन्ति-इति किन्तु दृश्यते चैतद्विरुद्धमेव, एतादृशा हि विद्यावन्तोऽपि-विपश्चितोऽपि मूढा इव विवेक-विनयादिविहीनाः सन्तः सन्ततं व्यवहरन्ति। जानन्तोऽप्यजानन्त इव भगवद्विमुखाभवन्तः संसारे सांसारिकीं मृगतृष्णामनुसरन्ति निपतन्ति च घोराऽज्ञान-गर्तेऽन्धा इव। न ते शान्ति सौख्यञ्च लभन्ते मन्दाः किमत्र कारणमिति ?

श्री पुण्यसदनः स्वपुत्रस्य मुखाद् विशिष्टं सारगर्भितं विविधशास्त्रसम्मतं ब्रह्मज्ञानमयं प्रश्नं समाकर्ण्य हृदयावर्जकं विज्ञाय पुत्रस्य च प्रशान्तमधुरां वदनमुद्रा-मालोक्य सानन्दं सप्रणयमुवाच—

वत्स ! रामानन्द ! नात्र विद्यायाः कञ्चन दोषः। विद्या तु सर्वदैव स्वकीयं फलमुपस्थापयति; यदि सा सत्पात्रे प्रवर्तिता स्यात्। यदि च असत्पात्रे प्रक्षिप्ता भवति तर्हि सा स्वयमेव तत्पात्रप्रवृत्त्यनुसारं व्यवहृता सद्यो विकृतिमेवैष्यति। यथा विशुद्धं दुग्धम्-सर्वनिजसुलभगुणसम्पन्नमपि नवनीताद्युत्पादक शक्तिमदपि, पौष्टिक-सर्वविध-स्वप्रकृतिसिद्धतत्त्वैः समन्वितमपि, दुष्पात्रे रक्षितं; आम्लादिगुणदूषितस्य पात्रस्य संसर्गात् तदेव सद्यो विकृतिमापन्नं न किमपि सम्पादयितुं शक्तं तिष्ठति। तच्च स्वस्वरूपतामपि परिहरति। तदीयाः सर्वे गुणाः तत्पात्रसम्बन्धात् सद्यः प्रणष्टा भवन्ति। एवमेव विद्यायाः सम्बन्धेऽपि सैव स्थितिः। सैवैका विद्या पात्रभेदात्—

"विद्या विवादाय धनं मदाय, शक्तिः परेषां परिपीडनाय।
खलस्य, साधोर्विपरीतमेतत् दानाय मानाय च रक्षणाय ॥१॥

इत्थं, पात्रभेदेन विभिन्ना परिस्थितिर्भवति"-विद्या-धन-शक्तीनामिति।

को नाम भवति ( भवितुमर्हति वा ) विद्याया अधिकारी ? कीदृशी वा विद्या कस्मै समुपयुक्ता भविष्यतीत्यस्याऽपि निर्णयः सम्यक् शास्त्रेषु प्रतिपादितः। तमेव नियममनुसृत्य यद्वि सुयोग्यमेवाऽधिकारिणं निर्णीय तस्मै प्रदत्ता विद्या समुपयोग्याय

सत्फलाय श्रेयसे उभयोर्वा महते फलाय, सर्वसम्पत्प्रदात्री, चतुर्वर्गपुरुषार्थसाधिनी, सिद्ध्यति। न कदापि सा वन्ध्या भवति। किन्तु यदा प्रभृति विशुद्धे विज्ञानभाण्डागारेऽस्मिन् भारतेऽपि पाश्चात्यानां, विदेशनिदेशिनां, प्रदेशिनां; म्लेच्छानां यवनरतकानाञ्च भ्रष्टतमादुःसंगनिःसंस्कृतिर्वा सुरसावदन-समाकारा प्रासरत् - स्वकीयमोहजालेन निबद्धय त्वास्मान्-विशुद्धान् मुग्धान् वा भारतीयान् स्वचाकचक्यचमत्कृतिपराहतचक्षुषो विधाय, स्वच्छन्दाऽमन्दमोहपतितान् यथेच्छाचारान् निर्मर्यादान् वाऽऽकलस्य स्व-पथपरिभ्रष्टाश्चकार सा वैदेशिकीदुःसंस्कृतिः। तदा प्रभृत्येव समन्ततो नानाविधानामनिष्टानां विकासो व्यवर्द्धत।

साम्प्रतं सर्वे जनाः अधिकाराऽनधिकार - प्रश्नोत्थापनविधानमेव दूरीकृत्य सर्वविद्यास्वेव विद्यासु स्वस्वाधिकारं कल्पयन्ति बलात् स्थापयन्त्यपि। इदमेव प्रबलतमं कारणन्तु यद् विद्यानां गुणेष्वपि विपरीततत्त्वानां व्याकोपः प्राबल्यमावहति। तर्हि कुतः सुबुद्धेः प्रसारः। कथं न प्रसरेद् विनयस्थाने ह्यविनयसाम्राज्यम्। विवेक पदेऽप्यविवेकप्रकोपः। सद्गुणोपरि कथं न भवेद् दुर्गुणानां विजयः। किमर्थं वा न प्रवर्द्धेत स्वेच्छाचारविहार-प्रसारः। कथं न भवेयुर्ज्ञान-वैराग्य-धर्मादयः पङ्गवः। कथं न स्याद्धर्माज्ञानविषयानुरागोज्जृम्भणम्। कः प्रतिरोधो भगवद्भक्ति - समुपासनादिस्थाने-दुष्कर्मदुराचारादीनां दिगम्बरनर्तनविधौ। इत्थम् ईश्वरवादे प्रसरत्यनीश्वरविवादः, शास्त्रप्रामाण्ये कुतर्कप्रयोगः, वीरतास्थाने कातरत्वम् कान्दिशीकत्वम् वा सदयतायाः गृहे क्रूरता समनुप्रविष्टा, सहिष्णुतायाः पदन्तु समुद्दण्डतयैव समुच्छिन्नम्, किं बहुना मानवतायास्तु सर्वं स्वरूपमेव विकृतिमगमत्। सर्वथैषः प्रभावोऽनधिकृतपात्रेषु विद्यायाः प्रसारस्यैव।

आस्माकीनैः सुदूरदर्शिभिः, भूतभविष्यद्वर्तमानमपि विषयं कराऽमलकवद्विलोकनव्यसनैर्महर्षिभिर्ऋषिभिः सूक्ष्मदृष्टिभिः प्रथममेवाऽऽलोचितम् यत् पवित्रतमायां भारतीयायां संस्कृतौ न क्वचन दोषाणां प्रवेशः स्यात्-इति सम्यक् विविच्य वर्णाश्रमाणां नियम-प्रनियमविभागाऽवसरे एव विचारपुरःसरं विद्यायाः कृते के के कीदृशा वा अधिकारिणो भवन्ति, भवितव्या वेति धर्मशास्त्रेष्वतितरां पूर्वमेव निरधारि। अनतिकुशलानां लघुपात्रभूतानां, स्वल्पप्रज्ञानां न भवति दुरङ्गमा दृष्टिर्गतिर्वा, स्वल्पतममपि शास्त्रीयं विज्ञानं यथाकथञ्च लब्ध्वा भूरिभूरि पण्डितंमन्याः मन्यन्ते धन्यतममात्मानं। अज्ञाततत्त्वा एव शास्त्रेषु कुण्ठितधिषणाः निदन्ति शास्त्रनिर्मातॄन् धर्मशास्त्राण्यपि। अनागताऽतीतज्ञानसमुल्लासितशेमुषीविलासवैभवभाजो महासहर्षीनुपहसन्ति देवानांप्रियापसदाः। इत्यत्र नैव विद्यायाः लेशतोऽपि दोषः किन्तु लब्धाऽल्पविद्येषु ह्यपात्रेष्वपि तेषां कुपात्रताया एव प्रभावः।

अन्यदप्यस्त्येकं कारणम्, यत् प्रत्येकदेशस्य समाजस्य वा भवति विभिन्ना प्रकृतिः, संस्कृतिः, व्यहृतिर्वा, तदनुकूलैव च तेषां वेषविन्यासः; भाषा, साहित्यम्, रीतयः, आचारविशेषाश्चेति। समेषामेषां-भाषा-साहित्यसदाचाराऽऽचाराणां बन्धनेषु निबद्धा एव ते समाचरन्ति तेनैव भवति तेषां कल्याणम् व्यवहारनिर्वाहश्च। नेतरदेशवासिनाम्। अयं हि सनातनोनियमः यन्न केनाऽपि कस्यचनानुकरणं करणीयम्। यतो हि शास्त्रेष्वपि प्रतिपादितं,

यत्—"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।"

अतः स्वात्मनः श्रेयः प्रेयः प्रेप्सुभिश्च नान्यस्य विदेशवास्तव्यस्य कस्यचनाऽपि धर्मादीनामनुकरणमेव करणीयम्, न वा समालोचनैव।

साम्प्रतिकी स्थितिस्त्वेतादृशी सञ्जाता जनानाम्, यत् ते स्वकीयां भाषां, नैजं साहित्यम्, आत्मीया रीतीः, सदाचारपरम्पराः सकला विहाय विदेशीयानां समाजेन सह सम्पर्कं प्रवर्द्धयन्तः तेषामेव सर्वविधेन तदनुकरणेनैव स्वात्मनो गौरवं प्रतिष्ठाञ्च मन्वते। यथा हि मधुरमधुरतमान् मोदककिलाटक-रसकन्दुक-श्रीखण्डादिसरसपदार्थान् प्रत्यहं भुञ्जन्तो नितान्तसन्तृप्ताः चिञ्चाऽम्ललवणमरीचिलशुनपलाण्डुगन्धदूषितान् भोक्तुं कामयमानाः तन्निर्माणकारिणीं पाकशालां प्रति धावन्ति, तद्वदिव भारतीयाः अपि सम्प्रति वैदेशिकानां संस्कारान् स्वीयसंस्कृतौ बलात् प्रवेशयितुमुत्सुका भवन्तो वितन्वते मनोयोगम्। अतएव प्रतिकूलसंस्कृतिमिश्रणेन स्वकीयायामपि संस्कृतौ दुग्धे-यथाऽऽम्लपदार्थमिश्रणात् भवति विकृतिः, सा स्वाभाविक्येव। तथैव च विकृत्या मनुजसंस्कृतौ सङ्कीर्णतारूपदोषोद्गमे-स्वत एव विनय-विवेक-सज्ज्ञानादीनां नाशोऽप्यवश्यम्भावी। तेनैव च क्रमेण धर्मनाशः, तस्माद् राष्ट्रस्यापि-पतनम् भवत्येव ! अत एवोक्तं भगवता श्रीकृष्णेन गीतायाम्—यत्—

"स्वधर्मे निधनं श्रेयः" किंवा "श्रेयान् स्वधर्मो विगुणः,
परधर्मात् स्वनुष्ठितात्।" किञ्च "स्वेस्वे कर्मण्यभिरतः-
संसिद्धिं लभते नरः।" समुपदिष्टं अर्जुनं प्रति।

किन्तु वत्स ! नाधुना प्रजायां तादृशी शक्तिः, या तथाविधं चिन्तयेदिति।

श्रीरामानन्दः स्वपितुर्मुखादित्थं सुन्दराणि सारगर्भितानि वचांसि श्रुत्वा अपरिमितानन्दप्राप्तिमिवानुभवति स्म। तथाविधान्यन्यान्यपि बहूनि प्रसङ्गोपात्तानि प्रश्नोत्तराणि कुर्वन्तः सर्वे समायाते च सन्ध्यासमये समुपागतायाञ्च सन्ध्योपासनादिवेलायां समनतिदूरे च गन्तव्यस्थले निकटतमायाञ्च काशीनगर्यां समन्तान्नभसि

भासमाने च हिमांशौ नितान्तप्रसादसुमुख्या पश्चिमदिगङ्गनायाः समपसारयति च चिरविरहं भगवति भुवनभास्करे यावन्निशं विश्रामार्थं कस्मिश्चित्सुरम्येऽप्यगम्य-नीरनिधिसखे स्वच्छवारिविलसिततडागे विविधतरुराजि-राजिततटे, अनन्तशाखा-प्रशाखावितानविनिर्मितसुलभविश्रामाऽनुरूप-विशालाऽवकाशं न्यग्रोधपादपं विलोक्य तन्नीचैः सुरम्यस्थले विश्रामं चक्रुः। सन्ध्योपसनाविधिं समाप्य, विधाय च यथोपलब्धं रात्र्यशनकलापम्। प्रशान्तचेतसा परस्परं सत्सङ्गप्रसङ्गे नानाविधं शास्त्रीयविमर्शन-मातेनुःसकलसहचराः। श्रीरामानन्दो वटुः, सहैव तत्पिता श्रीपुण्यसदनश्च सर्वेषां प्रश्नानां यथाशास्त्रं समुत्तरं, प्रवचनानि च कुर्वन्तस्तस्थुः। प्रायः प्रसङ्गेषु प्रवर्तितेषु सत्सु रात्रेः ह्यर्द्धभागः समाप्त्युन्मुख एवाऽऽसीत् तदानीमेव-सहसा वटवृक्षोपरि महान् निनादो वज्रघोष इव सञ्जातः। घोरगर्जनेन सहैव महान् भीमकायः कालायस-शिखरिसन्निभः प्रेतः श्रीरामानन्दसम्मुखे वटशाखातः समापतन्निवोपस्थितोऽभूत्। तं दृष्ट्वा श्रीरामानन्दस्तस्य तादृशीं स्थितिं गतवतः (दुर्वृत्तां योनिं कथं लब्ध-वानिति) कारणं तमपृच्छत्।

प्रेतः सप्रणामं सविनयं स्वीयां प्रेतयोनिलब्धिं सविस्तरं निवेदयामास— महाराज! सर्वमेतन्ममाऽभिमानस्य दुर्वृत्तस्य वा फलम्। अहम् हि शूद्रकुललब्ध-जन्मा स्वल्पतम ज्ञानमयीं विद्यामवाप्य स्वात्मानमेव महामहापण्डितं मन्यमानो नान्यं कमपि सुकुलोत्पन्नं, विविधश्रमोपार्जिताशेषशास्त्रपटलोद्भूतसर्वविधज्ञानवताम्-विपश्चिदाविपश्चितानां मूर्द्धन्यमपि विद्वांसं ब्राह्मणं स्वात्मनोऽपेक्षया ह्यकिञ्चित्करं मन्यमानः सम्मानितवान् प्रत्युत तमवहेलयामास। महान्तं सन्तं महात्मानं सुसिद्ध-मपि निषिद्धमिवाऽवमानेन तिरश्चकार, अहर्निशञ्च सतां महतां प्रज्ञावताञ्च निन्दा-मेवाऽकलयम्। किं बहुना स्वात्मानं साक्षाद् ब्रह्मणः पुत्रमेव भूमाववतरितमिव प्रकटयन् जनैः स्वचरणाऽभ्यर्चनमपि पादसंवाहनान्यपि सर्वदाऽकारयम्। निकृष्ट-कुलोत्पन्नोऽपि विशिष्टान्ववायप्रसूतैः, ममवचनरचनाचक्रनिपतितैर्जनैः देवतामिव-विहितां सपर्यां प्रत्यहमगृह्णम्।

नैवाऽऽसीत् मनागपि मे भगवति जगत्पितरि परमात्मनि वेदे, धर्मे धर्मशास्त्रा-दिषु च क्वचिदपि श्रद्धा समादरश्च। विश्वासश्चासीद् यन्नास्ति संसारे कश्चिदीश्वरा-भिधः सम्मान्यः पदार्थः। वेदाश्च केवलं स्वार्थसाधनसमाराधनतत्परैर्धूर्तभण्ड-निशाचराद्यै-निर्मिताः मुग्धमानसप्रतारणपराः ग्राम्यजनगेयानि गीतान्येव। धर्मशास्त्रादीनामपि कल्पना चातुर्व्यंचणैः प्रसिद्धैः सुसिद्धायितैः महर्षिकल्पैः स्वार्थसाधकैः मूर्खान् दासायि-तानेव निर्मातुकामैः कृतैव। इत्थं स्वकीयविचारप्रसारपाटवं प्रवचनप्रचण्डताण्डवम्

मुग्धजनतायाः सरलतमे मानसे दृढाऽऽस्थां संस्थापयितुं वाग्वैभवं प्रभावोत्पादकं नाटकं च कलयितुं महान् निपुणः आसम्, यन्मे प्रतारणकौशलं नाऽन्ये कल्पयितुमपि शक्नुवन्ति स्म। सरलस्वभावा जनाः मामकीनां काषायवसनमञ्जुलां वेशभूषां विलोक्यैव मोहिता नितान्तं विश्वस्ताः कौटिल्यगतिमिव समवगच्छन्ति स्म मामकीनां कुटिल-नीतिम्। प्रत्युत विदन्ति स्म मां महासत्यवादिनं, परममास्तिकं, ईश्वरवादिनम्, महात्मनमेव। कथयन्ति स्म यन्महाराजाः कथयन्ति तत् सर्वं शास्त्रसम्मतमेव, यतोहि सकल-वेदशास्त्रनिष्णाता महाविद्वांसः। एषां कथनमेव साक्षाद् वेदवाणी विद्यते। सर्वं तथ्यमेव तत्त्वमुग्दिरन्तीति। एतत्कृते सर्वथाऽहम् वाचालस्त्वासम्। कुतो न ते विश्वस्ता भवेयुः।

एकदाऽहं स्वकीयाल्पविद्यागर्वान्धः स्वात्मानञ्च महापण्डितमिव प्रदर्शयन् वाचाटताऽभिमानमदमत्तो मत्तमातङ्ग इव मदमन्थरं व्रजन् समन्तात्पर्य्यटन्निवात्र समागतः। तदानीमत्रैव कश्चित् त्रिकालज्ञः सिद्धः महात्मा निवासं कलयन्नासीत्। मामपि ते साधुमेव सज्जनं महात्मानं मत्वा भूरिभूरि समादरेण विशुद्धभावेन मे शुश्रूषा-सत्कारं व्यधत्त। स्वसामीप्ये एव निवासव्यवस्थां मे कृतवान्। परञ्च न जानन्ति स्म ते यत् "पयःपानं भुजङ्गानां केवलं विषवर्द्धनम्।!' इति न्यायेन यथा यथा ते मामकीनां सत्कारशुश्रूषां व्यदधुस्तथा तथैवाऽहम् यथास्वभावं मालिन्येन कुटिलतमेन वा चेतसा सदैव सतां महतां सज्जनानां विदुषां महात्मनाञ्च निन्दा-मेवाकार्षम्। तस्य महात्मनो हृदयेऽपि कञ्चन निन्दाजनितां नवांनवां पीडामेव व्यरचयम्।

एकदा दयापरैः वस्तुतो महात्मभिः संस्नेहं मां प्रति प्रेमसौहार्दं प्रकटयद्भिः सम्यक् मधुरमधुरं वर्णविन्यासैश्च समुपदेशः प्रदत्तः। उक्तञ्च तैः, भगवन्! संसार-सागरः अयम्, अत्र नानाविधाः नानाजातीयाः सन्तो महान्तो विद्वांसश्च वसन्ति। सर्वेषु न सर्वे एव गुणा भवन्ति। गुणिष्वपि, कतिपया अवगुणा मिलन्त्येव। निर्गुणेष्वपि (गुणहीनेषु) कतिचन गुणाः समुपलभ्यन्ते। न हि प्रपञ्चेऽस्मिन् सर्वत्र सर्वे सन्तो-महान्तो गुणिनो विद्वांसो वा मिलन्ति, क्वचन गुणहीनाः मूढा अपि। अस्यैव नाम संसारः। अतः सन्तः पुरुषाः महात्मानो हंसा इव भवन्ति नीरक्षीरविवेकिनः सन्तो गुणानेव गृह्णन्ति न पुनरवगुणान् तेषाम्। यतोहि गुण-मौक्तिकग्रहणपटवो हंसाय-माना महात्मानो भवन्ति, नेतरे। अतो भवद्भिरपि तथैव भाव्यम्। परन्तु कुतो मेऽधन्यस्य हृदये तादृशः समुपदेशः स्थातुं पारयेत्, प्रत्युतः प्रज्ज्वलिताऽभवन्महान् द्वेषाग्निः। तदा दुष्टतयैव यथाऽभ्यासं दुरभिमानवशादवमानपुरःसरं समुपदेष्टुः तस्य महात्मन एव मयाऽवमानः कृतः परिहासश्च तत्प्रवचनानाम्। अतः दुर्वृत्ताय मे

दण्डप्रदानायैव तैः सद्यः शाप एव प्रदत्तः। यत् अरे मूढ ! दुरभिमानिन् प्रच्छन्नसाधुवेषे प्रकटितनिजतापसत्वविशेषे कश्चन दुर्वृत्तः ब्रह्मराक्षस। न निवर्तसे सज्जनजननिन्दाव्यासङ्गविशेषात्, न गणयसि गुणिगणगौरवगरिष्ठताम्, नाऽनुमनुषे मनीषिणां सम्मानमानम्, न तनुषे श्रद्धा-सत्कारं सज्जनानाम्। न वनुषे क्वचनकश्चनविद्वन्निकरम्। न क्षणुषे स्वां दुष्प्रवृत्तिम् ? अतः सद्यः स्वकृतविद्वज्जननिन्दाजनिताऽघपुञ्जप्रभावोद्भावितां दुरितां प्रेतयोनिं प्राप्य प्रायश्चित्तानि तनुमहे।

इत्थं महात्मभिः विसर्जितवाग्वज्रेण तत्क्षणमेव लब्धमिदमात्मनो रूपम्। सपदि प्रणष्टसकलाऽभिमानो व्याकुलचेता विक्लान्तवदनकान्तिः शान्ति मप्यपहाय त्वरितमेव महात्मनश्चरणौ शरणीकृत्य वारंवारं प्रार्थनाभिः प्रार्थितः कथञ्चन दयालुः सञ्जातः सः महात्मा। दुर्दशाग्रस्तं मामवलोक्य दयार्द्रहृदयो मेप्रेतत्वयोनिविमोक्षाय समादिदेश यत् श्रीरामावतार इव भूतले पुनः कलौ समवतीर्णः श्रीरामानन्दनामा वटुः स्वजनकेन सार्द्धं विद्याऽध्ययनाय काशीं जिगमिषुः रात्रिनिवासं कलयितुमत्रैव वटतरुतले कल्पयिष्यति निजासनम्। तदा तस्य चरणशरणकलनेन ते भविष्यति समुद्धारः। इत्युक्त्वा सतूष्णीं सञ्जातः। ततः प्रभृति तेनैव साकम् अस्मिन्नेवाश्रमे अत्रैव वटतरौ निवसन् आसम्। समहात्मा तु समये समाधिमास्थाय भगवद्धाम लब्धवान्। अहञ्च तद्वचनाऽनुसारं श्रीमतां दर्शनकाम्यया‌ऽत्रैव स्थितोऽद्य दर्शनसौभाग्यं समवाप्य श्रीमतामनुग्रहेणैव इमां योनिं प्रेतरूपतां परित्यज्य, भगवद्धाममवाप्नुयामित्यनुग्रहं विदधातु भवानित्युक्तेन "ओमिति" प्रतिवचनेन साकमेव तां योनिं त्यक्त्वामुक्तोऽभवत् स प्रेतः। इत्थमद्भुतचमत्कारातिशयं प्रत्यक्षमक्षिविषयीकृत्य सर्वे विस्मिता बभूवुः। श्रीपुण्यसदनश्च स्वात्मानं कृतकृत्यं मनुते स्म।

—:❀:—

# त्रयोदशः परिच्छेदः

अन्येद्युः परस्तादाकाशमनुरञ्जयति, अरुणकिरणपुञ्जे, सर्वे स्वं स्वमाह्निकं कर्म सम्पाद्य पुनः स्वकीयं पन्थानमारूढा अग्रे प्रचलन्ति स्म। शनैःशनैः पादक्रममग्रेऽग्रं प्रवर्द्धयन्तो विकासीकृतविद्यावैभवां श्रीश्रीविश्वनाथाधिष्ठितां प्रतिष्ठितां सर्वलोकसन्तापपापपुञ्जप्रक्षालनपटीयस्या वरिवस्यया भगवत्या भागीरथ्या रथ्याशतसमलङ्कृततीरयाऽतिगभीरस्वच्छनीरया, भक्तौघाऽघौघप्रशमनाऽधीरया सुषेवितमध्यभागां, प्रवर्द्धितपरिव्राजकपटलाऽनुरागाम्, काशीम्, प्रकाशीकृतविद्यागौरवां, सानन्दं, समुदं सोल्लासं समधिजग्मुः।

यदा हि काश्याः सीमानमधिगतवत्सु श्रीरामानन्दसनाथेषु समस्तपरिकरेषु सत्सु पार्श्वस्थ-ग्रामनिवासिन्यः सुवासिन्यः सौभाग्यशालिन्यो ह्यपगतमालिन्या मालिन्याऽऽनीतकुटजकुन्दादिकुसुममाल्य-शोभितकरपङ्कजाः सुरपुरपुरन्ध्र्य इव समागताः शिरसि विधृतवारिसम्भृतानेककलशा अपगताऽऽलसाः प्रकाशीकृतमन्दहासाः शकुनमङ्गलमिवाऽऽचरन्त्यः स्व-स्वदर्शनोत्कण्ठां परिहरन्त्यः श्रीरामानन्दवटोः दर्शनलाभेन स्व-स्वचक्षूंषि सफलयन्त्यः समवेताः समभवन्।

काश्चन दधिसंभृतां मृण्मयहण्डिकां शिरसि वहन्त्यः समागताः। कतिपयाः दूर्वाङ्कुर-हरित कोमलदलसुसज्जितश्रीफलोल्लसितमुखान् जलसम्भृतान् घटान् अन्याः नारिकेलसमङ्कृतपाणिपल्लवा अपरा समस्तसमर्चनोपयुक्तसामग्री मण्डितस्थालीसनाथकराः। इतरा विविध सामयिकमधुर-मधुर-कदलीफल-दाडिम-नारङ्गक-दृढबीजक ( पेरुक ) सेवक-बदरीफलोपहाराः। कतिचन स्व-स्वक्षेत्रसमुद्भूत-गृञ्जन-शर्कराकन्दादिपूरितपात्रहस्ताः यूथशोऽतिमधुरं माङ्गलिकगीतानि यथेच्छं गायन्त्यः समाजग्मुः।

समागत्य च मञ्जुलवेषं कुञ्चितकेशं श्रीरामानन्दवटुं समालापसत्कारपटुं यथोपचारं समुपहारं समर्च्य भालपट्टे वटोः तिलकं विधाय प्रसूनमालाञ्च परिधाप्य श्रीफलं ( नारिकेलफलं ) च तस्य हस्ते दत्वा शुभाशीर्भिः समभिनन्दयन्ति स्म।

श्रीपुण्यसदनपण्डितप्रवरोऽपि व्यवहारदक्षः समयाऽनुरूपं तासां सम्मानं दानादिकं सौभाग्योपयोगिनं यथायोग्यं चकार। वटोरुपरि निर्मञ्छनादिकं कृत्वा·· वितरति स्म सर्वाषु द्रव्यम्।

समासादिते च समस्तपारस्परिक-व्यवहारे-सर्वाः सीमन्तिन्यः समवेताः श्रीरामानन्दवटोः शरणमागत्य निवेदयाञ्चक्रुः। महाराज! किमधिकं वयं निवेदयेम आसीत् कश्चनैतादृशोऽपि समयो यदा भारतीयाः कामिन्यः स्वीयं पातिव्रतं धर्मं सर्वतो वरिष्ठं गरिष्ठञ्च मन्वन्ते स्म। ताः स्वातंत्र्येण स्वकीयं पातिव्रतं धर्मं पालयन्ति स्म। प्राणादप्यधिकं प्रियं जानन्ति स्म। तत्पालने च सर्वविधासुविधाऽप्यासीत्। किन्तु साम्प्रतं तु वयं केवलं कामिनीकेलिलोलानां मनोरञ्जनसामग्रीतो नाऽधिकाः स्वीक्रियन्ते। विलासिभिर्विलासिन्यो विलासभाजनानि संवृत्ता इति मन्यते। कामुकाऽधमैः नारकीयकीटायमानैः सम्मुखेऽस्माकं नानाविधानि प्रलोभनसाधनानि नन्दनवनोपमानि विरचय्य, निरयपाशजालेन दृढं निवद्धाः कामिन्यो नाटकाऽऽगारे बलात् पातिताः भृशं पीड्यमाना नितान्तं दुःखिता न ततः स्वात्मानं पतितं निष्काशयितुं, कञ्चन पन्थानं लभन्ते, येन स्वात्मनः समुद्धृतिं कर्तुं पारयेयुः।

किम्वहुना, आस्माकीना सौभाग्यशक्तिः, दाम्पत्यगौरवः, पारस्परिकं दम्पत्योः प्रणयबन्धनम्,-सुखस्वारस्यम्, हृदये वात्सल्योत्कृष्टता, मातृत्व-प्रभावः, हृदय-मार्दवम्, वाचिसत्यत्वम् शीलसंरक्षणम्, निश्छलव्यवहारः, सर्वं धर्माचरणम्, कर्मप्रवर्तनम् पतिसेवापरायणत्वम्, दम्पत्योः केवलमन्योन्यानुरागः समाऽऽसक्तिश्चेति सर्वं निस्तेजस्कमिवाऽभवत्। तेजोविहीनञ्च नः स्त्रीत्वमपि लज्जयति सकलमुपरितनोद्दङ्कितम्। अतः प्रार्थयामहे भगवन्तम्-यदस्माकमुद्धतेः कश्चनोपायः प्रदर्शनीयः। रक्षणीयाश्च वयं सर्वाः मोहजाल-परिभ्रान्ताः, आक्रान्ताश्च धर्मकर्मभिः एतदर्थमेव भगवन्तं शरणीकुर्मः। अतः पालयत्वस्मान् सर्वथाऽनाथिनीः।

इत्थम्-नारीणां शुद्धहृदयादुदीरितां प्रार्थनामाकर्ण्य दयार्द्रहृदयः श्रीरामानन्दो वटुः सजनकः सर्वास्ताः समाश्वासयामास।

सुभद्रतमाः कल्याण्यः! यदुक्तं तत् सकलमवितथम्, परञ्च कुसमयकलितमिदमाचरणं पुरुषाणामपि न स्वदेशपरम्परानुसारि, सम्प्रति भारतीयायाः संस्कृतेरुपरि यः प्रभावः पतितः, तस्य सकलस्य मूलकारणम् वैदेशिकानां दुःसङ्गतिः, तदीयानुकरणप्रवृत्तिः, तेषां सहवासः तैः सह पारस्परिकः प्रणयसम्बन्धः, किंवा-तदीयसम्पर्कजनिता तद्रीतिपरम्परीयव्यवहृतिः। यावदस्य सर्वथा तत्सम्पर्कस्य तच्छिक्षादीक्षायाः

प्रभावस्य तदीयचरिताऽनुसरणस्य च मूलोच्छेदो नाभविष्यत् नहि तावद्भवतीनामेताद्दग्दुःस्थितिजनितदुःखस्याऽपि समाधानादिव्यवस्था प्रासरिष्यत् ।

इदमनुभूयते च यत् तेषां परिभ्रष्टचरितानां निर्मर्यादानां यथेच्छाऽऽचाराणाम् सर्वतन्त्रां स्वतन्त्रां च व्यवहृतिं विलोक्य तदीयबाह्यचाकचक्यसुखदचमत्कृतिप्रतिहतचक्षुष्काणां भारतीयनवयुवकयुवतीनाम् तदीयाऽनुकरणलिप्साचिकीर्षा न यावदन्तमेष्यति तावत् किमपि भाव्यम् भवनीयं वानोद्वीक्ष्यते । सम्प्रति त्वयं प्रवाहप्रपूरः प्राबल्यमुपयाति । प्रबलप्रवाहपूरनिपतित - तृणखण्डमिव प्रवहन्ति विलुलितानि चञ्चलचेतांसि रसिकानाम् । निःसीममिदं प्रवाहप्रसरणमनुभूयते । न विलोक्यते स्वकीयः परम्परायातः सन्मार्गः । सम्प्रति तु "अन्धा यथाऽन्धैरिव नीयमानाः ।" इव प्रवर्तन्ते भारतीया नागारिका युवकयुवतयः । किं बहुना प्रतिस्पर्द्धायाः प्रतियोगितायां प्रवर्तमानाः प्रायः पुरपुरन्ध्र्योऽपि पुरुषेभ्योऽधिकं हस्तचतुष्टयमग्रे प्रवर्द्धमानाः प्रतिभान्ति । किन्तु सर्वैरनुसरणप्रवाहपतितैरिदं न विस्मरणीयं यत् ते, न समीचीने लक्ष्ये पदे वा गन्तुं पारयिष्यन्ति, प्रत्युत विनाशस्य महत्यन्धकारपटलपूरितान्तरालेऽनर्थगर्ते निपतिष्यन्ति ।

निजपर्य्यालोचनामय्या विवेचिन्या दृष्टया विवेचनीयमेतत् यद्भारतीयाः सुकुलीनाः सदाचारशीला सुशीलाः युवतयः सुरयुवतय इव न हि प्रदर्शन्यां प्रदर्शनीयानि वस्तूनि भवितुमर्हन्ति । एता गृहस्थाश्रमसेविनां गृहसम्राज्ञ्यो भूत्वा सकलं गार्हस्थ्यं व्यवहारं परिपालन्ति, अनुशासति च निःशेषं परिकरम् । किम्बहुना परिणयनपाणिग्रहणानन्तरन्त्वेताः स्वकीयवल्लभस्य हृदयेश्वर्य्यो भूत्वैव गृहे पदार्पणं कुर्वन्ति । गृहस्वामिन्य एव कथ्यन्ते, शोभते च गृहमेवैताभिः गगनं चन्द्रमसेव । यतो हि "गृहिणी गृहमुच्यते, न गृहिणी गृहमित्याहुः ।" इति गृहन्तु गृहिण्येव । एतन्मुखचन्द्रचन्द्रिकाऽवदातीभूतमेव गृहं देवगृहमिव शोभते, अन्यथा तु भूतावासमिवाऽभद्रं विभाति शून्यप्रायम् । अतो गृहस्वामिनी रूपैणैवैताः विकासमुपयान्ति, एता एव कल्याण्यः, कल्याणपरम्पराणां प्रवर्तयिन्यः, मङ्गलमय्योह्येताः स्वकीयमङ्गलकामनाभिः समस्तं संसारमेव मङ्गलमयं विदधति । यत्र च शास्त्रेषु "न स्त्री स्वातन्त्र्यमर्हति" । इत्यादयः शब्दाः समुपलभ्यन्ते ते तदानीन्तनीं परिस्थितिं विलोक्य चरितार्था भवन्ति यत्र स्व-स्वतन्त्रताव्याजेन स्त्रीषु स्वाच्छन्द्यचारित्र्यं प्रसरेत् । तावदेव नारीणां स्वातन्त्र्यं क्षम्यं, पोषणीयञ्च भवति, यावत्तासु नारीसुमति-सुलभमर्यादायां निरङ्कुशताया साम्राज्यं न प्रभवेत् । यतो हि तत्र निरङ्कुशतायाः स्पर्शोऽपि सर्वथाऽनर्थकारी ।

किञ्च भारते तु "पतिरेको गुरुः स्त्रीणां पतिरेकः परंतपः।
पतिरेव परोधर्मः पतिरेव प्रजापतिः ॥ इति

विशेषतो भारतवर्षे पतिसेवामेव परमं धर्मं पुरुषार्थसम्पादकञ्च मन्वानाः भारतीयाङ्गनाः सर्वतो वरिष्ठागरिष्ठाश्चाभवन्। पतिसेवास्वरूपमेव परमंतपः सञ्चरन्त्यो नानाविधां योगिदुर्लभामपि सिद्धिं सम्पादयामासुः। पातिव्रत्य-धर्म-प्रभावेणैव भारतीयाः सीमन्तिन्यो भगवन्तमपि स्वोत्सङ्गरङ्गनटराजमिव मनोविनोद-साधनं सुललितक्रीडनकमिवाहरहः सततं लालयन्त्यो अजन्मनोऽपि जननीगौरवं लभमानाः देवकीकौसल्याप्रभृतयो जगन्मान्याः समभूवन्। भगवानपि तथाविधा धर्मपरायणां भारतीयामेव ललनां स्वकीयमातुः सौभाग्येन समलञ्चकार नान्यदेश-वास्तव्यामस्तव्यस्तधर्मचारिणीं स्वेच्छाविहारिणीमिति। भारतीया नार्य्यस्त्वनेकवारं स्वधर्मस्य स्वदेशस्य च रक्षामकार्षुः। इत्थं सधर्मस्वकर्तव्य-संरता महिला यदि स्वातन्त्र्यलिप्सया समानतायाः प्रदानलालसया व्यामोह्य चाकचक्यं च प्रदर्श्य परपुरुषाणां सम्पर्के समानीय नानाविधञ्च सम्बन्धं स्थापयित्वा ताः स्वपथभ्रष्टाः परिकलय्य सहजस्वाभाविकगृहिणीत्वाऽधिकाराणामुपेक्षाकारणम्, कस्यामप्यवस्थायां न केवलं भारते, अपि त्वन्यदेशेष्वपि स्वगृहिणीत्वधर्मात् स्खलनं, पातिव्रत्यप्रच्यवनम् क्वचिदपि कदाचिदपि कथञ्चिदपि हितावहमेव। परन्तु नितान्तं खेदाऽऽस्पदमेतत् यत् साम्प्रतिक मनुजसमाजः स्वकीयं पतनमप्यभ्युत्थानमेव मनुते सर्वाणितज्जन्यान्यनिष्टा-न्यपि निकटभविष्यत्येवागन्तुकान्यपि न विलोकते। तदुपेक्षामेव विदधाति, गजनि-मीलिकामेव कलयति। जानन्नपि न जानाति।

ततोऽप्यधिकतरं दुःखाकरन्त्विदमेव यदधुना स्वयं स्त्रियोऽपि स्वकीयं हिताऽहितमनालोच्यैव पुरुषाणामेव गड्डलिकाप्रवाहमिव स्वेच्छाचारित्वस्या-नुकरणं कुर्वन्ति। प्रत्यहञ्च निजभूषणभूतां परस्परागतां लज्जां, शीलं, शिष्टाचारम्, नम्रतां (विनयम्) निजकुलाचारादिकं सहसैवाऽतिक्रामन्ति। साग्रहञ्च पुरुषैः सह प्रतिद्वन्द्वितायां प्रतियोगितायां सर्वत्र, सामान्यदैनिक - कन्दुक - क्रीडादिषु, व्यवहारे वस्तुक्रयणे, विक्रयणे, परिभ्रमणे, भृत्यत्वे सेवाकार्ये सामयिक-समाजोद्धार-व्यापारे सतताऽऽन्दोलनादौ किम्बहुना कारागृहादिगमनादिष्वपि पुरुषायिता निरङ्कुशताशिखरिशिखराऽऽरूढा भवन्तीति-न प्राक्तनमर्यादाऽनुरूपं गृहिणीषु शोभते। परञ्च वर्तमानयुगे सोत्साहं स्वगृहतो बहिर्निर्गत्य विरचयन्ति सर्वविधं पुरुषाऽनुरूपं व्यापारम्। यद्यपि न प्रतीयते शास्त्रानुसारि कर्म, किन्तु समयस्याऽऽह्वानं - येन सर्वेषां मानसानि तथैव परिवर्तितान्येव विहितानि। कालाऽनुकूलमेव मत्वा यद्

विरचयन्ति—तत् आपातरमणीयमेव। परञ्च यदि अन्तःसूक्ष्मेक्षिकया विलोकयेम तर्हि उन्नतेरपेक्षया वस्तुतः पतनमेव दृक्पथमायास्यति कालान्तरे। तथा करणे तथाऽऽचरणे च वयं कस्मात् स्थानात् कुत्राऽवतरिताः स्मः। का च नो व्यवस्था-स्थितिर्जाता। वयं स्वाधीनाः सम्पन्नाः किमुत पराधीनाः। यतो हि स्वगृहेऽपि न स्वगृहीण्याः हस्तनिर्मितं भोजनमपि समीचीनं समयोपरि लभामहे किमुतान्यत् कर्मेति। अतोऽनुमीयते यदधुना निर्णयसिद्ध - सिद्धान्ताऽवहेलनायां प्राक्तनपरम्परा-परित्याग एव उन्नतेः स्वप्नमवलोकयाम इत्याश्चर्यम्।

वस्तुतस्तु भारतीयानामबलानां कल्याणन्तु प्राचीनपरिपाटीपरिपालने एव विद्यते। महिलानां समाजसेवा, स्वतन्त्रता, समानता, समुन्नतिर्वा निश्छलानुपम-भगवद्भावनया - न मानुपरूपेण, विशुद्धचेतसा, सत्य - सत्त्वगुणेन पतिसेवने एव सिद्ध्यति। का नाम लौकिकी - प्रदर्शनीस्थित - वस्तुवद् दर्शनमात्रफला क्षणिकतो-षिणी समानता स्वतन्त्रता वा। तुच्छामेतां परिहाय - पतिसेवा पातिव्रततपोबलेन तु स्त्रियो विश्वसम्मानं लोकेतु समस्ताधिपत्यम्, अप्रतिहताज्ञत्वम् सन्ततपूजाऽर्हत्वम्, जगतामादरस्थानत्वम् सर्वलोकवशित्वम्, अतः परमप्यलौकिक फलन्तु वैकुण्ठे लक्ष्मीनारायणसायुज्यरूपां भुक्तिं मुक्तिञ्च, लभन्ते, किं पुनः स्वर्गादि-सामान्यफल-चिन्तनम्। किञ्च स्वतन्त्रता समानता प्राप्तिस्तु - तदाप्रभृत्येव स्त्रीषु सिद्ध्यति यदा ताः स्वकीयं कन्यात्वं परित्यज्य पित्रा दत्ताः स्वपत्या ( स्वपतिना ) सह परिणीताः सञ्जाताः। तत् क्षणमारभ्यैव संसारक्षेत्रे पत्या सह समानाधिकारिण्यो भवन्ति, पतिवदेव तासां स्वकुलकुटुम्बे सम्मानम् सुलभाधिपत्यम् तु हस्तगतमेव। पतिगृहस्थायाः समस्तायाः सम्पत्तेः सम्राज्ञ्यो भवन्त्यः यथेच्छं सुखसम्पत्तेः समुपभोगं विधातुं ताः सर्वतन्त्रस्वतन्त्राः स्वत एव सम्भवन्तीति धर्मः। श्रुति वचनमेवैतत्— "अर्द्धो वा एष आत्मनः, यत् पत्नी" इति। यतो हि प्रारम्भे सृष्टिसर्जनाऽवसरेऽपि सर्वतः प्रथमं—"पतिश्च पत्नी च, अभवताम्" "स आत्मानं द्विधाऽपातयत्" इति पति-पत्नीरूपेण-एकस्यैव आत्मनः शरीरस्य वा दक्षिणभागः पतिस्तु वामभागः पत्नी, इत्यादि वचनैः स्वत एव सिद्धा सर्वाऽधिकारप्राप्तिः शास्त्रसम्मता स्वत एव भगवता दत्ता। न हि केनचन मनुष्येण सन्तुष्टेन वा दत्ता। स्वत एव ईश्वर-निर्मितविधानेनैव लब्धाऽधिकारा नार्यो भवन्ति, न तासां कृते प्रतिद्वन्द्वितायां पुरुषैः सह भागं गृहीत्वा समानतया कार्यक्षेत्रे समवतरणस्यावश्यकता, न वा स्वतन्त्रतायाः सर्वोच्च - शिखरोपर्य्यारोहणस्य, न हि कुरुक्षेत्रीयघोषणायाश्च। समानतैषा तु सांख्यशास्त्रीय प्रकृतिपुरुषवत् नित्यसिद्धा नास्त्यधुना सिद्धस्य साधनतायाः

आवश्यकता, प्रत्युत दोषोभवति सिद्ध-साधनाख्यः। लोकव्यवहार एव न प्रचलति विना स्त्री-पुरुषयोः समानताम्। न वा कल्याणमेव भवति।

मनुरपि-धर्मशास्त्रे- सन्तुष्टो भार्यया भर्ता, भर्त्रा भार्या तथैव च।
प्राहः- यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्॥

यदि च प्रश्नः समुत्तिष्ठेत्—यत् समानता, ईदृशी नाममात्रस्यैव। पुरुष-परतन्त्रतापि सर्वदा व्यवहारे समाजे लोके (देशे प्रदेशे सर्वत्रैव) भवितव्या। तर्हि नैतादृश आग्रहः करणीयः, ईश्वरीयविधानमेवैताद्दृशम्। शरीरनिर्माणकाले एवायं भेदो ईश्वरेण सृष्टः, कानिचिदङ्गविशेषाणि मृदूनि कठोराणि वा स्त्रीष्वधिकानि पुरुषाऽपेक्षया निर्माय सम्भृतानि, कानिचिच्च पुरुषशरीरेषु स्त्रीणामपेक्षयाऽधिकानि संरक्षितानि विलोक्यन्ते च व्यवहारव्यापारादिषु। यथा हि पञ्चषासु नारीषु मध्ये तैः सह सर्वथैवाऽपरिचितोऽपि निःशङ्कं निर्भयो जनः गच्छति तिष्ठति व्यवहरति च न तथा पञ्चषेषु पुरुषैष्वपरिचितेष्वेका नारी तथा कर्तुं निर्भयं सञ्चरितुं वा शक्ता भवति। श्रुतिष्वपि—"निरिन्द्रिया स्त्री, पुमानिन्द्रियवान्।" (इतिः मैत्रायणी संहिता० ४।६।७।) अतः इन्द्रियादीनां, विशेषतो न्यूनाऽधिकत्वविधानात्, इत्यादि भेदात्। तयोः परस्परं कार्यं, कार्यक्षेत्रमपि पृथक्-पृथक् कृतमेव। एषैव भारतीया संस्कृतिः। इतो विरुद्धा या विदेशीयासंस्कृतिः, नाऽत्र प्रवर्तनीया। न च स्व-मर्यादाया उल्लङ्घनमपि कर्तव्यम्, नवा वैदेशिकी संस्कृतिरेवस्वी करणीया, चाकचक्यचकितोभूय प्रमादात् स्वीक्रियेत चेन्न क्षेमम्। उक्तञ्च "स्वे स्वे कर्मण्यभिरतः संसिद्धि लभते नरः" "स्व धर्मे निधनं श्रेयः। परधर्मो भयावहः।" स्वकीयमर्यादानुसारमेव सदा व्यवहर्तव्यम्।"

अन्ते श्रीरामानन्दो ब्रह्मचारी ताः सम्बोध्य समाश्वासयत्—यत् देव्यः! मैवं चिन्तिताः भवन्तु। भगवान् सर्वमेवेप्सितं भवतीनां सम्पादयिष्यति। अहमपि यथाशक्ति सर्वात्मना यतिष्ये, येन भवतीनां मानसिकीचिन्ता सद्योऽपसेत्। वर्तमानायाश्चास्याः संस्कृतेः राहुरूपायाः सर्वात्मना विनाशः भारतीयसंस्कृति-सुधांशोः सद्यः समुद्धारः सुखशान्तेः स्थैर्यञ्च स्यात्। इत्थं ताः सर्वाः सन्तुष्य श्रीरामानन्दश्च सम्पूज्य जयजयघोषं चक्रुः।

—:—

# चतुर्दशः परिच्छेदः

इत्थं शनैः शनैः प्रचलन्तः मार्गे मार्गे च समागतान्-श्रद्धालून् सम्बोधयन्तः शङ्कालूंश्च समादधतः स्थाने स्थाने सद्धर्मपरिपालनैकपटीयसां महीयसां सश्रद्धं समुपहृतमातिथेयं स्वीकुर्वन्तः सर्वेषां मनसि मोदमपारं, चेतसि चैतन्यचमत्कारं, सुबुद्धौ सद्बोधं शुश्रूषुश्रवण-पुटेषु सरसवचनसुधां पूरयन्तो दिदृक्षुलोचनयुगलालोकनानन्दममन्दं वितरन्तः समुपदेशसुधावर्षणाऽऽप्यायितसहृदयहृदयाः श्रीरामानन्दवटुवरसनाथाः श्रीपुण्यसदनप्रदत्तपरिपोषा समुपजात-सन्तोषाः सकललोकललामभूतां श्रीविष्णुपद्याः पुण्यतमप्रवाहपरिपूतां सद्यः प्रसूतानन्दाऽनुभूति-सन्तर्पिताऽनन्ताऽवधूताम् भूताऽधिपति - समधिष्ठितमञ्जुलगर्भाम् सुप्रकाशितहरिश्चन्द्रादिसत्यवादित्वसन्दर्भाम्, परितः प्रकाशितप्रकाशाम्, आकाशस्पर्शिशतशः सौध-देवमन्दिरोच्चशिखर-समलङ्कृतिभूत-सुवर्णनीयशातकुम्भविनिर्मितकलशविकासाम्-निशिनिशिसुधांशुबिम्बपरिचुम्बनरसिकोच्छ्रितपताकापुञ्जां सुभगनगरोपान्तपरिराजितोद्यानसमारोपिताऽनन्त व्रततितति-विरचितमञ्जुलनिकुञ्जाम् । प्रायः प्रसरितपाटलापुष्पपरागपटल-प्रवर्तित-प्राघुणिक-पदपावनपट-प्रसाराम्, विद्यावैभवाद्यनेकगुणपारावाराम् अपाराऽम्बर-चरसेवितप्राकाराम्, सांसारिकसन्तापतापपरितप्त-परिहृतसकलैषणाऽनुराग-विराग बहुल-मुमुक्षुजनैकशरणाऽऽगाराम्, विद्याविवेकोल्लासिमानस - जनाऽऽधाराम्-दूरीकृत-दुरितमानसविकाराम् प्रसारित-ब्रह्मविद्याप्रचाराम् सर्वतः प्रसारित-तेजोराशिं श्री-विश्वनाथपुरीमुरीकृत-समस्तगुणराशिं काशीम् विलोक्य सश्रद्धं सानुरागं सप्रश्रयं प्रणतिशतसमुपहारानर्पयामासुः ।

यत्र श्रीवैरोचनिनिग्रहैकरसिकस्य त्रिदशेश्वराद्यमरपरिवृढ-निखिलनिर्जलल-नामनोरथशतपूरणैकमानसस्य भगवतो वामनस्य चरणांगुष्ठ-प्रक्षालन-समुद्भूत-ब्रह्मकमण्डलुनिर्गत-वारिधारासञ्जातविग्रहायाः श्रीभगीरथ-तपः-प्रभावप्रस्फुरित-कीर्ति-पताकायमानायाः सकलभूतलतलनिवासिजनविहितदुरितदारणदक्षायाः सुदूरदूरादेव

नामस्मरणमात्रेणैव पतितपावनायाः भगवत्याः श्रीभागीरथ्याः सुदूरादेव दर्शनाद् दलितदुष्कृतपटलानां समुपजात-शीतल-वातस्पर्श-जनित-शातशत-लब्धपूर्णकामानां समेषां श्रीपुण्यसदनयुताशेषपरिजनसहितानां समागतानां श्रीरामनन्दवटोश्च आनन्दस्य पारावारश्चेतसि समुदजृम्भत । सर्वे च ते प्रणतिततिपुरःसरं स्तुतिं प्रचक्रुः—

हसन्ती सोल्लासं स्फुरितदशनाफेनपटलैः
तरङ्गैरुत्तुङ्गैः शतशतभुजैः क्रीडनपरा ।
अनङ्गारेः प्रीतिं जनयति शिवाङ्काऽङ्कितजला
सुराऽऽसङ्गागङ्गा भवतु भवभङ्गाय भजताम् ।
शतक्रोशं दूरादपि जननि नाम स्मरति य-
स्त्वदीयं गङ्गेति क्रतुशतफलं सोपि लभते ।
सपापो निष्पापस्त्यजति तनुतापं तव तटे
त्यजन् देहं गेहं कलयति सुरस्नेहवसतौ ।
अनायासं त्रासं दुरितयमपाशं भवभयं
हरत्यंहो हंहो सकृदपि निपीतं शुचिपयः ।
त्वयि स्नाने ध्याने द्रढयति हृषीकेशपदयो-
रमन्दं तल्लीलानलिन-मकरन्दं स जुषते ॥

इत्थम् जगदघशमन्त्या जाग्रज्जनन्याः भगवत्याः भागीरथ्याः सानुरागं स्तवनं विधाय सबहुमानञ्च तस्यां समस्तप्राणिपापप्रशमनपटीयस्यां सोल्लासं सम्यक् स्नात्वा तत्रैव त्रिभुवनपाविन्यास्तीरे सन्ध्यावन्दनादिक-सकलाऽह्निकं कर्म सम्पाद्य, सर्वे भगवतोऽन्नपूर्णासनाथस्य विश्वनाथस्य दर्शनार्थं समागताः । मार्गपतितानां समस्तदेवमूर्तीनां काशीदुर्गपालस्य श्रीकालभैरवस्य च दर्शनस्तवनादिकं कुर्वन्तः श्रीविश्वनाथार्चनवन्दन स्पर्शनाद्यलौकिकं पुण्यकर्म सम्पाद्य किञ्चिद्विश्रम्य श्रीमद्राघवानन्दाचार्याणामाश्रमं प्रति जिगमिषवः पुनः श्रीजाह्नव्यास्तटमाश्रित्य यथा हि तत्राऽतिष्ठन् तथैव श्रीरामानन्दवटोर्दर्शनार्थं भूयांसो नरा नार्यश्च समवेताः बभूवुः । तत्रैव संस्थिता विद्वन्मण्डली विविधैरूहाऽपोहैः शास्त्रविनोदं परस्परं विरचयन्ती सहसा समायातान् निजब्रह्मचर्यतेजोविशेषमण्डितमुखारविन्द-प्रभा-प्रसारणपटुं श्रीरामानन्दवटुं तदनुगतान् मनुजांश्च व्यलोकयत् । तेष्वेकः पण्डित-प्रवरः प्रणयप्रसरपुरःसरं श्रीपुण्यसदनम् पर्य्यपृच्छत् तत्परिचयप्राप्तुकामः । सविनयं श्री पुण्यसदनोऽपि शनैः शनैः स्वागमनप्रयोजनसहितं सकलमुदन्तमवर्णयत्—

'मान्याः, अहमस्मि विश्वक्षेमाय ब्रह्मसदनात्-सूर्यादि-मण्डलमध्याद्वा प्रसृतानां श्रीत्रिपथगा-श्रीकलिन्दगिरिनन्दिनी-श्रीसरस्वतीनां सङ्गमाख्ये सुगृहीतनामधेये श्रीप्रयागराजाऽभिधे तीर्थराजे कलितवसतिः श्रीमतां विद्वत्तल्लजानां समुपासकः पुण्यसदननामा ब्राह्मणः। अयञ्च वटू रामानन्दाख्यः। स्वात्मजमेनं स्वामिश्रीराघवानन्दमहाराजानामाश्रमस्थे विद्यापीठे विद्याध्ययनार्थं, तत्र प्रवेशं दापयितुकामः समायातः समानीतवांश्च वटुमिमं विद्याध्ययनपटुम्।

पुण्यसदनेति नामश्रवणमात्रेणैव समाकृष्टा सा विद्वन्मण्डली सबहुमानं तं प्रति आदरविशेषं प्रकटयामास। अहो अहोभाग्यं नः समेषां यदद्य सहसा भवतां दर्शनं जातम्। वयं हि पुराश्रुतनामानः चिरकालादेव समुत्कण्ठिता दर्शनलिप्सव एवाऽऽस्म। बालस्याऽस्य कृते समीचीनमेव विद्यापीठं विद्याध्ययनायाऽन्विष्य समायाता भवन्तः। यथा भवन्तो विद्वांसस्ततोऽत्यधिकतरोऽयं महाप्रभावशाली प्रकाण्डपण्डितः प्रवक्ता, प्रयोक्ताच शास्त्राणां भविता वः सुकुमारः कुमारः। चेष्टयैव ज्ञायते भविष्यति कश्चन महापुरुषः सिंहविक्रान्तविक्रमः। अतो निश्चप्रचमेवाऽयम् श्रीराघवानन्दाचार्यमहाराजानां पार्श्वे वसन् तदन्तेवासीभूतः काशीपण्डितमण्डली-मण्डनायितो भविष्यतीति नः सिद्धान्तभूताऽव्यभिचाराऽनुमितिः।

इति विलोक्य सकलविदुषामीदृशीं स्नेहसौजन्यधन्यां शुभाऽऽशंसिनीं भावनामुदीक्ष्य स्वाभाविक-विनयशीलपरिशीलितसहज-सुलभस्वभावानुरूपमेव श्रीपुण्यसदनो वारं वारं तान् प्रणामपरम्पराभिः सम्मानयन् श्रीरामानन्दवटुमपि प्रणत्यर्थं प्रैरयत्। समेषामाशीःशतान्युपादाय पण्डित श्रीपुण्यसदनः वटुसमलङ्कृतः सपरिकरः पञ्चगङ्गातटोपरिस्थितं स्वामि श्रीराघवानन्दाचार्याणाम् 'श्रीवैष्णवमठ" मासाद्य श्रीस्वामिमहाराजानां सेवायां समुपस्थिताः सम्बभूवुः। श्रीमन्तो महान्तः श्रीराघवानन्दाचार्या अपि वटोः सम्यक् परिचयं प्राप्य तेषां विश्रामव्यवस्थां चक्रुः।

अन्येद्युः दैनंदिनं क्रियमाणमाह्निकं विधाय पण्डितश्री पुण्यसदनः स्वामिनं श्रीराघवनन्दाचार्यं प्रणम्य साञ्जलिबद्धं नम्रभावेन निवेदयन्नेव श्रीरामानन्दस्य हस्तं तत्कराऽम्बुजे रक्षन्निदं प्रार्थयामास यत् श्रीमन्त आचार्यचरणाः! मामकीनोऽयं बालः श्रीमतामेव चरणशरणं प्राप्य किमपि विद्योपार्जितुकामः श्रीमच्चरणपङ्कजपरागमेव स्वकीयसौभाग्यमण्डनं मन्यमानोऽद्यप्रभृति श्रीमत्क एव संवृत्तः, सहजकरुणावरुणालयाः श्रीमन्त एवाऽस्य मातापितरौ गुरुवराश्च भवन्त एनं यथामतिसर्वशास्त्रनिष्णातं कर्तुं प्रभवः अतो यथारुचं शिक्षयन्त्विति।

श्रीराघवानन्दाचार्य-स्वामिभिः सपदि श्रीरामानन्दं प्रति स्वकीया सूक्ष्मवेदिनी सिद्धासारस्वती दृष्टिः प्रहिता सर्वाङ्गसंशोधिन्या सामुद्रिकशास्त्रनिपुणया तया श्रीरामानन्दाङ्गं समन्ततो विलोक्य सद्यो निर्णीतम् यदयं कुमारः सर्वसद्गुणमण्डितो महापण्डितः सन् प्रचण्ड प्रतिभाविभाविभासित-भुवनतलोभूत्वा सकलशास्त्र-पारङ्गतः स्वकीयवाग्वैभवेन धरणितलप्रसृतमधर्माऽज्ञानान्धकारस्तोमं विनाशयन् स्वात्मबलेन च सर्वानाकर्षयन् स्वकीयधर्माद्युपदेशपरम्पराभिः स्वानुयायिनो विधाय सन्मार्गप्रदर्शनेन च भक्तिभावमहितान् सततमहितानपि श्रद्धाविनययसहितान् कल्पयित्वा,सद्योभगवद्भक्तिपरिपोषकान् सर्वात्मना प्रपत्ति-रतितितिभिश्च हरितोषकान् विधाय सकलभारते भक्तिमार्गपरम्परां प्रसार्य विशिष्टाऽऽचार्यत्वमेव स्थापयिष्यति,यापयिष्यति सुदीर्घकालं भगवत्प्रपत्ति-प्रचारण-प्रसारण एव स्वकीयं जीवनम्। भविष्यति महानादर्शपूरुषः,इति तत्क्षणमेव सर्वं विज्ञाय श्रीराघवानन्दाचार्याः सहर्षमेव तंतत्र तेषां विद्यापीठे संरक्षणार्थं सानन्दं विद्यालये प्रवेशानुमत्या निःशङ्कं श्रीरामानन्दं तत्रैव मोचनार्थमाज्ञाप्य प्रोचुः-भगवन् श्री पुण्यसदनमहोदय! सत्यमेव भवान् पुण्यसदन एव यदीदृशं तनयं लब्धवान्। वटुश्च ते भवतां यशश्चन्द्रचन्द्रिकया सकलभुवनप्रसृतमन्धकारमपनेष्यति प्रस्पन्दयिष्यति च ते कीर्तिपताकाम् भविष्यति च ते कल्पनातीता मनोरथकल्पलतिकाशतशतसुरभितसुमनोभरैः समलङ्कृता, तनयिष्यति च ते कुलगौरवम्। सफलयिष्यति च स्वजननीजठरनिवासाऽऽयासाऽऽमनस्यव्यथाप्रकासविकासम्। कलयिष्यति चाऽयमास्माकीनविद्यालयमठीवैभवसन्ततिमपीति सस्नेहमिमं स्मारयिष्यामः सकलशास्त्रतत्त्वविज्ञानम्।

इति श्रीमतां श्रीराघवानन्दाचार्यस्वामिप्रवराणामनुपमानुग्रहरससम्पृक्तां वात्सल्यसुधासंसिक्तामद्भुतां वाचं निशम्य श्रीपुण्यसदनः स्वान्तराले हर्षोद्रेकमपाराऽऽनन्दपारावारोच्छलल्लोल-तरङ्गरङ्गायितमानसमालोक्य हर्षाऽवरुद्धकण्ठ इव किमप्यधिकं वक्तुमसाम्प्रतमेवेति मन्वानः पार्श्वस्थस्यात्मजस्य श्रीरामानन्दस्य मस्तकोपरि स्वकीयं पितृस्नेहाऽऽप्लुतं पाणिं निधाय आचार्यसाम्मुखीनश्च तं विधाय प्रोवाच, वत्स! रामानन्द! सम्प्रति गुरूपसत्तिं ते सम्पाद्य पितृत्वकर्तव्यं पालितवान्। अद्यप्रभृति श्रीमद्गुरुचरणान् शरणीकृत्य सर्वथा सर्वात्मना सर्वभावेन च गुरूणामाज्ञाऽनुवर्ती सन् कर्मणा मनसा वचसा गुरुसेवाहेवाकीभूय पूर्णमनोयोगेन विद्योपार्जनमाकलय। वत्स! पुनरपि सावधानं त्वां करोमि, माभूत् क्वचन स्वप्नेऽपि गुरोराज्ञोल्लङ्घनम्। न वा क्वचन शालीयनियमव्याहतिः, मास्पृशत् व्यामोहः, मा गच्छत् कदाचन प्रमादः, मा गाः कदाचिदौद्धत्यम्।. गुरोः प्रसादे प्रसादम्। तदीयचरणाऽऽराधने सौख्यम् श्रेयश्च, तदनुकम्पायामेव स्वात्मनो हितम्, विद्याध्ययनमेव व्रतम् मनुताम्। आश्रमवासिनश्च-

समस्तान् ज्येष्ठान् यथावयः समादरभाजनान्येव, कनीयांश्च निजाऽनुजानिव सस्नेहं सर्वदा व्यवहरेः ।

उक्तं च मनुना — अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्यायशोबलम् ॥

अतः सर्वदा सश्रद्धं सुभक्तिपुरःसरं गुरूणामाचार्याणां ज्येष्ठानामभिवादनम्, अभिमानं विहाय गुरूपसेवनम् कुर्वन्नाश्रमीयनियमाऽनुपालनम्, स्वकीयञ्च, अहरहः सन्ध्यामुपासनाम्, प्रातः सायमुपासनामग्नेः जपहोमादिकं यथाक्रममुपसेव्य वेदाध्ययने-तदङ्गाध्ययने च क्वचन, आलस्यं मा भूदित्यवधानम्, सर्वदा सत्यभाषणम्, असूयायाः परित्यागः-कामक्रोधाद्यपसारणम्, असत्समालाप-प्रलाप-निवारणम्, अखण्ड-वर्णिव्रत-धारणम्, परिपालयन् यथासुखं गुरुकुलनिवासं कलयेति नाऽधिकं किमप्यवशिष्यते कथनम् ।

ततः श्रीरामानन्दोऽपि निजपितृपादपद्मपरागरञ्जितललाटतटं कुर्वन् सानन्दं सविनय सोल्लासं मन्द्रमधुरस्वरेण यथानिदेशं न्यवेदयत्-पूज्यचरणाः! भवदङ्गसमुद्भूतेन श्रीमत्समुपदेश-परिपूतेन प्रभूतेन ज्ञानवारिणाऽभिषिक्तेन क्वचन न व्याहृतिर्नियमानां भवित्रीति शङ्काऽपि साऽऽतङ्काभवेदवकाशमवाप्तुमिति निवेद्यते । निरातङ्कैरेव निःशङ्कै-र्भवितव्यम् श्रीचरणैः । न वा च काचन कदाचन कुतश्चन चिन्तालेशोऽपि मनसि परि-कल्पनीयः । तथैव च मातृचरणान् मद्विषये निःशङ्कान् विधाय मामकीनाः प्रणामाः शतशो निवेदनीयाः । स्मारं स्मारञ्च सानन्दं स्वं गृहं प्रति निवर्तन्ताम् । शुभाः सन्तु पन्थानः ।

स्वात्मजस्येत्थंभूतां विनीतां श्रद्धासमलङ्कृतां मधुरतमां हृदि सुधापूरमिवपूर-यन्तीमाकर्ण्य पण्डितवर्यः श्रीपुण्यसदनः सपदि सजलजलद इव वाष्पवारिपरिपूर्ण-लोचनः संवृत्तः सहसा ववर्ष च हर्षाश्रूणि । परेद्युः प्रभाते परमपाविन्यां भगवत्यां भूरिभव्योद्भाविन्यां भागीरथ्यां स्नात्वा देवादींश्च तर्पणैस्तर्पयित्वा, सश्रद्धं भक्तिभाव-भावितात्मा श्रीविश्वनाथं श्रीमदन्नपूर्णां समर्च्य दर्शनादिकञ्च विधाय, श्रीमद्राघवा-नन्दाचार्यचरणेषु वारं वारं प्रणम्य श्रीरामानन्दञ्चैकवारं पुनस्स्वहृदयेन संयोज्य तन्मस्तकं समाघ्राय शुभाशीर्भिरभिनन्द्य किञ्चिज्जलपानादिकं स्वल्पाहारञ्च विधाय, श्रीमठाधीशाचार्यादाज्ञामवाप्य ति प्रस्थापयामास सपरिकरः ।

---

# पञ्चदशः परिच्छेदः

ततः श्रीरामानन्दः स्वपितृचरणाऽऽदेशमनुसृत्य तत्रत्य विद्यापीठस्थान् नियमान् परिपालयन्, यथानियमं प्रहराऽवशिष्टायां रजन्यां ब्राह्मे मुहूर्ते एव समुत्थाय, निज शारीरिकर्मभ्यो निवृत्य, नैजमशेषमाह्निकं कर्म सम्पाद्य, प्रत्यहम् पूर्वदिवसाधीत-विषयानवलोक्य, प्रातः श्रीगुरुचरणजागरणात् प्रागेव तेषामाह्निकधार्मिकक्रिया-कलाप सम्पादनाय, भगवतोऽभ्यर्चनाय, तुलसीपुष्पादिसकलां सामग्रीं संकलय्य, सन्ध्यावन्दनस्थानपरिशोधन सम्मार्जनोपलेपादिभिः सुसज्जीकृत्य, तत्प्रबोधनाय गुरुस्तृ-वनपाठादिकमारब्ध ।

ततः स्वकीयं भगवदुपासनाविधिं परिसमाप्य समायाते च श्री राघवानन्दाचार्ये समलङ्कुर्वति विद्यापीठस्थप्रधानाचार्यमञ्चपीठे,प्रणतित्रयपुरःसरं प्रणम्य स्वस्वस्था-नोपरि यथानियममुपस्थितवति सहपाठिपटले श्रीरामानन्दोऽपि शान्तभावेन निःशब्दं मन्दपादप्रक्षेपणपूर्वकं सम्प्रदायानुरूपां प्रणतिपरम्परां विधाय साक्षाद्विनय इव सविग्रहः सर्वदाशास्त्रैकचिन्तनचेताः यमनियम-शमदमादिभिः स्वकरणभूतेन्द्रियसङ्घातविजेता नेता च निजसहपाठिनाम् सततमूर्द्ध्वरेता अध्येता च वेदादिशास्त्राणाम् ह्यपेताऽ-खिलबालचापलः श्रीगुरुचरणसन्निधौ समुपसन्तः समवधानपुरःसरम् पपाठ ।

इत्थं स्वल्पतम एव काले स्वकुशाग्रबुद्ध्या-क्रमेण शनैः शनैरभ्यस्यन् व्याकरण-न्याय-मीमांसा-काव्य-कोष-पुराण-ज्योतिष-वेदोपनिषदामध्ययनं चकार । प्रसङ्गो-पात्तानां लौकिकालौकिकविद्यानां कलानाञ्च वेत्ता समभवत् । क्रमेण च बौद्ध-जैन-चार्वाकादीनां दर्शनशास्त्रमवलोक्य सांख्य - वैशेषिकमतान्वेषणपुरःसरं वेदान्तादि-विज्ञानेऽपि पारं-पर्य्यगते सकल-ज्ञानविज्ञान-साहित्ये निष्णातृत्वमवाप ।

स्वप्रतिभापाटवेन च शास्त्रोक्तकठिनतमग्रन्थीनां सारल्येन प्रकाशने प्रावीण्य-मवाप्तवान् । तदानीन्तन शास्त्रार्थगोष्ठीषु विद्वत्परिषत्सु-शास्त्रादि-विवेचिनीषु सभासु च सोत्साहं भागं गृहीत्वा स्वकीयप्रातिभप्रभाकरकरसहस्रप्रसारणापसारित-

विपरीतमतान्धकारपटलः सन् स्वकीयमतविज्ञानज्योतिःप्रसारणप्रक्रियाचातुर्य्यंचणत्वं लब्धवान्। इत्थं विपक्षिशिखरिपक्षशातनशतक्रतुकौशलत्वं कलयामास। शनैः शनैः तत्रत्यपण्डिततल्लजवल्लरीविकसितप्रसूनायितः स्वकीयसहजमकरन्दसौरभोद्रेक-समुन्मादितविपश्चिच्चञ्चरीकचयः अभिनवविज्ञानकुसुमसमूहसुसज्जितवसन्तायमानत्व-प्रसिद्धिमवाप।

अथैकदा "सांख्यशास्त्रम्-ईश्वरश्चे" ति विषयमधिकृत्य विदुषामेका समज्या समायोजि जनैः। तत्र पूर्वपक्षमुपस्थापयितुं प्रसिद्धाः तदानींतनाः सांख्यशास्त्रपारङ्गताः शास्त्रार्थगोष्ठीगरिष्ठाः वरिष्ठाः केचन आसन् सन्नद्धाः विवदिषवः। तेषामुत्तरं दातुम्, सर्वसम्मत्या निर्णीताः श्रीरामानन्दाचार्याः प्रतिवादिभयङ्कराः विपक्षिदन्तावलकुम्भविपाटनकण्ठीरवोद्धारः। तयोर्मध्यस्थत्वसम्पादनाय विद्वन्मूर्धन्यधन्याः श्रीराघवानन्दाचार्याः परिकल्पिताः समभूवन्। समारब्धश्च शास्त्रार्थः—

तत्र पूर्वपक्षः— ॐ नमोभगवते कपिलाचार्याय परमदेवाय,

नमोऽस्तु सांख्यशास्त्राख्य-विज्ञानोल्लासि चक्षुषे
त्यक्तेश्वराय हि जगत् कर्तृप्रकृतिवादिने॥

महामान्याः अध्यक्षपादाः, समुपस्थिता विपश्चिदविपश्चिमाः। प्रकृतविषय-मवलम्ब्य प्रतिपिपादयिषुः पूर्वपक्षपरिपोषणजोषण-प्रबलयुक्ति-महाशक्तिप्रवर्द्धितवचन-विन्यासमुपन्यस्य प्रतिष्ठापयामि सांख्यसिद्धान्तगौरवोल्लासविलासं सहासमिति नाऽव-काशमनुमिनोमि खण्डनस्येति।

सिद्धान्तमिमं सरसतया, सरलतमरीत्या, भाषया च विज्ञापयामि सकलान् यत् "ईश्वरवादस्य कल्पनैव कुतः समुद्गता" इति विचार्यताम्? सम्भवतः, तथावादिनामिदमेव कथनम् यदि, ईश्वरो नाभवत् तदा जगतः समुत्पत्तिरपि नाऽभवत्। सृष्ट्युत्पत्तौ त्वीश्वर एव कारणम्। इति परं त्वयं भ्रमस्तेषाम्। वस्तुतस्तु तथ्य-मिदमेव, जगतः सृष्टिरचनायां प्रकृतेरेव प्राधान्यम्। प्रकृतिर्जडरूपा, अखण्डा च, सा त्रिगुणात्मिका। "सत्वम्, रजः, तमः," इति त्रयोगुणाः प्रकृतेरेव परस्परं सम-विषमभावेन संयुक्ताः सन्तः सृष्टिं कलयन्ति, तत एव नानापदार्थानां समुद्भवः। पुरुषश्च "यस्य सान्निध्यात् संसर्गात् अव्यक्ताऽपि प्रकृतिः व्यक्तत्वमाप्नोति" परश्च पुरुषः प्रकृतिश्चेत्युभावेव स्वतन्त्रौ तत्त्वाख्यौ च। तत्र पुरुषो निर्गुणः सतत-मुदासीनः किन्तु प्रकृतिरेव पुरुषेण सह संयोगं विरचय्य—महत्तत्वं प्रकटयति। महत्तत्वं बुद्धितत्त्वाख्यम्। ततोऽहङ्कारः, तस्मात् पञ्चतन्मात्रा एकादशश्चेन्द्रियगणः। पञ्चतन्मात्राभ्यः पञ्चभूतानि, ततस्तेषां परस्परं पञ्चीकरणेन-क्रमशः प्रवृद्धमाना सकला सृष्टिः। उक्तञ्च—

"निरीच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते ।
सत्तामात्रेण देवेन तथा चायं जगज्जनः ॥ १ ॥"

यथा हि—"अयस्कान्तमणेः संसर्गात् जड़पदार्थे लोहे सहसैव गतिः समुत्पद्यते, तथैव पुरुषसान्निध्यात् प्रकृतौ कर्तृत्वशक्तेराविर्भावः । तथाहि १ पुरुषः, १ प्रकृतिः, १ महत्तत्वम्, १ अहङ्कारः ५ तन्मात्राः, ११ इन्द्रियाणि, ५ महाभूतानि" इत्थम् पञ्चविंशतितत्त्वानां ज्ञानम् ( विवेकः ) मोक्षसाधकः । तत्र पञ्चतन्मात्राः ( रूपतन्मात्रा[१], रसतन्मात्रा[२], गन्धतन्मात्रा[३], स्पर्शतन्मात्रा[४], शब्दतन्मात्रा[५], ) शब्दतन्मात्रातः आकाशः[१] । स्पर्शतन्मात्रातो वायुः[२] । रूपतन्मात्रातस्तेजः[३] ( सूर्यचन्द्र ताराऽग्नयः ) रसतन्मात्रात आपः[४] ( जलम् ) गन्धतन्मात्रातः पृथिवी[५] ) इति पञ्चभूतानि । एकादशेन्द्रियगणः—५ज्ञानेन्द्रियाणि यथा ( श्रोत्रं त्वक् चक्षुः रसना, घ्राणम् ) ५ कर्मेन्द्रियाणि ( यथा वाक् = वाणी-पाणी, पादौ, पायुः ( युगम् ) उपस्थ = ( मूत्रेन्द्रियम् ) एकादशम्-मनः इति । इत्थं उक्त २५ तत्त्वज्ञानान्मुक्तिः उक्तञ्च—

"जटी मुण्डी गृही वाऽपि यत्रकुत्राऽश्रमे वसेत् ।
पञ्चविंशति तत्त्वज्ञो मुक्तोऽसौ नात्र संशयः ॥ १ ॥

इत्थम्—प्रकृति-पुरुष-संयोगादेव सृष्टिर्भवति नात्र "ईश्वरस्य"-अपेक्षा ।

एवमेवचार्वाकस्यापि मतम्

—०—

सूक्ष्मातिसूक्ष्मवस्तुन आरभ्य विशालाद्विशालतमपर्य्यन्तम् यच्च यावत्पदार्थजातम् दृश्यमानं वा सर्वं जगत्-यद् विद्यते तत् सर्वं परमाणुभ्य एव निर्मितमस्ति । परमाणुष्वेवैतादृशी शक्तिर्विद्यते-यत् ते नानाप्रकारेण पृथक्-पृथक् स्थितौ स्वयमेकत्रिताः भवन्ति स्वयञ्च विभाजिताः । परमाणूनामेकत्रीभवनमेव सर्वमिदं दृश्यमानम्-सूर्यचन्द्रतारा - आकाश - पृथिवी - पर्वत - वृक्षादयश्चराञ्चरप्राणिनः सर्व एवैकत्रितपरमाणुरूपाः । स्वयमेवोत्पद्यन्ते-स्वयमेव च विलयं यान्ति । परमाणूनां मेलनं, विशकलनमेव सृष्टिः प्रलयश्चेति । नात्रपरमाणुव्यापरे चैतन्यनाम्न्याः कस्याश्चनशक्तेः आवश्यकता न वा "ईश्वर-जीवात्मनोर्वेति" अत एवेश्वरजीवात्मनोः कल्पनाऽपि मनोविज्जृम्भणमात्रमेव । मानसिकं साम्राज्यं वेति । सर्वं मनोमोदकायमानम् । अतः शरीरमेव केवलमात्मा, शरीरं प्राप्य भोगानामुपभोग एव मोक्षः । इति । उच्यते च—

"यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

एवमेव विकासवादिनामपि मतम्

—०—

विकासवादे हि—परमाणुषु जडत्वम् चेतनताचेतिस्वाभाविको गुणस्तेषाम्। यो हि-स्वकीयायां "अविकसित" दशायां "बीजरूपेण" परमाणुषु स्थितः। परमाणुरेव महत्तत्त्वम्। अस्मादेव महत्तत्त्वात्, प्रकृति-पुरुषयोश्च द्वयोरेव विकासो भवति स एव विकासः दृश्यमानमिदं सर्वं जगत्। परमाणूनां हि प्रकृतिनामकाद्गुणाद् स्थूलस्याऽस्य जगतः समुत्पत्तिः। पुरुषनाम्नोगुणाच्च विकसितायाः सृष्टेः अन्तिमाऽयाकृतिः सैव मानवरूपा प्राणिभूता। नात्र ईश्वरस्य कश्चन व्यापारः। अतो निर्द्वन्द्वैरेव सर्वैर्यथेच्छं भोक्तव्यम् आनन्दः करणीय इवमेव देहप्राप्तेः सार्थकता। नाऽत्र कश्चन विवादलेशः।

इत्थं नानाविधैरेव विवादैः, ईश्वरस्य सिद्धेः खण्डनमेव साध्यते। सुसाध्यते च प्रत्युत सृष्टेर्विकास विषये "सांख्यसिद्धान्तमेव" किञ्चित् किञ्चिद्रूपान्तरेण, परिवर्तनेन इतस्ततो विलुण्ठनेन, विलोडनेन स्वीक्रियते। सत्यमेवैतदिति घोष्यते च सांख्यसिद्धान्तेनैव मोक्षसाधनोपायः करणीयः। न क्वचन "ईश्वरविवादाख्य-मृगमरीचिकायाश्चाकचक्ये पतनं श्रेयस्करं प्रतिभातीति शम्।

इत्थं पूर्वपक्षसमाप्तिसमकालमेव-मन्दस्मितपल्लक्षितद्विज - कुन्दकलिकावदातीकृतसभामण्डपे निजवदनसुधांशुप्रसृतकिरणज्योत्स्नाऽपसारितमोहाऽन्धकारे, नीलारविन्दयुगलोल्लसित - स्वर्णसरोजायमानाऽऽननिःसृतः—ब्रह्मवर्चस्वप्रभाऽवलोकनसमुद्भूतहर्षप्रकर्षानन्दितनिखिलसमुपस्थितसभ्यवृन्दे, परितोवितत भृङ्गपटलभ्रान्तिसमुत्पादक - केशकलापपरिशोभितास्यकमले विमले, विश्वविजयाय सुसायकविरहित मकरध्वजधनुराकृतिभ्रुकुटीयुगलपरिराजिताष्टमीन्दुखण्डरुचिहारिणि, दण्ड-कमण्डलु-मृगचर्म-कौपीनवर्हिर्वासोदुकूलादिधारिणि. ऊर्द्ध्वपुण्ड्रादिद्वादशाङ्गतिलककण्ठिकोपवीतमाल्यमण्डित-महर्षिकुमाराऽनुकारिणि निर्व्यलीके निर्भीके तस्मिन्—

प्रसन्न - वदनाऽम्भोजान्निस्सरन्मधुनिर्झरीम्।
पातुकामा समेषां दृक्रामानन्देऽपतत् सकृत्॥

तदानीं श्रीरामानन्दः स्वकीयाचार्यवर्य - श्रीराघवानन्दाचार्यचरणपङ्कजेषु श्रद्धोल्लासविलासितप्रणामाञ्जलिचञ्चरीकपटलीं नियोज्य, तन्निर्गलिताशीः परम्परा-

ऽमन्दमकरन्दमाचम्य, प्रवर्द्धितोत्साहः, प्रतिपक्षिमतखण्डनोज्जृम्भितात्ममतस्थापनोपक्रममावद्धय, सर्वप्रथमं तदनुरूपमेव मङ्गलाचरणमारभते—

ॐ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै
तँ ह्देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥
हरिः ॐ शान्तिः शान्तिः शान्तिः ।

सम्माननीयाः श्रीमदाचार्यचरणाः ! श्रद्धेया विपश्चिदविपश्चिमाः ! योग्यन्त्विदमेवासीद् यदत्र तथ्यपरिपूरिताऽतिगभीरतरविषयोपरि निर्णयार्थमधुना कस्यचन विज्ञानज्ञानभास्वद्भास्वत एव निखिलशास्त्रपारावारपरिमन्थनोदग्रमन्दरमहीधरायमाणस्य पण्डितप्रकाण्डस्य निर्वाचनेनैव भाव्यमिति । परञ्च तथा व्यवस्थामविधाय मादृशस्य विद्यार्थिन शिरस्येव भारो निक्षिप्तः, तदर्थमसमर्थोऽपि महदनुग्रहोत्साह समर्थितः प्रथितधाष्ट्र्यः—"आज्ञा गुरूणामविचारणीये" ति राधान्तमुररीकृत्य, यत्प्रतिपादनाय प्रवर्द्धितपदोऽग्रसरीभूतस्तदनुग्रहसामर्थ्यसनाथः स्वकीयोद्गारान् समक्षमेव प्रेक्षावतां प्रत्यक्षीविपयतामानयामीति वाग्व्यापारेण ।

मान्याः ! नास्त्यत्रसन्देहलेशोऽपि यदत्र पूर्वपक्षस्थापनकर्त्रा, स्वपक्षपरिपोषणे या वाचो युक्तयः समुपन्यस्ताः सर्वास्ता वैदुष्यपूरिताऽन्तरा एवाऽऽसन् । किन्तु न भ्रान्तिगर्तनिमग्नतां विजहति, अतस्तादृश वाचामाचार्यतामुद्वहन्तोऽपि महान्तः स्वयमपि तद्व्यसनापन्नास्तथाभूता एव भवन्ति । उक्तञ्च—

असन्नेव स भवति असद् ब्रह्मेति वेत चेत् ।
अस्ति ब्रह्मेति चेद्वेद् सन्तमेनं ततो विदुः ॥

एषा तैत्तिरीया श्रुतिः—यो हि-ईश्वरं न मनुते न वा ब्रह्मसत्तामुरीकुरुते सः स्वयमेव असदिवभवति-न तस्याऽपि सत्ता क्वचन समुद्भासते, न वा स मानवीं तनुमासादयति जनमन्तरेऽपि न च सविमुच्यते जननमरणक्लेशपाशात् । किञ्च पूर्वपक्षप्रक्षेपिणा यदनीश्वरवादः प्रस्तुतः यावच्छक्यं यावद्बुद्धि वलोदयं प्रतिपादितश्च "कल्पनामात्रमेवेश्वरवादः" इति ।

किन्तु दुराग्रहग्रहग्रस्ताः, सन्त्रस्ताः सत्यवस्तुप्रदर्शनेऽपि, व्यस्ताश्च भ्रमान्धकारेविनिमग्नाः सत्याऽन्वेषणे, प्रशस्ताऽध्वपरिभ्रष्टाः, अविद्याव्यामोहाऽऽकृष्टाः, परिभ्रमन्ति मिथ्याज्ञानाटवीनिविडतमकण्टकिद्रुमजञ्जालजटिलकुटिल - कुंप्रथाऽऽभासभासितगतिकाः ।

किं वहुना विद्यमानेऽपि जाज्वल्यमाने, सर्वत्र प्रसारितनिजकिरणजाले, प्रचण्डमार्तण्डायमानेश्वरवादे, प्रचलिताऽहरहोऽनुभूतसुलभ-संवादे, त्रिकालाऽवाधित-

सनातनसिद्धान्तविवेचन-चातुरीचणोक्तियुक्ति-निरस्तसमस्तविसंवादे, पूर्वंतनाचार्यवर्य्यैः शतधा प्रेक्षावद्भिः सद्भिर्निःशङ्कं संस्थापिते सदीश्वरवादेऽपि यदि न कस्यचन कुमतौ स्थैर्यमावहति सः तर्हि नातिरिच्यते सकलभुवनानिभासयत्यपि भास्वति, स्वप्रभापटलेन प्रकाशमाने भुवनतले कौशिको नावलोकते किमपि दिवाऽपि, ततो बिभीय, गुहान्तराले स्वात्मानं निगूह्य, तिष्ठति, न पश्यति च दिवा किमपि पदार्थ-जातमिति तच्चरितात् नाऽतिरिच्यते किमपि । किमधिकमिति ।

भवतु, सर्वतः प्रथमं ईश्वरसिद्धेः पूर्वं तत्स्वरूपं निरूपयामि—"सत्यं ज्ञान-मनन्तंब्रह्म" "जन्माद्यस्य यतः शास्त्रयोनित्वात्" इत्यादिश्रुति-सूत्रैः-सत्य-ज्ञानाऽनन्त-स्वरूपत्वम् प्रतिपाद्य भगवतः (ईश्वरस्य) जगत्कर्तृत्वं प्रतिपादितम् । जगतः स एव ईश्वर उपादानकारणम् तथाहि "तदात्मानं स्वयमकुरुत" एकोऽहं वहुस्याम्, प्रजायेय "नामरूपे व्याकरवाणि" सच्च त्यच्चाऽभवत्, सोऽसृजत "तत्तेजोऽभवत्" इत्यादिशतशः स्थाने स्थाने तस्यैव कारणत्वं प्रतिपादितम् । तथैव च तस्यैव परमात्मनो निमित्तकारणत्वमपि जगतः सृष्टिप्रलयौ तत एव तस्मिन्नेव लयोऽपि ।

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति,
यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व, ब्रह्मेति" ॥

किञ्च— "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।
पुरः स पक्षी भूत्वा सन् पुरः पुरुष आविशत् ॥"

इत्यादिभिश्च ब्रह्मण एव सर्वं, स्वयमेव स्वात्मानमेव सर्वरूपेषु पृथक् पृथक् नानानामरूपाभ्यां प्रकटीकृत्य सर्वेषु स्वस्यैव "अन्तर्यामिरूपेण, प्रवेशोऽपि प्रतिपादितः । "सच्च त्यच्च, अभवत्" इत्यनेन जड़जीवान्तर्यामिरूपत्वेनाऽपि स्वस्यैव प्रकटनम् । स्वयमेव चराऽचरात्मेति ।

इत्थम् ज्ञायते—"ब्रह्मैव स्वशक्तिं प्रकृत्यभिधेयामाश्रित्य लोकान्सृष्ट्वा ।
प्रविश्यान्तर्यामित्वेन ब्रह्मादीनां वुद्धीन्द्रियनियन्तृत्वात्—"

ईश्वरः स एव सर्वनियामकः । तथाहि—

"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवीशरीरम्, यः पृथिवीमन्तरोयमयत्येष, त आत्मान्तर्याम्यमृत ।" एवमेव "अप्सु, अग्नौ, अन्तरिक्षे, वायौ, दिवि, आदित्ये, दिक्षु, चन्द्रतारके, आकाशे, तमसि, तेजसि, सर्वेषु भूतेषु, प्राणे, वाचि, चक्षुषि, श्रोत्रे, मनसि, त्वचि, विज्ञाने, रेतसि, प्रभृतिषु सर्वत्रैव तस्य

व्याप्तिः, आधिदैविकाऽधिभूताऽध्यात्मिकत्वेन स्थिति सकलान्तरत्वम्, सकलनियामकत्वं प्रतिपाद्य, तस्यैव च—"अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, इति निर्दिश्य, नान्योऽतोऽस्ति द्रष्टा नाऽन्योऽतोऽस्ति श्रोता, मन्ता विज्ञाता, इत्यादि विशिष्टरूपेण ततोऽन्यस्य निषेधः स्पष्टस्—प्रतिपादितः।" बृहदा० अ० ३ ब्रा० ७ मन्त्र ३-२३ पर्य्यन्तम्।

किञ्च-योगदर्शनेऽपि—"क्लेश कर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति वर्णितः। एवं गीतायामपि—

"यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः" (अ० १५ श्लो० १७)

अन्यत्राऽपि—"उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति॥

वेदा हि स्वतः प्रमाणभूताः।

वेदानां हि सर्वतन्त्रस्वतन्त्रत्वेन प्रामाण्यमेव भगवतोनिःश्वासभूतत्वात् "निःश्वसितमस्य ऋग्-यजुः साम-अथर्ववेदाः" इति, किं वा स्वतः प्रादुर्भूता एव वेदाः। यतः "तेने ब्रह्महृदा य आदिकवये।"

किञ्च "यदि वै प्रजापतेः परमस्ति वागेव तद्" (शतपथे, ५।१।३।११)

तथाच— "अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः॥

एवमेव हि—"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥

इत्थमेव "यथा प्रदीप्तात् पावकात् विस्फुलिङ्गा व्युच्चरन्ति, एवं वा अरे अस्य महतोभूतस्य निःश्वसितमेतत् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाऽङ्गिरस इति" (शतपथ ब्राह्मण काण्ड १४, बृहदारण्यकोपनिषदि वा) इति वेदानां स्वतः प्रादुर्भूतत्वम् किंवा भगवत ईश्वरस्य निःश्वसितभूतत्वमेव। एवमेव सकल-वेदप्रतिपाद्य एव हि ईश्वरः। सर्वेषां वेदानां ब्रह्मण्येव पर्य्यवसानं तात्पर्य्यञ्चेति। "सर्वे वेदाः यत्पदमामनन्ति।" "वेदैश्च सर्वैरहमेव वेद्यः।" इति "वेदान्तकृद्-वेदविदेव चाहम्।" इत्यादि श्रुतिस्मृतिभ्यामपि सकलवेदवेद्यो भगवानेव। स एव हि—भगवान् रामः "वेदवेद्ये परे पुंसि जाते दशरथात्मजे।" इति वाक्यात्। किञ्च सृष्टेः प्राक् सकलमन्धकारावृतमासीत् तदा स्वयमेव भगवान् स्वायम्भूरूपेण प्रकटितः। ततस्तद्द्वारा तपसा ज्ञानमय्याशक्त्या च सृष्टिं चकार-अयं द्वितीयः प्रकारः क्रमसृष्टेः

उक्तञ्च ( ऋग्वेदे, अष्टक ८। अध्या० ७ वर्ग १७ मंत्र ३ ) "तम आसीत्तमसागूढमग्रे प्रकेतं सलिलं सर्वं मा इदम् ।"

तुच्छ्ये नाभ्यपिहितं यदासीत् तपसस्तन्महिम्ना जायतैकम् ।" एवमेव "यः कल्पः स कल्पपूर्वकः "इति न्यायेन यत्र कल्पाऽनुसारिणी सृष्टिः क्रियते धात्रा, तदा ऋग्वेदीयाऽघमर्षणसूक्ते स्पष्टमेव—"ॐ ऋतञ्च, सत्यञ्चाऽभीद्धात्तपसोऽध्यजायत, ततो रात्र्यजायत, ततः समुद्रो अर्णवः, समुद्रादर्णवादधि संवत्सरो अजायत, अहो,- रात्राणि विदधद् विश्वस्य मिषतो वशी सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथ्वीञ्चाऽन्तरिक्षमथो स्वः ।"

इत्यत्र—"ऋतम्" तत् तत्त्वमस्ति, यत् प्रकीर्णभावेन सर्वत्र व्याप्तं विस्तृतं निःसीममास्ते एवमेव "सत्य" मपि तदेवास्ति यच्च स्वकीयं केन्द्रं निर्माय केन्द्रपरिधावेव सीमितं सत् तिष्ठति, इत्थम् समस्तमेव विश्वम् ऋतेन, सत्येन च व्याप्तमस्ति ।

"अभीद्धा" = अभितः इद्धा = प्रदीप्तः अर्थात् सूर्यसमाक्रान्तः, "तपसः अधि", "तपा माघे" इत्यमरः अर्थात् माघमासमारभ्यैव सूर्योद्भूतोऽग्निः ऋतनामा सत्यनामा अजायत = प्रादुरभूत् । "ततो रात्र्यः", ततः समुद्रः, अर्णवश्च=यत्र अन्तरिक्षभागे ऋताऽग्निः पूर्णरूपेण व्याप्तः सः समुद्रः । यस्मिन् अन्तरिक्षभागे च तस्य ऋताग्नेः ह्रासः सः अर्णवः सागरो वेति । ततः ( समुद्रात् अर्णवात् अधि"= संवत्सरः अजायत । अतः, अहोरात्राणि विदधत् = विश्वस्य मिषतः=चेष्टायुक्तस्य विश्वस्य, "वशी स्वामी ईश्वरः अह, दिनम् रात्रं=रात्रिञ्च विदधत् प्रकटयन्, सूर्याचन्द्रमसौ च, धाता=उत्पादकः भुवनस्य भर्ता पालको वा, यथापूर्वं=पूर्वकल्पानुरूपमेव अकल्पयत्, दिवञ्च पृथिवीञ्च अन्तरिक्षम्=( पृथ्वी अन्तरिक्षम्, द्यौः ) इति त्रयम्- तथा "स्वः" स्वर्गादिकञ्च असृजत् । अयमप्यपरः सृष्टिक्रमः कल्पभेदेन प्रतिभाति । परञ्च सर्वं येन केनाऽपि प्रकारेण भवेद्वा सर्जनम् तत्सकलं ईश्वरकृतमेव । शास्त्रेषु भूयांसः प्रकारा निर्दिष्टाः ( अथर्ववेदे—१९ । २३ । ३० ) यथा

"भूतानां ब्रह्मा प्रथमो ह जज्ञे" इति एवं श्वेताश्वतरोपनिषदि—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।"

ऋग्वेदेऽप्यन्यत्—"हिरण्यगर्भः समवर्तताऽग्रे भूतस्य जातः पतिरेक आसीत् ।

यः सदाऽऽधार पृथिवीं द्यामुतेमां" इति-

भगवत एव सर्वाऽऽधारत्वं, परिपालकत्वम् ईशित्वम् च, प्रतिपादितम् । किञ्च—"आत्मा वा इदमेक एवाऽग्र आसीत्, नान्यत्किञ्चन मिषत्" "स इमांल्लोकान सृजत" (ऐतरेयोपनिषदि-१ । १-२) स्पष्टमेव ।

एवं ईशावास्योपनिषदि —"ईशावास्यमिद ँ सर्वं, यत्किञ्च जगत्यां जगत्"
बृहदारण्यकेऽपि—"स विश्वकृत् स हि सर्वस्य कर्त्ता (४।४।१३)
छान्दोग्ये च ।"सदेव सौम्येदमग्र आसीत्, एकमेवाऽद्वितीयं" (६।२।१)
तत्रैव च–अग्नेः—"अथ य आत्मा, स सेतुर्विधृतिरेषाम्" (८।४।१)
मुण्डकोपनिषदि च—"यदर्चिमद् यदणुभ्योऽणु, यस्मिंल्लोका निहिता—

"लोकिनश्च । तदेतदक्षरं ब्रह्म सः प्राणस्तदुवाङ्मनाः । तदेतत्सत्यम्–तदमृतम् तद्वोद्धव्यम् सौम्य विद्धि ।" (२।२।२) तथैव–

केनोपनिषदि—'श्रोत्रस्य श्रोत्रम् मनसो मनो, यद् वाचो ह वाचम्, स उ प्राणः—
'चक्षुतः चक्षुः अतिमुच्य धीराः, प्रेत्याऽस्माल्लोकादमृता भवन्ति ।" (१।२)
एवं च–'एकोवशी सर्वभूतान्तरात्मा, एकं रूपं बहुधा यः करोति" (कठ० २।५।१२)
तथाच–'सर्वे वेदा यत्पदमामनन्ति, तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो–
ब्रह्मचर्यं चरन्ति, तत्ते पदं सङ्ग्रहेण ब्रवीमि" ॐ इत्येतत् (कठोप० १।२।१५)

तथैव च रामतापनीयोपनिषदि—"यो हवै श्रीरामचन्द्रः स भगवान् अद्वैतः परमानन्दः आत्मा । इति । एवमेव मैथिलीमहोपनिषदि च —

"परात्परतरो निखिलस्यप्रत्यनीकगुणाकरो जगदादिकारणममिततेजो–
"राशिर्ब्रह्मादिदेवैरप्युपास्यः सः श्रीभगवान् दाशरथिरेव प्राप्यो दाशरथिरेव प्राप्यः"
एवं पुरुषसूक्ते–"पुरुष एवेद ँ सर्वम्, यद्भूतं यच्च भाव्यम् । उताऽमृतत्वस्येशानो यदन्येनाऽतिरोहति ।" इति । भूतभविष्यद्वर्त्तमानत्वोपाधि-युक्त–कालादि-सर्वस्वरूपः स एवेश्वरः ।

वाल्मीकीय संहितायाम्—"भगवान् रामचन्द्रो वै परं ब्रह्म श्रुतिश्रुतम् ।'
सनत्कुमार संहितायाम् – "रामः सत्यं परं ब्रह्म रामात्किञ्चिन्न विद्यते ।"
गौतमसूत्रेऽपिः—"ईश्वरः कारणं पुरुषकर्माफलदर्शनात् ।"
मनुस्मृतौ च "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वदा ।
"ततःस्वयंभूर्भगवान् अव्यक्तो व्यक्तयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः।"
शिवपुराणे—"अचक्षुरपि यः पश्यत्यकर्णोऽपि शृणोति यः ।
सर्वं वेत्ति न वेत्ताऽस्य तमाहुः पुरुषं परम् ।।"
श्रुतिरपि—"अपाणिपादो जवनोगृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः"
श्रीविष्णुपुराणेऽपि—"सृष्टि स्थित्यन्तकरणीं ब्रह्म-विष्णु-शिवाऽभिधाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ।। '.

वृहन्नारदीये पुराणे—"नारायणोऽक्षरोऽनन्तः सर्वव्यापी निरञ्जनः।
तेनेदमखिलं व्याप्तं जगत्स्थावरजङ्गमम्।

वाल्मीकीये रामायणे—"परं ब्रह्म परं तत्त्वं परं ज्ञानं परं तपः
परं बीजं परं क्षेत्रं परं कारण-कारणम्।"

तथैव महाभारतेऽप्यनुशासनपर्वणि भीष्मपितामहस्य वचनम्—

श्रीविष्णुसहस्रनाम्नि— परमं यो महत्तेजः, परमं यः परायणम्
परमं यो महद्ब्रह्म, परमं यो महत्तपः
"पवित्राणां पवित्रं यो मङ्गलानाञ्च मङ्गलम्।
दैवतं दैवतानाञ्च भूतानां योऽव्ययः पिता॥"

"लोकाध्यक्षं स्तुवन्नित्यं स वै दुःखातिगो भवेत्।" श्रीमद्भागवतेऽपि—
"ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान्।
"दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते" ( ३ । ३२ । २६ ) स्कं० अ० श्लो०

गीतायाञ्च—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥"

इत्यादीनि—वेदोपनिषत् स्मृतिपुराणेषु शतशः वचनानि सन्ति।

किञ्च—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताऽधिवासः साक्षी चेता केवलो निर्गुणश्चे,"ति.।

एतेन सिद्धयति यत्—"देवः एकः ( ईश्वरः ) अन्तर्यामी सन् सर्वत्र व्यापकः सर्वेषां-अन्तरात्मा, सर्वाऽध्यक्षः, प्राणिनः अधिवसन् साक्षी चेतनः, निर्गुणः अद्वैतो विद्यते। अतस्त्रिकालाऽवाधिता विद्यत ईश्वरस्य सत्ता। ईश्वरं बिना सृष्टेरप्यसम्भवः। यथा पृथिवीमन्तरा न क्वचन धान्यादीनामुत्पत्तिर्भवितुमर्हति तद्वदीश्वरं बिना न हि सृष्ट्युत्पत्तिः।

पूर्वपक्षे सांख्यसिद्धान्तवादिभिर्या वाचोयुक्तयो दत्तास्ताः सर्वा भ्रान्तिमूलाः सन्ति। तास्वपि यद्यभ्यन्तरं प्रविश्य सूक्ष्मेक्षिकया विलोक्येत, तर्हि तत्रापि सत्ता विद्यते "ईश्वर"स्येति।

यद्यपि पूर्वपक्षप्रतिपादकैः स्वपक्षे, अनीश्वरवादः प्रस्तुतः परञ्चैषा तेषां धारणा-धारणैव केवलम्, न वस्तुतस्तथा। यतो हि सांख्यशास्त्रेऽपीश्वरप्रतिपादकानि सन्ति सूत्राणि—यथा—सूत्रे—"स हि सर्ववित् सर्वकर्ता", "ईदृशेश्वरसिद्धिः सिद्धा" सांख्य ( अ० ३। ५६। ५७ सू० ) आशयस्तु स्पष्ट एव यत्-"यं पुरुष-

माश्रित्य, यत्प्रभावान्विता सती प्रकृतिः सूयते चराचरम्-सः पुरुषः सर्वज्ञः सर्वकर्ता ईश्वर एव। नान्यः। यदि च सांख्याऽभिमतः पुरुषो निर्गुणो निष्क्रियः, तटस्थः स कथं कर्ता भवितुमर्हति, तर्हि—प्रकृतिः जडा सा पुरुषसंयोगेनैव सर्वं स्मृत्वा सृष्टिं कुरुते नान्यथा। ततः स्वतः कर्तृत्वं पुरुषस्यैव सिध्यति। यतः—बिना पुरुष-संसर्गं न सा किमपि कर्त्तुं समर्था भवति। अतः पुरुष एव सृष्टिकर्ता। यच्च गीता-यामपि यद् भगवद्वाक्यं सांख्यप्रतिपादकं दृश्यते

यत्— न च मां तानि कर्माणि निबध्नन्ति धनञ्जय।
उदासीनवदासीनमसक्तं तेषु कर्मसु॥ (९।९)

किन्त्वेतदपि भगवतः कर्मबन्धराहित्यम् ताटस्थ्येन प्रकृतकृतसर्वकार्य-प्रेक्षणत्वम्। कर्माऽऽसक्तिविहीनत्वमेव प्रतिपादयति। नहि सर्वात्मना अकर्तृत्वम्। प्रकृतयेऽपि सृजनशक्तिदातृत्वमीश्वरस्येव।

तदुक्तम् हि— "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।" इति — स्वात्मनोऽध्यक्षत्वम् स्वयमेव भगवता प्रतिपादितम्।

किञ्च— "अत आत्मनि कर्तृत्वमकर्तृत्वञ्च संस्थितम्।
निरिच्छत्वादकर्ताऽसौ कर्त्ता सन्निधिमात्रतः॥

एतेन भगवत ईश्वरस्य—"इच्छाराहित्येन-अकर्तृत्वम्, सान्निध्यतः संसर्गाच्च प्रकृतेः प्रेरकत्वेन च कर्तृत्वमित्युभयं सिद्धयति।

एवं मोक्षविषयेऽपि सांख्य-वेदान्तयोः समानतैव, तथाहि—सांख्येऽपि "विवेक-ज्ञानोदये जाते यदा हि पुरुषः स्वात्मनो नित्यशुद्धबुद्धमुक्तस्वरूपं परिचिनोति—स्वस्वरूपस्थो भवति तदैव स मुक्तो भवति। एवमेव हि वेदान्तिनामपि राद्धान्तः। नाऽत्र किमपि वैलक्षण्यम्। अस्ति मुक्तिस्वरूपे स्वल्पमात्रं वैलक्षण्यम् यत्-सांख्याऽ-भिमतां मुक्तिर्हि नीरसा। वेदान्तिनाञ्च परमानन्दसम्प्लुता रसमयीति। इयानेव भेदः।

## बौद्धधर्मेऽपि ईश्वरवादः

यद्यपि बौद्धधर्मे न स्पष्टतया ईश्वरस्यास्तित्वे स्वीकारोक्तिः, तथैव निषेधोऽपि नास्ति। यतो हि सर्वमान्ये विश्वव्याप्ते प्रत्यक्षादिभिः शब्दादिवेदाद्यैश्च सिद्धे वस्तुनि कः प्रतिषेधः कथञ्च सिद्धस्य साधनप्रयासः। इत्युभावेव निरर्थकौ,

अतो न बौद्धे धर्मे प्रवृत्तिस्तादृशी। ईश्वरविषये तु समर्थनाऽसमर्थनप्रयासे पिष्ट-पेषणातिरिक्तं न किमपीति, न तत्र दृङ्निपातः।

किञ्च बौद्धधर्मीये दर्शने द्वौ सम्प्रदायौ प्रचलतः। तत्रैकः "महायान"मिति। एष सम्प्रदायस्तु पूर्णतयैवेश्वरवादीति नात्र विवेचनीयम्।

अपरश्च महायानसम्प्रदायभेदा "भूततथाता" इति भूतानां "तथाता"= तथात्वम्। सत्यस्वरूपादुत्पन्नत्वात् - तथात्वमेव सत्यस्वरूपत्वमेव सर्वेषां भूतानाम्। किञ्च स्वोत्पादितेषु समस्तपदार्थजातेषु स्वस्य विद्यमानत्वेऽपि ततो भिन्नमपि स्वस्व-रूपेणाऽवस्थितेः सर्वदैकरसरूपत्वेन स्वयं भासमानत्वे सति सनातनत्वमेव "तथाता" कथ्यते।

द्वितीयः सम्प्रदायो "हीनयानम्"। अस्मिन् सम्प्रदाये सर्वं जगत् "ईश्वरगर्भित"-मेव। निखिले प्रपञ्चजाते ईश्वरस्यैव सत्ता, अतः ईश्वरगर्भितमेव जगत्, किंवा ईश्वरस्यैव गर्भे जगतः स्थितिः अतः ईश्वरगर्भितम्। अथवा येन केनापि प्रकारेण जगति, ईश्वरस्य सम्बधो विद्यत एवेति, ईश्वरगर्भितत्वम्। सम्बन्धोऽपि यः कोऽपि जन्यजनकभावः उत्पाद्य-उत्पादकभावः, आधाराऽऽधेयभावः, स्थिति-स्थापकभावः, नियम्य-नियामकभावो, वाऽन्यः कोऽपि वा भवेत्। एतेनाऽपि न हीश्वरं विना जगतः सृष्ट्यादिप्रवृत्तिः। अतो बौद्धधर्मेऽपि विजृम्भत ईश्वरवादः।

किञ्च बौद्धधर्मसिद्धान्तोऽप्यस्मात्सिद्धान्तान्तरगत एव। यथा बौद्धदर्शनस्य "द्वयतानुपरस्सनसुत्त"स्य श्लोक ४०तमस्याऽभिप्रायो गीतायाम् "या निशा सर्वभूतानां तस्यां जागर्ति संयमी" इति-एवमेव "सेलसूत्त"स्य २१-२२ तमयोः श्लोकयोः तथैव "महावग्ग" विषये यः आशयो वर्णितः स एवास्माकं गीतायां स्पष्टमेव भगवता यदुक्तम् तदाधारक एव, यथाः—"आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्"इत्यादि। एवञ्च गीतायां यः "मोक्ष"शब्देन निर्दिष्टः स एव बौद्धग्रन्थे "निर्वाण"शब्देन व्याख्यातः। यञ्च गीतायाम्—स्थितप्रज्ञस्य, ब्रह्मनिष्ठस्य, भक्तस्य योगिनश्च यानि लक्षणानि निर्दिष्टानि तान्येव निर्वाण - पदाऽधिकारिणो भिक्षुकस्य वर्णितानि लक्षणानि बौद्धग्रन्थे। एवमेव हि गीतायाम्—"आत्मनः" अस्तित्वम्, दुःख-बन्धान्मुक्त्युपायो हि ब्रह्मज्ञानञ्चेति वर्णितमस्ति, तथैव बौद्धैः निषेधव्याजेनैव तदर्थस्य सङ्केतः कृतः—तथाहि—"आत्मनो ब्रह्मणश्च यथार्थरूपं किमपि नास्ति-इत्युक्त्वा - "दुःखस्य कारणभूतायाः तृष्णायाः कामनायाः वा परित्यागपूर्वकं वैराग्ययुक्तेन संन्यासेनैव सुखप्राप्तिर्वर्णिता। किन्तु बौद्धाऽभिमतस्य सुखस्य स्वरूपपरिचिन्तने तु तेऽप्यगत्या, अस्मत्प्रतिपादितस्य आत्मसुखस्य ब्रह्मस्वरूपस्य नित्यानन्दरूपस्यैव शरणं यान्ति। तथैव च पुनर्जन्मकर्मणोः समानतामेवाऽङ्गी-

कुर्वन्ति । कर्मविषये तेषाम् "सुत्तानिवासेठ्स" ६१ तमे लिखितमस्ति यत्—

"कम्मना, वत्तति लोको कम्मना वत्तति प्रजा ।
कम्मनिबन्धना सत्ता रथास्साऽणीव यायते ॥

संस्कृतञ्च— कर्मणा वर्तते लोकः कर्मणा वर्तते प्रजाः ।
कर्मनिबन्धना सत्ता रथाऽद्वाणीव जायते ॥

यथा हि—रथस्य गतिः तदन्तर्गत 'अक्षधुर'माश्रित्यैव भवति, तथैव सकल-प्राणिनां जन्मादीनि कर्माऽऽश्रितानि भवन्तीति भावः ।

एवञ्च "ईश्वरस्य यथार्थस्वरूपं किमपि नास्ती"त्यस्याऽप्यभिप्रायः अयमेव नैकरूपत्वमीश्वरस्य--यत् इदमित्थंतया निर्णीतं किमपि वक्तुं न शक्येत-नानारूप-त्वात्तस्येति "एकोऽहं बहुस्यां प्रजायेय" इत्याद्यनुसारमुच्चनीचभावेन विविधा-कारतया प्रकटितत्वात् । स्वात्मना च पार्थक्येनापि स्वस्वरूपे निर्गुणनिराकारत्वेऽपि स्थितिकत्वात्-अन्तर्यामिरूपेण च सर्वत्र सर्वप्राणिषु प्रविष्टत्वाच्च न यथार्थरूपेण वर्णितुं सुकरत्वात् "नेति नेति"वत् निषेधः । अन्यथा बौद्धस्य "महायान" सम्प्रदायोक्तभक्तितत्त्वानाम् कथं गीतानिर्दिष्टभक्तितत्त्वेषु शब्दतोऽर्थतश्च सामानाधि करण्यम् । एकीभावश्चेति । अतो बौद्धानामपि निषेधमुखेनैवेश्वरसत्तास्वीकरणम् । सनातनसिद्धान्ताऽनुवर्तनश्चेति । ईश्वराऽस्वीकारे तु—"असन्नेव स भवति, असद् ब्रह्मे ति वेद चेत्" अतः असद्वादिनः स्थितिरपि स्वयमेव असद् भवति ।

यच्च "अहिंसा परमो धर्मः" इति सिद्धान्तोऽपि नाऽर्वाचीनः—यतो हि सनातनधर्मे तु स्थाने स्थाने सर्वत्रैव "मा हिंस्यात् सर्वाभूतानि" इति डिण्डिमघोषः परम्परागतः । न केवलम् बौद्धानाम् ।

यद्धि—"यज्ञयागादौ" पशुवधस्य विलोकनेन हिंसायाः प्रसारमिवाऽऽलोक्य जिह्वालोलुपैः देशस्थानानुसारिभिः कतिपयैः हिंसाप्रियैर्यदि यज्ञेषु पशूनां हिंसा-प्रवृत्तिरधिकाऽधिका प्रवृत्ता समभूत् "आलम्भन"शब्दस्य हिंसाकरणमेवार्थं मत्वा विशेषतः प्रवृत्तायां हिंसायाम् सत्याम् तन्निषेधार्थमेव, "आलम्भनशब्दस्य" च "आलभनम्-स्पर्शः" एव । इममेवाऽर्थं लक्ष्यीकृत्य यज्ञे पशुहिंसा न कार्या तस्य स्पर्शे-नैव यदि कार्यं सिद्ध्यति तर्हि किमर्थमेव व्यर्थं पशूनां विशसनं क्रियते किमर्थमेव तद्धननजन्यं पापं समुपचीयते । इत्याद्युक्त्वा यज्ञयागानां विरोधः कृतः । तत्समुचितः सामयिक एवाऽऽसीत् । इत्यादिव्यवहारं प्रचारं वा दृष्ट्वा बौद्धान्-नास्तिकान्-अनीश्वरवादिनो मत्वा व्यवह्रियते वस्तुतस्तु न तेऽप्यनीश्वरवादिनः । सूक्ष्मदृष्ट्या

तत्सिद्धान्तोपरि मनने कृते सति प्रकारान्तरेणेश्वरवादित्वमेव प्रतीयते । एवमेव तेषां सिद्धान्ते—"सर्वप्रपञ्चानामुपशम एव निर्वाणप्राप्तिः" एतत् सर्वमस्मन्मतेऽपि—"सर्वधर्मान् परित्यज्य, मामेकं शरणं व्रज ।" इत्यादि भगवत एवाऽऽज्ञा । इत्युभयो र्वाक्ययोः केवलं शब्दानामेव भेदः, तात्पर्यं त्वेकमेव । भगवत्प्राप्तिरेव मोक्षः स च सर्वधर्मादिप्रपञ्चपरित्यागेन लभ्यः । स एव निर्वाणशब्दवाच्यः, तर्हि को भेदः । को विवादः ?

## ॥ एवं जैनधर्मेऽपि ईश्वरवादः ॥

यद्यपि तेषां कथनम् यथा मादकद्रव्यसेवनेन स्वयमेव भक्षकोपरि मादकतायाः प्रभावः पतति तद्वदेव कर्मकर्तृणामुपरि तत्कृतसुकृतदुष्कृतानां कर्मणामपि फलभोक्तृत्वमपि स्वतः सम्पद्यते तत्तत्कर्माऽनुसारेण । नाऽत्र ईश्वरसत्तायाः आवश्यकता । संसारश्च अनादिः अतः, अस्य सर्जनकर्ता एवं धारकः कश्चन स्यादित्यस्याप्यावश्यकता नास्ति ।

इत्यादिकथनमपि तेषां बालप्रतारणमात्रमेव—यतो हि—यच्च यावद्विश्वस्थं वस्तु, सर्वं कार्यमेव । कार्यञ्च कारणजन्यं भवति । न हि कारणमन्तरा कार्योत्पत्तिः क्वचन दृश्यते । वैशेषिकादिदर्शनेषु सम्यक् "अनुमानेन साधितमेतत् यथा—" क्षित्यङ्कुरादिकं कर्तृजन्यं, कार्यत्वाद् घटवत् । यद् यद् कार्यं तत्तत्कर्तृजन्यमेव । अतोऽस्य महतो भूतस्य जगतः कर्ता शरीरी तु कश्चन न भवितुमर्हति, शरीरिणामपि जगतः अन्तःपातित्वात्, तेषामपि कश्चिदुत्पादकः कल्पनीय एव । न वा पञ्चमहाभूतारिक्तं किञ्चन विद्यते यस्मिन् कर्तृत्वं स्थाप्यते । किञ्च विचित्रतमस्यास्य परमाद्भुतस्य जगतः कार्यरूपस्यापि कश्चन अद्भुतो विचित्रतम एव कर्ताऽपि स्वीकरणीय एव । एतादृशस्तु विरुद्धधर्माश्रयः अद्भुत एव कश्चन—"अपाणिपादो जवनो गृहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः" किं वा "सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।" "सर्वेन्द्रियगुणाऽऽभासं, सर्वेन्द्रियविवर्जितं ।" "अणोरणीयान् महतो महीयान् ।" भवेत् । किञ्च कर्माण्यपि जडानि । कथं तेषु चेतनधर्मता, फलदातृत्वशक्तिश्च कुतः ? न हि लोके जड़पदार्थः किमपि कर्तुं प्रभवन्ति । जडोऽपि चेतनाश्रित एव कार्यं निर्वोढुं शक्नोति । नहि पाषाणः स्वत एव गच्छति, गृहादिकं निर्मातुं वा समर्थो भवति । अतः तस्यापि केनचित्प्रवर्तकेन भाव्यमेवेति-पर्य्यवसन्ने त्वीश्वरस्यैवानुधावनं भवति । तेषामपि जडभूतानां कर्मणां नियामकत्वेन, तत्तत्कर्मफलदत्वेन

चेश्वर एव शरणीकरणीयः। अतो जैनमतेऽपीश्वरस्तु सम्मान्य एव। दृश्यतेऽपि मन्दिरादिस्थापने, मूर्तिपूजादिना च, समुपासनादौ रूपान्तरेण मान्यता।

चार्वाक-विकासवादादयस्तु सुशीलस्य कस्यचन धर्मानुयायिनः समुद्धता समुच्छृङ्खला सन्ततिरिव निजजननीजनकयोरेव दिगम्बरं समुपहासमिवाऽऽचरन्तो दृश्यन्ते। ते तु तथैव प्रवर्तन्ते—यथा—"अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः। दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीयमाना यथाऽन्धाः।" ( कठोप० २। ५ ) एते तु अन्धंतमः प्रविष्टा इव प्रवर्तन्ते।

एते हि प्रायः प्रत्यक्षवादिनः। नैते पुनर्जन्मादिकं, परलोकम् स्वर्गनरकादिकं ईश्वरं किञ्चान्यदपि न मन्वते। नैते विश्वसन्ति प्रत्यक्षातिरिक्ते कस्मिन्नपि वस्तुनि। परन्त्वेतद्भ्रममूलकं सर्वम्। तथाहि यदि ते प्रत्यक्षमेव प्रमाणीकुर्वते, तर्हि प्रत्यक्षातिरिक्तं किमप्यन्यत् प्रमाणं शाब्दादिक न स्वीकुर्वन्ति चेत्-तर्हि ते स्वात्मानमपि स्वपितृजन्यत्वं कथं साधयिष्यन्ति। कथं स्वपितरम्, अयमेव मे पिता, इयमेव वा मे जननी साधयितुं शक्ष्यन्ति। स्वात्मचाक्षुषज्ञानस्याऽविषयत्वाज्जननीजनकयोः। अगत्या च स्वीयजननीजनकज्ञानार्थं आप्तवाक्यानामेवाऽनुसरणं करणीयमेव भविष्यति। तदा आप्तवाक्यानि शब्दस्वरूपाणि, अतः शब्दप्रामाण्यमुररीकृत्यैव स्वीयपितृसिद्धिर्भवति तद्वदेव सर्वेषामाप्तभूतानां वेदानां वाक्यानि प्रमाणीकृत्यैव सकलचराचरोत्पादकत्वेनैवेश्वरसिद्धिः क्रियेत। इति स्वीकरणीयमेव तैरपि। अन्यथा न ते स्वात्मनो जननीजनकसिद्धिमपि कर्तुं पारयन्ति प्रत्यक्षदर्शनाऽभावात्। तेषां स्थितिस्तु "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैवमाप्नुयात्।" ( इति कठोप० २-२३ ) "नैतादृशान् भगवान् स्वात्मनो दर्शनं कारयति। अतः ते भगवद्दर्शनाऽभावात् नेश्वरं मन्यन्ते। यावच्च तेन तथा श्रद्धावन्तः सदाचारवन्तो विशुद्धवासनायुक्ता विशुद्धहृदयाः सततध्याननिरताः अनन्यगतिकशरणापन्नाः प्रकृष्टसद्भावा भविष्यन्ति न तावत्ते भगवन्तं द्रष्टुं प्रभविष्यन्ति। उक्तञ्च मुण्डकोपनिषदि—

"न चक्षुषा गृह्यते नाऽपि वाचा नान्यैर्देवैस्तपसा कर्म्मणा वा।"
ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यते ध्यायमानः।"

किञ्च "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन
यमेवैष वृणते तेन लभ्यस्तस्यैष आत्मा वृणते तनुं स्वाम्॥"

इत्यादिभिः श्रुतिभिः स भगवान् यमेव वृणुते तेनैव सः लभ्यो भवति नाऽन्येनेति।

अस्तु। ये च परमाणुवादिनः सन्ति, तेषां मते परमाणव एव सृष्टिकर्तारः, नैवेश्वरः। इति तेऽप्यज्ञानभ्रान्ताः मनीषाविहीना एव। न ते जानन्ति यत् परमाणवोऽपि जड़ाः सन्ति, न तेषु चेतनत्वम्, तर्हि कुतस्तेषु कर्तृत्वसामर्थ्यम् ? यदि च स्वत एव संघटन-विघटनशीलाः, तर्हि कुतो न सर्वथा संघटनम्, किंवा सर्वदैव विघटनमेव ? कथञ्च न्यूनाधिकभावेन, मानवपशु-पक्षि जड़चेतनानां विभिन्नजातीया विभिन्ननामरूपगुणक्रियाकलापमयी सृष्टिः ? परमाणवो जड़ाः मूकाः सन्ति कथं नानानामरूपभेदान् प्रकल्प्य नानानामभिर्व्यवहारकारकाः संवृत्ताः। कथं नाम नैकविधा सृष्टिर्जाता। कथं न जलीयैः परमाणुभिर्वायुः समुत्पद्यते। कथं वा वायवीयैः पृथिव्याः, पार्थिवैश्चाकाशस्य समुद्भूतिः। कस्तत्र तेषां नियामकः, यत् पार्थिवैः पृथ्वी, जलीयैर्जलान्येव। अतो यः कश्चन तेषां नियन्ताः स एवास्माकमीश्वरः। किञ्च परमाणूनामप्युत्पत्तिः कुतो जाता। कश्च तेषामुत्पादकः। तेष्वपि कथं च जलीय-तैजस - वायवीय - पार्थिवादिभेदप्रयोगः सम्भूतः। को वा तेषां विभेदको जलादिनामनिर्माता, तादृग्गुणस्वभावोत्पादकः ? ये हि रस - घन - तरल - विरल-भावतामापन्नाः इति कस्तेषां प्रवर्तकः ? अतो यो हि प्रवर्तकः स एवेश्वरः। तत्र परमाणुषु तथाविधायाः शक्तेः समुत्पादकश्च कः ? तथा नानाविधां सृष्टिं कलयन्तीति विवेचनेन सिद्धयति यत्—तन्मूलाधारकस्तथाविधसामर्थ्यदाताऽप्यस्ति कश्चनेश्वर एव।

अतः तथाविधस्य ईश्वरस्य ज्ञानमपि तत् प्रसादजन्यम्। प्राप्तिश्च तदीयाऽनुग्रहेणैव "यमैवैष वृणुते तेन लभ्यः।" इति नियमात्। उक्तञ्च "अलौकिकं तत्प्रमेयं न युक्त्या प्रतिपद्यते। तपसा वेदयुक्त्या वा प्रसादात्परमात्मनः।" नान्यः पन्थाः। भगवतः प्राप्तेस्त्रीण्येव साधनानि सन्ति-एकम्-तपः साधनम्। द्वितीयम्-वेदवचनानामनुसरणम्। तृतीयञ्च भगवतः कारुण्यमेव। नान्यत्।

अतः द्वितीयं वेदवचनम्-हि—"पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते॥"

अतोऽपि यदि एषां मलिनतमे मानसे भगवान् न निवासं कल्पयति तर्हि-तदानीन्तनी श्रीमदुदयनाचार्यस्यैव सूक्तिः स्मृतिपथमुपयाति—यत्—

"इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते
येषां नाऽऽस्पदमादधासि हृदये ते शैलसाराशयाः॥

अर्थात् हे भगवन् ! अस्माभिर्वारंवारं श्रुतिवचनशतस्रोतोवारिभिः प्रक्षालितेऽपि येषां हृदये भवान् निवासं न कामयते किंवा ये भवन्तं स्वीये स्वान्ते

न स्थापयन्ति ते मन्दभाग्याः वज्रसदृशहृदयाः सन्ति । इति शम् ।

इत्थं श्रीरामानन्दवदनारविन्दनिष्यन्दायमानवचनसुधानिर्झरीप्रवाहे विश्रान्तिमुपगते, सहसा प्रासरत् सभामण्डपे सर्वतो जयजयेति हर्षप्रकर्षध्वनिः । समस्ताः प्रशस्ताः सभास्थाः सभास्ताराः निर्निमेषामतिस्नेहसान्द्रां स्वीयां नयनविलसितिं, मन्दस्मितेषद्विकसितकुन्दकोरकविलसिते, प्रमोदोल्लासविकचितेन्दीवरयुगलपरिराजिते, श्रीरामानन्दाऽऽनन्दिताननसुधांशुमण्डले, नवनवोल्लासलास्यं कलयन्तीमालोक्य प्रमोदमवापुः ।

कतिपयाः प्रकामप्रीतिपुषः प्रमोदाऽऽमोदजुषः सान्द्राऽऽनन्दसमृद्धयः सपदि सुमनसां सरसां वृष्टिमाचेरुः ।

तदानीम् समुपगतं सायन्तनसन्ध्यावन्दनसमयमालोक्य सभाध्यक्षैः श्रीमदाचार्य्यं श्रीराघवानन्दवर्य्यैः समुद्घोषितम् यदद्य भगवान् मरीचिमाली सर्वं दिनं श्रीमतां शास्त्रार्थवचनसुधापानपरितृप्ततृट् सम्प्रति विश्रामार्थं वारुणीदिगङ्गनासमर्हणामुपलब्धुकामोऽस्ताचलं श्रयते । अतः सभाकार्यं सम्पन्नमभूदिति श्रीमन्तोऽपि सान्ध्यसमयोपासनाविधिं विधातुं स्वस्वावासभवनं श्रयन्ताम् इत्थं सभाविसर्जनप्रक्रियामुदीक्ष्य सानन्दं प्रशंसन्तः श्रीरामानन्दप्रतिभापाटवम् - स्व - स्वभवनमलञ्चक्रुः ।

---

# षोडशः परिच्छेदः

श्रीरामानन्दस्य गतदिवसीयायाः शास्त्रार्थप्रक्रियायाः प्रशस्तिः सर्वत्राऽऽ-कोणकोणं काश्यां प्रास्तृताऽभवत्। अद्य शास्त्रार्थार्थमपरो दिवसः। सभामण्डपञ्च सुविस्तृतं सुसज्जितं सुमनोमालिकादिभिरलङ्कृतं सम्पादितम्। तस्मिन् द्विगुणतरा जनानाम् दर्शकानाम् श्रोतृणाम् वक्तृणाञ्च समुपस्थितिः सञ्जाता सुदूरदूरादपि समवेतानां विपश्चिदविपश्चिमानां निज-निजान्तेवासिवृन्दबहुलानां समागमेन सकलं सभामण्डपं विद्वज्जनसमाकुलं कलकलाऽऽकुलितमभिनवनगरमिवाशोभत। समागतमानवसम्मर्देन पूरिताऽशेषपद-मनास्पदमभूत् तिलमात्रावकाशस्यापि।

तदानीमेव सर्वेषामेव दर्शनपिपासाऽऽकुला चातकचयानुकारिणीव-श्रीरामानन्दाननचन्द्रचन्द्रिकामाचामितुमत्युत्कण्ठिताऽनन्तचकोरीनिवहायमाणा सतृष्णा दृष्टिः सपदि समायाते श्रीरामानन्दे न्यपतत्। श्रीरामानन्दोऽपि मन्दस्मितमधुरां सरसस्नेहसलिलसम्भृतमुदिरमालाविलसितोल्लासप्रस्रुताऽसारप्रसरां विनयश्रद्धावृद्धां विलोकनसुधां प्रावर्षत्।

प्रागेव निश्चिताध्यक्षाः श्रीराघवानन्दाचार्याः स्वस्थानमलङ्कुर्वाणा एव समारम्भात् प्राक् मङ्गलाचरणाय स्वविद्यापीठीयान्तेवासिनः प्रैरयन्। मङ्गला-चरणानन्तरं समारब्धमभूत् सभाकर्मेति।

ततः पूर्वपक्षी विपक्षी कश्चन सर्वदर्शननामधेयो विद्वत्तल्लजः प्रोवाचः— श्रद्धेया आचार्यवर्य्याः, विद्वद्गोष्ठीगरिष्ठाः वरिष्ठाः विपश्चित्प्रवराः, श्रोतारश्च! गतदिवसे श्रीरामानन्दब्रह्मचारिणा ईश्वरसिद्धिविषये वैदुष्यपूर्ण एव स्वपक्षः सप्रमाणैः वेदोपनिषद्गीता-पुराणस्मृतिवाक्यवल्लीप्रसूनपरिमलोल्लासविकासैः समर्थितः सकलजनहृदयसंवेद्यः प्रत्यक्षमिवाऽक्षिलक्ष्यीकारितः। परन्तु प्रसरति तत्रापि कतिपयस्थले सदेहः सन्देहः। यथा हि सांख्ये स्पष्टमेव निर्दिष्टमस्ति यत् 'ईश्वरासिद्धेः" इति। यदि ईश्वरस्य असिद्धिमेवोद्घोषयति सांख्यीय-

राद्धान्तः—तर्हि कथम् "ईश्वरसिद्धिः" सञ्जाता। हठात् साध्यते चेदीश्वरसिद्धिस्तर्हि प्रदर्शयतु तावत् "ईश्वराऽसिद्धेः" कोऽन्योऽर्थः? श्रीरामानन्दः सहसैव सिंहगर्जनां वितन्वन्नुवाच—भगवन्! न केवलशब्दोच्चारणमात्रं कर्णकुहरीकृत्यैव निर्णयो दातव्यः। निर्णयात् प्राग् अन्वेषणीयो भवति सर्वत्रैव पूर्वाऽपरसम्बन्धप्रसरः। वाक्यमिदम्—कस्मिन् प्रसङ्गे, कस्मिन् प्रकरणे कस्यां परिस्थितौ, कुत्र कथं वा प्रयुक्तमिति, किमप्यनालोच्यैव विवेकविकलता-पराहतधिया यथेच्छं भणितमिहेश्वराऽसिद्धिरिति ?

'पण्डितपुङ्गवाः! क्षणं विविच्य, विधीयतां विवेकवन्धुरा विज्ञानदृक्। भगवन्! सर्वसाधारणमतिवेद्यस्तु "ईश्वरासिद्धेः" ईश्वरस्य असिद्धिरेवार्थः। परन्तु—कां भावनामङ्गीकृत्य प्रयुक्तमिदं पदमित्यप्यालोच्यताम्। ईश्वरो हि न सर्वथा लौकिकप्रत्यक्षविषयो भवितुमर्हति। यतो हि—"नाऽयमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।" किञ्च "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।" "न चक्षुषा गृह्यते नापि वाचा।" इत्यादिभिः लौकिकेन्द्रियगम्यो न भवति भगवान्। सूक्ष्मातिसूक्ष्मविषयत्वाद् भगवतः। लौकिकेन्द्रियाऽगोचरः सः। स तु—'यमेवैष वृणुते तेन लभ्यः" अतः एवोक्तम् न लौकिकादिप्रमाणैः साधितुं शक्यते भगवान्। अलौकिकस्वरूपत्वाल्लौकिकप्रमाणातीतः। अतः सर्वत्र व्यापकत्वेऽपि, सर्वरूपत्वेऽपि, सर्वकर्तृत्वेऽपि, सर्वमयत्वेऽपि न सः प्रत्यक्षीकर्तुं शक्यते अतएव लिखितम्-"ईश्वराऽसिद्धेः" इति।

किञ्च सांख्यसिद्धान्तानुसारं "ईश्वरो न मुक्तो न च बद्धः। मुक्तत्वे तु अभिमानाऽभावः अभिमानाऽभावे च सृष्टिकर्तृत्वमेव न स्यात्। बद्धत्वे च सृष्टिशक्तेरेवाऽभावः स्यात्। अतः मुक्तबद्धत्वाऽभावमादायैव लौकिकप्रत्यक्षाऽगोचरत्वप्रतिपादनायैव—"ईश्वराऽसिद्धेः," प्रयोगः कृतः। न त्वलौकिकप्रत्यक्षस्य न वा भगवदनुग्रहोपलब्धेः प्रत्यक्षत्वस्येति। अन्यथा—"युक्तात्मनः प्रशंसा उपासनासिद्धस्य वा।" इति न वदेत्। प्रत्युतेत्थं कथनेन तु ईश्वरसिद्धिविषयको भ्रमोऽपि निरस्त एव।

पुनः श्रीसर्वदर्शनः "ब्रह्मणः साकारनिराकारत्वविषये" शङ्कां चकार। तदुत्तरमपि श्रीरामानन्दः सपदि निशङ्कं दत्तवान्—"उभयविधमेवेति"।

श्रीसर्वदर्शनः—'एककालावच्छेदेन तेजस्तिमिरयोः कथं सामानाधिकरण्यम्?

श्रीरामानन्दः—"विरुद्धधर्माश्रयमेव" ब्रह्मणो लक्षणम्। विषत्वाऽमृतत्वयोरेकत्रैव ब्रह्मणि विद्यमानत्वमेवाऽलौकिकत्वं तस्य। नहि कश्चन लौकिकः पदार्थः

परमेश्वरः, यत्र विरुद्धधर्माऽश्रयत्वं व्याहन्येत। उक्तञ्च--"यस्यच्छायाऽमृतं यस्य मृत्युः" ( ऋग्वेदे १० । १२१ )। पुनः—

श्रीसर्वदर्शनः—"यदि सः साकारः तर्हि कथं न प्रत्यक्षः ! निराकारश्चेत् कथं सृष्टि-कर्तृत्वं तस्य ?

श्रीरामानन्दः—भगवन् ? काष्ठेऽग्निर्विद्यते न वा। विद्यते चेत् कथं न दृश्यते, कथं वा न प्रज्वलति ज्वालयति वा तत्काष्ठम् ? नो चेत् "अरणीमन्थनकाले" घर्षणात्कथमुत्पद्यते ? एवमेवेश्वरेऽपि। यथा घर्षणात् प्राक् काष्ठं निरग्नि-कमेव; घर्षणप्रक्रियाऽभावे काष्ठेऽप्यग्निप्रतीतिर्न भवति, घर्षणानन्तरमग्नेः प्रादुर्भावात् साग्निकत्वप्रतीतिः। तद्वदेव साकारब्रह्मदर्शनाऽनूपरूपतपोब्रह्म-ज्ञानभगवदनुग्रहादितदिच्छाराहित्येन न भगवतः परब्रह्मणः परमेश्वरस्य साकारप्रतीतिः। अतो ब्रह्मणि निर्गुणत्वव्यवहारः। भगवदिच्छातद-नुग्रहतपोज्ञानादिसाधने समुपलब्धे साकारब्रह्मणः परमात्मनः स्वभक्तेप्सित-विग्रहादिश्रीराम-कृष्णादिरूपेण साकारं ब्रह्मदर्शनम्। इति परमात्मन उभयविधत्वमेव।

श्रीसर्वदर्शनः—तर्हि निराकारः कथं सृष्टिं रचयति ?

श्रीरामानन्दः—भगवन् ! जीवात्मा शरीरी, अशरीरी वेति भवानेव वदतु ?

श्रीसर्वदर्शनः—"स तु अशरीरी" सर्वेषां मते। शरीरिणस्तु जन्ममरणादयो भवन्ति।

श्रीरामानन्दः—तर्हि अशरीरी चेत्—शरीरस्थः सन् शरीराङ्गानां समेषां सञ्चालनं; नियन्त्रणं वा कुरुते न वा ?

श्रीसर्वदर्शनः—कथं, न, निःसन्दिग्धमेतत्। अशरीरी सञ्चालयत्येवाङ्गानि।

श्रीरामानन्दः—तर्हि भगवन् ! निराकारे परमात्मनि कः सन्देहः तस्य सर्वज्ञस्य सर्वं कर्तुमकर्तुमन्यथाकर्तुं सर्वसमर्थस्य सृष्टिकरणे।

श्रीसर्वदर्शनः—किन्तु-भवतामीश्वरस्तु-"आप्तकामो विद्यते तर्हि कथं सः निरर्थकं लोकाऽनुसर्जने, सृष्टिप्रपञ्चविस्तारे, निपतति ?

श्रीरामानन्दः—भगवन्-न केवलं स आप्तकाम एव, अपि सः सर्वकामोऽपि सर्वकर्मा; "सः सर्वकामः सर्वरसः, सर्वगन्धः सर्वमिदमभ्यात्तः" इति ( छान्दोग्य खं०-१४। मन्त्र ४ )। किञ्च—विरुद्धधर्माश्रयताया एव वैशिष्ट्यम् भगवति तथा हि आत्मकामोऽपि सर्वकामः। तथैव अकामोऽपि-सर्वकामः। तथैव

अकामोऽपि सर्वकर्ता। "न तस्य कार्यं करणञ्च विद्यते, न तत्समश्चाऽभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया 'च' ( छांदो० ६।८ ) तथैव "येनावृत्तं नित्यमिदं हि सर्वं, ज्ञः कालकालो गुणी, सर्वविद्यः। तेनेशितं कर्म विवर्तते ह पृथ्व्याप्यतेजोऽनिलखानि चिन्त्यम्।" । (छां. ६।२) तथा च—

"स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद् यः प्रधानक्षेत्रज्ञपतिर्गुणेशः, संसारमोक्षस्थितिबन्धहेतुः।" ( छां० ६।१६ )

इति आप्तसमस्तकामस्यापि सकललोकेशितुः सृष्टिकरणे प्रवृत्तिर्हि— "लोकवत्तु लीला कैवल्यम्" इत्यादि श्रुत्यनुसारं यथा बालाः स्वयमेव स्वमनोविनोदायैव मृण्मयक्रीडनकानि निर्माय क्रीडन्ति, तथैव भगवतोऽपि लीला। एवमेव भगवतः स्वेच्छयैव "अवतारधारणावसरेऽपि" करुणा-वरुणालयस्य जगत्प्रवाहपतितानां कर्मबन्धनिगडितानां सदसत्कर्मफलभोगानुसारं सुखदुःखभोगपाशपतितानां समुद्धारार्थमेवाऽवतारग्रहणप्रयोजनम्।

श्रीसर्वदर्शनः—यदि भगवतः, अहैतुकी कृपैव सृष्टिकरणे हेतुस्तर्हि कथं न भगवति वैषम्य-नैर्घृण्य-दोषो समापतेताम्। यतो हि केचन जीवाः सुखिनः, कतिचन दुःखार्दिताः, एके धनिनः, अपरे दीनाः कपर्दिकालब्धितोऽपि वञ्चिताः, कतिपयाः सशक्ताः अन्ये दुर्बलाः इत्यादिस्वरूपादिभेदेन विभिन्नतायां वैषम्यं; दुःखसुखानुभोगे करुणाकार्पण्याद् भगवति दयोद्रेकदारिद्र्यान्नैर्घृण्यं कथं न?

श्रीरामानन्दः—ईदृग्विधायाः विषमतायाः कृते न भगवान् दोषाऽऽस्पदम्। तत्र जीवानां तत्कृतसुकृतदुष्कृताचरणजनितजन्मजन्मान्तरीयभोग्यशेषाण्येव हेतवस्तेषां सुखदुःखाद्युपभोगादौ। तदानीं समुत्पत्तिकाले स्व-स्वशुभाशुभकर्माऽनुशयसहकृता एव जीवाः समुत्पद्यन्ते। "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन।" इति श्रुतिः। किञ्च, "सृष्टिः कर्माऽनुसारिणीति" विचिन्त्य न भ्रमितव्यम् किंवा कर्मकर्तारो जीवाः अतस्त एव हेतवः स्वोत्पत्तौ इत्यपि न। यद् कर्मप्रभावादेव जीवानामुत्पत्तिर्न तु ब्रह्मणः, इति-यतो हि जीवानामुत्पत्तिस्तु भगवदधीनैव। किन्तु उत्पत्त्या सहैव तत्तत्पूर्वजन्मार्जितकर्माऽनुशया अपि तैरेव जीवैः प्रलयकालसमये स्व-स्वकर्माऽनुशयाः शुभाशुभफलभोगशेषाः अपि निक्षेपरूपेण भगवति कोषीकृताः तानपि तथैव सुरक्षितान् तेभ्यस्तेभ्यो जीवेभ्यः विभज्य वितरति विभुः। अतः स्व-स्वनिक्षिप्तनिधिभूतान् कर्माऽनुशयानादायैव समुद्भूय तदनुसारं फलं स्वकृतकर्मजन्यं भुञ्ज-

न्तीति न भगवति वैषम्य-वैघृ ण्यदोषौ, न वा तदुत्पादत्वे, जीवानां सृष्टि-करणे काचन क्षतिरपि। यथा हि—क्वचन केनाऽपि कारणेण वह्नौ दाहानुकूला शक्तिः चन्द्रकान्तमण्यादिसमवधाने न प्रतीयेत, तर्हि न हि दाहकताऽभाववान् वह्निर्भवतीति व्याहर्तुं शक्यते केनापि, तथैव भगवति परब्रह्मण्यपि न जीवानां कृतित्वं ( कर्तृ त्वम् ) इति कथितुं शक्यते पार्य्यते।

भाष्यकारेणाप्युक्तम्—"ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः" यथाहि पर्जन्यो वारिवर्षणेन अन्नौषधादौ पुष्टिं सुरसवृद्धिमेव वितनुते न तु औषधाऽन्नादौ विविधजातीयत्वकल्पनम्। अन्नौषधानाम् समुत्पादने हेतुर्वृ ष्टिर्भवति - अन्नौषधादयस्तु स्व-स्वबीजानुरूपमेव स्व-स्वरूपं लभन्ते। तथैव जीवानामुत्पादकोऽपीश्वर एव किंतु उत्पादितास्ते कर्मफलं तुं स्व-स्वसुकृतदुष्कृताऽऽचरिताऽनुकूलमेव भुञ्जन्तीति। सर्वं स्पष्टम् ( स्फीतमेव )। न वा जीवा एव स्वयं स्वात्मानमुत्पादयितुं प्रभवो भवन्ति। न वैषा प्रक्रिया क्वचन लोके दृष्टैव। किञ्च, जीवाः स्वयमेव न स्वात्मोत्पादका भवितु प्रभवः। यतो हि ते, अज्ञाः अल्पज्ञाः परिमितशक्तिशालिनः सन्तीत्यतः ते सर्वदैव देश-काल-कर्मस्वभाव-गुणादीनां फलोपभोगेऽपि न स्वतन्त्राः। भगवत्तन्त्राः परतन्त्राः सन्ति। यदि च ते स्वतन्त्रा भवेयुस्तर्हि न कोऽपि स्वेच्छया यावद्बुद्धिवलोदयं दुःखाऽनुभवं कर्तुं कामयते। न वा तादृशंकर्मकर्तुमपि प्रभवति येन दुःखभाक् स्यात्। यच्च करोति विवशः सन् अनुभवति च दुःख्यान्यपि। अतो न स्वतन्त्रं पाणिनिनियमाऽनुसारञ्च कर्ता तु यः स्वतन्त्रः स एव भवति। "स्वतन्त्रः कर्ता" इति सूत्रम्। अतः जीवात्मा न सृष्टिकर्ता न नियन्ता-न च स्वातन्त्र्येण फलभोक्तैव। अतः सकलजगत्कर्ता, नियन्ता फलाऽफलभोगप्रदाता, सर्वशक्तिमान् भगवानेव।

श्रीसर्वेश्वरः—भगवन्! ईश्वरस्तु चेतनसृष्टिश्चाऽचेतना, तर्हि चेतनात् कथमचेतनाया उत्पत्तिः।

श्रीरामानन्दः—हन्त! अनुभवमपि, कथमपलपसि? चेतनशरीराद् यथा नखलोमादीनामचेतनानामुत्पत्तिर्भवति तथैव सर्वशक्तिमतो भगवतः प्रपञ्चस्याऽखिलस्येति किमाश्चर्यमिति।

श्रीसर्वदर्शनः—यदि "भगवान् एक एव ध्येयो ज्ञेयो द्रष्टव्यश्चेति सः कथं न प्रकाशयति। प्रत्यक्षं कथं न दृग्विषयीभवति सर्वेषामिति?

श्रीरामानन्दः—भगवन् ! कदा स भगवान् कं निषेधति सत्यप्रकाशमवाप्तुम् । स तु सर्वत्रैव वारं वारं समुद्घोषयति यत् "न कश्चित् पापमाचरेत्" "नाचरेद्दुष्कृतं कर्म, न वा दुर्वचनं वदेत् ।" आत्मानं गमयेद्ब्रह्म, मनः संयोज्य सेन्द्रियम् । "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।" मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।" "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।" इत्यादि श्रुतिस्मृतिपुराणादिषु शतशः प्रेरणात्मकानि वाक्यानि सत्कर्मकरणीयानि, दुष्कर्मादिकृतिनिषेधकानि-"श्रेयसि वर्तमानो भगवन्तमुपासीतेति" परब्रह्मोपासकानि मिलन्ति, किन्तु जीवो हि यदा न प्रवृत्तो भवेत् तर्हि को दोषः परमात्मनः ।

श्रीसर्वदर्शनः—तर्हि जीवः कथं विमुखस्तिष्ठति, कथं न कल्याणं समीहते ?

श्रीरामानन्दः—अस्य समाधानं तु स्वयमेव भगवताऽऽज्ञप्तम्—यत्

"न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः" ॥ (गीता ७।१५)

श्रीसर्वदर्शनः—निरवधिकरुणावरुणालयः सः कथं न स्वीयाऽकारणाऽनुग्रहेणैव मूढास्तान् समुद्धरेत् ?

श्रीरामानन्दः—मायया समपहृतचेतनास्ते मायाजालं, तत्प्रभावं वाऽनादृत्य न भगवन्तं शरणीकर्तुं कामयन्ते, प्रायः पराङ्मुखा एव सर्वदा वहिर्भूताः परिभ्रमन्ति, तर्हि भगवान् किमर्थं तान् स्वोन्मुखीकृत्य तदुद्धारार्थं श्रमं विदध्यात् । किञ्च मायाऽपि तान् कथं त्यजेत् न वा ते मायामपि त्यक्तुं यतन्ते । न च भगवति तेषां विश्वासः न वा श्रद्धेति, तर्हि कथं ते भगवद्वाक्यमपि विश्वसेयुः । विना च भगवदाश्रयं न मायाबन्धान्मुक्ता भविष्यन्ति । "सर्वदाऽनन्यभावेन भगवच्चरणाश्रयः । समर्थोऽनुग्रहस्तस्यमायाबन्धाद्विमुक्तये ।" "अन्यथा तु गतिर्नास्ति सैव माया दुरत्यया ।" "मन्यन्ते प्रेयसीं मायाम्, तयाऽऽलिङ्गितविग्रहाः, अन्याऽधिकारसंसक्ताः, कथं तानुद्धरेत् प्रभुः । उक्तं भगवता साक्षात्, सन्ति चेन्मुक्तिकांक्षिणः "सर्वतो मन आकृष्यमयि चित्तं निवेश्य चेत्, मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते," । "नान्यथा मोहिनी माया तरितुं शक्यते जनैः । सर्वथा यतमानोऽपि न बन्धाच्च्यवते जनः ।"

श्रीसर्वदर्शनः—यदि शरणागत्यनन्तरम् मायाबन्धविनिर्मुक्तिस्तर्हि कृतं हीश्वरेण ?

श्रीरामानन्दः—भगवन् ! भगवान् नापेक्षते कस्यचन शुभाऽशुभकर्माणि । स तु जनस्य सुदृढासक्तिं पश्यति स्वात्मनि । यदि स निश्छलभावेन सत्यसङ्कल्पतया, अनन्यभक्तियोगेन सर्वथा निःसाधनः सन्—"प्रपन्नोऽस्मि तवाऽनघ" इति प्रार्थयते तदा भगवान् कारुण्यवारांनिधिः सद्यो दयते, सत्वरञ्च तं स्वकीय-मायाबन्धनात् मोचयति वितरति च तस्मै सर्वतोऽप्यभयम् । उक्तञ्च

"सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ।।" इति ।

श्रीसर्वदर्शनः— "द्रष्टा चेद् भगवान् साक्षात् जीवोऽघं कुरुते कथम् ?"
कथं वृद्धिश्च पापानाम् किं न रुन्ध्यात् तदीश्वरः ?

श्रीरामानन्दः —नैवेश्वरेऽस्य विश्वासः शास्त्रे तद्वचनेऽपि वा ।
नो वा पुराणपटले, ह्यतः पापं करोति सः ।।

विश्वासः सुदृढोऽस्य स्यात्—पापाचरणतः पुरा ।
स एव भगवान् सद्यो निषेधेत हृदिस्थितः ।

सोयं विचिन्तयेत्किं वा, हरिः सर्वत्र पश्यति ।
स हि सर्वत्रगो, नाहं चरिष्ये दुष्कृतं क्वचित् ।। इति ।

स्मृतिरपिः— "यमो वैवस्वतो देवो, यस्तवैष हृदिस्थितः ।
तेन चेदविवादस्ते, मा गङ्गां मा कुरून् गमः ।। (मनु०)

श्रीसर्वदर्शनः—भगवन् ! अस्ति ईश्वरप्राप्तेः कश्चनोपायः ?

श्रीरामानन्दः—कथं न ? तस्य निष्कामा सर्वतोऽधिकस्नेहरूपा सर्वात्मभावा भक्तिरेव तत्प्रापिका । उक्तञ्च स्वयं भगवतैव गीतायाम्—"नाऽहं वेदैर्न तपसा न दानेन न चेज्यया, शक्य एवंविधो द्रष्टुं-दृष्टवानसि मां यथा । "भक्त्याऽहमेकया ग्राह्यः अहमेवंविधोऽर्जुन, ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्चपरन्तप ।" "भक्त्या लभ्यस्त्वनन्यया" "भक्त्या मामभिजानाति यावान् यश्चाऽस्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा, विशते तदनन्तरम् ।" योगसूत्रमपि "ईश्वरप्रणिधानाद्वा" अर्थात् सर्वक्रियायां परमात्मनि समर्पणम्, कर्मफलानां संन्यासः सर्वभावेन परित्यागः । सम्यक् भगवत्येव न्यासः निक्षेपः, समर्पणं वा । किञ्चोक्तं गीतायाम्—"मत्कर्मकृद्‌ मत्परमो, मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः, स मामेति पाण्डव !" इत्यनेन स्पष्टीकृतम् स्वयमेव भगवता—यद् सर्वदा सर्वभावेन सङ्गदोषविवर्जितः, निस्पृहः कर्मफल-

परित्यागी केवलं मदर्थं(भगवदर्थं)मेव कर्म कुर्वाणो यो हि मद्भक्तो भवति सर्वतोऽधिकस्नेहवान्, स एव मां प्राप्नोति न केवलं प्राप्नोत्येव, अपितु वशीकरोति। उक्तं च --"वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः' सत्पतिं यथा। इत्थं भगवद्भक्तेर्माहात्म्यस्य तु कथैव-"अचिन्त्याऽनन्तगुणा" महत्फला च केवलं ईश्वरज्ञानमेव सकलानन्तजन्मार्जितपापपुञ्जप्रणाशनपुरःसरं परमानन्दममन्दं प्रयच्छति। उक्तञ्च—"ज्ञात्वा देवं मुच्यते सर्वपाशैः।" "तरति शोकमात्मवित्" "तेषां सुखं शाश्वतं नेतरेषाम्।" "विद्वान् हर्षशोकौ, जहाति।" "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति।" इत्याद्यनेकग्रन्थेषु प्रतिपादितमस्ति यत्—'ब्रह्मज्ञः सर्वानन्दमवाप्नोति।'

इत्थम् हृदयग्रन्थिविभेदकानि विविधशास्त्रीयवचनानि श्रुत्वा, ज्ञात्वा च भगवद्भक्तेरुत्कृष्टतमं माहात्म्यं, ब्रह्मज्ञानस्य ईश्वरज्ञानस्य च वैशिष्ट्यम्-स्वयमेव श्रीसर्वदर्शनः पण्डितप्रकाण्डबन्धुः स्वीयां चार्वाकगुणां भावनां विहाय श्रद्धावृद्धान्तरस्वान्तः प्रशान्तः सन् नितान्तसन्तुष्टः, सदेकान्तभक्त इव निर्भ्रान्तः प्रोवाच केनोपनिषच्छ्रुतिम्—

"इह चेदवेदीदथ सत्यमस्ति, न चेदिहावेदीन्महती विनष्टिः।"

ततः सः प्रणम्य न्यवेदयत्—भगवन्! न मे केवलं प्रश्नानामेवोत्तरं दत्तम्, अपितु मदन्तराले विविधभावनान्धकारावृते विज्ञानज्योतिरपि प्रकाशीकृतम् धन्यो भवान् धन्यतमश्च स गुरुर्येनाऽध्यापितो भवानिति। समन्ततो धन्यवादघोषैः साकं सभा विसर्जिताऽभूत्।

—

# सप्तदशः परिच्छेदः

वहो: कालात् स्वहृदयचन्दनस्य निजनयनानन्दनस्य स्वतनयस्य मुखचन्द्रावलोकनवञ्चिता, निषिञ्चिताश्रुधारामलिनीकृतोरस्तटीका, चिरविरहसन्तति-समुत्सारितसकलशृङ्गारसाधनाऽऽभरणपटीका, द्वादशवार्षिकावधिकसुतवियोग जनितज्वलनज्वालावलीढहृदयोद्गारगर्भितोष्णनिःश्वासपरिम्लानाऽधरपुटा, प्रत्यहं चिन्तासन्तानसमाकुला, मञ्जुलाऽऽचरिता, समाराधितभगवच्चरणारविन्दमकरन्द-पानपोषितसकलावयवाऽपि निरवयवेव, परिचर्यानिपुणनिखिलपरिजनपरिसेविताऽपि सेवितैकान्तगृहकोणा, शोणारविन्दवदना विचिन्तयति स्म प्रतिपलं श्रीरामानन्दाननेन्दुम् ।

सेयमविरलविगलिताश्रुखिन्ना वारं वारं धिक्कुरुते स्म स्वकीयमात्मानम् । समुपालभते स्म नैजं दुर्दैवम् । अहो कीदृशी हतभागाऽस्मि या विद्यमानेऽपि भासमानविद्यावैभवोल्लासविकासितविज्ञानराशौ, निजवदनसुधांशुसुधाऽवदातीकृत-भुवनमण्डले, स्वप्रतिभाप्रभाचमत्कृतिविस्मायितसकलपण्डिताऽऽखण्डले, सारल्योद्भासितनये तनये, पुत्रपरिलालनवञ्चिता समञ्चिताऽधिदेवाऽपि, तन्मुखचन्द्र-चन्द्रिकाऽऽचमनचञ्चलचञ्चुचणा चकोरीव कुहूयामिनीमिव यापयामि निःशेषास्तमीः सन्तप्तान्तःकरणा ।

यावन्नावालोकयम् स्वकान्तकुलकल्पद्रुमाङ्कुरविकसनम् तावत् तदर्थं विविध-विधिविधानानि कलयन्ती, यथा यथा येन यदुक्तम् तथैवाऽऽचरन्ती व्यथामेवान्वभवम् । ततः शास्त्रोक्तरीत्या व्रतोपवास-यज्ञदान-समर्हणाद्युपायैः सततं यतमाना- श्रीकौसल्याहृदयनन्दनाङ्घ्रिसमाराधनोद्दामानन्तपुण्यपरिपाकफल - श्रीरामानन्द-मुखारविन्ददर्शनसौभाग्यशालिनी संवृत्ता । किन्तु पञ्चषवर्षानन्तरमेव पुनर्विद्याध्ययनाय प्रेषितवती स्वनयनतारकं, सकलाधिहारकं, स्वभवनान्धकार-मूकताऽपहारकं, मानसोल्लासकारकम् गृहक्रीडनकम् ।

प्रेषितेऽपि स्वहृदयशकले, अद्य न केवलं दिनानि, मासा ऋतवो, वत्सरो, द्विचतुरब्दा वा सञ्जाता अपितु द्वादशावधिकाः संवत्सरा व्यतीयुः। कियत्कालं धैर्यं धृत्वा स्वात्मानमवगमयेयम्।

स हि मे बालः तत्र यतीनां संन्यासिनामाश्रमे सर्वथा महिलानिवास-परिवर्जिते, महात्मभिः सह संवसन्, अनवलोकितसहचरगणः, परिहृतयथेष्टोपवन-विहरणः कथं निवसति, केन सह हसति, केन च समालपति, आधिव्याधिप्रयुक्त-व्यथाऽवसरे का नाम स्नेहिनी तत्र त समाश्वासयति। का च तत्र तस्य कौमारकाले, सस्नेहमस्यावलम्बनं भवति। का वा मातृसुलभवात्सल्यमुल्लास्य तमनुरञ्जयति। मधुरमधुराऽऽलापेन-च तोषयति, पोषयति च तं का पौष्टिकतत्त्व-सम्भृतमिष्टान्नप्राशनेन। तस्य निराशाऽवसरे का नाम तत्कृते स्वमातृममतां पुरस्कृत्य शुभाशावद्धञ्च तं कलयति, तदीयाञ्च बालसुलभां स्खलितपदां वाच-माचम्य कर्णपुटैः का नाम तत्कृतापराधानवगणय्य, सामवादैः सन्तोष्य स्वहृदयेन संयोजयति। तत्रैकाकी मामकीनो बालः कदाचन जनकं, कदाचिज्जननीं, कदाचित् स्वबालक्रीडासङ्गिनो वयस्याश्च न स्मरति किम्, कुतस्ते तत्र क्रीडासहायाः। इति अनेकधा विचिन्तयन्ती चारुशीला "सुशीला" श्रीरामानन्दजननी स्मारं स्मारं व्यरचयत् प्रस्खलन्नयनवारिनिपातैः समार्द्रां स्वामुरःस्थलीम्। वत्स! अहन्तु सर्वात्मना विवशा, नारी, परञ्च पुरुषस्ते पिताऽपि न स्मरति किमु त्वाम्?

इति वाक्यम् तन्मुखविवराद् यथैव वहिः प्रसरति, तदानीमेव सः सस्मित-विकसितरदनः श्रीपुण्यसदनः सहसैवाऽभ्यन्तरं प्रविश्य तथावस्थितां चिन्ताशत-समाकुलां कुलकामिनीं शुभसन्देशैः प्रहर्षयामास।

प्रिये! मैवं स्वात्मानं स्वसुतचिन्तया परिखेदय, किमर्थं व्यर्थं कष्टायते सुकृत-कारिणी। देवि! केसरिणां कुले केसरीव समुद्भवति। तावकोऽयं नयनाऽऽह्लादनः सम्प्रति सकलस्वात्मीयहृदयाह्लादनः संवृत्तः। स हि काश्यां सकलविद्वद्गोष्ठीगरिष्ठो वरिष्ठो विपश्चिद्वरेण्यः सततशास्त्रार्थकलाकौशलमवाप्य पण्डितमण्डलमण्डनीभूतो जगति विस्तारयति निजकुलकीर्तिकौमुदीम्।

समानमानाः स्वज्ञातेय - बन्धुबान्धवाः सम्प्रति पुण्यसदनपुण्यपुञ्जपरिपाक-मालोक्य प्रभवन्ति स्वचेतसीर्ष्याकषायिताः। अधुनैव यात्रिणः सकुशलं यात्रां समाप्य प्रत्यावर्तिताः श्रावयन्ति मुक्तकण्ठेन प्रत्यक्षमक्षिलक्ष्यीकृतम् प्रकृतं श्रीरामानन्देन विहितं, शास्त्रार्थोदन्तजातम्। यस्मिन् सम्मान्यैर्विद्वत्तल्लजैस्तत्रत्यै-

विजयी श्रीरामानन्दः सादरं सोल्लासं सम्मानितश्चेति। विजयोपहारः प्रसूनहारः समासादितः श्रीरामानन्देन तवात्मजेनेति। किमतः परं काम्यते त्वयाऽन्या तदीया विजयकुशलकामना? इति

श्रुत्वैव प्रसादसुमुखी सुमुखी चतुर्मुखी सुखिनी संवृत्ता सुशीला।

सुशीलाः—स्वामिन्! सत्यमेवैतत् किमु? ईदृशो मे वत्सो रामानन्दः।

पुण्यसदनः—अथ किम्। यावन्तो यात्रिणः समायाताः सर्वेषां रसनारङ्गे एषैव रामानन्दीया विजयवार्ता नर्तकीव नृत्यति।

सुशीलाः—किमयं मे वत्सः, अधुनाऽपि काश्यामेव निवत्स्यति किम्?

पुण्यसदनः—यथा तदीया गुरवस्तमाज्ञापयिष्यन्ति।

सुशीलाः—तर्हि वयमेव तत्र गत्वा स्वसुतमुखावलोकनेन सुखयाम आत्मानम्।

पुण्यसदनः—अवश्यमेव, सादरं समम्मानं समर्थये भवत्याः प्रस्तावम्।

सुशीलाः—अद्यैव एतदुपलक्ष्ये-दक्षिणा-दानैः सन्तोषयामोऽर्थिनः।

---

# अष्टादशः परिच्छेदः

"तस्य किं नाम काठिन्यं गुरुणा योऽनुकम्पितः।" इति नियमानुसारम् आचार्यवर्य्यं श्रीराघवानन्दाचार्यपादैः स्वानुग्रहपुरःसरं सकलवेदवेदाङ्गेतिहास-पुराणस्मृतिपटलमशेषं पाठयित्वा परमां सिद्धिं प्रापितः, सपदि शास्त्रातिगभीर-नीरनिधिं समुत्तारितः, श्रीरामानन्दः प्रियशिष्यः पण्डितमण्डलमण्डनायितः सर्वथा-सुयोग्यः सञ्जातः। सम्प्रति विंशतिवर्षवयस्कोऽपि न परिगणितस्तथापि निःशेष-पाण्डित्यगुणसागरं पारितवान्। स्वल्पतमेऽपि वयसि, अलौकिकं विद्यावैभवं, महद् व्यवहारकौशलम्, अप्रतिम-प्रतिभापाटवम्-गाम्भीर्य्यौदार्य्याद्यनन्तगुणगौरवम् च समा-साद्य - सकलमनीषिगणमानसराजहंसायितः विद्वत्तल्लजवल्लरीसुमनोगुच्छतामवाप्य स्वकीयाऽपूर्वसौरभाऽऽकृष्टसहृदयहृदयः, सुरसरस्वतीसमाराधनाऽऽसारंदितसास्वत-सम्पद्धन्यतया काशीस्थकोविदकुलमौलिमणिः सन् सर्वमान्यपदमलङ्कृतवान्। परितः प्रसृमरप्रातिभप्रभावं समुदीक्ष्य सुदूरदूरादपि दर्शनालापसौख्यसम्पदनाय समायात-सुधीगणसम्मानसेवनसमाराधनसिद्धहस्तः, वार्ताप्रसङ्गेषु प्रवर्तित-वेदवेदान्त-विवेचनो-द्भूतजटिलसमस्याग्रन्थिचयविशकलितसमाधानलब्धनैपुण्यः पुण्यसदनात्मजत्वं सार्थ-कीचकार।

इत्थमेकदा स्वकीयान्तेवासिनः श्रीरामानन्दस्य सर्वात्मना योग्यतापूर्णविकासं चाक्षुषीकृत्य श्रीगुरुचरणाः श्रीराघवानन्दाचार्याः श्रीरामानन्दं स्वसमीपमाहूय सस्नेह-मूचुः। वत्स! रामानन्द! सम्प्रति सर्वात्मना योग्यतामवाप्य-सुयोग्यब्राह्मणकुमारे यावन्तो विद्याविवेककर्मकाण्डकौशलत्वादयो गुणा अपेक्षिता भवन्ति सर्वे ते त्वयि निविष्टाः सन्ति। शास्त्रपुराणादिप्रावीण्यमपि त्वयि पूर्णं विकसितम्, वेद-वेदान्त-तत्त्वबोधस्तु ते सर्वदैव बुद्धिवैभवं विस्तारयत्येव, वेदाङ्गान्यपि त्वयि विलसन्त्येव। नाधुना किमपि वैज्ञानिकमेतादृशं पश्यामि वस्तु, यन्न त्वयि नालोक्येत, यद्वा ह्यव-शिष्यते किमपि पूर्णतामेतुम्। यदर्थं वा यत्नः क्रियेत। तल्लब्धिलालसया वाऽत्र ते स्थितिरावश्यकीदं प्रतिभायात्।

भगवदनुकम्पया सम्प्रत्यवस्थासम्पन्नोऽपि जातः द्वितीयाश्रमप्रवेशयोग्यतामपि विलोकयामि ते। बह्वोः कालात् तव दर्शनामृतपिपासाऽऽकुलितनीरसस्वान्तौ चातकायितौ ते जननीजनकौ, घनघनागमप्रेक्षणोत्सुककृपीवलमनोरथायमानौ प्रतीक्षेते मुखमण्डलमालोकयितुम्। व्यतीतः खलु बहु (द्वादश) वार्षिकः कालः। विरहविधुरा वसुन्धरायिता च ते जननी सद्यः एव त्वत्पदपंक्तिचिह्नितां नैजामङ्कस्थलीं कामयते विलोकयितुम्।

अतोऽहं स्वकीयहार्दिकाशीःपरम्पराभिः परिमण्ड्य त्वामाज्ञापयामि यत् त्वमधुना स्वभवनमलङ्कृत्य सर्वात्मना तावानन्दयेः। यथाऽत्र मत्पार्श्वे निवसन् सम्यगधीत्य सम्प्राप्तविशिष्टसम्मानः पण्डितमण्डलाग्रगण्यः सन् यथा मामानन्दयस्तथैव तदिच्छानुरूप तत् प्रदर्शितपथा, गृहस्थाश्रमादिप्रवेशविधिना, दीक्षितः सन् सकलजन-पालनप्रीणनाद्युपचारैः, दान-मानप्रकारैः, समागताऽतिथि-सेवासत्कारैः, स्वकीयकुलपरम्पराऽनुगत विधानैः, समाचरन् सन्तोषय जननीजनकमानसौ।

आचार्यमुखात् सहसाऽभूतपूर्वां वाणीमाकर्ण्य श्रीरामानन्दः स्तब्धः शून्यहृदय इव वज्राहृत इव समपसृताऽधिकरणभूतल इव निराधारः प्रकृतिविकल इव सञ्जातः। महदनर्थशङ्कया बिभेति स्म। सपदि नीरसतालुमूलेसंसक्तरसनेव कमप्येकमपि शब्दं समुच्चारयितुमसमर्थ इव, चित्रितप्रतिकृतिरिव चेतनाविरहितः साञ्जलिबद्धकरसम्पुटितप्रतिरुद्धश्वासोच्छ्वासगतिक इव, केवलं नयननिःसृताश्रुनिपातनाऽनुमितप्राणसञ्चारः स्तम्भितसकलेन्द्रियगणव्यापृतिक इवाऽदर्शि जनैः। स्वस्थानान्न चचाल नो वा जगाद किमपि।

अनालोकितपूर्वामतिविकृताऽऽकृतिमयीं चेष्टां चाक्षुषीकृत्य हृतप्रतिभमिव विगतसकलस्मृतिकमिव समवरुद्धकण्ठमिव कुण्ठितधिषणं, श्रीविहीनमिव निजधीरधिषणाऽवधीरित-धिषणधैर्यमपि विलीनधैर्यं, अवितर्कितसमुद्गत - वितथतर्कनाऽतिकल्पनाशतसमाकुलितान्तः स्वान्तं, नितान्तक्लान्तं, श्रीरामानन्दम्, परिसान्त्वयन् निजपीयूषपूरपूरितां वाणीलहरीं प्रसार्य जीवनप्रदं, जैवातृकसुधामयकरं तन्मस्तकोपरि धृत्वा वात्सल्योल्लाससंभृत - मधुरमन्दस्वरेण श्रीराघवानन्दाचार्यः सम्बोध्य तं पुनरुवाच—

वत्स ! रामानन्द ! यद्यपि त्वम् सर्वात्मना मे परमः प्रियतमः शिष्य इति नाणुमात्रमपि सन्देहलेशः। इदमप्यहं सम्यक् जाने यदधुना तत्त्वतस्त्वया समस्तसंसारस्य महानुपकारो भविता। साम्प्रतं, धार्मिकजनतायाः परमसङ्कटाऽऽपन्ना विद्यते स्थितिरपि,सर्वेहि मोहमहान्धकारावृत-विज्ञानाऽऽलोकना न प्रयन्ति सुलभं सुगमं

समुद्धृतिकारकं समस्तविपत्संहारकं भवजलधेःसन्तारकं कञ्चन पन्थानम्। इदमपि वाढं विलोकयामि यन्नास्ति त्वदृते कश्चन, एतादृशो विपश्चित्प्रवरो यः स्वतपोवलेन, शास्त्रप्रज्ञया, स्वप्रतिभापाटवेन, सुगमवचनोपन्यासेन वा तान् समुद्धारयितुं प्रभवेत्। तेषां क्षेमं वा विदध्यात्। त्वमेवेदृशो लब्धभगवदनुग्रहप्रदत्तशक्तिको विद्योतते यो हि सर्वं भगवदनुग्रहजन्यं कार्यं सम्पादयिष्यति। तथापि नाहं कामये यद् धर्ममर्य्यादाया अतिक्रमणं भवेत्। विनश्येद्वा प्राचीना परम्पराऽऽयाता शास्त्रीया परिपाटी, न विघटयेच्च वर्णव्यवस्थान्तर्गताचातुर्वर्ण्याश्रमव्यवस्था। अतः प्रेरयामि त्वाम्, यत् त्वं स्वगृहं गत्वा गृहस्थाश्रमे प्रवर्तमानः स्वात्मकल्याणं कुर्वन्नेव जगदुपकारं विदध्याः।

किञ्च वत्स! नैषा केवलं ममैवाज्ञा, अपितु श्रुतिस्मृति-प्रतिपादितोऽयमादितः समायातोऽपवर्गसाधकः परमाऽऽराधकोऽपि नियमः। उक्तञ्च—

"ब्रह्मचर्य्यं समाप्य गृही भवेत्" इति (जाबाल श्रुतिः ४) अतः गृहस्थाश्रमेमतिर्विधेया मनुरपिः—

"चतुर्थमायुषोभागमुषित्वाऽऽद्यं गुरौ द्विजः।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत्॥" (मनुः ४। १)

इत्थम्-शास्त्रे "शतायुर्वै पुरुषः।" इति वेदाऽनुसारं जन्मतः २५ विंशतिः ब्रह्मचर्यं, ततः ५० वर्षीयायुःपर्य्यन्तम् गृहस्थाश्रमः। ततः ७५ पर्य्यन्तं वानप्रस्थः, ततोऽग्रे यावज्जीवनं संन्यास एवेति नियममाश्रित्य समधीतविद्यस्य द्वितीयाश्रमप्रवेशकालः प्रवर्तते साम्प्रतम्, अतोऽहं साग्रहं वच्मि यत् त्वया स्वगृहं गत्वा स्वमातृचरणान् निजपितृपादान् पूर्णरीत्या सर्वात्मना सन्तुष्य, तेषामाज्ञानुसारं सत्कुलीनां सुयोग्यां स्वस्मान्न्यूनवयस्कां गृहकार्यदक्षां मनोवृत्तानुसारिणीं दुर्गसंसारसागरात्तारिणीं मनोहारिणीं हारिणीं सकलापदाम् काञ्चन काञ्चनवर्णां सवर्णाकन्यकामुद्वाह्य-गार्हस्थ्यधर्मपालनं कर्तव्यमिति।

यद्यप्यद्यावधि स्वजीवने स्वप्नेऽपि किमुत जागरणे श्रीमद्गुरुवर-चरणानामाज्ञायाः समुल्लङ्घनं न कृतवान्, किन्चाद्य महानेवाऽयं धर्मसङ्कटाऽवसरः समुपस्थितोऽभूत्। ब्रह्मचारिधर्मोयं वारं वारं प्रेरयति यत् गुरुचरणानामाज्ञाऽनुसर्तव्येति, किन्तु हृदयस्थितोऽन्तर्यामी प्रेरयति यत् गुरुचरणसन्निधिं विहाय नास्त्यन्यत्र त्रिजगत्यामेतादृशं सर्वविधं सौख्यम्। अत उभयतः पाशारज्जुः (रज्जुः पाशाः वा) तदन्तः पतितेन मया किं भाव्यम्, किं करणीयम्-किमकरणीयमिति न धावति निर्णयं मे मतिः। इति दीर्घं निःश्वस्य स्वात्मानं कथञ्चन सुदृढीकृत्य-धार्ष्ट्यस्य प्रथमावसरोऽयमिति निश्चित्य, गुरुचरणयोः पतित्वा साञ्जलि, सप्रश्रयम् सकरुणम् प्रणतिपुरःसरं दीनदीनतरया वाचा प्रार्थयितुमुपक्रमते श्रीरामानन्दः—

समर्हणीयाः सौभाग्योल्लासिनः श्रीगुरुवरचरणाः ! सततं प्रणतिशतपुरःसरं निवेदनमेतत् यत्-श्रीमद्गुरुचरणानाम्-स्वीयमातृपितृचरणानाम्, ज्येष्ठश्रेष्ठाना-माज्ञा तु सर्वदैव सर्वात्मना निःसन्दिग्धं पालनीया, यतो हि--"आज्ञा गुरूणा-मविचारणीया" इति वचनात् परमोधर्मः सर्वेषां कृते । अतो यद्यहम् किमप्युत्तरयेयम्, तर्हि धाष्ट्र्योद्रेकः समुल्लसति । तथापि करुणावरुणालयान्-नितान्तदयापारावारान् विलोक्य श्रीचरणान् विज्ञाय च क्षमाकल्पपादपान् समुत्सहे किमपि प्रियाऽप्रियं विनिवेदयितुम् ! श्रीमतां स्वगृहगमनाय-गृहस्थाश्रम-प्रपञ्चमञ्चयितुमाज्ञामाकर्ण्य भृशं चेखिद्यते चेतः । कथमिमं जनमेतावत् कालपर्य्यन्तं श्रीचरणसन्निधाने मोद-प्रमोदाद्यपारवीचीनिचयसमुल्लसितानन्ताऽऽनन्दसिन्धुसमवगाहनाऽवाप्त - महद्रत्नमालो-ल्लाससौख्यसौभाग्यभाग्यवन्तं विधाय, गार्हस्थ्यमहागभीरगर्ते निपातयितुं, नारकीययातनासदृक्षा मृक्षाऽऽस्यभयङ्करदंष्ट्रान्तरालपतनक्लेशानुभूतिमिवाऽनुभावयितुम् प्रेरयित्रीमिमामाज्ञां प्रसार्य सहजस्वभावविपरीतेयं भावना कथं जागर्ति वात्सल्य-सङ्कुलस्वान्ते । प्रभो ! नाहं गुरुचरणशरणमपहायान्यत्र क्षणमपि स्थातुं प्रभुः । सान्निध्यसन्निधिमवाप्य न पुनर्दारिद्र्यदुर्दैवदलितदीनो हीनो भवितुं कामये । श्रीमच्चरणाम्बुजच्छत्रच्छायामासाद्य प्रत्यहं दर्शन-स्पर्शनानन्दं लभमान एव लोक-सेवासमाराधनं यथाऽत्र कलयिष्यामि न तथाऽन्यत्र भाविनी । अनेनैव च पथा स्वात्मनोऽपूर्वं कल्याणमपि विलोकयामि । अतः प्रार्थये वारं वारं न मां विविधदुरितदुःखाद्युद्गत - लोलकल्लोलमालाकुलिते - पुत्रकलत्रादितिमिङ्गिलसंकुले स्वजनबन्धुबान्धवावर्तशतभयङ्करे दुरन्तपारे संसारकूपारे पातयत्वसहायं ह्यत्य-ल्पकायम् । भगवन् ! रक्षन्तु मां, भावत्कोऽहं, भावुकोऽहं, अशरणशरणचरणशरणी-भूतोऽहमिति ।

इत्थं करुणाऽऽक्रन्दनमिव सवन्दनं श्रीरामानन्दनिवेदनमतिभावनामयं श्रुत्वा श्रीमदाचार्यवर्य्याणामपि हृदये करुणाकूपारः सहसा प्रावर्द्धत । सद्यः समपसृत्य समाकृष्य च सन्निधौ परमभक्तं सशक्तं स्वचरणासक्तं सर्वथाऽनुरक्तं समुल्लसित-हृदयानन्दं श्रीरामानन्दम्, स्वहृदयेनैव संयोज्य, सरसमधुरेण स्वस्वान्तप्रतीकेन नितान्तमप्रतिमेन वचसा पुनः प्रबोधयामास ।

प्रिय वत्स ! स्वधर्मदृष्ट्या न त्वया कथञ्चन भेतव्यम् । गार्हस्थ्यस्य भयावहां कल्पनामाकलय्य व्यर्थमेव कान्दिशीको भवसि । नाऽयं गृहस्थाश्रमो भयङ्करोऽपितु क्षेमङ्करो मनोहरश्च, सर्वाश्रमाधारभूतः परिपूतः समस्तप्राणिपोषकः, अतिथि-सत्काराधनैकविधिना परितोषकः सकलाश्रमिजनसेवकत्वादाहारादिपरिकल्पनत्वा-च्छ्रेष्ठो मान्यश्चेति ।

तथाहि—"यथा नदी नदाः सर्वे सागरे यान्ति संस्थितिम् ।
"तथैवाऽऽश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥" ( मनुः ) ।

"यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्वं आश्रमाः ॥ ( मनु ३ । ७७ ) अतो न त्वया भेतव्यम् ? उक्तञ्च "स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि" गीता ।

अतः सर्वश्रेष्ठादस्माद् गृहस्थाश्रमान्न भवादृशा विदुषा भेतव्यमिति । यद्यप्यहम् मन्ये यदत्रत्ये जीवने यथा भवान् स्वातन्त्र्यं सौख्यमवाप्तवान् तेनैव तेऽधिको मोहः । अस्मिन्नेवाश्रमे निवसता भवता स्वगुणगौरवेण प्रतिभापाटवेन या जनख्यातिः लोकप्रियताऽविगता-तद्वियोगमेवाऽसह्यमेव मन्वानः स्वकर्तव्यपराङ्मुखत्वमेवाऽपाद्यते, परं नैतदुचितम् । रामानन्द ! रामानन्द ! नहि विस्मरणीयमेतद्-यद् कर्त्तव्यवेद्यामस्य महतो मोहस्य बलिदानं त्वया कर्तव्यमेव भविष्यति । विलोकय तावद् चम्पक-पुष्पे सौन्दर्य्यमसौरभ्यमपि परागोऽपीति, किन्तु मधुपानां कृते तु सकलं व्यर्थमेव । तथैव, अत्रत्ये निवासेऽपि समुन्नता भावना, आदर्शजीवनम्, त्यागः संयमः सन्तोषः सदाचारः सर्वमेवाऽस्ति, परन्तु भवत्कृते त्वत्रत्यसमस्तवैशिष्ट्यापेक्षया गृहस्थाश्रमः श्रेष्ठतम एवेति—

वाक्यपूर्तेः प्रागेव चिन्तासन्तानसमुज्झितविवेक इव गद्गदस्वरेणसमवरुद्ध कण्ठः साश्रुविलोचनः श्रीरामानन्दः प्रोवाच—

पूज्यपादाः ! अलमलम्, विदधत्वनुग्रहम्, विविच्यतां क्षणं प्रभो ! यद्यपि निखिलचराचरस्य जगतः सर्वाण्येव सुखानि राजन्ते गृहस्थाश्रमे, समस्तानां क्षेमाणां, कल्याणानां, निधानमप्यस्ति सः किंवा मोक्षद्वारमपावृत्तमप्यस्ति सः, परन्तु यस्य सर्वात्मना श्रद्धाविहीनस्य जनस्य तत्र प्रवृत्तिरेव न भवति, तत्कृते तु सकलसौख्यभाजनमपि सर्वथाऽभाजनमेव, प्रत्युत दुरितभाजनमिव भविष्यति । अतो न मे तत्र श्रद्धा, तर्हि कथं प्रवृत्तिं विदध्याम् ? भगवन् यो हि त्रैलोक्यलक्ष्मीं समासादितवान् सः पुनर्भिक्षां याचितुं प्रवृत्तो भविष्यति किमु ? उक्तञ्च—

"एवं लब्धपरानन्दः क्षुद्रानन्दं न कांक्षते ।"

यो हि भगवज्ज्ञानमयं परमानन्दमवाप्तवान् न सः लौकिकक्षुद्रानन्दाय यतिष्यते ।

किञ्च—"क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।"

तद्वदेवाहं जगति कठिनात्कठिनतममपि दुःखं सोढुं सन्नद्धोऽपि न कामये गृहस्थाश्रमबन्धनपतनम् स्वात्मपतनकारणम् ।

श्रीराघवानन्दाचार्याः—किमेवं प्रजल्पसि वत्स रामानन्द !

श्रीरामान्दः—स्वात्मनोऽन्तर्ध्वनिमेव निवेदयामि, नाऽन्यदसत् किमपि ।

श्रीराघवानन्दाचार्याः—तर्हि संन्यस्तं जिघृक्षुर्भवान् ?

श्रीरामानन्दः—नाऽन्यथा जीवस्य, देहस्य सकलकुटुम्बस्य वा कल्याणं गार्हस्थ्यकूपनिपतितानां वा जनानां पश्यामि ।

श्रीराघवानन्दाचार्याः—"किन्तु-देव ऋण, पितृ ऋण, ऋषि ऋणेभ्यो यावद् विमुक्तिर्न; न तावन्मोक्षः । न नियुंज्यान् मनो मोक्षमार्गेऽपि ।

शास्त्रीयाज्ञाऽपि—"ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत् ।" इति ।

श्रीरामानन्दः—यद्यप्यस्ति शास्त्राज्ञा किन्तु श्रुतिस्त्वेतदपि वदति—

"यदहरेव विरजेत्, तदहरेव प्रव्रजेत् ।" ( जाबालश्रुतिः ४ ) यदा हि मनुष्यस्य हृदये विरक्तिर्जागरिता भवेत् तदैव सः संन्यासं गृहीत्वा प्रव्रजेत् । न तत्कृते ऋणत्रयमुक्तेरावश्यकता । यथा हि सः मुमुक्षुर्भवति, तस्मिंश्च तीव्रा वैराग्यभावना जागृयात् तस्मिन्नेव क्षणे सः त्रिभिरेवाश्रमैः पालनीयेभ्यः त्रिभ्य एव ऋषिऋण-देवऋण-पितृऋणेभ्यः सपदि विमुक्तो भवति यदि च सः सर्वप्रकारेण संन्यासोचितानि सकलानि कर्माणि समाराधयेत् । नहि तत्कृते विधिनिषेधयोः प्रश्नोऽपि नोपतिष्ठति । उक्तञ्च गीतायाम्—

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥"
"नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ।"

न हि केवलं वाङ्मात्रमयोऽयं व्यापारः, अपितु व्यवहारोऽपि यतोहि सनकसनन्दनसनातनसनत्कुमाराः, नारदः श्रीशुकाचार्यः ऋभुर्वामदेवादयो भूयांस एव आजन्मतः आबाल्याद्, आब्रह्मचर्याश्रमादेव प्रव्राजकाः समभूवन् । उक्तञ्च—"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् ।" इति ।

इति श्रुत्यर्थं विचिन्त्यैव सर्वे महापुरुषा गृहस्थाश्रमादि-बन्धनं निरर्थकं ज्ञात्वैव ब्रह्मचर्याश्रमत एव विरक्ताः सञ्जाताः लोककार्याण्यपि ते स्कूलजोवोद्धारणादि

व्यापारमपि सम्पादयामासुः. तर्हि भगवन् ? मत्कृत एवं कथमयं विघ्नः ? कथमपि कारुण्यवारान्निधयोऽपि न दयन्ते ?

श्रीराघवानन्दाचार्याः—प्रिय वटुक ! यदुक्तं तत्सकलमवितथमेव । विरक्तावपि ते पूर्णतया विश्वसिमि, किन्तु सम्प्रति वृद्धौ ते मातापितरौ, तयोस्त्वमेवैकमात्रं समाश्रयः । तेषामशेषं जीवनं त्वय्येव निर्भरम् । एवं निराधारायां परिस्थितौ तौ विहाय त्वम् यदि प्रव्रजिष्यति तर्हि तयोरात्मा किं कथयिष्यतीति क्षणं विचिन्तय । महता तपोबलेन भगवदनुग्रहेणैव त्वां लब्ध्वा, त्वत्तः सुखावाप्तिमीमहानौ त्वदाशानिबद्धभावौ चातकायितौ त्वाम् प्रतीक्षेते, त्वमेव तयोः कुलदीपकः, पितॄणां कृते निवापाञ्जलिदायकोऽपि त्वमेवैकः । पुत्रवन्तावप्यपुत्रवन्तावेव स्थास्यतः किमु इयमेव किमु पुत्रस्य पुत्रता ? पुनरेकवारं प्रशान्तचेतसा विचिन्तय स्वमनोव्यापाराऽऽलोचनम् !

इत्थं गुरुशिष्ययोः प्रश्नोत्तरक्रमः प्रवर्तित एवासीत्—तदानीमेव कश्चन छात्रः समागत्य न्यवेदयत्, भगवन् कतिचन यात्रिणः प्रयागराजात् अतिथयः समायाताः सन्त्येष्वेव श्रीरामानन्दस्य जननीजनकावपि समायातौ स्तः । श्रुत्वैव प्रसङ्गं परिसमाप्य श्रीरामानन्दसहिता आचार्याः अतिथिशालां प्रति समाजग्मतुः ।

---

# एकोनविंशः परिच्छेदः

अद्य आश्रमस्था सुसज्जा, सकला च प्रवृत्तिः क्षुब्धागम्भीराऽतीव विचित्रा महत्वपूर्णा विभासते। तत्रत्या समस्ताऽन्तेवासिमण्डली महात्मनामाश्रमनिवासिनाम् समूहश्च, समायातानां प्राघूर्णिकानामाधोरणी-समुपगतानां शुश्रूषूणां नागरिकाणामुदारपरिवारः श्रीराघवानन्दाचार्याणां निर्णयं श्रोतुकामः समवेतः समभूत्। सुसज्जिते समुन्नते पीठे श्रीमदाचार्याः, तेषां चरणयोः समीपञ्च विनयाभारेणेव नतमस्तकः विद्यासम्भारभासुरः, श्रीरामानन्दः विचारनिमग्नगम्भीरहृदयः प्रशान्तभावमाश्रित्य स्थितः। एकतश्च समागतविद्वन्निवहः, अपरतः श्रीरामानन्दस्य जननीजनकौ सपरिकरौ व्यराजेताम्। आसीच्च सोऽभूतपूर्व एव समागमः।

तदानीम् श्रीराघवानन्दाचार्याः "प्रिय रामानन्द! इति सम्बोध्य समेषामेषां प्रासङ्गिकविषयोपरि ध्यानमाकृष्टवन्तः।

वत्स! न त्वया विस्मर्तव्यमिदम्, यत् पुत्राय "नास्ति पितृसमोगुरुः" (औशनससंहिता) किञ्च- "मातापित्रोः परं तीर्थम्" (व्याससंहिता १-३५) इति महामहातीर्थभूतयोरेनयोः सुप्रसाद (शुभाज्ञा) मनवाप्य न कस्यापि साधकस्याऽभीष्टसिद्धिर्भवितुमर्हति। एषामनुकम्पा नितान्तमावश्यकीति ग्राह्यैव। यदि त्वं सुदृढसङ्कल्पः संन्यासग्रहणे, तर्हि सर्वतः प्रथमं जननीजनकयोराज्ञास्वरूपामाशीःपरम्परां समवाप्तुं तत्परो भव। अयमेव परमः सर्वतः प्रथमो धर्मः कर्तव्यश्चेति। सम्प्रति विलोकय तावत् त्वदीयेयं जननी निर्निमेषया दृष्ट्या सतृष्णा चातकीव सरलस्वभावा नवाम्बुभारावलम्बिनीं कादम्बिनीमिव-त्वदाननसुधांशुबिम्बं चञ्चच्चक्षुश्चातकीव विलोकयन्ती न तृप्तिमेति।

इत्थमाचार्यचरणैरुद्बोधिता सा रामानन्दजननी चारुशीला 'सुशीला" समुपगतम् शुभावसरमुपेत्य प्रोवाच—

वत्स ! स्थविरत्वसमाक्रान्तसकलावयवायाः ममपरमधन ! मैवं झटिति विविधकल्पनासहस्रसुमनोगुच्छसमलङ्कृतशुभाशाकल्पद्रुमोद्यानमास्माकीनं व्यवच्छेत्सीः। त्वदेकमात्राऽऽश्रितजीवनानां सर्वथाऽशरणानां जीवनोपरि जीवनदायिनीं कारुण्यदृष्टिं प्रक्षिप्य किञ्चिद्विचिन्तय। त्वमेवैकश्चक्षुर्विहीनानां नश्चक्षुः, लोकचक्षुरिव कर्मप्रवर्तकोऽसि। वार्धक्यविकलिताऽवयवानां संसारसागरसमुत्तारकः कुशलः कैवर्तकः। प्रियवत्स ! सांसारिकमोहान्धकारान्धदृष्टीनां नस्त्वमेव प्रीतिज्योतिरेवाऽस्मज्ज्योतिः समुज्ज्वलम्। यदि त्वमेवाऽस्मान् प्रतार्य सांसारिकमोहगर्ते पतितानां-विषीदतां न समुद्धरकश्चेत् को वाऽन्यः समालम्बनं भविता। मुमूर्षूणां रोगार्तानां शय्यानिलीनगात्राणां मुखे गंगाजलबिन्दुपानकारकः निक्षेपणपटीयान् को वा त्वदन्यः सहायकः। प्रिय कुलदीपक ! त्वदन्यः कोऽस्त्यस्मद्गृहान्धकारपरिहर्ता, समाहर्ता विभूतीनाम्, प्रहर्ता दुरितापदाम्, ह्यनुकर्ता कुलाचाराणाम् भर्ता वा विभवानाम् संहर्ता च सङ्कटे समागताऽऽमीलानाम्। वत्स प्रिय रामानन्द ! कथय, किमपि वद, स्थविराणां जननीजनकानां विविधाऽऽधिसमाकुलितम् व्यथाशतव्यथितम्, अकथितदशापन्नं विपन्नं नो हृदयं किमप्युक्त्वा सान्त्वयितुं मधुराक्षरमालां प्रयुंक्ष्व। इत्थं निगदन्ती सपदि रुद्धाश्रुयत्नाऽपि प्रस्रवितनयनसलिलधाराऽऽविलकपोला समवरुद्धकण्ठाऽग्रे किमपि वक्तुकामाऽपि नाऽधिकं किमपि जल्पितुं पारयति स्म।

क्षणं विश्रम्य, विगलिताऽश्रुप्रवाहेणैवाऽपहृतभारा सा सुशीला देवी पुनरप्युवाच—वत्स ! भगवतोऽनुग्रहेण ते लब्धजननीपदसम्माना, स्मृत्वा च तव जन्मदातृत्वाऽधिकारं पुनर्निवेदयामि,—प्रिय पुत्र ! एतादृक् विपश्चित्प्रवरः सन्नपि कथं विस्मरसि—"मातृदेवो भवेति।" "पितृदेवो भवे" त्युपदेशः कथं न ते स्मृतिपथमुपयाति। "पितादेवोजनार्दनः" इत्यादि वाक्येष्वपि कथं न जागर्ति ते श्रद्धा। उक्तञ्च-(पद्मपुराणे) "त्रयोलोकाश्च तुष्यन्ति पितुः शुश्रूषणादपि।" किञ्च—"पिताधर्मः पितास्वर्गः पिता हि परमं तपः। पितरि प्रीतिमापन्ने प्रीयन्ते सर्वदेवताः।" तनय ! वचनेष्वेषु कथं न स्थिरीभवति ते विश्वासः ? वत्स संन्यस्तं धृत्वा याः काश्चन सिद्धीः कामयसे, सकलास्ताः पितृसेवयैव लब्धुं शक्ष्यसि। उक्तञ्च

"नास्ति तातसमो देवो नास्ति तातसमो गुरुः।
नास्ति तातसमो बन्धुर्नास्ति तातसमः क्वचित्॥"

तर्हि वत्स ! कथमीदृशस्य कल्पपादपस्य सुलभरम्यां सुशीतलां छायां परित्यज्य क्वाऽन्यत्र काननान्याहिण्ड्यन्ते विद्वद्धुरीणेनापि त्वया। अतो वच्मि, मे प्रियतनय ! वृद्धयोर्मातापित्रोरङ्कुरितामाशालतां नैराश्यतुषाराऽऽसारसंप्लुष्टां मा कलयेति मातृवचनमप्यनुसर।

इति सकरुणं साग्रहं विनिवेदयन्त्याः जनन्याः कथनोपरि किमुत्तरं प्रसरति श्रीरामानन्दस्येति समेषां दृङ्निपातः सपदि तदुपर्येव समभूत्। समुत्तरश्रवणोत्कण्ठा प्रबलाऽभवत्—, किन्तु श्रीरामानन्दः किमपि नोक्त्वा केवलं नयनयोर्नीरप्रवाहमेव निरसारयत्। इत्थम् निरुत्तरं नयनजलाऽऽविलाननं नतवदनमेव स्थितमुदीक्ष्य श्री-पुण्यसदनवर्यः प्रावोचत्—

वत्स! मतिमन् एतावत् कथनस्यास्य नायमाशयो ग्रहीतव्यो यद् वयं संन्यासविरोधिनः स्मः। संन्यासं प्रति पूर्णतमा श्रद्धा वर्वर्ति, जीवनस्य परमोत्कृष्टोऽयं तुरीयः संन्यासाश्रमः, साक्षान्नारायणसम्पादकश्चेति। किन्तु संन्यासाधिकारसिद्धयै पूर्वं-माश्रमत्रयानुपालनमपि शास्त्रसम्मतमेव। न हि तेषां गृहस्थ-वानप्रस्थादीनामवहेलना विधातव्या भवादृशैः पण्डितवरैः। एतावदेव तात्पर्यमास्माकीनम्। उक्तं हि— (तै०६।३।१०।५) "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते। ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति नियमानुसारं भवताऽपि ऋषि ऋणात्तु मुक्तिर्लब्धा सम्यक् ब्रह्मचर्यपरिपालनाद् वेदाध्ययनादिना च। सम्प्रति द्वितीयाश्रम-प्रवेशकालः समागतो भवतः, अतो यथानियमं गृहं चलित्वा वैवाहिकं विधिं सम्पाद्य गार्हस्थ्यधर्मेण प्रजोत्पत्तिं विधाय पितृऋणादपि मुक्तिं लभस्व, ततो वानप्रस्थमुपसेव्य संन्यासाधिकारं प्राप्य नारायणस्वरूपो भवेति। गृहस्थाश्रमकाले यज्ञयागादि समाराधनेन सपत्नीकेन भवता देवऋणादपि मुक्तिः सुलभैव। अतः क्रमशः प्रवेशमुपसेव्य विदुषा सर्वं विधेयमित्येव तात्पर्य्यम्। उक्तञ्च न्यायभाष्ये वात्स्यायनेन :

"ऋणानुबन्धादपवर्गाऽनुलाभाऽनुष्ठानकालो नास्ति। (अ.४।१।५६)

ततः—"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेदयेत्।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥" भगवताऽपि—

गीतायाम्ः—"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः'।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।" (अ.१६।२३)

श्रुतामपिः—"ब्रह्मचर्यं समाप्यैव गृहीभवेत्-गृहीभूत्वा वनीभवेत्
वनीभूत्वा प्रव्रजेत्" (जाबाल श्रुतिः ४)

इत्यादिं श्रुतिस्मृति-पुराणवचनानि जानन्नपि भवान् नितान्तविवेकशीलः शास्त्रमर्मज्ञोपि कथं हठाद् दुराग्रहमेव वितनुषे? सम्प्रत्याशाबद्धाः स्मो भवादृशात् सकलतत्त्वज्ञादात्मजाद्, यदस्मान् वृद्धाऽवस्थानुभाविताशेषशिथिलशरीरबन्धान्

विलोक्य दयार्द्रहृदयः सम्प्रार्थिताभीष्टसम्पादनद्वारा पूर्णमनोरथान् विधास्यत्यात्मजः, इति विचिन्त्य स्वविचारपरम्परायां परिवर्तनं परिकल्प्य, सन्तोष्य चास्मान्, हृदयाशीर्भिरभिनन्दितः सन् प्रवर्तयिष्यसीति ।

इत्याकर्ण्य स्वाभिप्रायं स्पष्टं प्रकटयितुं प्रक्रममारभत प्रणतिपुरः-सरम्, श्रीरामानन्दः । तथैव सर्वतः प्रथमं श्रीमदाचार्यचरणेषु तथा जननी-जनकयोः पादपद्मेषु, प्रणतिततिं विधाय न्यवेदयदभिप्रायम्—अयि साक्षाज्जगज्जननीस्वरूपे श्रीमदम्बे ! तीर्थस्वरूप-प्रातःस्मरणीय-सर्वदाऽर्हणीयःपितृचरणाः श्री गुरुवर चरणाश्च ! किमधिकं निवेदयेयम् यदहम् सम्यग् जानामि-पुत्रस्य शिष्यस्य च कर्तव्यजातं, धर्मञ्च, यत् "आज्ञागुरूणामविचारणीये" ति श्रीमद्भिः सर्वैरेव ममाऽभिभावकैर्यद्यत् किमप्युक्तम् तत् सर्वं ममैव कल्याणायास्ति । पुत्रकर्तव्यस्यापि या खलु शिक्षा प्रदत्ता शास्त्रप्रमाणाद्यैः समस्तां तामहं हृदयेनाभिनन्दयामि ।

एतदप्यनुचितं मन्ये यत् पूज्यानां समक्षे तेषामुक्तेः पक्षे विपक्षे वा कमपि स्वकीयाभिप्रायं प्रकाश्य प्रत्युत्तरदानधाष्टर्चमाश्रयेयम् । तथापि स्वकीयस्वान्तःप्रेरणया नितान्तं विवशीकृतेन शतधा नतमस्तकेन मयका साञ्जलि यन्निवेद्यते तत् सकलं स्व-बालप्रोक्तं चापलं मन्वानैः (मन्यमानैः) क्षमासिन्धुभिः सोढव्यो मेऽविनयः । सर्वात्मना क्षन्तव्यश्चाऽयं विवशीकृतो जनो हार्दभावनया ।

पूज्यचरणाः ! सर्वतः प्रथमं मातृचरणानेव स्वात्मनो विश्वासविलसितानेव कलयामि-यदहम् गृहस्थी भवेयम् किमुत वनी, यस्मिन् कस्मिन्नपि स्थाने, आश्रमे वा ( गृहस्थाश्रमे संन्यासे वा ) भावत्क एव भूत्वा स्थास्यामि नान्यस्य । जना अपि तथैव व्यवहरिष्यन्ति, यदयममुकस्य तनयः अमुकगोत्रोत्पन्नश्च अमुकदेश (स्थान)-वास्तव्यो वेति । तथैव-स्वायत्तीकृताश्रमानुकूलमाचरन् तथैव वर्तमानोऽपि नाऽहं भवतां पूज्यतमां सुपुण्यस्मृतिमनेन शरीरेण रामानन्दनाम्ना च स्वप्नेऽपि विस्मरिष्यामि यावज्जीवनमिति प्रतिजाने । जाने च सर्वात्मना मातुः हृदयं नितान्तं दयार्द्रं मृदुलतमञ्च भवति । सा हि सर्वदैव कस्याप्यन्यस्य चक्षुषोः समक्षमागतस्य नयनपटलात्प्रस्खलितमेकमपि बिन्दुम् (अश्रुकणम्) प्रतिक्षणं स्वकीयाश्रुधारासम्पातैः स्वागतीकुरुते । श्रुतञ्च पाण्डवमात्रा श्री कुन्तीदेव्या कस्याश्चनैकस्या ब्राह्मण्याः कष्टं निरीक्षन्त्या दयार्द्रया बकासुरस्य रक्षसः क्षुधोपशमनार्थं स्वात्मजमेव तन्मुखाग्नौ होतुमुद्युक्तया तया न किमपिपूर्वाऽपरमालोचितम्, न वा मनसि प्रकम्पनमप्यनुभूतम् न शैथिल्यञ्चेति विचारदार्ढ्ये । ईदृशं भवति परदुःखकातरं करुणार्द्रं मातृहृदयम्, यन्न गणयति परदुःखापहारणे स्वात्मजविनाशमपि ।

अतोऽहं निवेदयाम्यम्ब ! यद् भवत्याऽप्यद्य कुन्तीभूतया भाव्यमेव । तदानीं तु सा कष्टार्दितैकैवाऽसीत्, साम्प्रन्तु समस्तेऽस्मिन् भारते निःशेषाया धार्मिक-प्रजायाः जीवनमेव म्लेच्छसत्ताधारिणो राक्षसाऽधमस्य क्षुधाग्नावेव भस्मसाद् भवितुमर्हति । अस्मत्प्राणप्रिया वेदा एव सावमानं हूयन्तेऽग्नौ । धर्मशास्त्रग्रन्थाना-महर्निशं होलिकादाहो दरीदृश्यते । धर्मस्थानानि नष्टभ्रष्टीक्रियन्ते, देवायतनानि च भूमिसाद्विधीयन्ते, आस्माकीना देवप्रतिमा म्लेच्छानां भवनसोपानेषु निखन्यन्ते । इष्टकाभिः समञ्च प्रेङ्खेचन्ते पादधोरणीषु विश्वकल्याण्योऽस्माकं गावो मातरश्च तेषां खड्गधारया लक्ष्यीक्रियन्ते । अस्मद्देशीयोच्चतमादर्शीभूत-गौरवाऽऽस्पद पातिव्रत्य-धर्मोच्छेदो विधीयते दुष्टदानवायितमानवापसदैः म्लेच्छहतकैस्तदनुयायिभिश्च तदीय-संस्कृतिपक्षपातिभिः, तदुच्छिष्टान्नपुष्टदुष्टतनुभिः ।

किन्न भवत्याऽपि प्रत्यक्षमक्षिलक्ष्यीक्रियते प्रत्यहम् भारते ? एतादृशे विपरीत-विषमदुःस्थितिमये समये यद्यहमेकमात्र कुलस्यैव रक्षार्थं सन्नद्धो भवामि तर्हि लक्षशो भारतीयकुलानां विनाशजन्या रक्तरञ्जिता दुष्टदैत्यायितम्लेच्छविहिता न हि तव नयनपथपान्थीभूता भविष्यति होला हेला ।

किञ्च भवादृशी दयासागरा सहृदया वीरमाता-स्वात्मजे तादृशदुरितदुष्ट-दानव-दमनदक्षे सर्वशक्तिमति विद्यमानेऽपि-स्वसमक्षमेवम्भूतमुपप्लवमुदीक्ष्याऽप्युपेक्षामेव विदधती तिष्ठेन्न किमपि चेष्टेत, प्रतीकारं कलयितुं स्वपुत्रमपि नाज्ञापयेदिति भविष्यति ते गौरवास्पदं किमु ?

अम्बे ! भवत्या मातृममतायाः प्रतिफलम् प्रतिक्रियां वा प्रदर्शयितुं भारतीय-कोटि कोटिमितानां तथार्दितानां लोचनेभ्योऽविरलनिसृताऽश्रुधारासम्पातापसारण-प्रोञ्छनादिक्रियाकलापैः, ताः स्वस्थीकृत्वाऽथ कामये । भवत्याः कुलदीपकः सन् कोटि-कुलानां प्रतिहत-विगत-ज्योतिषां दीपकानां सर्वथाऽक्षुण्ण-ज्योतींषि सुस्थिराणि कलयितुं कामये । इति न रोचिष्यते किमु भवत्यै ? तर्हि किमर्थमेव व्यर्थमेवं कोटिशो मातॄणां हितानां सम्पादने प्रवृत्तस्य स्वप्रसूतस्य जननी वीरप्रसवा सती तवैव कीर्तिकरमिदं कार्यमवरुध्य कलङ्कपङ्काऽङ्किता भवितुमीहते ।

अतः सुप्रसादेन चेतसा, सौहार्दपूर्णेन भावेन शुभाशीः शतसंवलितां समुदारा-माज्ञां प्रयच्छेति,-ययाऽहं सर्वदा सर्वथा सर्वत्र सफलमनोरथो भवेयमिति ।

सम्प्रति पूज्यपितृचरणेषु किञ्चिद् विनम्रनिवेदन-प्रसूनाञ्जलींश्च वितनोमि—पूज्यचरणाः ! अविचितं नास्ति किमपि भवताम्, यत् श्रुति—स्मृति-धर्मशास्त्रादौ यत्र यत्र दार्ढ्येन कस्यचन कर्मणो विधानं समुल्लसति सामान्यतया, तत्रैव सतिविशेषेण

विशिष्टव्यापृतिप्रवृत्तकर्मणि, नितान्ताऽनिवार्य्ये वा कार्ये तत् परित्यागो न निन्द्यः प्रतिपादितः। उक्तञ्च-"सामान्यशास्त्रतो नूनं विशेषो वलवान् भवेत्" इति यथा हि सामान्यधर्मविधिः—"सत्यं ब्रूयात्" नाऽनृतं वदेत्" इति, परञ्च यत्र गोघ्नानां करगतां काञ्चन धेनुं संरक्षितुं सत्यस्याऽपलापोऽपि यदा भवेत् तथापि सत्यं परित्यज्य मिथ्यां व्यवहृत्याऽपि गवां प्राणरक्षा कर्तव्यैव, न तत्राऽनृतप्रयोगो निन्द्यः।

उक्तञ्च श्रीमद्भागवते— "स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे।
(स्कंध। अ० १९ श्लो० ४३) गो-ब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम्॥"

अत्र सामान्य सत्यभाषणात्-गोप्राणरक्षणरूपो धर्मो विशेषो वलिष्ठः, अतस्तदुपादानं श्रेयः। इत्यादि नियमात्, यत्र विधिस्तत्रैव सति परमावश्ये कार्ये समापतिते, प्रतिषेधोपि विहितः। यत्र च-'आचारपरम्परायाः सर्वथा लोपः प्रसज्येत तत्र कथञ्चन परम्परासंरक्षणाय तत्पालनप्रकारोऽपि निर्दिश्यते। "अहरहः सन्ध्यामुपासीत, प्रातः सायमग्निहोत्रं जुहुयात्" इति सन्ध्यावन्दनाऽग्निहोत्रादीनां नियमितरूपेण कर्तव्यताकत्वेन समये एव, अवश्यकरणीयत्वेऽपि सत्यावश्यके यात्रादौ मार्गे तत्समाराधनासम्भवे-प्रातरेव, अपकृष्य करणे न प्रायश्चित्तम् प्रातः सन्ध्यावसरे एव सायं सन्ध्यादिकं विधातव्यं येन कर्मलोपो न प्रसरेत्। तथैव जावालश्रुतौ यत्र— "ब्रह्मचर्य्यं समाप्य गृही भवेत् ततो वनी भूत्वा प्रव्रजेत्" इति विधानम्-तदग्र एव "यदि वेतरथा ब्रह्मचर्य्यादेवं प्रव्रजेत्।" किञ्च-"यदा विरजेत् तदैव प्रव्रजेत्।" इत्यस्ति विधानम्। अतो नाऽस्त्यत्र काचन शास्त्रोक्तविप्रतिपत्तिः। भगवताऽप्युक्तम् गीतायाम्:—

"किं कर्म किम कर्मेति कवयोऽप्यत्र मोहिताः।" इति।

अतः कार्याऽकार्ययोः कर्तव्याऽकर्तव्ययोः, सामान्य-विशेषयोः सम्यङ्निर्णयं कृत्वैव तत्र प्रवर्तितव्यम्। विपरीते तु दोषोऽनुतापश्चेति। उक्तवांश्च कविरपि-"अल्पस्य हेतोर्वहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम्।"

यद्यप्यस्ति "अनधीत्य द्विजोवेदाननुत्पाद्य तथाऽऽत्मजान्।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः।" (मनुः ६।३७)

तैत्तिरीयेऽपि—"प्रजातन्तून् मा व्यवच्छेत्सीः" (तै० १।११।१) किञ्च—श्रीवोधायनसूत्रे—"ऐकाश्रम्यन्त्वाचार्याः" इति सूत्रव्याख्याने प्रतिपादितमस्ति यत् ऐकाश्रम्यम्—गृहस्थाश्रमः सर्वाश्रमाणां परिपालकः, अतः सर्वश्रेष्ठ इति।

परन्तु समस्तमेतत्-तदवधि-यावत्कर्मफललिप्सा प्रवर्तेत। विरतायाञ्च तस्यां, परित्यागे च कर्मफलाऽसङ्गे, नाऽयं मर्यादाविधिः प्रसज्ज्यते।

उक्तञ्च गीतायाम् "असक्तबुद्धिः सर्वत्र जितात्माच्छिन्नसंशयः।
(अ० १८ श्लो० ४९) नैष्कर्म्यं सिद्धिं परमां संन्यासेनाऽधिगच्छति ॥"
किञ्च तत्रैवोक्तम् 'अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्।" (गीता० १२।११)

इत्यादि विमर्शनेन निश्चीयते यत् अन्तरात्मनः प्रेरणया विनैव, अनिच्छया हठात् विनैव श्रद्धया यत् किमपि क्रियते तत्सर्वं निष्फलमेव भवति।

उक्तञ्च—"अश्रद्धया हुतं दत्तं, तपस्तप्तं कृतञ्च यत्।
असदित्युच्यते पार्थ न च तत् प्रेत्य, नो इह ॥"

इति स्पष्टम् निगदितं भगवता श्रीकृष्णेन। अतो हि यः सर्वं परित्यज्य भगवदुक्तं यथा "चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।
(गीताः १८।५७) बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥" इति

वचनानुरूपम् सर्वदा सच्चिदानन्दे परब्रह्मणि भगवति श्रीरामे सर्वात्मना मनो निवेश्य अगणितानन्दमये तदीयशरणे तच्चरणारविन्दमकरन्दमिलिन्दायमानः भगवच्छरणीचिकीर्षुर्भवति यदि, न तदा लौकिककर्तव्याऽकर्तव्यकरण-प्रवृत्तेरपेक्षा न वा कर्म-प्रतिवन्धनमेव। अतो दृढ़निश्चयो जनो न स्वलक्ष्यभूतात्पथाद् विचलितो भवेदित्यपि नीतिः। कर्मवन्धनिगडितोजनः किमपि कर्तुं न पारयति।

उक्तञ्च—"प्रवृत्त्यनुवन्धान्नास्त्यपवर्गः।" ( वात्स्या-भाष्ये )
यच्च— "ऋणक्लेश प्रवृत्त्यनुवन्धादपवर्गाभावः।" किञ्च-

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः" ( गी. ३।२० ) इत्यादिवाक्यैः गार्हस्थ्यादि कर्मभिरेव-जनकादीनां सिद्धिप्राप्तिर्निर्दशिता। सा तु तादृशीसिद्धिः कर्मद्वारा स्वीयान्तःकरणशुद्धिपरा। तस्यां (अन्तःकरणशुद्धौ सत्याम्) भगवज्ज्ञानोपलब्धिः केवलं साधिता साध्यते च। यदि च तज्ज्ञानम् ( भगवज्ज्ञानम् ) अन्यथाभवितुमर्हति, तर्हि न कर्मचक्रभ्रमणपतनापेक्षा।

तदा तु—"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच ॥" (गीता १८।६६)
इति स्वयमेव भगवता प्रदर्शितो राजमार्गः।

अतः प्रार्थये पूज्यचरणाः! क्षमापुरःसरं सर्वथा गृहस्थाश्रमभारमुद्वोढुमसमर्थं निर्वलं स्वात्मजं मत्वा; विमनस्कञ्च हठाद् वलाद्वा तत्कर्मणि नियोजितं कृत्वा न किमप्यभिलषितामेष्यन्ति सिद्धिं स्वमनः संकल्पितामिति।

मध्य एव श्रीपुण्यसदनः (श्रीरामानन्दजनकः) सपदि जगाद वत्स ! यं संन्यस्त-धर्मं सहजग्राह्यं सरलं वा मनुषे न तत् तथा। स त्वतीव दुःसाध्यः, तत्रापि यमनियमासनप्राणायामप्रत्याहार-धारणा-ध्यानसमाधीनामष्टविधयोगाङ्गानां दृढतराभ्यासो नितरामपेक्षतेऽन्यथा संन्यासिनः पदे पदे पातशङ्कैव, तथाऽभ्यासे तु परमदुःसाध्यश्चित्त-निरोधः।

उक्तञ्च "अप्यब्धिपानान्महतः सुमेरून्मूलनादपि।
अपि वह्न्यशनात् साधो विषमश्चित्तनिग्रहः॥"

गीतायामपि- चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याऽहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥ इति॥

श्रीरामानन्दः—सानुनयं प्रोवाच—पूज्यपितृचरणाः सत्यमेतत्, किन्तु एतादृशस्य सर्वथा ह्यशक्तस्यैव कृते भगवता तथाविधः प्रकारः प्रादृष्टः सः सरलतया भगवन्तमेव समेयात्-उक्तञ्च यदि जनः किमपि पुरुषार्थं सम्पादयितुमक्षमः स्यात् तर्हि—

"मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव, अत ऊर्ध्वं न संशयः॥ (गीता १२।८)

इत्थम् भगवति निवास एव ब्रह्मसम्पन्नता या हि काम्यते मुमुक्षुभिः।

प्रतिज्ञातञ्च भगवता—"तेषां नित्याऽभियुक्तानां योगक्षेमं वहाम्यहम्।" अतः सर्वं भगवति निक्षिप्य शुभाऽशुभं सकलकर्मजातं, निश्चिन्तोऽयं परिव्रजेज्जनः।

किञ्चेदमपि प्रतिजाने-नाहं तथा प्रव्रजिष्यामि यथाऽन्ये पाषण्डिनः—ये हि "धनाऽऽहाराऽर्जने युक्ताः दाम्भिका वेषधारिणः। भ्रमन्ति ज्ञानिवल्लोके"। "भ्रामयन्ति जनानपि", नैवं भूतः पृथिव्यां भारायितः सन् भ्रमिष्यामि, अपितु वस्तुतः संन्यासीव-सर्वं भगवत्येव सम्यक् न्यस्य (न्यासं विधाय) निःस्वार्थरूपेण सकलोद्धारपरायणः सन् संसारे प्रवर्तितं प्रचारितम् सर्वतो विततं पाषण्डवादं समूलमुन्मूलयितुमेव प्रयतिष्ये। भारते चाकोण-कोणं परिव्याप्तां म्लेच्छसत्तां, प्रसारिताञ्च नानाप्रलोभनैः सकलजनमानसे विहितनिकेतनां विनाशितभारतीयत्वचेतनाम्-समुत्खातितसनातनधर्मधृतिम् कलितदुष्कर्मप्रसृतिम् यजनसंस्कृतिं समूलघातं विनाशमुपनेतुम्, प्रवर्तयितुञ्च पुनरपि शाश्वतिकीं परम्परागतां स्वधर्मानुमतां सतां सनातनीं प्राचीनां भारतीयां भारतीविभाविभासितां पद्धतिम् सत्कृतिञ्च पुनः प्रतिग्रामं प्रतिनगरं प्रतिजनञ्च प्रवर्तयिष्यामि विस्तारयिष्यामि च भवतां कीर्तिवल्लरीम्। प्रस्पन्दयिष्यामि च सनातनधर्मपताकाम्। अस्मिन् व्यापारे संरतोऽहं भवतां समीपे तिष्ठेयम् नवा परन्तु

यत्र कुत्रापि भारते वसन् परिभ्रमन् (व्रजन्) गार्हस्थ्यव्यापारात्पराङ्मुखोऽपि सकल विभारते भारते विलुप्तप्रायाथा भारतीयायाः संस्कृतेःसमुद्धरणकर्मणा पितृलोकस्थाः नः पितरो न तृप्तिमेष्यन्ति किमु। यवनप्रलोभननिपतितान् सर्वनिजसनातनधर्मकर्मविमुखान् देवद्विजगुरुपितृप्रीणनकर्मबहिर्मुखान् पुनरपि स्व-स्वकर्मणि प्रवृत्तान् विधाय यथापूर्वं लब्धपुत्रादिप्रदत्तपिण्डोदकक्रियाकलापान् तत्तत् पितॄन् पितृलोकस्थान् योजितपिण्डान् कारयित्वा, तेषामप्याशीर्ग्रहणपुण्यं न लप्स्ये किमु? यदा च भारतीयां संस्कृतिमनुसृत्य तत्तत् कुटुम्बजैः पुत्रपौत्रादिभिः प्रसारितश्राद्धतर्पणादिभिः सन्तृप्तास्तेषां पितरोऽपि प्रत्यब्दमाशीर्भिरभिनन्दयिष्यन्ति माम्। तदानीं पुनर्ग्राहितभारतीयसंस्कृतिकानामशेषाणां श्रद्धाऽऽस्पदानि भविष्यन्ति पितृचरणाः न केवलं रामानन्दस्यैव। निखिलं जगत् शतशत धन्यप्रशस्तिभिः सम्मानयेद्, भवन्तं नित्यं श्रद्धाप्रसूनावलिभिरर्चयेदिति, तद्गौरवमहं प्राप्नुयामिति न भविष्यत्यभिमतं श्रीमताम् किमु ? न वा श्रीमन्तो मोदिष्यन्ते विलोक्य मां तथार्चितं समुपदिशन्तं जगद्गुरुपदासीनञ्चेति।

अतोऽहं प्रार्थये यत् करुणामयी मे जननी साक्षात् तीर्थस्वरूपो भवान् पूज्या श्रीगुरुचरणाश्च ममोपरि दयां कृत्वा स्वकीयाशीर्भिर्मां सफलमनोरथं विदधत्विति। निवेद्य श्रीरामानन्दः शान्तवदनः स्ववाचमुपसंजहार।

ततः श्रीपुण्यसदनः स्वतनयस्य दृढप्रतिज्ञामाकर्ण्य सहसा श्रीरामनन्द-प्रादुर्भावकालिकं स्वतपःसञ्चरणानन्तरं श्रीमद्भगवतो दयापारावारस्य श्रीराघवेन्द्रस्य वरदानाय प्रकटितदर्शनस्य सकलां स्वावतरणहेतुकीं गिरं वरदानाय प्रसारितां तां सस्मार। अहो स एव यद्यवतीर्णस्तर्हि स्वावतारप्रयोजनं सकलं सम्पादयिष्यत्येव वितताञ्च समस्ते भारते यावनिकीं संस्कृतिं म्लेच्छसत्ताञ्चायमपसारयिष्यतीति न मयाऽपि हठो विधातव्यः। इति विचिन्त्य स्वाऽनुमतिसूचयित्रीं तदनुकूलां "यथेच्छसि तथा कुरु" इति वाणीम्-आशिषश्च प्रासारयत्।

श्री सुशीलामाताऽपि मौनमासाद्य नयनाभ्यामेव समर्थयति स्म। तथा च श्रीमद्राघवानन्दाचार्या अपि "तथास्तु" इति प्रयुज्य, आश्रमस्थान् सर्वान् स्वस्वनित्यनैमित्तिककर्मकलापं विधातुमाज्ञापयामासुः।

—:—

# विंशः परिच्छेदः

"श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयोहि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमा वृणीते (कठ० २।२।२)

विश्वस्याऽयं नियमः, यद् प्रतिमानवं भगवतोऽनुग्रहेण श्रेयः ( अलौकिकानन्दः ) कल्याणम्, प्रेयो ( लौकिकप्रेम ) उभौ एव यथेच्छं समुपयोगार्थमुपस्थितौ भवतः। तत्र विद्वान् श्रेय ( परमानन्दमयं कल्याण ) मेव गृह्णाति, मूढस्तु प्रेयो लौकिकमेव सुखं स्वीकरोति तद्वच्छ्रीरामानन्दः श्रेय ( अलौकिकानन्दमयं कल्याण ) मुरीचकार ।

श्रीरामानन्दस्य संन्यासविषये सर्वेषामैकमत्यमासीत् । आगामिनि फाल्गुनमासि शुभे मुहूर्ते संन्यासदीक्षा भविष्यतीति सर्वत्र प्रासरच्छुभोदन्तम् । तदानीम् देवायितैः कर्मकलापकलनलब्धकौशलैः कार्यकरैः श्रीपञ्चगङ्गातटनिकटवर्तिनि सुविशालक्षेत्रे व्यरचि मनोहरं 'विविधचित्रविचित्र-चैल-सुसज्जितं परितो विततलोललुलितपुष्पगुच्छपरिराजितचीनांशुकचञ्चन्मालिकाऽवलम्बित पटमण्डपम् । तत्राधोभागे नानाविधरत्नराजिखचित-रजतसुवर्ण-ललित-महार्हमणिमण्डितम् निजविभाविभासिताऽशेषमण्डपशोभं समुन्नतैकदेशसमलङ्कृत - परितो विलम्बितमौक्तिकदामदीप्तिदीपितम्, मृदुलतूल - गर्भितमखमल्लराजपटावृतास्तरणशोभितान्तरालम्, सुवर्णराजतसूत्रसमञ्चितचित्राञ्चित हस्तकलाकौशलप्रदर्शकवहुविधव्रततिप्रसूनगुच्छकल्पितद्युतिमहित - महार्ह-परिवर्ह - समुपधानादि-परिकरावृतं सर्वथासुखासनं सिंहासनं प्रकल्पितमभूत् । तस्यैव पार्श्वभागे रौप्यमयं सर्वतोऽलङ्कृतपीठमपि प्राकल्पि । विविधहरित-पीतनील-शोणित-पाटलाद्यनुरञ्जितवर्णानि सुखाऽऽस्तरणानि भूमौ प्रसारितान्यासन् ।

इत्थम् 'दूष्याद्य' निर्माणं, उपरिभागे च सुवर्णराजततन्तुरचित-वहुकुसुमपल्लवानुकारिचित्रचित्रितमुल्लोचकमास्तृतमासीत् । परितोमण्डपम् स्थाने स्थाने

कदलीस्तम्भोपरि नवकिसलयसुमनोगुच्छकविभूषित - पटकल्पितपताकावलिसुसज्जित-वन्दनमालामण्डितम्, विविधशोणित-पीत-सौवर्णवर्ण-पद्मस्थलपद्म-सहस्रारकुसुम-पाटलाशतपत्रीमल्लिकामाध्यकुसुममालापरिमण्डितम्, सुधर्माऽनुकारि सभामण्डप-मलङ्कृतं प्रसाधितमभूत् । तत्रैव दीक्षाशाला यज्ञशाला सभाभवनम् दर्शकश्रेणिः, प्राघुणिकप्रकोष्ठम्, महिलाऽऽसनानि, सम्मानित-सदस्याश्रयणानि विद्वद्वृन्दानु-रूपपीठासनम् सतां महतां साधूनां संन्यासिनां योगिनाम्-आचार्याणाम् वैदिकानाम् कर्मकाण्ड-प्रकाण्डानाम् पार्श्वे च समागतान्यशालीयच्छात्राणाम् स्वाश्रमीयाऽन्ते-वासिनाञ्च पृथक् पृथक् यथायोग्यम् यथारूपं स्थितेः सुव्यवस्था सम्पादिता समलङ्कृता समभवत् ।

प्रतिशालञ्च यथायोग्या सामग्री सङ्कलितीकृता, यथा हि हवनकुण्ड-समीपेऽग्निशुभाऽऽगारे ( यज्ञशालायाम् ) आज्यम् हव्यम् ( तिल-यव-शालि, शर्करा द्राक्षाऽऽमलक, राजादन ) सर्षपेन्द्रयवगन्धाऽक्षतपुष्पधूपाष्टगन्ध - हरिद्रा - हरेणुका-हृद्विलासिनी यक्षकर्दमादि विविध सुरभितवस्तुपुष्पनिर्यास-ताम्बूल, लवङ्गैला-कर्पूरक्रमुक जातिपत्री वातादाऽक्षोट श्रीफलाद्युपकरणासादनम् । विविधसुमनसां सामयिकानां सङ्कलनम् । समेषाञ्चोपलब्धानां ऋतुफलानाम्-दुग्ध-मधु-क्षीरिणी पायसादीनां नानाविधदुग्धादिनिर्मित-किलाटक-कलाकन्द-पेटकादीनाञ्च समाह-रणम् सम्पादितम् ।

मुहूर्ताऽवसरे सुदूरदेशात् समायातानां दर्शकानां महान् सम्मर्दः सञ्जातः भूयांसो बाल-वृद्ध-युवानो नागरिकाः ग्राम्या नरा नार्य्यश्च सुसङ्गताः समभूवन्-मन्ये महापुरुषस्य कामप्यलौकिकीं सिद्धिं प्रक्रियां वा द्रष्टुकामाः भारतीयाः किंवा भूमण्डस्थाः सकला देवा, तीर्थानि जलदा नदाः पवित्राः सकला गिरयो, नाना द्रुमाः नागादयो वा नानारूपधारिणः समवेताः शुभसुकृतकर्मदर्शनकांक्षिणः सञ्जाताः । तदानीं समवेतानामशेषाणाम् यथारूपं यथावयः यथास्थानं यथाक्रमं यथालब्धोपचारैः सम्मानं विधाय यथायोग्यासनेषु तान्निवेशयामासुः कर्मचारिणः ।

समागतायां सुमुहूर्तवेलायां श्रीमदाचार्यवर्य्याः श्रीराघवानन्दाचार्याः स्वशि-ष्येण श्रीरामानन्देन सत्रा-दीक्षासत्राऽऽरम्भं विधातुं दीक्षामण्डपं स्वचरणविन्यासैः समलञ्चक्रुः । तदानीमेव चारुशीलया श्रीसुशीलया देव्या सह श्रीसदन इव प्रसन्नवदनः श्रीपुण्यसदनः समागतः । तत्कालमेव समन्ताच्छ्रीराघवानन्दाचार्याः विजयन्ताम्, विजयतां श्रीरामानन्दः, इति जयध्वनिः प्रासरत् । नागरिकाणां सामूहिकेन जय-ध्वनिना समस्तं सभा-दीक्षामण्डपमेव जयध्वनिमयमभूत् पञ्चगङ्गातटस्थे श्रीमागी-

रथ्याः पावने पयस्यपि तरलतमतरङ्गव्याजेन शुभसामयिकाऽऽनन्दाऽऽन्दोलनमिवाऽदर्शि जनैः।

तस्मिन्नेवाऽवसरे वेदानां चतुर्णामेव संहितापाठैः समायाताः वैदिकाः, मङ्गलाचरण-स्तवपाठैः विद्वत्तल्लजाः, यज्ञाऽऽरम्भविधिना याज्ञिका विविधवैदिकशाखाऽध्यायिनो वैदिकावटवः शान्तिपाठैश्च निखिलं दीक्षामण्डपम्-मन्त्रमयं, काव्यमयम्, स्तवनमयम्‌·यजनमयम् भजनमयम् महत्पावनं पवित्रतमम् च चक्रुः। समागताभिश्च महिलाभिर्माङ्गलिकगीतिशतैर्मङ्गलमयं विदधे।

यथानियमं विधिविधानैः श्रीगुरुसमर्चनाऽनन्तरं दीक्षाप्रकरणम् प्रारभत। आरम्भावसरे श्रीराघवानन्दाचार्याः सर्वान् सम्बोध्य प्रावोचन्---"सम्मान्याः सन्तोमहान्तः! आदरणीयाः विपश्चिदविपश्चिमाः, सभ्याः नागरिकाः महानुभावाः! वयमद्य सर्वे समवेताः समभूवन्-किमुद्दिश्यमहा मङ्गलमयमहोत्सवं सहर्षं समाराधयामः स हि श्रीरामानन्दब्रह्मचारिणो महाविदुषः संन्यासग्रहण-दीक्षासमारोहः प्रवर्तते। स हि कीदृग्विधः? किं रूपः? किं फलकः? कथमाराध्यः? किमर्थमुपसेव्यः? केनाङ्गीकरणीयः? कीदृग्विधोऽस्याऽधिकारी-इति सर्वं जिज्ञासितव्यमवशिष्यते-अस्ति सनातनत्वम् वैदिकत्वं वाऽस्य? किं वा मनः समुट्टङ्कितमेव जनैरादृतम्? इति जागर्ति विज्ञानजिज्ञासा सर्वेष्वेव। एतदर्थम् इममेव विषयमधिकृत्य श्रीमतां विज्ञानिनां मनोविनोदाय, प्रश्नकुतूहलिनाञ्चेतसि समाधानाय, जिज्ञासूनां ज्ञानपिपासाप्रीणनाय प्रशमनाय च विषयमिमं स्फुटं विवेचयामि सर्वतः प्रथमं का नामदीक्षा भवति? को लाभश्चाऽनया? कश्चाऽधिकारी? इति विविच्यते, सावधानैः शान्तचेतसा सकलैः श्रोतव्यमिति:—

प्रमाणञ्चात्र---"दिव्यं ज्ञानं यतो दद्यात् कुर्यात् पापस्य संक्षयम्।
(विष्णुयामले०) तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः।
अर्थात् दिव्यज्ञानप्राप्तये पापपङ्कप्रक्षालनाय मुनिभिः समादृता दीक्षा॥
लाभः---"दीक्षा ददाति परं ज्ञानम्" अर्थात् परमोत्कृष्टं ज्ञानमुत्पादयति।

उक्तञ्च रुद्रयामले---"ददाति शिवतादात्म्यं क्षिणोति च मलत्रयम्।" किञ्च-"यस्या विज्ञानमात्रेण देवत्वं लभते नरः।" पुनश्च---"दीक्षितो ब्राह्मणो याति ब्रह्मलोकं सुधामयम्। ऐन्द्रलोकं क्षत्रियोऽपि, प्राजापत्यं विशस्तथा। याति गन्धर्वनगरं शूद्रो दीक्षाप्रसादतः।" (रुद्रयामलतन्त्रे) किञ्च विनादीक्षया मोक्षोऽपि न भवति। उक्तञ्च-"दीक्षां विना न मोक्षः स्यात्।" "अज्ञानवशात् प्रमादाद्वा यदि उपेक्षेत, न तस्य कश्चन त्राता भवति। उक्तञ्च—

'अनीश्वरस्य मर्त्यस्य नास्ति त्राता यथा भुवि ।
तथा दीक्षा विहीनस्य नेह स्वामी परत्र च ॥" (इति दत्तात्रेययामले)

तथा च मन्त्रमुक्तावल्याम्—"जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।" भगवतः शिवस्य पार्वतीं प्रति वचनम्—दीक्षाहीनेन कृतं सर्वं निष्फलं भवति न मोक्षश्चेति ।

तथाहि—"अदीक्षितस्य वामोरु कृतं सर्वं निरर्थकम् ।
पशुयोनिमवाप्नोति दीक्षाहीनो मृतो नरः ॥" पुनश्चोक्तम्—
"देवि ! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥" (इति तन्त्रसारे)

वैष्णवतन्त्रेऽपि—"यथा काञ्चनतां याति कांस्यं रसविधानतः ।
तथा दीक्षाविधानेन द्विजत्वं जायते नृणाम् ॥"
"रसेन्द्रेण यथाविद्धमयः सुवर्णतां व्रजेत् ।" (अयः=लोहः)
दीक्षाविद्धः तथैवात्मा शिवत्वं लभते प्रिये ! (कुलार्णवतन्त्रे)

तथा च —"दीक्षाग्निदग्धकर्माऽसौ पाशविच्छिन्नबन्धनः ।
कर्मबन्धो गतस्तस्य निर्जीवश्च शिवोभवेत् ॥"

इत्याद्यनेकानि सन्ति शतशः प्रमाणानि दीक्षाया आवश्यकतायाम् ।

किमधिकम् बहुजेषु—'दीक्षा" नाम मन्त्रप्रदानम् । तत्र प्रमाणमपि—

मन्त्रशब्दार्थः—"मननाद् विश्वविज्ञानम् त्राणं संसारबन्धनात् ।

मेरुतन्त्रे—यतः करोति संसिद्धिं "मन्त्र" इत्युच्यते ततः ।

मननाज्ज्ञानम्, सांसारिकबन्धनात् त्राणात्-मन्त्रः स हि दीक्षया गृहीतः सर्वसिद्धिप्रदो भवति । किञ्च ( मेरुतन्त्रे उक्तञ्च— )

"मन्त्रः सर्वेश्वरः साक्षान्मन्त्र एव महौषधम् ।
न हि मन्त्रात् परः कश्चित् सर्वसिद्धिप्रदायकः ॥"

मन्त्राश्च बहुविधा सन्ति, तत्र कार्यपरकमन्त्राणां दीक्षायान्तु प्रथमं दीक्ष्यजनस्य नामतः "सिद्ध साध्यः सुसिद्धः अरिश्चेति" संज्ञकेषु कीदृशो मन्त्रः कस्य कृते सिद्धः साध्यश्च कस्मै, सुसिद्धो वा कस्य हेतोरिति विचार्यैव दीक्षा दीयते । अरिर्मन्त्रः सर्वथा त्याज्यः साधकप्राणहारकत्वात् ।

उक्तञ्च-तन्त्रागमे—"सिद्धः सिद्ध्यति कालेन, साध्यः सिद्ध्यति वा न वा।
सुसिद्धः स्मरणादेव, अरिः साधकघातकः।"

किन्तु भगवन्नामरूपाणां मन्त्राणां कृते नायं नियमः। ते तु सर्वदैव सर्वेषां कृते कल्याणप्रदाः मोक्षदायकाश्च भवन्ति। उक्तञ्च (मैथिली महोपनिषदि—)

"सर्वे एव मन्त्राः सुखप्रदाः शुभप्रदाः, क्षेमप्रदाः, धनप्रदाः, एकमप्यक्षरमुच्चारितं शतजन्मभिरर्जितानि महापातकान्यपि विनाशयति, तत्रापि षडक्षरो मन्त्रः सर्वोत्कृष्ट आशुफलप्रदः, सर्वमेव वाञ्छितमभिपूरयति।"

किञ्च "षडक्षरोऽयं मन्त्रः स्यात् सर्वाऽघौघनिवारकः।
मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः।" (मत्स्यपुराणे०)

किञ्च—"षडक्षरं दाशरथेस्तारकं ब्रह्म कथ्यते" इति। तत्र तारको नाम—"गर्भ जन्म जरा मरण संसार महद्भयात् सन्तारयति, इति तस्मादुच्यते—"षडक्षरम् तारक" मिति। (रामोत्तरतापिन्युपनिषद्)। माहात्म्यञ्चास्य—

"य एवं मन्त्रराजं श्रीरामचन्द्रस्य नित्यमधीते सोऽग्निना पूतोभवति, स वायुना पूतो भवति, स आदित्येन पूतो भवति, स सोमेन पूतो भवति, स ब्रह्मणा पूतो भवति, स विष्णुना पूतो भवति, स रुद्रेण पूतो भवति, स सर्वैर्देवैर्ज्ञातो भवति सर्व ऋतुभिरिष्टवान् भवति।" (पिप्पलायनशाखा)

श्रीनारदपञ्चरात्रे, — "श्रीरामेति परोमन्त्रस्तदेव परमंपदम्।
हिरण्यगर्भ संहितायाम्ः—तदेव तारकं विद्धि जन्ममृत्युभयाऽपहम्।"

इति श्रीराममन्त्रस्य सर्वतः श्रेष्ठत्वं सर्वथा सुलभत्वञ्च प्रतिपाद्य, दीक्षार्थिनः सम्बन्धेऽपि संस्कारप्रकारः प्रदर्शितः शास्त्रेषु—यथा बीजाऽवापनार्थं भूमिशोधनम् हलादिनाकर्षणम्-खादपूरेणपूरणम्-विधायैव बीजवपनं क्रियेत-तथैव दीक्षार्थिनोऽपि पञ्चधा शोधनम् कृत्वा पश्चान्मन्त्रोपदेशः।

उक्तञ्चः—"तापं पुण्ड्रस्तथा नाम मन्त्रो माला तथैव च।
अमी हि पञ्च संस्काराः परमैकान्त्यहेतवः।" (वैष्णव तिलक-संहिता)

इत्थम् "तप्तमुद्रा, ऊर्ध्वपुण्ड्र, नाम, मन्त्र, माला (कण्ठिका) पञ्च-संस्काराः। तच्च "हारीतसंहितायां (स्मृतौ)' 'तस्मात् तापादिसंस्काराः कर्तव्या धर्मकांक्षिणा।" एते हि पञ्चसंस्काराः न केवलं संन्यासिनामेव, अपितु सर्वेषां दीक्षितानां हेतवे।

बृहद्ब्रह्म "विरक्तो वा गृहस्थो वा सकामोऽकाम एव च।
संहितायाम्:—तापादिना विमुक्तः स्यात् पातकैः कोटिजन्मजैः।"

## तत्र प्रथमं तप्तमुद्रासंस्कारः ( अथर्ववेदे )

"यो वै नित्यं धनुर्बाणाङ्कितो भवति स पाप्मानं तरति स संसारं तरति स भगवदाश्रितो भवति स भगवद्रूपो भवति।" इति।

सामवेदे—"चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रतः,
अपामूर्मिं स च मानः समुद्रं तुरीयं धाम महिषो विवक्ति।"

जनः पृथिव्यादि पञ्चमहाभूतात्मकसंसारसागरनिमग्नोऽपि भगवदंशभूतः ( जीवः ) धनुर्बाणादि दिव्यायुधचिह्नानि भुजयोर्धारयन् स्वसम्बन्धिबान्धवैः सह स्वात्मानमपि समुद्धृत्य भगवद्धाम प्राप्नोति। ऋग्वेदेऽपि श्रुतिः—

'गोविन्दस्यायुधान्यङ्के बिभ्रत् सुश्रोणि वै द्विजः।
तुरीयं धाम तद्विष्णोर्महिष्ठः प्राप्नुयादिति।'

स्पष्टमपि—वामे करे धनुः कुर्य्याद्दक्षिणे बाणमेव च। सबिन्दुतिलकं कुर्यान्मुक्तिभागी भवेन्नरः।" ( अगस्त्यसंहितायाम् ) माहात्म्यञ्चास्य—

"धनुः शराङ्कितोमर्त्यो यद् यत्कुर्याच्छुभं मुने।
तत्तच्छतगुणं याति, विपरीते तु निष्कलम्॥"
"बाहुमूले धनुर्बाणेनाङ्कितो रामकिंकरः।" (अगस्त्य संहिता)

"अनायुधासो असुरा न देवा इति वै श्रुतिः।" इत्यादि प्रतिवचनात्, मुद्राविहीनस्य निषेधात् आसुराऽऽवेशो भवतीति-मुद्राधारणमावश्यकमेव। यदि च तप्तमुद्रा नाऽङ्कितीकारिता तथा शीतलमुद्राधारणमपि शास्त्रसम्मतम्। सा हि-चन्दनादौ ( क्षोदे ) मुद्रां लिप्तां कृत्वा धारिताऽपि तादृगेव फलप्रदात्रीति। किन्तु साम्प्रदायिकः शुभाऽऽग्रहस्तु तप्तमुद्राधारणमेव वरीयः "शीतलाच्छतगुणं प्रोक्तं तप्तञ्च परिधार्यते" ( अग० सं० )

## ततो द्वितीयः संस्कारः पुण्ड्रः [तिलकधारणम्] संस्कारः

"हरेः पादाऽऽकृतिमात्मनोहितम्, मध्ये छिद्रं ऊर्ध्वपुण्ड्रं यो धारयति, सः परस्य प्रियो भवति, स पुण्यवान् भवति, स मुक्तिभाग् भवति।" ( अथर्ववेदः )

'भगवच्चरणारविन्दाऽनुकारि सान्तरालं ( मध्येच्छिद्रयुक्तम् ) श्रीस्वरूप कुङ्कुमरञ्जितोर्ध्वरेखा-स्थापनार्थं, बिन्दुधारणार्थं वा, तिलकम्-(श्वेतं, चन्दनं कौङ्कुमं वा) ललाटे धारणीयमेव। यथा लोके राजसेवको राजमुद्राङ्कित एव सकलसम्मान्यो दुर्जनत्रास ( भय ) दायको भवति तद्वत् भगवद्भक्तोऽपि भगवन्मुद्राऽलङ्कृतः सर्वमान्यो यमकिङ्कराणां भयप्रदो, भगवत्प्रियश्च भवति। विना तिलकं, न स भगवत्सेवाऽधिकारी भवति। अतो भगवद्भक्तः सर्वदैव सतिलकस्तिष्ठेत्।

येन न कदाचिद्भगवद्विस्मृतिर्न चाऽऽसुरभावप्रवेशः क्वचन भवेत्।

उक्तञ्च — "ऊर्ध्वपुण्ड्रे स्थिता लक्ष्मीरूर्ध्वपुण्ड्रे स्थितो यशः।
ऊर्ध्वपुण्ड्रे स्थिता देवा ऊर्ध्वपुण्ड्रे स्थितो हरिः॥ किञ्च

"व्यालं दृष्ट्वा यथा लोके दर्दुरा भयकम्पिताः, ऊर्ध्वपुण्ड्राऽङ्कितात् तद्वत्— कम्पन्ते यमकिङ्कराः।" ( ब्रह्मरात्रे वचनमेतत् ) भगवताऽप्युक्तम्—

"मदाराधनकाले च सदा यज्ञादिकर्मणि।
अवश्यं धारयेदेतदूर्ध्वपुण्ड्रं द्विजोत्तमः॥"

"यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म च।
वृथा भवति विप्रेन्द्र ऊर्ध्वपुण्ड्रं विना कृतम्॥"

"गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा।
अवश्यं धारयेत्पुण्ड्रं पुण्यमूर्ध्वं सुशोभनम्॥" इति।

## ततः तृतीयः संस्कारो नामसंस्कार

"यशस्यं नक्षत्राश्रयं नामधेयं देवताश्रयम्।" ( कृष्णयजुषि ) दीक्षितस्य देवतानामपरं नक्षत्रनामपरं व यशस्विनो नाम रक्षणीयम्।

"योजयेन्नामदासान्तमाचार्यान्तमथाऽपि वा। भगवन्नामपूर्वञ्चेत्पापघ्नं पुण्यभाग्भवेत्।" "हरिदासो यथा श्रीमत् कृष्णाचार्य इति ध्रुवम्।" ( इति पाराशरादिवचनम् ) इत्यादि भगवन्नाम्नोऽन्ते "दासः" 'आचार्यो' शब्दः योजितश्चेदहरहः स्मृतिपथमुपगतो दुरितदुष्कर्मभ्योदूरमेव रक्षिष्यति तन्नामधारिणम् विवेकिनं भक्तम् लोकलज्जया स न प्रवर्तयिष्यति ( प्रवर्तिष्यते वा ) तेन सदाचारपालनम् प्रतिष्ठालाभश्चेति। उक्तञ्च पद्मपुराणेऽपि—

"न वेद-यज्ञाध्ययनैर्न व्रतैश्चोपवासकैः।
प्राप्यते वैष्णवं लोकं विना दास्येन कर्हिचित्॥"
"न दासा वासुदेवस्य सर्वलोकेश्वरस्य ये।
तेषां हि नरके वासः कल्पायुषः शतैरपि॥"

इत्थम् दीक्षाविहीनस्य निन्दाऽपि श्रूयते, न सः "स्वर्गसुख-मोक्ष" भाग् भवति।

हारीतस्मृतौतु— "गुणयोगेन चाऽन्यानि विष्णुनामानि लौकिके।
विशिष्टं वैष्णवं नाम सर्वकर्मसु वोधितम्।"

"सर्वेषां श्रुतिचोदितम्" इत्थम् भगवता, भगवद्गुणैः सह नामधारणं श्रेयः।

## ततः चतुर्थः संस्कारो मन्त्रसंस्कारः

"तापं पुण्ड्रं तथा नाम कृत्वा वै विधिना गुरुः।
पश्चादध्यापयेन्मन्त्रं शिष्यं निर्मलचेतसम्॥"

अत्र मन्त्रेष्वपि—सर्वेषां राममन्त्राणां श्रेष्ठं श्रीतारकं परम्।"(पद्मपु०)
"अहञ्च शङ्करो विष्णुस्तथा सर्वे दिवौकसः।
राममन्त्रप्रभावेण सम्प्राप्ताः सिद्धिमुत्तमाम्।" अतएव
"अनन्ता भगवन्मन्त्रा नानेन तु समाः कृताः" (हारीत स्मृतौ)

## ततः पञ्चमो मालासंस्कारः

(सनत्कुमार संहितायाम्)—"तुलसीमालिका सूक्ष्मा कण्ठलग्ना द्विधाकृतिः।
दद्यात्तां क्षणमात्रोपि शिष्ये, नैव त्यजेत् पुनः।"

गुरुणा दत्तां मालिकां (कण्ठमालिकाम्) कण्ठलग्नां शिष्यः कदापि न त्यजेत्।
त्यागे हि महान् दोषः—मालिका हि यज्ञोपवीतसमाना, तत्त्यागे वैष्णत्वहानिः—

यथा हि— "ब्रह्मसूत्रं विना विप्राः वेदहीनाः क्रिया यथा।
सत्यहीनं यथा वाक्यं, मालाहीनाश्च वैष्णवाः।"

यथा यज्ञोपवीतहीनो ब्राह्मणः, वेदहीना यज्ञ-जप-पाठादि सर्वविधा क्रिया, सत्यहीनानि वाक्यानि हेयानि भवन्ति तथैव मालाकण्ठीहीनोऽपि हेयः।

तथा च "गुरुदत्ता तु या माला कण्ठलग्ना सुसंस्कृता।
तुलसी काष्ठसम्भूता न त्याज्या सा कदाचन ॥"

पद्मपुराणेऽपि—"ततः सर्वेषु कालेषु धार्या तुलसिमालिका।
क्षणार्द्धं तद्विहीनोऽपि विष्णुद्रोही भवेन्नरः ॥

इत्येव न-अपितु— "यत् कण्ठे तुलसी नास्ति ते नरा मूढमानसाः।
अन्नं विष्ठं जलं मूत्रं पीयूषं रुधिरं भवेत् ॥"

अशुचित्वशङ्काऽपि न कार्या—"नाऽऽशौचधारणे तस्याः यतः सा ब्रह्मरूपिणी।"
(स्कान्दे०)

किं वहुना तुलसीकाष्ठेन तु—मृतकानामपि मुक्तिर्भवति—उक्तञ्च—

"मृतः शुद्ध्यति दाहेन तुलसीकाष्ठवह्निना।" (पाद्मे०)

किञ्चः—"महापातक संहर्त्री सर्वकामप्रदायिनी।" (स्कान्दे०)

अतः – कण्ठेधारिता तुलसीमालिका (कण्ठी) सर्वदा सर्वत्रैव पवित्रा पावनी च विद्यते न सा कदाचन-अशुचिर्भवति। सततं धार्या पाविनीति सा।

## सम्प्रति— आचार्यत्वविवेचनाः

लक्षणम्— "आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥"

यो हि सकलशास्त्राणाञ्चयनं कृत्वा स्वमते स्वाचारे वा स्थापयति, तथैव च स्वयमप्याचरेत् लोकं वा आचारयेत्—स एव आचार्यपदवाच्यो भवति।

नारदपञ्चरात्रेऽपि— "अर्थपञ्चकतत्त्वज्ञाः पञ्चसंस्कारसंस्कृताः।
आकारत्रयसम्पन्नास्ते वै भागवतोत्तमाः ॥"

तत्र अर्थपञ्चकं नामः—१ प्राप्यः (ईश्वरः), २ प्राप्ता (जीवः), ३ प्राप्त्युपायः; ४ प्राप्तिफलम्, ५ प्राप्तिविरोधीति' अर्थपञ्चकस्य तत्त्ववेत्ता भवेत्।

पूर्वोक्त पञ्चविधसंस्कारैः संस्कृतः, आचारत्रयेण संयुक्तः—यथा—

"अनन्यसाधनत्वञ्च, तथाऽनन्यैव दासता। अनन्या भोग्यता यत्र, स वै-भागवतोत्तमः।"

"भोग्यं भोज्यञ्च पानञ्च, धार्यं किञ्चन वस्तु वा।
समर्प्यैव तु गृह्णाति, न स्पृशत्यसमर्पितम्।"

किञ्च— "सत्सम्प्रदायसम्पन्नं मन्त्ररत्नार्थकोविदम्।
ज्ञानवैराग्य-संयुक्तं सर्वधर्मविशारदम्॥"

(हारीतस्मृतौ) शुद्धसत्त्वं गुणोपेतं सदाचारनिषेविणम्।
आचार्यं संश्रयेत् पूर्वमनं वैष्णवं द्विजम्॥"

(पाद्मोत्तर खण्डे तु) "सहस्रशाखाऽध्यायी च सर्वयज्ञेषु दीक्षितः।
कुले महति जातोऽपि न गुरुः स्यादवैष्णवः।"

किञ्चः—"अवैष्णवो गुरुर्न स्यात्।' (स्कान्दे०) निषेधश्रवणात्॥

## एवमेव-शिष्यत्वविवेचना

"शिष्यः कुलीनः शुद्धात्मा" इत्यादि शास्त्रेषु वर्णितः तथा च मुण्डकोपनिषदि—"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं गुरुमेवाऽभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्।" (मुण्डक० प्रथम २।१२।)

किञ्च— "यद् यथेव कर्मजितो लोकः क्षीयते,
एवमेवामुत्र पुण्यजितो लोकःक्षीयते।"

इत्यादि सम्यक् ज्ञात्वा वैराग्ययुक्तो भगवज्ज्ञानप्राप्तये समित्पाणिः सन् गुरुं श्रोत्रियं ब्रह्मनिष्ठमभिगच्छेत्। (भविष्योत्तर पुराणेऽपि—)

"क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः। देवपूजाऽग्निहवनं, सन्तोषः—स्तेय-वर्जनम्।" सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्थितः।" इति दशविधगुणयुक्तो यो भवेत् स एव शिष्यताऽर्हः, नान्यथा। विपरीते तु 'गुरुः शिष्यकृतं पापं भुनक्ति ह्यविवेकतः।"

"दापयेत् स्वकृतं दोषं पत्नीपापं स्वभर्तरि।
तथा शिष्याऽर्जितं पापं गुरुमाप्नोति निश्चितम्॥" (गान्धर्वतंत्रे)

कुलार्णव तन्त्रे० "मन्त्रिदोषाश्च राजानं, जायादोषः पतिं यथा।
पार्वतीं प्रति शिवोक्तिः–"तथा प्राप्नोत्यसन्देहं शिष्यपापं गुरुं प्रिये॥

इति सम्यक् विविच्य शिष्यं परीक्ष्य विहितो दीक्षासंस्कारो हि मानवक्षेमाय भवति सर्वोच्चं सफलं साधनम् । तत्र संस्काराणां योग्यतायाश्च नितान्तमावश्यकता, दीक्षासंस्कारेणैव स भगवदीयो भवति, भगवदासक्तिमान्, भगवत्प्रियो भवति, भगवन्निःश्वासभूतेषु वेदेषु श्रद्धावान् विश्वस्तः सन् भगवत्सेवाऽधिकारी च भवति । नान्यथा ।

इत्थम् सर्वात्मना पूर्णतया अधिकारी विद्यते श्रीरामानन्दः । यथा च ब्रह्मचारी श्रीरामानन्दो यादृशो नैष्ठिको ब्रह्मचारी, सर्वात्मना च विद्या, सदाचारेण विवेकेन, योग्यतया विद्यालयीयनियमविधानादिपरिपालनेन, यादृशमादर्शंछात्रत्वमुपस्थापितवान् न तथाऽन्योऽद्यावधि समासादितवान्, 'न भूतो न भविष्यतीति'' सार्थकीकृतवान् ।

यद्यप्युचितन्त्विदमेवासीत् यद् रामानन्दो ब्रह्मचर्यं सम्यक्तया यथा पालितवान् तथैव गृहस्थाश्रममपि पालयेद्, परञ्च वैराग्योदये समुदिते ''उदारचरितानान्तु वसुधैव कुटुम्बकम्'' इति भावनाभाविताऽन्तःकरणः संन्यासमेवाङ्गीकुरुते--''यदहरेव विरजेत् तदहरेव प्रव्रजेत् ।'' इति श्रुत्या ब्रह्मचर्य्यं परिपाल्यैव संन्यासं गृह्णाति । स्वजननी-जनकयोराशीःशताऽभिनन्दितोः लोककल्याणाऽभिभावनया प्रेरितो लब्धसम्मतिकोऽद्य पुण्यपाविन्याः भगवत्या भागीरथ्याः पवित्ररज.कणेष्वासीनः संन्यासदीक्षामाददाति श्रीरामानन्दः । अतः सर्वैरेव विश्वनियन्ता प्रभुः कोसलेन्द्रनन्दनः प्रार्थनीयः, यो हि स्वानुग्रहेण दयया च श्रीरामानन्दं पूर्णं शक्तिसम्पन्नं विदध्यात् । येन सः स्वीयं संन्यस्तधर्मं सम्यक् परिपालयन् विश्वकल्याणं कलयेत् ।

इत्थम् सामयिकं तत्त्वोपदेशं विधाय श्रीराघवानन्दाचार्यः श्रीरामानन्द-मुपसगमय्य संन्योसाचितं दीक्षाविधिं प्रारब्धवान् । ततः प्रथमं पुण्ड्रसंस्कारं विधाय, मातापित्रोः शुभाग्रहमनुसृत्यैव स्वामिपदेन संयुक्तं तदेव नाम 'स्वामी श्रीरामानन्दः' इति नाम निर्णीतवान् ततो मङ्गलवाद्यध्वनिः मङ्गलगीतयश्च प्रारम्भन्त । सहैव समुपस्थितानां वैदिकानां वेदध्वनिभिः सह मन्त्रोपदेशः कृतः । तदानीं सुरैरिव भूसुरैर्वेदमन्त्रैश्च स्वस्तिवाचनपूर्वकमाशीर्वचनैरभिनन्दितः । ततस्त्रिदण्डधारण-माकलय्य श्रीरामानन्दः स्वामी संन्यस्ताश्रमे ( श्रीविरक्त श्रीवैष्णवाश्रमे ) प्रविष्टः ।

इत्थं स्वाङ्गजं तादृक् संन्यस्तवेषमण्डितमालोक्य श्रीसुशीलासनाथस्य श्रीपुण्यसदनस्य नयनेभ्य आनन्दवाष्पधारा प्रासरन्, किन्तु स्वार्थं परित्यज्य लोक-कल्याणकाम्यया स्वकीयं मनः सम्बोध्य गन्धकुङ्कुमाक्षत-पुष्प-श्रीफलादि-माङ्गल्यः द्रव्यैः समर्च्यं श्रीरामानन्दं स्वाशीःपरम्पराभिः समलञ्चकार श्री पुण्यसदनः

सपत्नीकः। एवं श्रीमद्गुरुवर्य्यैः श्रीराघवानन्दाचार्यैः सहर्षं समापादितो विधिः। ततः श्रीरामानन्दं समुपदिदेश गुरुवर्यः —

अयि प्रिय शिष्य ! रामानन्द ! सम्प्रति सम्पन्नतां गता ते हार्दिकी कामना, श्रीवैष्णव - सम्प्रदायाऽनुसारिणा विधिना सम्यग्दीक्षितः संन्यासाश्रमी संवृत्तो भवान्। अतः पूर्वाऽपेक्षया ते कर्तव्यान्यपि भूरीणि समापतितानि ते विशालेऽस्मिन् कार्यक्षेत्रे। अतः सावधानेन सर्वं भवता सम्पादनीयमेव। यादृगुत्साहेन समुत्कट-भावनया चास्मिन् विरक्ताश्रमे भवता प्रवेशोविहितस्तथैव किंवा द्विगुणतरेणोत्साहेन तन्नियमोपनियमानां पालनमपि समासादनीयम्। यादृशी ते सावधानता प्रवर्तिष्यते तदनुरूपैव सिद्धिस्ते करगता भाविनी।

किञ्च स्मरणीयमेतद् —"द्रव्यार्थमन्नवस्त्रार्थं यः प्रतिष्ठार्थमेव वा।
संन्यसेदुभयभ्रष्टः मुक्तिं नाऽऽप्तुमर्हति।"

यतो हि—"वसनाऽऽहारवद् यस्य भाति सर्वैषणादिषु।
तस्याऽधिकारः संन्यासे त्यक्तदेहाऽभिमानिनः॥ अर्थात्—

परित्यक्तदेहाद्यभिमानी सर्वविधां लौकिकैषणां विहित-वमन-वत् परित्यजति-न पुनः प्रवर्तते स एव संन्यासाधिकारी नान्यो लौकिकैषणा-प्रेप्सुः ( मैत्रेय्युपनिषद् ) ( नारद परिव्राजकोपनिषदि- ) "तृष्णा क्रोधोऽनृतं माया लोभमोहौ प्रियाऽप्रिये।"

"शिल्पं व्याख्यानयोगश्च कामो रागः परिग्रहः।
अहङ्कारो ममत्वञ्च चिकित्सा धर्मसाहसम्।
प्रायश्चित्तं प्रवासञ्च मन्त्रोषधिगराशिषः।
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः॥"

इति - तृष्णा, क्रोध, असत्य, माया, लोभ, मोह, प्रिय-अप्रिय, बुद्धि, शिल्प, व्याख्यानोऽत्कण्ठा, कामः अनुराग' प्रा[illegible] - कामना, अहङ्कार, ममता, चिकित्सा, धर्म, साहस, प्रायश्चित्त, प्रवास, मन्त्र, औषध, विष, आशीर्वादादयः पातनोन्मुखाः सर्वे-व्यापारा दूरत एव परित्याज्याः संन्यासिभिः।

"परिव्राजकः परित्यज्य बन्धून्, परिग्रहरहितः परिव्रजेद् यथाविधि" "कौपीनाच्छादनः वर्षास्वेकस्थानः" ( बोधायनसूत्रे )

किञ्च—"परिव्राजकः सर्वभूताऽभयदक्षिणां दत्त्वा प्रतिष्ठेत्" ( वशिष्ठधर्मसूत्रे )

तथाः—' कौपीनं युगलं वासः कन्थां शीतनिवारणीम्।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य सङ्ग्रहम्॥"

विद्वान् स्वदेशमुत्सृज्य संन्यासानन्तरं स्वतः ।
कारागारविनिर्मुक्त - चोरवत् दूरतो वसेत् ॥

'अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ( मनु० ६६ )

अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रा सङ्गाद्विनिर्गतः ॥ (मनुः ६।५७)

उक्तम् च—चतुर्धा यतयः प्रोक्ताः, कुटीचक बहूदको हंसः परमहंसश्च,—

धर्मव्रतपरायणः ॥ "यतीनां बाह्यचिह्नानि गृहीत्वा यस्तु सन् द्विजः । स्वगृहेष्वेव वर्तेत विरक्तः स कुटीचकः ॥" "गृहं त्यक्त्वा विरक्तो य भिक्षया धारयन्नसून् । यतिलिङ्ग समायुक्तः स द्वितीय उदाहृतः ॥" "तृतीयः शास्त्रसम्पन्नो वेदविद्वेदकर्मकृत् । शरीरे निःस्पृहो योगी प्राणायामरतः सदा ॥" ब्राह्मणः क्षत्रियो वैश्यः परवैराग्यवान् सुधीः । प्रव्रजन् धार्मिकः श्रेष्ठस्तुरीयः कथ्यते बुधैः ॥ ( वाल्मीकि-संहिता ६।३१ से ३५ )

किञ्च:—"अनाश्रितः कर्मफल कार्यं कर्म करोति यः, स संन्यासी० (गीता ६।१)

इत्यादि शास्त्रीयवचनानि सर्वदा सर्वत्र सर्वात्मना संस्मरन्नेव व्यवहरेः शास्त्रोक्त-संन्यासिधर्म परिपालयन् स्वात्मकल्याणेन साकं "सर्वभूतहिते रतः" सन् धर्मस्य देशस्य भारतीयायाः संस्कृतेः संस्कृतस्य-वेदानां धर्मशास्त्र-पुराणानां संरक्षणं विदधन् - व्यर्थप्रतारणरतान् पाषण्डिनो मिथ्यावेषधारिणः प्रवञ्चकान् छद्मवेषिणो धर्मविमुखान् समूलघातमुन्मूलयन् सत्यधर्मप्रचारं प्रसारञ्च कलयन् सन्मार्गे मुग्धान् धर्मप्रेप्सून् प्रवर्तयन् मिथ्याऽज्ञान-भ्रान्तान् चाकचक्य-चकित-चक्षुषः सत्पथं संनयन् सनातनधर्मं परिरक्ष । सर्वान्तर्यामी जगन्नियन्ता त्वयि दयां वितरन् तुभ्यं सर्वोत्तमां प्रज्ञां बलं यशः शान्ति त्यागं कार्यसामर्थ्यञ्च प्रयच्छेदिति । पुनश्च ज्ञानदार्ढ्याय चतुर्विधसंन्यासिनां कार्यकलापं संज्ञां च स्मारयामि, येन यथायोग्यस्वरूपं विशेषेण दधत् प्रवर्तेत । ( "कुटीचकः, बहूदकः, हंसः परमहंसश्चेति )

१. तत्रः—यो हि ब्राह्मणः संन्यासी सन् बाह्यचिह्नानि धृत्वा, भ्रमणं कर्तुमशक्तः कुटीं निर्माय तत्रैव सर्वदा भगवत्स्मरणं कुरुते सः "कुटीचको" भवति ।

२. "यश्च ब्रह्मणोविरक्ता (गेह-स्वजनादिभ्यः ) संन्यस्तचिह्नानि वहन् तीर्थाऽटनं कुर्वन् भिक्षाऽन्नेन सिद्धान्नेनैव) स्वपोषणं कलयन् भ्रमति सः "बहूदकः" ।

३– तृतीयस्तु शास्त्रतत्त्वज्ञो वेदविद् वेदोक्तकर्माणि कुर्वन् प्राणायामपरायणः शरीरमोह (शारीरिकमोह) मपि परित्यजन् तिष्ठति सः "हंसः" कथ्यते ।

४– चतुर्थश्च ब्राह्मणः क्षत्रियो वैश्यो वा परमवैराग्यवान् सर्वत्रैव भगवद्भावनः परमात्मदृग् भवति, भगवद्रूपमेव जगन्मन्यमानो धर्मे श्रेष्ठतमः निरन्तरं परिव्रजन्नेव नैकत्रसंवासस्तिष्ठति सः "परमहंसः" वर्णितः ।

इत्थमेतेषु यत्स्वरूपं रोचते भवते तद् तथैवाऽऽचरेः । इति वयं हृदयेन-स्वाशीर्भिरभिनन्दयामो भवन्तम्-लोककल्याणायेति ।

आचार्यश्रीराघवानन्दाचार्यवर्याणामिमामुपदेशपरम्परां संन्यासिधर्मबहुलां, समयोचितामाकर्ण्य श्रीरामानन्दः स्वामी परमया भक्त्या प्रह्वीभूतमानसः श्रीगुरुचरणेषु साष्टाङ्गं प्रणम्य सविनयमिदमुवाच––

"भगवत्स्वरूपाः पूज्यापादाः श्रीमदाचार्याः ! करुणावरुणालयाः सन्तो मामकिञ्चनकरं निःसाधनभक्तं विज्ञाय सहजाऽनुग्रहपर्जन्यायिताः, परमरमणीयां तृषाकुलितचातकपरिपोषणकर्त्रीं निजजनहृदयनिहिताऽज्ञानाऽन्धतमोहर्त्रीम् अशेषविज्ञानाऽऽनन्दरसभर्त्रीं समुपदेशसुधावृष्टिसृष्टिप्रकृष्टिं प्रसार्य यो हि निःश्रेयसमार्गः प्रदृष्टः, प्रहृष्टस्तेन स्वात्मानं कृतकृत्यमेव मन्ये । प्रार्थये च पुनः पुनः स्वकीयध्येयवर्त्मनि सततं प्रवर्द्धमान एवाग्रेऽग्र एव प्रवर्तमानः साफल्यम् लभेयेति स्वकीयचरणानुरक्तिं भक्तिं च प्रयच्छेत्-सर्वान्तिर्यामी प्रेरकः श्रीरामभद्रः । याचे च वारं वारं साञ्जलिः––

यत्––"मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः ।
शमो विचारः सन्तोषश्चतुर्थः साधुसङ्गमः ॥" इति पदे पदे चतुरः प्राप्नुयामिति ओम् शम् ।

इत्थममृतनिःष्यन्दिनीं सकलहृदयचन्दिनीं सर्वदाऽभिवन्दिनीं श्रीजनकनन्दिनीसनाथश्रीरघुनाथाऽभिनन्दिनीं श्रीरामानन्दस्वामिमुखाम्बुजमकरन्दिनी वाचमाचम्य-समुपस्थितवदनोदीरितम् गगनव्यापि जयजय ध्वनिमाकर्ण्य सर्वतः कुसुमवृष्टिरकारि देवैरिव मानवैः ।

——

# एकविंशः परिच्छेदः

आचार्यवर्यगुरुदेवश्रीराघवानन्दाचार्यवर्याणां सान्निध्यमवाप्य श्रीरामानन्दः स्वामी यमनियमासन-प्राणायाम-प्रत्याहार-धारणाध्यान-समाधिसमभ्यास-समासादित-सर्वाङ्गयोगसिद्धः प्रसिद्धश्च सकलशास्त्रविवेचनानुपमपाटवपटीयान्, परित्यक्तसकलैषणो विजितेन्द्रियविषयविलासभोगभावनः पावनश्च विविधोदारचरिताऽऽचरितैः साक्षात् त्यागमूर्तिरिव स्वात्मन्येवाऽऽत्मना विहित-सकलसम्पूर्तिः विनिर्जितक्षुत्पिपासाऽऽवेगः समवधीरितकामक्रोधलोभमोहमदमात्सर्य्यादि रिपुषड्वर्गः संसर्जिताऽपूर्वशान्तिसर्गः, कोपीनमात्रेणैव लब्धवसनसन्तोषः अहरहर्भगवच्चरणारविन्द-चिन्तनाऽऽनन्दपीयूषपानाऽवाप्तपरिपोषः सम्पादित-भगवदनुग्रहापूर्वकोषः समाचरति स्म सुलभयोगिजनचर्य्याम्।

काले च तदानीन्तने निखिलेऽस्मिन् धर्मप्राणमये समयेऽपि पवित्रतमे विभारतेभारते प्रवर्तितान्यासन् बहुविधानि पाखण्डाऽऽमयपीडितानि परितः प्रसारितानि धूर्ततल्लजोल्लासितानि कुपथगर्तनिपातनानि दुरिततमानि मतानि मनुजभ्रामकानि। तेष्वेकतममासीत्, कौलमतम्। यस्मिन् भवति ह पञ्चमकारोपासना। यद्यप्यस्मिन् प्रवर्तमानानां कृते भवति द्विधारोल्लसित-निशिततीक्ष्णखड्गधारोपरिगमनानुरूपा परीक्षा। न तत्र भवतीन्द्रियसन्तर्पणकामना, नाचरणीया भवति काऽपि लोलुपता सिद्धान्तोयमासीत् प्रबलजितेन्द्रियत्वसाधनामयः, सर्वत्र देवैक्यभावनारूपः, स्वपरभेदबुद्धिनिरासपूर्वकः सामूहिक-कुलक्रमागतो व्यवहारः। अतएवाऽस्य जातं नाम "कौल" मिति मतम्। किन्त्वत्रापि कालक्रमेण प्रविष्टाऽभवत् पाखण्डपद्धतिः। जिह्वोपस्थेन्द्रियोद्दीपिनी प्रचण्डपाखण्डपरम्पराप्रवर्तितासंवृत्ता। समुद्घोषितञ्च "मद्यं, मांसं, मत्स्यं, मुद्रा, मैथुनञ्चेति पञ्चमकारीयं माहात्म्यम्। सैषा तान्त्रिकी विकृतस्वरूपा कौलीयकुल-कलङ्कविकासिनी, कामकलोल्लासिनी, विलासिनी जनमनोमोहोद्भासिनी, कामिनीकदम्ब-कलकेलिकमनीया, कामिजनमानसरमणीया प्रचारिताऽभवत् यथेच्छाचारविहार-पद्धतिः।

किञ्च तदानीमासीत् म्लेच्छशासनसंस्कृतेः परितः प्रसृतो दुष्प्रभावः। तेन विमोहिता प्रायशोऽधिकाधिकमानवाः कामयन्ते स्म तादृशमेव स्वेन्द्रियप्रगति-पोषकं स्वेच्छाचारप्रसारकं किमपि मतम्। अतस्तेषां कृते त्वेतादृक् सुलभोपभोग-महितं युवतियुवककुललसितं पालितादि भोज्यासवपानपोषकरमणीरमणीकेलिकलाप-कौतुककान्तं नितान्तं मानसोल्लासनविलासनवैभवसम्भवमासीन्मनोमोहकम्।

कल्पपादपायितमेन मालोक्य यूथशः प्रायो युवकयुवतयः प्रविष्टाः समभवन्नह-महमिकया। किम्बहुना धर्मकर्मजवनिकान्तर्हितं प्रवर्तते स्म स्वेच्छाचार-व्यभिचार-प्रसारकं तन्नामाङ्कितं कलितं ललितमपि विशुद्धं योगपथानुरूपं साधनवहुलं सुमतं 'कौलम्' दुराचाररतैरिन्द्रियलोलुपैस्तथाविधैः मानवाऽधमैः शुचिनिगमपथभ्रष्ट-सृष्टम् प्रचारितम् यथेच्छाचाराऽऽचरितम्।

कुलपरम्परागतस्यास्य, 'कौलमतस्य,' तान्त्रिकस्य, भोगेऽपि योगमयस्य, शास्त्रीय-प्रमाणवचनानामपि स्वकल्पितं मनोनीतमेवार्थं, परिकल्पयन्तो न जानन्ति स्म मूढाः गूढं रहस्यमस्य योगविशेषस्य, कामेश्वरोपासनाप्रकारस्य प्रकृति-पुरुष-संयोग-भोगयोगस्य परमं तत्वम्। कल्पयन्ति स्म च 'महानिर्वाणतन्त्रस्थानां वचनाना-मपि स्वरचनानुरूपमेवार्थम्—

"यत्राऽस्ति भोगवाहुल्यं तत्र योगस्य का कथा।
योगोऽस्ति भोगविरतः, कौलस्तूभयमश्नुते"॥—महानिर्वाणतंत्रे

नैतादृशानां वाक्यानां प्राकृत पुरुषविहितभोगोपभोगप्रवृत्ति - प्रवर्त्तकोऽप्यर्थः प्रवर्ततेऽत्र। वास्तविकोऽर्थस्तु योगसाधनप्रक्रियाऽनुगत एव। तदर्थस्त्वग्रे प्रदर्शयिष्यते। भूयांसि सन्त्येतादृशानि साक्षात् स्त्रीपुरुषसमागमसम्भोग - निदर्शकानि पशुप्रवृत्तिक-मानवमोहकानि समुत्कृष्टयोगसाधकानि साक्षात् सदाशिवनिर्मितानि, येषां तादृशो-ऽप्यर्थः स्पष्टमग्रे प्रकाशयिष्यतेऽस्मिन्नेव परिच्छेदे। नाऽस्यव्यभिचारपरत्वम्।

किन्तु भोगवासना-लोलुपा जनाः महायोगमयमप्येतन्मतम् हठाद् व्यभिचारे प्रयुञ्जते, प्रवर्तयन्ति च जनान् मुग्धान् तन्त्रविमुखान्। विषयाभिलाषिणो भोग-प्रेप्सून् धूर्ताः पाषण्डपण्डिताः नानाविधान् पाषण्डाऽऽडम्बरान् प्रदर्श्य कामकला-विलासिनो युवतियुवकान् मोहयन्तः स्वयमपि नरकगामिनो भवन्तस्तानपि नयन्ति तथाविधं कर्म कारयन्तः।

अथैकदा श्रीरामानन्दः स्वामी परम्परया लोकमुखाद्विश्रुतवृत्तान्ता ज्ञातवान् यदस्यां काश्यामपि तादृशो धूर्तानां समूहो विद्यते यो हि 'कौलमत' कलङ्कयन् तथैव व्यभिचारं पोषयतीति-तस्य प्रचारकश्चास्ति धूर्तराट् 'दुर्ज्ञानानन्दनामा कश्चन

पाषण्डपण्डितः। स हि विशुद्धतावं तान्त्रिकमतमपि ज्ञातुं प्रवर्तमानान् मुग्धान् स्ववाग्जाले निपात्य स्वप्रचारितमण्डले निवेश्य प्रवर्तयति तस्मिन् कुत्सितपथे।

अतः श्रीरामानन्दः स्वामी तेषां धर्मध्वजिनां पाषण्डमठे कतिपयैः स्वशिष्यैः सह दुर्जनानन्द-महाभोगमण्डल-चक्रमालोकयितुं तत्र समायातः। तत्राऽऽगत्य चालोकते यत् 'कौलमतं' दूषयन् स्वकल्पितां पाषण्डाडम्बरमण्डिता पद्धतिमनुसरन् दुर्जनानन्दः स्वकीयां दैनान्दिनीं प्रक्रियां प्रवर्तयन्नास्ते। तत्र मध्ये विद्यते स्म योनिमुद्राकारमेकं कुण्डम्, तत्परितो मद्यमांससम्भृतान्यासन्ननेकानि पात्राणि। तत्र चक्रपूजां विधाय कुण्डे च हवनादिकं समाप्य समुन्नते दिव्यपीठे स्वयं स्थितः चक्रपूजासम्मिलितान् स्वशिष्यान् मद्यमांसमयं यन्त्रराजपूजावशेषं यज्ञावशेषं च प्रसादं वितरन् मदाघूर्णितलोचनः सन् तादृशानेव समस्तान् मदविह्वलनयनान् अस्तव्यस्तवसनान् सद्यःसुरतकर्मनिवृत्तांश्च युवतियुवकजनान् दिगम्बरप्रायान् अनवगतलोकमर्यादाभानान् हसन् हासयन् निर्ह्रीकत्रपाविरहितान् तान् मोदयते स्म। तादृशानामस्त्येको नियमः यद्धि तस्मिन् मते दीक्षितानामेव भवति तत्र प्रवेशा नान्येषाम्। तन्मार्गविमुखांस्तु जनान् 'कण्टकान्' मन्वते व्यवहरन्ति च 'कण्टकाः' खल्वेते, इति।

अतः तन्मते दीक्षाविहीनामशेषामेषां (श्रीरामानन्दस्वामिनां) मण्डलीं सहसा तत्र प्रविष्टामालोक्य, विस्मय-क्रोधमदपानोन्मादकलुषिते-शोणायिते चक्षुषी विस्फार्य सक्रोधमुवाचदुर्जनानन्दः—

कथं भोः संन्यासिन्! विनाऽऽज्ञामवाप्याऽऽस्माकीने पूजागृहे, अस्मद्दीक्षाविहीनः प्रविशन् शिष्टजनानुचितं कर्म किमर्थमाचर्य्यते भवता? अयमास्माकीना पूजनवेला, नास्यां कस्यचनास्मद्दीक्षाविहीनस्य कृते प्रवेशानुमतिः। उपासनाकाले यदि प्रवशति दुरभिनिवेशितात्मा न तस्य श्रेयो भवति। अतः शीघ्रमेव प्रस्थातव्यमितो भवतेति।

तदा मन्दस्मितविकसित - मुखारविन्दः श्रीस्वामीरामानन्दः सपदि प्रहसन्निव प्रोवाच—भगवन् दुर्जनानन्द! कीदृशी ह्येषा समुपासना? यदीदं वस्तुतो विद्यते समुपासनाभवनम्, तर्हि समुपासनायामपि भवति किमु प्रवर्तितैषा नग्नलीला? कुतस्त्योऽयं क्रमः? कस्मिन् तन्त्रे समुपदिष्टोऽयं मद्यमांस - बन्धुरं दुर्गंधधुरं कामिनीकन्धरोल्लसितभुजपाशविलसित-व्यभिचारप्रचारं प्रवर्तयन् पूजनप्रकारः?

श्रीस्वामिमुखान्निःसृतान्येतानि यावत् समाप्तिं गच्छन्त्येव वाक्यानि, तावत् सः क्रोधान्धः सन्नुवाच दुर्जनानन्दः—अहो नवमुण्डितमस्तक! अभिनव संन्यासिन्?

नाऽवगच्छसि मां, 'कोऽहं' मिति, सोऽहं प्रसिद्धतमो जगत्सम्मान्यः कौलाचार्यः महांस्तान्त्रिको ह्यनेकशः प्रदर्शितनिजवैभवो विविधचमत्कृति - शतविस्मायितसिद्ध-साध्यः महामाहिमसाधक-समुपासकोऽस्म्यहं दुर्जनानन्दनामा ?

नाद्यावधि त्वया साक्षात् प्रत्यक्षमक्षिलक्ष्यीकृतो मे चमत्कारातिशयसमुज्जृम्भितस्तान्त्रिकप्रभावः ? अतएव त्वमेवं प्रजल्पसि सर्वथाऽप्रगल्भ इव। अतो वच्मि साम्प्रतम्, सद्य एवाश्रमात् पलायेः, वाञ्छसि चेदात्मानं कतिचिद्दिनानि भूमौ जीवितं विलोकयितुम्, अन्यथा मदीयोद्भूतक्रोधाग्नौ शलभायिष्यते, सकृन्मन्त्रोच्चारणमात्रेणैवाऽस्मिन् प्रज्ज्वलित - कुण्डाग्नौ लब्धाऽऽहुतिकात्मा भस्मशेषत्वं भजिष्यसि सपरिचरपरिकरः।

इत्थं तानि कटुवाक्यानि मद्योन्मादस्खलितवर्णान्याकर्ण्याऽप्यनाकर्णितान्येव मत्वा प्रशान्त - धीरगभीरमुद्रया मन्दस्मितमेव विदधदीत्थं नम्रभावेन जगाद श्रीरामानन्दः स्वामी। भगवन् ! दुर्जनानन्दमहाभाग ! योगदृष्ट्या त्विदं शरीरं भस्मैव केवलं विद्यते. नातिरिच्यते भस्मनः ? 'भस्मीभूतमिदं गात्रं स्वतः सिद्धं नु, भस्मनि किं, पुनर्भस्मसात्कर्तुं प्रभुर्भवति पावकः ? 'मारे विभेम्यहं स्वल्पं जल्पनेन तवाऽधुना, अतः पृच्छाम्यहं किञ्चिच्छान्त्योत्तरतु तद्भवान्। 'कथय, कीदृशमस्ति मतं तव, कमिह संश्रयते पथमेतकत् ?'

इति प्रशान्तमधुर-मुखमण्डलालङ्कृतस्य श्रीरामानन्दस्वामिनः शान्तिप्रधान-प्रश्नस्य प्रभावः समुज्जृम्भते स्म दुर्जनानन्दोपरि, अतः सोऽप्यनुद्विग्नः शान्त एव परित्यज्य कौटिल्याऽऽलापं सारल्येन प्रत्युदतरत् — भगवन् ! अस्माकमिदं हि कौलमत-मस्ति किंवा वाममार्गीयाः वयमिति, सनातनोऽयमास्माकीनः सम्प्रदायः, अस्मिन्-शक्ति-पूजा प्रवर्तते, शक्त्युपासकानां सनातनीयं पद्धतिः कुलक्रमाऽऽगतत्वात् 'कौली' रीतिः प्रसिद्धा अतोऽस्ति कौलमतमिदं कौलाश्च वयमेव।

स्वामी श्रीरामानन्दः—'किं भोः अनयैव भ्रष्टया सामग्र्या शक्तिः समुपास्यते ?'

दुर्जनानन्दः—महाशक्तेः प्रसादार्थम् तन्त्रादौ प्रदर्शितेयं सामग्री परमस्पृहणीया, नितान्तमुक्तिदात्री भगवत्या स्वयमभिप्रेता विद्यते कथमेनां भ्रष्टेति वदन् स्वजिह्वां कलुषीकरोति भवान् धृतसंन्यस्तमुद्रोऽपि ?

श्रीरामानन्दः—( साश्चर्यम् ) एषा खलु मुक्तिदात्री सामग्री, किमनया तुष्यति भगवती ?

दुर्जनांन्दः—( सगर्वम् ) 'आम्' कोऽत्र सन्देहोऽस्या मुक्तिदातृत्वे ?

उक्तञ्च:— "मद्यं मांसं च मीनञ्च मुद्रामैथुनमेव च।
मकारपञ्चकं प्राहुर्योगिनां मुक्तिदायकम्।।" इति।

श्रीरामानन्द: स्वामी—समन्दस्मितं प्रोवाच—भगवन्। दुर्जनानन्द महानुभाव ! भवान् केवलं वयसैव वृद्धः सञ्जातो न ज्ञानवृद्धत्वमवाप्तवान्, इति भृशं खेदाकरम्। यत्रयत्र तन्त्रादौ समुट्टङ्कितमस्ति न तत्र भवदभिमतोऽयमर्थः कुत्राप्यङ्गीकृतस्तत्त्वविद्भिः। कथं भवान् तन्त्रोक्तं वदन्नेवं स्वमनोऽनुकूले दुराचारे प्रवर्तयन् प्रवञ्चयसि मुग्धान् युवकयुवतिजनान्। यथा त्वं तन्त्रव्याजेन स्वकलुषितभावनां पोषयसि, न तथा क्वचन तन्त्रशास्त्रे समुल्लिखितम्। प्रत्युत भवदाचरणविरुद्धमेव विशुद्धतत्त्व-प्रतिपादितमस्ति। एवमेव 'वाम' शब्दस्यापि-'सुन्दरः' सरसो मार्ग इति अर्थो विहितः शास्त्रे, एवञ्च तदधिकारिणोऽपि लक्षण प्रथममेव निरूपितम्—

"परद्रव्येषु योऽन्धश्च परस्त्रीषु नपुसंकः।
(मेरुतन्त्रे —) परापवादे मूको यः सदा स विजितेन्द्रियः।।" इति

'तस्यैव ब्राह्मणस्याऽत्र वामे स्यादधिकारिता।' ( मेरुतन्त्रे० ) इति स्पष्टमेव निर्दिष्टम् यन्नास्त्यत्रेन्द्रियलोलुपानामधिकारित्वमिति।

दुर्जनानन्दः—सम्प्रति मन्त्रौषधिरुद्धवीर्यभुजङ्गम इव प्रतिष्टम्भविवृद्धमन्युः सन् प्रावोचत् 'किमेते पञ्चमकाराः न सन्ति शास्त्रोक्ताः ?'

श्रीरामानन्दः स्वामी—भगवन् ? पञ्च मकारास्तु सन्ति शास्त्रोक्ता एव किन्त्वेषां व्यापारो यद्भवताऽनुष्ठितः स एव शास्त्रविपरीतः केवलं स्वेन्द्रियतर्पण एव। तन्त्रोक्तानामेषां प्रयोगस्तेनैव कर्तुं शक्यते, यो हि सर्वथा जितेन्द्रियः, ( इन्द्रियातीतो वा ) भवति। इन्द्रियाऽतीतेनैव पञ्च'म'काराणां प्रयोगः करणीयः, न भवदुक्तरीत्या नरकप्रदात्र्या पद्धत्या वा।

दुर्जनानन्दः—तर्हि भवानेव वदतु, कथमिन्द्रियातीतः प्रयोक्तुं शक्नोति ? कथञ्च सः मद्यं मांसं वा समुपभोक्तुं समर्थो भवितुमर्हति ?

स्वामी रामानन्दः—भगवान् अत्रैवास्ति ते मतिभ्रमः। सर्वतः प्रथमन्तु इदमेव चिन्तनीयं भवता यत् किं नाम मद्यम्-इति-अस्ति 'विजयतन्त्रे'ऽस्य प्रमाणम्-स्वरूपवर्णनञ्चेति—

"यदुक्तं परमं ब्रह्म निर्विकारं निरञ्जनम्।
तस्मिन् प्रमदनं ज्ञानं तन्मद्यं परिकीर्तितम् !" अर्थात्

निर्विकल्पे परब्रह्मणि निरञ्जने निर्विकारे यत् प्रकृष्टं मदनं ज्ञानं विद्यते तदेवास्ति मद्यम् । नान्यद् समुन्मादकरं पानविशेषं नीचग्राह्यम् ।

अन्यत्रापि — "ब्रह्मस्थान - सरोजपात्रलसिता ब्रह्माण्डतृप्तिप्रदा
( भैरवयामलतन्त्रे ) या शुभ्रांशुकला सुधाविगलिता सा पानयोग्या सुरा ।

अर्थात् ब्रह्मरन्ध्रस्थिते सहस्त्रदलकमले पात्रे ) ब्रह्माण्डं तपर्यन्ती या विशुद्धा ह्यमृतधारा प्रवहति, सर्वदा ह्यनवच्छिन्नरूपेण प्रत्यहं स्वशरीरे सैव सर्वथा पानयोग्या भवति योगिनाम् । एवमेव कुलार्णवेऽपि —

तन्त्रे — "व्योमपङ्कजनिस्पन्द सुधापानरतो नरः ।
मधुपायीसमः प्रोक्तः, इतरे मद्यपायिनः ॥"

(एवं च योगिनीतन्त्रेऽपि) "कुण्डल्या मिलनादिन्दोः स्रवते यत् परामृतम् ।
"पिबेद् योगी महेशानि ! सत्यं सत्यं वरानने ।"

अर्थात् 'मस्तकस्य ब्रह्मरन्ध्रे सहस्रदलकमले कुण्डलिन्याः शिवेन सह ( भगवद्ध्याने ) सम्मेलने जाते मस्तकस्थमिन्दुजनिताऽऽनन्दमयः पीयूषो निर्झरति, तस्यैवामृतस्य पानं कुर्वन्ति योगिनः तदेव पानम् कौलाचारे महापानशब्देन व्यवह्रियते । इदमेव मधुपानम् पानशब्दवाच्यं भवति न तु मद्यपानम् ।

रुद्रयामलतन्त्रेऽपि —'विजया रससारेण विना वाह्यासवेन च ।
वायव्याऽऽनन्दसंयुक्तो ब्रह्मज्ञानी प्रकीर्तितः ॥'

अर्थात्—विजया ( भङ्गा ) रसं पीत्वा किंवा लौकिकं वृक्षफलादिनिर्मितं मदकारकं मद्यं पीत्वा समुन्मत्तो जनो न योगी भवति न च ज्ञानी वा कथ्यते-किन्तु वायव्या कुण्डलिन्या स्वब्रह्माण्डान्निर्गलितममृतबिन्दुं पीत्वा यः परमानन्दसम्प्लुतो ( आनन्दरसनिमग्नो ) भवति स एव योगी ज्ञानी मुख्यः कौलो भवति । स एव तान्त्रिको यथार्थतो वाममार्गाऽनुयायी कथ्यते नहि लौकिकमद्यपः ।

गन्धर्व तन्त्रे च:—"जिह्वया गलसंयोगात् पिबेत् तदमृतं तदा ।
योगिभिः पीयते तत्तु, मद्यं गौड हि पैष्टिकम् ॥'

तथाहि—योगिनो हि स्वीयां जिह्वां जिह्वामूले परिवृत्य सहस्रदलकमलाद् मस्तकब्रह्माण्डाद् विगलितं ह्यमृतविन्दुं धारयन्ति गलाऽभ्यन्तरितया स्वजिह्वया पिबन्ति-तेनैव ते परमानन्दमत्ताः भ्रमन्ति न तु मधुमैरेयादिपानेन मुखदुर्गन्धिना प्रमत्ताः ।

दुर्जनानन्दः—भवतु, मद्यं तदेव हि स्यात् भवेन्नाम, परञ्च मांसस्य का गतिः ?

स्वामी श्रीरामानन्दः—"मां सनोति हि यत्कर्म तन्मांसं परिकीर्तितम् ।
न च कामप्रतीकं तु योगिभिर्मांसमुच्यते ।।"

अर्थात् समस्तानि कर्माणि सम्पूर्णानि च कर्मफलानि यदि परब्रह्मणि समर्पितानि स्युः, तत् समर्पणमेव कर्म मांसशब्देन व्यवहृतम्भवति । किंवा "अज्ञान भक्षणमेव मांसभक्षणम् । न तु जीवहिंसाजन्यं मांसं भक्षणीयम् ।

आगमसागरेऽपि—"मा शब्दाद् रसना ज्ञेया, तदंशान् रसनाप्रियान् ।"
सदा यो भक्षयेद् देवि ! स एव मांससाधकः ।।"

अर्थात् ( मांस ) शब्दे 'मा' कारो रसना ( जिह्वा ) या बोधकः, तथा 'स' कारः जिह्वया समुच्चारिता वाण्या बोधकः इत्युभयोः जिह्वाया वाण्याश्च भक्षणं नियन्त्रणं यः करोति स एव मांसभक्षी = वाक्संयमी । मांसशब्दो वाक्संयमबोधकः, न पशुपक्षिणां हत्यां कृत्वा तदामिषवाच्यः ।

एवमेव कुलार्णवतन्त्रेपि—'पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित् ।
परे लयं नयेच्चित्तं मांसाशी स निगद्यते ।।'

अर्थात् 'ज्ञानरूपेण खड्गेन पुण्यमयमपुण्यमयं पशुं कर्मबन्धनात्मकं हत्वा परस्मिन् ब्रह्मणि यः स्वकीयं मनःस्वरूपं वा पशुं नियोजयति विलयं करोति स एव मांसाशीः कथ्यते नतु जीवमांसभक्षकः ।

भैरवयामलतन्त्रेपि— 'पशु-हति-विमुखो यो रुद्रतुल्यो महात्मा' इति ।

इत्यादि प्रमाणैः सिद्धोभवति-यद् मांसभक्षणं राक्षसोचितं कर्म, न योगिजनोचितम् ।

ये हि तन्त्रव्याजेन, स्वधर्मव्यवसायेन वा जीवान् हत्वा तन्मांसेन देवादि-नैवेद्यमिषेण स्वोदरभृतिं स्वीयमांसभक्षणप्रवृत्तिं पोषयन्ति ते हि निश्चयं मनुष्यशरीरेण राक्षसा एव नरशरीराच्छन्नाः परिभ्रमन्ति ।

एवमेव 'मत्स्य' स्याऽप्यस्ति विवेचनम्—तथाहि शरीरेऽस्मिन् 'इड़ा, पिङ्गला' नाम्न्योः गङ्गायमुनयोः, मध्ये श्वास-प्रश्वासरूपिणौ द्वौ मत्स्यौ विद्येते-इत्येतौ मत्स्यौ यः साधकः प्राणायामादि वडिशद्वारा मत्स्यवेधिन्या विद्ध्वा कुम्भकेन् च रुद्ध्वा सुषुम्नया मार्गेण प्राणवायुं चालयति स एव मत्स्यभक्षी भवति—

( आगमसारे— ) "गङ्गायमुनयोर्मध्ये मत्स्यौ द्वौ चरतः सदा ।
तौ मत्स्यौ भक्षयेद् यस्तु स भवेन्मत्स्यसाधकः ।।"

(कुलार्णवे च—) "मानसादीन्द्रियगणं संयम्यात्मनि योजयेत् ।
स मीनाशी भवेद्देवि ! इतरे प्राणिहिंसकाः ॥"

अर्थात् "मत्स्यवत्-नितान्तचञ्चलानि-एकादशेन्द्रियाणि वशीकृत्य-स्वस्वव्यापाराद् वहिर्मुखानि कृत्वा ( वहिर्मुखीकरणमेव हिंसा न तु जलचरगणप्राणहननम् ) आत्मनि संयोजनमेव भक्षणम्-भोजनमेव, तत्कर्मकारी मत्स्यभोजी कथ्यते ।

( उक्तञ्च-- "मनसा चेन्द्रियग्रामं संयोज्यात्मनि योगवित् ।
मेरुतन्त्रे )-- मत्स्याशी स भवेद्देवि शेषा धीवरवृत्तयः ॥"

१ २ ३ ४ ५ ६

भैरवयामले च --"अहङ्कारो दम्भो मद पिशुनता मत्सर द्विषः,
षडेतान् मीनान् वै विषय हर जालेन विधृतान् ।
पचन्सद्विद्याऽग्नौ नियमितकृतिर्धीवरसृतिः,
सदा खादेत् सर्वान्न च जलचराणान्तु पिशितम् ॥"

अर्थात्—"अहङ्कारः, दम्भः, मदः, पिशुनत्वम्, द्वेषश्चषड्रिपून् विषयनिवृत्तिजालेन निगृह्य सद्विद्यया (ज्ञानेन) नियम्य सदा भक्षयेत् ( ज्ञानाग्नौ पाचयित्वा समुपयुञ्ज्यात् ) इदमेव मत्स्यभक्षणम् । नाऽन्यत् प्राणिहननं कर्म, लौकिक जलचरमत्स्यभक्षणं शास्त्रोक्तम् । एत एव षड्रिपयोऽहङ्कारादयो मत्स्य एव सर्वदाभक्ष्या तेनैवाऽलौकिकाऽऽध्यात्मिकी सिद्धिः-शास्त्रेषु सर्वत्रैव परोक्षवादः प्रदर्शितः ।

इति श्रीरामानन्दस्वामिमुखेन स्वसिद्धान्तस्य दुर्गतिमालोक्य स्वमानसे नितान्तं खिन्नम्लानवदनो दुर्जनानन्दः स्वीयभक्तमण्डलसम्मुखे स्वगौरवसंरक्षणार्थं कृत्रिमाट्टहासपुरःसरं प्रोवाच—

दुर्जनानन्दः--अरे ! नवमुण्डित संन्यासिन् ! सम्प्रति त्वमबोध एव, तन्त्रशास्त्रविषये न निष्णातः, एवाऽस्माकं तान्त्रिकीपद्धतिः दुरधिगम्या न सामान्यजन सुलभा नितान्तगूढ़ा, एव भगवता स्वयं साक्षात् पशुपतिना दयालुना श्रीशङ्करेण सुगुप्तरहस्यमयी पद्धतिरियं प्रकाशिता, अत इयं गुरुगम्यकुञ्जिकामयी, अपूर्वफलसाधिनी प्रत्यक्षदर्शनेन तु पशुबुद्धीनां दृष्टौ व्यभिचारमयीव प्रतिभाति किन्तु प्रकृतिपुरुषसम्भोगमयी सृष्टिक्रमाधारभूता महाफला, सकलमनोरथ - पूरयित्री कौली रीतिः, कथमेषा भवादृशानामननुभूतगार्हस्थ्यादिधर्माणामविज्ञाततत्त्वानां लक्ष्मीभूता भवेत् । एषा तु महामहायोगिनां भोगिनाञ्चान्तराऽपूर्वानन्दसम्पादिनी ब्रह्मानन्दसहोदराऽऽकारभूता श्रीमहाशिवप्रसूता प्रभूतोल्लासविकासिनी सकल-

चिन्ताशोकविनाशिनी अखण्डचैतन्योद्भासिनी ब्रह्मैक्याऽऽकारप्रकाशिनी महामहिमतेजोभासिनी कथं ते परिहासिनी भवितुमर्हति सर्वदाऽविज्ञाततत्त्वस्येति ? एतच्छ्रुत्वा-
श्रीरामानन्दः स्वामी--सत्यं भणितम् भवता स्वस्वरूपानुरूपमेव, किन्तु नितान्तं खेदस्याऽय विषयः, यद् धूर्तैः पाषण्डप्रसारणपटुभिः देवाराधनव्याजं, ईश्वराऽऽराधनं सम्मुखीकृत्य धार्मिककृत्यच्छलेन संसारे प्रसृतायां संस्कृतौ दुष्कर्म-दुराचारपरिपोषक-तत्त्वान्युद्भाव्य स्वकीया कुत्सिता, कामुकी प्रवृत्तिरेव पोष्यते स्वेन्द्रियाणि तर्प्यन्ते। सम्प्रति भवन्तमेव परिपृच्छामि-यत्-यस्य कस्यापि धर्मस्य रक्षकः ईश्वरो वा कमपि स्वाऽनुयायिनं प्राकृत-मद्य-मांसादिभक्षणस्योपदेशं विधत्ते, निर्मुक्त बन्धनं, स्पष्टमेव मैथुनादि कर्म कर्तुं कारयितुं वा समुपदिशति। प्रवर्तयति वा कञ्चन शिष्यं दुराचारे दुष्कर्मणि वा, ईदृशं वा तत्कथनम् भविष्यति किमु तदात्मकल्याणकरं श्रेयस्कृत् मुक्तिसाधकं वा भवितुमर्हति न कदापीति।

दुर्जनानन्दः—तर्हि किमु वयं, आस्माकीना वा पूर्वाचार्या महामहाकौलाः सर्वं एव विवेकहीना एवासन् ? कस्तेऽभिप्रायः ?

श्रीरामानन्दः स्वामी–ते तथाविधा आसन् नवेति को नाम वक्तुं शक्नोति, किन्तु भवान् भवतोवाऽऽनुयायिनः स्वेच्छाऽनुकूलं यथा पञ्च 'म' काराणां सम्प्रयोगं कुर्वन्ति, पञ्चानामप्येषां समेषां तात्पर्यं यथा मानमाऽनुरूपं मन्वते स्वेन्द्रियलालसातृप्त्यै वा यथा व्यवहरन्ति, तदवश्यमेव दुर्बुद्धिपूर्वकमज्ञान-कल्पितं स्वार्थसाधकमेव, नात्र मनागपि सन्देहः।

दुर्जनानन्दः--एवञ्चेत्तर्हि त्वमेव वद, मतेऽस्मिन् 'मुद्रा' कस्य नाम ?

श्री स्वामी रामानन्दः—भगवन् विजयतन्त्रे मुद्रायाः परिभाषा विद्यते—

यत्—'सत्सङ्गेन भवेन्मुक्तिरसत्सङ्गेन बन्धनम्।
असत्सङ्गं मुद्रणं यत् तन्मुद्रापरिकीर्तिता॥'

अर्थात् असत्सङ्गपरित्यागस्यैव नाम मुद्रा भवति, नान्या।

मेरुतन्त्रेऽपि— 'आत्मनो जायते मोदस्ता मुद्राः परिकीर्तिताः।
ता ज्ञेया धारणा ध्यानसमाध्याख्यास्तु मोक्षदाः॥'

कुलार्णवतन्त्रे च—'सहस्रारे महापद्मे कर्णिका मुद्रितश्चरेत्।
आत्मा तत्रैव देवेशि ? केवलः पारदोपमः॥

सूर्य - कोटि - प्रतीकाशः चन्द्रकोटिसुशीतलः।
अतीव कमनीयश्च महाकुण्डलिनी युतः।
यस्य ज्ञानोदयस्तत्र मुद्रासाधक उच्यते॥''

अर्थात् सहस्रदल-महापद्मे मुद्रितायां कर्णिकायां विशुद्धपारदसदृश आत्मा निवसति। तस्य (आत्मनः) तेजः कोटिसूर्यसमम्, तथैव कोटिचन्द्रसदृक् सुशीतलः स आत्मा मनोज्ञः कुण्डलिनीशक्तिसमन्वितश्च विद्यते, एतादृशस्य आत्मनः प्रकाशः ज्ञानोदयो वा यस्मिन् योगिजने समुद्भवति स एव योगी वस्तुतो 'मुद्रा'-साधकः। इत्थं साक्षादात्मनः कुण्डलिनीशक्तिसम्पन्नस्य योगिप्रत्यक्षं ज्ञानं (योगजं ज्ञान) मेव मुद्राज्ञानं भवति।

अधुना भवानेव विचिन्तयतु शास्त्रोक्तमीदृशं विशुद्धभावनमयं 'म' कारं कथं-कारं भवान् दुर्व्यवहरति? क्वाऽधुना भवता प्रयुज्यमानो मुद्राख्यो 'म' कारः पतित-गलितदुर्नीति-कुरीतिमयः? अरे योगिनामप्युपसेव्यं 'म' कारमिमं योगी भवन्नपि भोगिभ्योऽप्यधिकं दुराचरणमयं दूषितं विदधत् शिष्टजनसमाजे मान्यो भवितुं शक्नोति किमु भवान्।

एवमेव हि पञ्चमस्याऽपि 'मैथुन' रूपस्यापि नहि भवदनुमतोऽर्थो नितान्त-मशिष्टो दूषितश्च भवितुमर्हति। नरकद्वारकस्य भवदाचरितस्यास्य मैथुनाख्यस्य भाषणमपि व्यभिचरणरूपं पामरजनसेव्यं कुकर्ममयं सर्वथा निन्द्यं शिष्ट (सभ्य)-जनबहिष्कृतमेव। अतः विशुद्धरूपस्यास्य शास्त्रदृष्ट्या विवेचनं कृत्वैव शास्त्रोक्त-दिशैव 'मैथुन' शब्दमपि परिचिनुहि—मैथुनशब्दार्थः कदापि लौकिकस्त्रीपुरुषसमागम-रूपो भवितुं नार्हति, न चेन्द्रियलोलुपत्वमस्याशयः। इन्द्रियसंयमपुरःसरं पूर्णानन्द-द्योतकः सैव योगिध्येयः क्रियाकलापः। तथाहि—

मेरुतन्त्रे— 'इडापिङ्गलयोः प्राणान् सुषुम्नायां प्रवर्त्तयेत्।

'सुषुम्ना शक्तिरुद्दिष्टा जीवोऽयं तु परः शिवः।
तयोस्तु सङ्गमो देवाः सुरतं नाम कीर्तितम्॥"

अर्थात् सुषुम्नानाम्नीशक्तिः (स्त्रीरूपा) प्राणस्वरूपः शिवः पुरुषः, तयोः परस्परं सङ्गमो मिथुनीभाव एव मैथुनं भवति नान्यत् तन्त्रोक्तं मैथुनम् हि—

इडा–पिङ्गला नाम्न्योः नाड्योः प्रवाहितस्य प्राणस्य सुषुम्नया समागमः स एव कार्यस्तान्त्रिकैरयमेवाशयो मैथुनस्य नहि सर्वात्मना भवदाचरितस्य व्यभिचाररूपस्य नरकद्वारकपापमयस्येति। स्पष्टञ्च प्रतिपादितं तत्रैव, 'एतदेव हि रतं प्रोक्तमन्यद् स्यात्प्रासमं रतम्'। निषिद्धमेतद्।

भैरवतन्त्रे—'या नाडी सूक्ष्मरूपा परमपदगता सेवनीया सुषुम्ना,
सा कान्ताऽऽलिङ्गनार्हा, न मनुजरमणी सुन्दरी वारयोषित्।

कुर्याच्चन्द्राऽर्कयोगे युग-पवन-गते, मैथुनं, नैव योनौ,
सूर्याचन्द्रौ स्वराख्यौ श्वसनगतिमयौ सङ्गतौ चेत् तदा तत्॥

अतः—परमानन्दप्राप्ता सूक्ष्मरूपा सुषुम्नानाडयेव परमरमणी पुरुषाऽऽलिङ्गनार्हा सेवनयोग्या वा, नहि काचन मानवी कामिनी रमणार्हा? परब्रह्मणा सह सुषुम्नायाः सङ्गम एव मैथुनम्। न स्त्रीपुरुषसम्भोगः।

विजयतन्त्रेऽपि—'कुल कुण्डलिनी शक्तिः देहिना देहधारिणी।
तथा शिवस्य संयोगे मैथुनं परिकीर्तितम्॥'

प्रतिशरीरं विद्यमानाया कुण्डलिन्याः शक्तेः मूर्द्ध्नि सहस्रारपद्मे स्थितेन शिवेन सह संयोगः (संयुक्तीकरणमेव) मैथुनम् न लौकिकम्।

किञ्च वाममार्गविषये तन्त्रेषु लिखितमस्ति-भवद्विरुद्धमेव—

"अयं सर्वोत्तमो धर्मः शिवोक्तः सर्वसिद्धिदः। (पुरश्चरणार्णवे)
जितेन्द्रियस्य सुलभो नाऽन्यस्यानन्त-जन्मभिः॥"

इति भवानपि जानाति किन्तु स्वेन्द्रियलोलुपतां न परित्यजन् स्वज्ञानविरुद्धमेव 'जानन्नपि न जानाति' स्वार्थान्धः सन् समाचरति। इति।

किञ्च लौकिकमद्यादिसेवनमेव मोक्षसाधनं मनुषे चेत् तर्हि—

पृच्छामि त्वाम्—'मद्यपानेन मनुजो यदि सिद्धिं लभेत वै।
मद्यपानरताः सर्वे सिद्धिं गच्छन्तु पामराः॥

"मांस भक्षणमात्रेण यदि पुण्या गतिर्भवेत्।
लोके मांसाशिनः सर्वे पुण्यभाजो भवन्त्विह॥"

कुलार्णवे तु स्पष्टम्—"सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत्,
मुखे तया विनिर्दग्धे ततः शुद्धिमवाप्नुयात्॥

तन्त्रसारे च— "अर्थाद्वा कामतो वापि सौख्यादपि च यो नरः।
लिङ्गयोनिरतोमन्त्री रौरवं नरकं व्रजेत्॥

एतेन स्पष्टमस्ति यद् भवदभिमतो मद्यमांसमैथुनादिप्रकारो नरकगामी सर्वथाऽनर्थकारी सर्वात्मना परित्याज्यः स्वात्मकल्याणप्रेप्सुना । इति ।

सम्प्रति वस्तुतः कौलः को भवति, इति तत्स्वरूपं प्रतिपाद्य निवेदयामि यद् भवताऽपि दुराचारप्रवर्तकमिमं प्रकारं स्वमनसोद्दङ्कितं परित्यज्य-सकलप्रजानां भवदनुयायिनां मुग्धानां क्षेमाय स्वात्मनोऽपि कल्याणाय पाषण्डताण्डवपरिहारपूर्वकं सत्यं धर्ममयं क्षेमङ्करं पन्थानं प्रदर्श्य सन्मार्गप्रवर्तकेन भाव्यमिति साग्रहं ममाभ्यर्थना । उक्तञ्च—

विश्वसारतन्त्रे—"कर्दमे चन्दने देवि पुत्रे शत्रौ प्रियाप्रिये,

कौलस्वरूपं— "श्मशाने भवने चैव तथैव तृण काञ्चने ।

निरूपितम्— "न भेदो यस्य देवेशि ! स एव कौलिकोत्तमः ।

"चिन्तयेदात्मनाऽऽत्मानं सर्वत्र समदृष्टिवान् ॥ इति ॥

इत्थम् स्वशिष्यमण्डलीसम्मुखे एव स्वसिद्धान्तस्य खण्डनं श्रुत्वा दुर्जनानन्दस्य दुर्जनता स्वतः प्रकटिताऽभवत्—क्रोधावेशेन द्विगुणतम-मद्योन्मेषेण सद्योजाताऽवमानेन च विस्मृतसभ्यजनोचितव्यापारः मद्यमांसोद्रेकप्रसृतामिषगन्धं विमुञ्चन्नुवाच चञ्चलौष्ठपुटो दुर्जनानन्दः—अरे पण्डितमानिन् संन्यासिन् ! केवलमहं तव गुरोःसम्मानदृष्ट्यैव मौनमासाद्य तिष्ठाम्यन्यथा दुर्जनानन्दस्य सम्मुखे निरर्गलभाषणप्रतिफलं किम्भवति, इति नाविदितचरमिति । सकृन्मन्त्रोच्चारणमात्रेणैव त्वां नामशेषमेव विदध्याम् ।

पुनश्च स्वभक्तान् सम्बोध्य जगाद, वदन्तु सर्वे स्वधर्मनिन्दकाय कीदृशो दण्डो विधेयः ? भक्ता मौना एवाऽतिष्ठन्, न किमपि जगदुः ! यतो हि श्रीरामानन्दस्वामिनो विशिष्टविवेचनस्य प्रभावः परितः सम्पूर्णरीत्या सर्वोपरि व्यापृतोऽभवत् बुद्धिजीविनां सर्वेषां मनस्सु सत्यवस्तुनः स्वरूपं सम्यग् व्यवसितं सुप्रतिष्ठितमभूत् सकलज्ञानचक्षूंषि समुन्मुद्रितान्यभूवन् । सर्वान् स्वपक्षीयान् मौनानेव विलोक्य नितान्तं लज्जितः किं कर्तव्यविमूढोऽभूत् तदानीमेकः शिष्यः प्रोवाच, धर्मावतारगुरुदेव ! ईदृशो धर्मनिन्दकस्तु सद्य एव यमाऽतिथिर्विधेयः । अन्यथाऽयं महतीं नः प्रतिष्ठां घातयिष्यति । दुर्जनानन्दः—सत्यमेतत् अस्माकं परममान्यानां पञ्चमकाराणां धार्मिकीं प्रक्रियां व्यभिचारमयीं वदन् पापात्मा अवश्यमेव यमराजपुरयाचकोविघातव्य एव । अतोऽहं तथाऽऽचरामि, "विजयतां शक्तिः पराऽम्बिकेति" वदन्

खड्गमादाय श्रीरामानन्दं प्रति धावन् हन्तुमुद्युक्तोऽभवत् तस्मिन्नेव समन्ततः स्थितास्तदीयाः शिष्या एव सक्रमा भैरवनादेन जुघुषुः यत् सावधान दुर्जनानन्द ! न त्वया पदैकमात्रमपि प्रवद्र्धनीयमग्रे, नाऽपि ते कुशलं भविष्यति यदि स्वल्पमात्रमप्यवाच्यं वदिष्यसि किं पुनर्हिंसनकर्म । यथार्थमेव प्रवदन्ति श्रीस्वामिनः, सत्यमेव भवता भूयसामस्मदादीनां जन्मनारकीयमेव निर्मायितं त्वया पापमतिना गुरुणा, धर्मव्याजेन, अधर्ममेवाचरितम् आचारितञ्चेति । अस्य दम्भस्य पाखण्डस्य वा प्रतिफलमत्रैव लप्स्यसे यदि किमप्यत्याहितमाचर्य्येत ।

इत्थं सर्वैस्तदीयैरेव शिष्यैर्निर्भर्त्सितो दुर्जनानन्दः, स्वकरगतं खड्गं स्वस्थाने संरक्ष्य लज्जातिरस्काराभ्याञ्च भृशं व्यथितो न किञ्चिज्जगाद । ते च सकलास्तच्छिष्याः श्रीरामानन्दमेव शरणीचक्रुः । प्रार्थयामासुश्च भगवन् सद्गुरुणा भवता सम्प्रति सत्यः पन्थाः प्रदर्शितः समुद्घाटितानि च दुर्जनानन्दतिमिरावृतानि नश्चक्षूंषि । उद्धृताश्च सर्वे वयं नरकपातनात् । इति ।

---

# द्वाविंशः परिच्छेदः

अथैकदा सकलदुरितदारणदीक्षिताऽनन्तपुण्यपरिपाकप्रकटिताऽमिताऽऽनन्द-विस्तरोल्लासित - तरलतरङ्गभुजाऽऽलिङ्गनैकरसिकजनाऽवहरणैकरमणसलिलस्नपन-मज्जनपानविस्तारितत्रिदशदुर्लभैकभव्यवैभवविलासहासाया: भगवत्या भगीरथ-तपःपुञ्जप्रभापटलोल्लासितापूर्वफलभूताया: सकललोकेशकरकमण्डलुकोटिकीलाललीला-ऽञ्चितोपेन्द्रवामपादाऽङ्गुष्ठप्रसूताया:, समस्तसुकृतजीवनिकायाऽऽधारापारवसुन्धरो-रस्तटीविलुलितलोलहीरकहारायमाणाया:, त्रिभुवननिवासिजनसौभाग्यधन्याया: श्रीजह्नुकन्याया:, विविधविबुधसुरवरनिकरसेवितसुखदसरसतटीनिहितकुटीरे, नितान्तैकान्तरम्ये, प्रशान्तविशद-समुन्नतसमपीठेऽशेषबाह्यसंज्ञाशून्यं सुलभसमाधि-योगमास्थाय, विरतनिखिलेन्द्रियव्यापारो जगदाधारे ध्यानस्थितपरब्रह्मणि निलीनः श्रीरामानन्द आसीत् ।

तदा सुचिरकांक्षितं स्वाऽभिलषितमवसरं प्राप्य निजपरिभवोद्भावित-कुटिल - कुभावनामयं कुकृत्यमाचरितुं चिकीर्षुः साक्षादिव दुरितौघावतारो दानवायितो विहिताऽवमानदीर्घदेहो दुष्टो दुर्जनानन्दस्तत्र समागतः श्रितसौहार्दभाव-मपि विहितसमाधिं श्रीस्वामिनमालोक्य स्वान्तःस्थितं दौर्मनस्यं, प्रबलयन् वैरनिष्काशनावसरमवाप्यापि विगलितशस्त्राद्युपलब्धिको विचलित - चञ्चलचित्त-वृत्तिकोऽपि विफलितसकलप्रयत्नो जिघांसुरपि हन्तुं न समर्थोऽभवत्-तदा दैवप्रहितः कश्चन महाव्यालो लोलद्विजिह्वो सहसा दृष्टिपथमुपगतः । सद्य एव स विदिताऽऽ-हितुण्डिकमन्त्रपटलो-व्यालग्राहिविधिना महान्तंभुजङ्गमं करगतीकृत्य, तमेव श्रीरामानन्दस्वामिस्कन्धसमुल्लासिनं चक्रे । स्वयञ्चैकत्र स्थितःसन् स्वकीयं-कुकर्मफलं निजचक्षुर्भ्यामेव विषमविषाशीविषदंशजनित - प्रसृतमहाविषप्रभाव-पटलोत्क्रान्तप्राणम् महाप्राणं प्रत्यक्षमीक्षितुकामो वामाचरणः प्रसिद्धकामक्रोधा-ऽऽभरणः सपदि विफलप्रयासः समभवद्, यदा सः श्रीरामानन्दस्वामि-ग्रीवाविल-

सितिमवाप्य, विनिहतसकलदुरितपुञ्जोमञ्जुकुसुमहारायितां नव्यां भव्यां परित्यक्त-भोगितनुं प्रसूनमयाकृतिमुद्वहन् नितान्तं शोभमानः श्रीस्वामिवक्षःस्थलभूषण-मभूत् महाकाकोदरः, तदा सदुर्जनानन्दोऽपि सपदि मन्दत्विण् म्लानवदनो निन्दासदनः समुद्रितरदनो निश्चक्राम मन्दपदस्समाधिस्थलात् ।

इत्थं सः स्वप्रयत्नान् निष्फलानालोक्य प्रवर्द्धमानेर्ष्याकषायितः प्रत्यक्षाऽऽचरितान् निजवैरनिःसारणक्रियाकलापान् सर्वथा निःसत्वान् विगणय्य परोक्षप्रकारेण स्वकोपं प्रकटयितुमनाः मलिनामेवाऽऽभिचारकार्मिणीं विद्यामाश्रित्य सकृदभिचारप्रयोगेन मायामयमग्निवर्षणमारेभे । किन्तु सोऽपि प्रयोगो निष्फल एव सिद्धोऽभूत् । स तु स्वामि महानुभावः स्वयमेव ज्योतिषां ज्योतिषि-निलीन एव स्थित आसीत्, तत्राऽभिचारचितोऽग्निः कथं तापयितुं प्रभुः स्यात् स्वीयोपासकम् ।

पुनरपि सः स्वाऽभिचारप्रयोगपटीयान् मायावी क्वचिदस्थ्नां वृष्टिम् क्वचिच्च मांसस्य क्वचिच्छोणितस्य कदाचिन्मज्जामेदसामैन्द्रजालिकीं कलां कलयति स्म । किन्त्वयमपि सफलो विफलप्रयत्नः समजायत । यतोहि स्वामी-श्रीरामानन्दः "अद्वेष्टा सर्वभूतानाम्" इति सिद्धस्थितिमुपगतो न किमपि तद्विहितमहितं मेने । तदानीं दुरितात्मनस्तस्य तादृशी चेष्टा तस्मिन् महामहद्धाम्निव्यवस्थिते विगतकल्मषमानसे महात्मनि बालविनोदायिता समुपमहासास्पद-मिवाभूत् । किम्बहुना तत्कृता तादृशी मांसशोणितादिवृष्टिरपि तस्मिन् विचित्र-तमा सुरभितसुमनसां सृष्टिरिवाजनि ।

इत्थम् दुर्जनानन्दो यदा पुनः पुनः स्वाभिचार-प्रयोगेषु विफलः सञ्जातः, तथा "देहं वा पातयामि कार्यं वा साधयामि" इति सिद्धान्तं स्थिरीकृत्य श्रीरामानन्दं हन्तुकामो वामाचारतः खड्गं करगतीकृत्य साक्षादेव सम्मुखीभूय स्वहस्तेनैव तच्छिरःकृन्तनाय श्रीरामानन्दसम्मुखमुपागतः तस्मिन्नेव काले श्रीरामानन्दस्य समाधिरपि सम्पूर्णतामुपगतः । "अहो भगवतोलीलावैचित्र्यम् अचिन्तनीयो हि तपःप्रभावो भगवतो भक्तसंरक्षणम् चेति" समापितसमाधिभावः श्रीरामानन्दस्वामी तथाविधं तं दुर्जनानन्दमालोक्य विदितसकलतद्भावः सस्नेहं सस्मितं सोल्लासं, सधैर्यं साश्चर्यं प्रोवाच—

श्रीस्वामी—भगवन् ! कौलाचार्यवर्य दुर्जनानन्द ! किमर्थमद्य मद्योपासनां विहाय सम्प्रत्यसमये ह्यसामयिके वाऽनुचितस्थलेऽत्र खड्गपाणिर्भवान् कथ-मेकाकिनि मयि कृपां विधातुमेकाकी समायातः ?

दुर्जनानन्दः—सक्रोधम्-विस्वरं प्रोवाच,-"स्वधर्म-निन्दकान् निहन्तुमेव" करगतोऽय-मस्माकं खड्गः कौलधर्मनिन्दकरक्तपिपासुः भगवत्या महामालिकायाः चलल्लोलरसनायितः स्वार्थसिद्धयै समुद्धृतः।

श्रीरामानन्दः स्वामी—अहो धर्माचार्याणां शास्त्रोपदेश एवान्तरक्लेशविशेपशातनो भवति न खलु शस्त्रोत्तोलनम्?

दुर्जनानन्दः—"शठे शाठ्यं समाचारेत्" इत्येव नीतिशास्त्राज्ञा।

श्रीस्वामीः—नैतदस्मदादीनां कृते। कर्मैतत्तु-येषां नैतिकं बलम् स्वतपोबलं वा क्षीणं हीनं भवेत्, तेषामयमेव समाश्रयः।

दुर्जनानन्दः—अलं प्रलापेन? अद्यैव समागतो मेऽयं सुअवसरस्तेऽसुहरः खड्गेनानेनैव त्वां निहत्य कृताऽवमानस्य प्रतिशोधं लप्स्ये।

इत्युक्त्वा सः पामरो दुर्जनानन्दो दुर्जनतां प्रकटयन् तं हन्तुमुपचक्रमे। श्रीरामानन्दस्तु तथैव शान्तगभीरमुद्रया सर्वत्र समदर्शनं भगवन्तमेव परं ध्यायन् "अद्वेष्टा सर्वभूतानाम्" इति "अहमेवाऽक्षयः कालो०" इति सुदृढबद्धो मन्दं हसन्नेव स्वस्थान्न विचचाल। तदानीं भगवदनुग्रहेण—"महसां कृते विहितोऽभिचारः-स्वात्मन्येव प्रतिफलति" इति नियमानुसारं—यथा हि स दुर्जनानन्दः अविदित-नतोन्नत-भूमिभागः साक्रोशं धावन् सद्यः स्खलितगतिकः गर्ते प्रस्खलन् हवन-कुण्डसविधे नीचैः कृतविधृतखड्गहस्तो तस्मिन् खड्गोपरि स्वयं निपत्य यमाऽतिथिः सञ्जातः। मुक्तश्चेति।

——

# त्रयोविंशः परिच्छेदः

शान्तिखड्गं करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥

दुर्जनानन्दस्याद्भुतां मृत्युमाकर्ण्य, श्रीमद्रामानन्दस्वामिनः तपःप्रभावञ्च चाक्षुषीकृत्य सर्वत्र काश्यामाकोणकोणं, रामायणीयकथेव प्रतिप्रतोलि प्रतिजनमुखं परमाद्भुतचमत्कारमयं तदुदन्तजातं - सर्वत्रैव विद्युत्प्रकाशमिव प्रासरत् । समन्तात् प्रसरन् एष विचित्रघटनायाः व्याकोपस्तदन्तेवासिगणे ( शिष्यपटले ) प्रासरत् ।

स्वगुरोस्तान्त्रिककुलाऽऽचार्य - प्रवरस्य, श्रीरामानन्दविहित - प्रश्नोत्तर-प्रदानासमर्थमनीषाजन्यसंक्षोभ - प्रवर्द्धितमहाकोपोपहतमतिकस्य, निजशिष्यपटला-भिमुखप्रकटितशाठ्यस्य श्रीरामानन्दस्वामि - वधायैव विहितनिश्चयस्य - करधृत-करवालकरालकालायितक्रूरकर्मकलापाचार-समासक्तस्य तदुपरिप्रहारं कर्तुमुद्युक्तस्यैव सहसास्खलनजवेन विधृतोद्ध्वंधारखड्गहस्तस्योपरि शरीरपतनाद् विखण्डिताद्विश-कलीभूताऽङ्गस्य दुर्जनानन्दस्य सपदि प्राणोत्क्रमणवृत्तान्त-व्याकुलचेतसां क्रोधावेशेन परित्यक्त सचेतोविवेकानां, प्रतिदिनप्रवर्तितपानव्यवायोन्माद-लीला-सौख्य-ह्रासस-मुद्भूतकोपावेगोन्मत्तमानसानां मूढमतीनां पापाचार-प्रसारितकृतीनां तच्छिष्यानां मण्डली परस्परमेकीभूय स्वगुरोः प्रतिशोधभावनया श्रीस्वामिनां प्राणहरणाय कृतप्रयत्ना विधृतशस्त्रा सहसा समापतत् यत्र श्रीरामानन्दस्वामी विधृतसमाधिको ब्रह्मसम्पन्न इवातिष्ठत् ।

तत्रैकान्ते सकलकलिकल्माषापहारिण्या, निखिललोकक्षेमकारिण्या, निजशरणागतप्राणिपटलसन्तारिण्याः, श्रीशशिशेखरजटाजूटाटवीविहारिण्या भग-वत्या भागीरथ्यास्तटे विनतलताप्रतानालित विविधलघुपादपपुञ्जोद्भूतकुटीरे विधतत्रैलोक्यरक्षणसक्षण - भक्तत्राण - परायण - श्रीराममेकाकिनमेव श्रीरामानन्द-स्वामिनं विलोक्य सहसा निजाऽभिलषित - नृशंसकर्माऽनुकूलं प्रातिशोधसाधनमूलं

सुलभमवसरं विज्ञाय हन्तुकामा अपि ते शस्त्राऽऽघात - पातकभिया स्वयमेव तत्तेजः-पराहतधियः शस्त्रोत्तोलनमपहाय समाधिस्थमेव श्रीरामानन्दं समुत्थाप्य गङ्गा-प्रवाह एव प्रक्षेपणार्थं विहितबहुविधचेष्टाः सर्वे संहत्याऽप्युत्थापनेऽसमर्थाः यदा ह्यभवन् - तदा तत्प्राणानपहर्तुं प्रवृत्ता यथैव ते चेष्टन्ते स्म 'तस्मिन्नेव क्षणे श्रीरामानन्दस्वामिनः समाधिः समुन्मुद्रिताऽभूत्। नयनाऽम्बुजे समुन्मीलिते जाते। विलोक्य च तांस्तथा—चेष्टमानान् - सस्मितं प्रशान्तगभीरमुद्रया निरातङ्कं निःशङ्कं प्रावोचत् - स्वामिमहाभागः। "महानुभावाः" किमर्थं संहत्य सर्वेऽत्र कुटीरे शस्त्रपाणयः इत्थं कोपकषायितस्वभावाः भावाविष्टाः समायाताः ?

इति श्रुत्वा निसर्गकुटिलोदुष्टात्मा दुर्जनानन्दस्यपट्टशिष्यः सपदि रोषाऽरुणनयनो मृशं मदपानमत्तो निजवदनविनिःसृतपूतिगन्धो मदान्ध एवाभाषतानर्गलमपशब्दान् – विस्फारितरक्ताक्षोः मद्योन्मादवशंवद एव—स्खलितवाक्—"अरे ! दुष्ट ! संन्यासिन् ! त्वमेवाऽस्मद्गुरोः स्वधर्मैककर्मपरायणस्य भगवतः साक्षाद्भैरवायितस्य श्रीदुर्जनानन्दमहाराजस्य वधं कृत्वाऽत्र निकुञ्जकुटीरे प्रच्छन्नगात्रः स्थित्वा समाधिव्याजेन वञ्चयसि नः सर्वान् नाधुना ते क्षेमम्—वयमत्र तव वधायैव विहितोद्योगाः तवाऽस्तित्वमेव संसारादपनेतुमायाताः स्मः। सुप्ता एव पञ्चास्याः त्वया जागरिता व्याक्षुब्धाश्च कृता तत्फलमेवाधुना लप्स्यते मूढ" त एव हर्य्यक्षायमाणास्तच्छिष्याः वयम् खड्गेनानेन निकृन्त्य ते शिरः, कन्दुकक्रीडया विलोकयन्तो भूमौ स्वगुरुहत्यायाः प्रतिशोधमाचरिष्यामः। अतः सावधानो भवेति व्याजहार।

तदा क्षमाभावं प्रदर्शयन् जगाद सः श्रीरामानन्दस्वामी—"अहो दयादाक्षिण्यदिगुणगणगरिष्ठा मानवाः ! किमर्थं व्यर्थमेवैवंविधे क्रोधाग्नौ स्वात्मानमेव भस्मीकर्तुं प्रवृत्ता भवन्तोऽधुना कथमेव वास्तविकतत्त्वविमुखाः सन्तः पामरायन्ते। विज्ञानकल्पपादपशीतलच्छायामाश्रित्य विवेकपुरःसरं कथं न विचारयन्ति भवन्तः—यत् लोके हि न कोऽपि कमपि मारयति न वा जीवयति न च दुःखाकरोति, न हि सुखयति च कमपि, सर्वे स्व - स्वकर्माऽनुसारं - स्वयमेव, सुखम्, दुःखम्, जन्ममरणम्, मानम्, अवमानम् लभन्ते, न कोऽपि कस्मैचित् किमपि ददाति न विगृह्णाति कर्माऽधीनमेवैतत्सर्वं सर्वः प्राप्नोति।

किञ्च—यत् किमपि करोमि, तदहमेव करोमीति मिथ्या ज्ञानम्, मिथ्याऽभिमानः सततं मिथ्याऽभिमान - मद - मोहित - बुद्धिवैभवाः, अहम्भावभावितान्तःकरणा व्यर्थमेव पापपुण्यपोट्टलिकां शिरसि वहन्ति दुर्धियः। संसारे यत् किमपि भवति तत्सर्वं कर्मसूत्रगुम्फितमेव हिताऽहितरूपेण परिणमति, तथैव च मानवोऽपि

कर्मानुसारमेव लभते। अतएव भवतां गुरोरपि नाहं मृत्युकारणम्, अपितु तदीय-कर्माण्येवेति।

कौलशिष्याः—भगवन्! कर्माण्येव यदि मृत्युकारणानि तर्हि तेषां श्रीगुरुचरणानां कर्माणि त्वतीव पावनानि धर्माचारपराणि शास्त्रसम्मतानि लोकक्षेमकराणि-सर्वात्मना च सर्वप्रियाणि समुपासकजनानुकार्याणि सर्वविधाऽऽनन्दमयानि परमवन्दनीयान्यासन्।

श्रीरामानन्दस्वामी—सम्यक् महानुभावाः सम्यक् परन्तु विवेकदृष्ट्या भवन्त एव क्षणं निष्पक्षभावनामय्या तत्त्वविवेचिन्या भावनया विलोकयन्तु सहृदयाः सन्तो वदन्तु यत् अहर्निशं मद्यपानदुर्गन्धललितमुखाः सन्तो जना देवाराधनोपयुक्ता भवितुमर्हन्ति किमु? किमित्थम् मद्यपानं विद्यते पवित्रतमम्? किमेवं मांसभक्षण धर्मसम्मतं? किमेवं नवयुवतिभिः सह धर्मव्याजेन व्यभिचरणम् शास्त्रसम्मतम्, किमेवं मद्यं पीत्वा पाययित्वा च ता मदोन्मत्ता विधाय यूथशः सामूहिकरूपेणाऽपि संहृत्य ताभिः समं दिगम्बर-केलिलोलत्वमपि सभ्यजनोचितं जनहितकरं कर्म भवितुमर्हति? भवन्त एव स्वात्मानं साक्ष्यीकृत्य निर्मत्सरं निष्पक्षं भणन्तु किमिदं लोककल्याणकरं नीति-सम्मतं सकलजनादर्शभूतं प्रचारोपयुक्तं कथितुं शक्यते? विवेचयन्तु मनाक् लोककल्याणप्रप्रसवो भवन्तः ईदृशेन नैतिकपतनेनापि भवितुमर्हति जनसमाजहितम्? अनेनैव कर्मणा यदि हितसाधनस्य लवमात्रमपि सम्भावना प्रभवेत् तर्हि श्रुतयोऽपि :—'न सुरां पिबेत्' 'न मांसमश्नीयात्' न परस्त्रियमुपेयात् 'मा हिंसीः पुरुषान् पशून्' इत्याद्यैर्वचनैः मुक्तकण्ठं न निषेधं विदध्युः। नैतावदेव - अपितु, शास्त्रेषु तु सदाचारोपरि सर्वतोऽधिक गूढरहस्यप्रकाशनपुरःसरं भूयोभूयो बलं प्रक्षिप्तमेव। पदेपदे सदाचारो वर्णितः। परन्तु यां पद्धतिमनुसृत्य प्रवर्तमानाः कलयन्ति तथाविधानि कर्माणि कारयन्ति च मुग्धयुवकयुवतिभिः स्वशिष्यप्रशिष्यैः, सा पद्धतिरेव स्वार्थैकपरा व्यभिचारमूला शूलायते सदाचारिसमाजकृते।

कौलशिष्य:—भगवन्? कथं शूलायते समाजकृते?

श्रीरामानन्दः स्वामी—यतो हि इन्द्रियादिविषयेभ्यः परम् समुत्कृष्टं योगिध्येयपञ्च-'म' कारोपासनाभूतं परमनिर्गुणोपास्यमपि कर्म स्वकीयेन्द्रियप्रीत्यनुसारं विषयोपभोगीयभावनोन्मत्ततया मद्यमांसभक्षणपुरःसरं नवयुवतिविलासोल्लासितं

कलयन्तो भवन्तो धर्मव्याजेन नितान्तव्यभिचरणाऽधर्ममाश्रित्य प्रवर्तमानाः दुष्कर्माणि परिनवनाः कथं सत्कर्मफलं लब्धुं प्रभविष्यन्ति । अरे ! दुष्कर्मणां फलन्तु दुष्टमेव भविष्यति अरे ! कण्टकिद्रुमान् वपतो निषेवमाणा जनाः कथ तेभ्य आम्रफलानि मधुराण्यास्वादयितुं पारयिष्यन्ति ?

अतो भवन्त एव स्व-स्वहृदये हस्तं धृत्वा विवेकदृष्ट्या विलोकयन्तु-यत्-स्वाऽऽत्मानं देशोद्धारकं मन्वानाः धर्माऽऽचार्याः सन्तोऽपि यदि सत्यपरिभ्रष्टाः सदाचार-पराङ्मुखा व्यभिचाररताः स्वशिष्यानपि यथेच्छं व्यभिचारपरायणान् विदध्युः दुराचाराणाञ्च दीक्षामेव स्वात्मानुरूपां दधुः, उदारभावनां सम्मुखीकृत्य धार्मिक-संस्कृतेर्विरुद्धमेव चलन्तश्चालयन्तश्च स्वशिष्यान् भारतीयां पवित्रतमां संस्कृतिमतिक्रामेयुः, स्वतन्त्रताव्याजेन समुच्छृङ्खलतां भजेयुः पोषयेयुश्च भोगविलासीयां भावनाम् । समानाधिकार-प्राप्तिच्छद्मना कामिनीकदम्बेषु कुलटात्वं कारयेयुः, विकासवाद-वाटिकायामपि विनाशोल्लासिकुसुमसमृद्धिं वर्द्धयेयुः, स्वयमेव दुरितदुष्कृत-व्यभिचार-विजृम्भितमहापङ्कनिमग्ना अन्यानपि स्वमतानुयायिनोऽपि कुटिलकुकर्म-कर्दममहागर्ते पातयन्तः सर्वदाविपरीतप्रवृत्तिमन्तो देशस्य धर्मस्य स्वकीयसमाजस्य कल्याणं कर्तुं भविष्यन्ति किमु समर्थाः ? किमेतादृशीभिः प्रवृत्तिभिः कस्यचन देशस्य समाजस्य वा सुकृतं समुद्धारश्च क्वचन विलोकयितुं शक्यते ? शास्त्रेषु-निर्दिष्टमेतदेव यत् सदाचारेणैव सर्वदा समाजस्य वा समुद्धृतिः सम्भवन् भवति चेति ।

किञ्च "धर्मादपेतं यत्कर्म यद्यपि स्यान्महत्फलम् ।
(महाभारते) न तत्सेवेत मेधावी न तद्धितमिहोच्यते ॥
शां० प० २६३ ।

अतः धर्ममुद्घोष्य न कामपि व्यक्तिमधर्मे प्रयोजयेत् । धर्मव्याजेन च प्रजायां मांसमद्यमैथुनादिकान् पतितोन्मुखान् देशधर्म-समाज-विपरीतान् दुराचारान् न प्रवर्तेरन्, न वा जीवनोपयोगिसाधनानीति समुद्घोष्य तदुपरि मिथ्यां धर्ममुद्रा-मङ्कितीकुर्युः ।

इत्थं श्रीरामानन्दस्वामिप्रयुक्तानां प्रवचनानां प्रभावस्तेषु तेषां हृदयपटलेषु सुदृढमङ्कितोऽभवत्, क्रमेण तेषां विचारधारा परिवर्तिताऽभूत् कौलाचारी सः दुर्जनानन्दशिष्योऽपि स्तब्धो नम्रः सद्भावभाविताऽन्तरात्मा सन् विनयमाचष्टे । सविनयमुवाच च—

तर्हि भगवन् ! "न मांसभक्षणे दोषो न मद्ये न मैथुने" (मनु० ५ ५६)

इति कथमुक्तम् कश्चाऽस्याऽभिप्रायः ?

श्री रामानन्दः--महानुभाव ! सर्वमेतत्तु भूतानां प्रवृत्तिप्रतिपादकम् न भवदभिमतं यथेच्छ-व्यवहार फलकम् । शास्त्रेषु तु-भूतानां प्रवृत्तिं निर्दिश्य-तत्परिहारकरण एव श्रेयो महाफलञ्चेत्युपदिष्टम् ।

तथाहि—"प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥" ( मनु० ५।५६ )

किञ्च यत्र यत्र मद्यमांसादिशब्दानामुल्लेखो दृश्यते तत्र सर्वत्रैव प्रकरण-भेदेन ह्यधिकारिभेदेन वाऽवगन्तव्यः । राजस-तामसाद्युपासनापरत्वं वा, न तत्रोत्तमाधिकारिविहितत्वं बोध्यम् । यतोहि तेन ह्यनर्थसाधकत्वं दुःखदफलावहत्वं सांसारिकत्वप्रवृत्तिनिमित्तकश्चेति । न तेन कैवल्यलाभो, भोगादिसाधकत्वं वा ।

इत्थं श्रीरामानन्दोपदिष्टानि प्रवचनानि श्रुत्वा सर्वे तदीयाः कौलाचारि-दुर्जनानन्दशिष्याः विदिततत्त्वाः समुत्पन्नविवेकाः तदवधि विहितदुराचारोपरि पश्चात्तापं भूयो भूयोऽनुतापञ्च कुर्वाणाः सम्प्रतिलब्धसन्मार्गाः प्रस्फुरितविवेक-भास्कराः परित्यक्तावलम्बिताऽद्यावधि मद्यमांसोपभोगायोगधर्माः सर्वात्मना श्रीरामानन्दचरणावेव शरणीचक्रुः ।

---

# चतुर्विंशः परिच्छेदः

षोडशकलाविलसितं, पार्वणपीयूषस्राविकिरणनिकरविलासिविजृम्भितं, चकोरीनिचयचित्तचन्दिरं, सरससुभगशीतलसौभाग्यमन्दिरं, समुन्मीलित - कुमुदिनी-कदम्बं. रुचिरचन्द्रबिम्बं, विलोक्य प्रोच्छलच्छतशतमहत्सूल्लोल - लोलभुजा-प्रसारणोल्लासितस्नेहसम्भारः, पारावारः, स्वकीय परिपूर्ण प्रणयकलाकलापमनुपम-शोभाकरं, सुधाधरं, स्वहृदयेन संयोजितुमेवाग्रे प्रवर्द्धमानो, नैजं हर्षप्रकर्षोद्गारं स्वान्तःस्थले धारायितुमशक्त इव, वारं वारं स्वतटं प्रत्यटन्निव, संघट्टयंस्तर-लतमतरङ्गैः, सुधांशुबिम्बमालिङ्गितुमप्रभुर्हताश इव, प्रत्यावर्तिततरङ्गरङ्गः; प्रतिमासं प्रयतमानो, हर्षं दर्शयन्निव, वेलां विचुम्बन्निव राजते, तथैव श्रीमद्राघवा-चार्यवर्यः पूर्णकलाधरं कलाधरमिव, सकलजनमानसाह्लादकरं, श्रीरामानन्द-मुत्तरोत्तर-प्रवर्द्धमान - सम्मानसमुज्जृम्भित - प्रचण्डपाण्डित्यपूर्ण-प्रभावोद्गीर्णं वैभव-मालक्ष्य स्वस्वान्तःसमुद्भूत प्रमोदोद्ध्वंसीमानं न सीमितवान् । यद्यप्याश्रमप्रवेशकाल-मारभ्यैव बालारुणद्युमणिरिव, प्रवर्द्धमानतेजोविशेषमनुमाय. बहुविधगुणगणानु-मेय - गौरवगरिष्ठं, वरिष्ठं, धर्माचार्यपदासीनानुरूपाद्भुतनिखिलचेष्टं, समीक्ष्य निःसन्दिग्धं स्वोत्तराधिकारनियोजनार्हचरितललितं विचिन्त्य, निश्चिन्त इवासीत्, किन्त्वधुना तु स्वभावनाऽनुकूलकलितान्यालोक्य पूर्णविश्वस्ततामुपगतः ।

एवमेव साक्षाद् धृताऽवतार श्रीमद्राघवमिव श्रीराघवाचार्यवर्यं मन्यमानः श्रीरामानन्दस्वामी श्रीमद्गुरुवरचरणारविन्दमकरन्दमिलिन्दायमानः तदीयपरिचर्य्या-परायणोऽप्यहरहस्तत्करुणाकटाक्षमाकांक्षमाणः, प्रसारितप्रचण्डपाण्डित्यप्रतापो, निजवैदुष्योल्लासविलासितविद्वत्तल्लजोऽपि विनयभावनाविभावितान्तःकरणः स्वात्मानं तदन्तेवासिगणामन्तर्गणितमेव मन्यमानः सन्ततगुरुवरसेवासमाराधनसंलग्नः स्वात्मानं तदीयचरणाऽकिञ्चनसेवकं गणयन्, प्रतिपलं निर्धनजनोऽपारंनिधिराशिमिव तदाज्ञामवाप्तुकामः कामयतेस्म तदनुग्रहत्वम् ।

अथैकदा कश्चिच्छ्रौतस्मार्त - कर्मानुष्ठानविधानपरिकल्पित-भगवदर्चनोपस्कार-सम्भार-सुसज्जितः सन्तत नित्यनैमित्तिककर्मप्रवृत्तो भगवदाराधन एव समापितस्व-वयस्त्रिभागः सविधिसमभ्यर्चितभगवत्पादपद्मः सरलस्वभावो वार्धक्यशिथिलितसकल-शारीरिकसन्धिवन्धनः द्विजवंशविभूषणः परित्यक्तमात्सर्यलोभमोहादिमहादूषणः वेदवेदान्त-विज्ञानाऽरुणपूषणः प्रतिवसति स्म तत्र वृद्धद्विजः। स च यथानियमं समु-पासितभगवच्चरणपङ्कजः पूजावसाने भगवच्चिन्तननिरतो विरतत्रिविधसन्तापो विस्मृततात्कालिकयवनशासकनियोजितकर्मचारिपटलप्रसारितदुर्दान्ताऽऽतङ्को निःशङ्कं प्रतिदिनमिवाऽधुनाऽपि शङ्खध्वनिमातेने।

तदानीमेव पार्श्वभागे हठाद् विहित-'मस्जिद' गृहे कश्चिज्जरद्गुवयो ह्यहिफेनाऽऽस्वादननिरतो निशिवासरमेव 'अल्ला' अल्लेति वदन्मुल्लाख्यः कोपि संरक्षकपदे नियोजितो 'नमाज' व्याजेन स्वप्रभावं दुरातङ्कं वा विस्तारयितुकामो निकाममुच्चैश्चुक्रोश—कोऽयम्, कुतस्त्योऽयम् महाशङ्खध्वनिरुदतिष्ठदकस्मात् 'नमाज' समये। इति तन्मुखान्निःसृत एव शब्दे, तदनुयायिनो हिंसाव्यसनिनो यवनयुवकहतकाः शस्त्रपाणयो यमदूता इव परितः प्रधावन्ति स्म।

तदानीम् यवनाऽऽतङ्कपङ्किलेऽस्मिन् दुर्दान्तदुराचारमये समये सर्वत्रैव भारते प्रतिनगरं प्रतिग्रामं प्रति प्रतोलीतिबलाद् यवनाः 'हिन्दू' पदधारिणां गृहेषु मन्दिरेषु प्रविश्य धनादिविलुण्ठनम् कलत्राद्यपहरणं कुलवधूधर्मध्वंसनम् कन्याहरणम् भगव-न्मूर्तिखण्डनम् भगवन्मन्दिरेऽपि 'स्वमस्जिद' मण्डनम्, निष्कारणमेव येनकेनापि व्याजेन 'हिन्दू धर्मधारिणां' विहिंसनादिविविधदुष्कृत्योज्जृम्भणं तु स्वकर्तव्यमेव मन्यमानाः विलासोल्लासहेलेव विधीयन्ते दुरितानि यवनहतकैः। तथैवैतन्मस्जिद-स्थानमप्या-सीदेकं भगवन्मन्दिरमेव यत्राऽधुना यवनशासकनियोजितो नीचाऽधमो मुमूर्षुर्यवनजरठः, तदाज्ञानुवर्तिनश्च दुराचारा दुष्टा यवनयुवकाः तत्रस्थिताः बाधन्ते स्म सदाचार-परायणान् हिन्दूपधिधारिणो धार्मिकान्।

ततश्च शस्त्रधारिणो यवनसैनिकाः समन्ततः प्रतोल्यां प्रसृताः धर्माऽऽ-धाराणां "हिन्दू" नाम् गृहेषु प्रविशन्तो बहिर्निस्सरन्तः पर्य्यालोचमानास्तत्रैव समाजग्मुर्यत्र स वृद्धब्राह्मणो भगवन्तमर्चति स्म। तत्राऽऽगत्यैव ते नीचाः परितस्तद्गृहमाक्रामन्तोऽभ्यन्तरं प्रविष्टाः सन्तः समस्तां समुपार्जितां सपर्य्यार्थं पर्य्याप्तमाकलितां सामग्रीं दूषयन्तो नष्टां भ्रष्टाञ्च विदधतः प्रलपन्तश्चानर्गलं वदन्तश्चाऽवाच्यानि दुर्वचांसि, ब्राह्मणेन वारं वारं साऽनुनयं प्रार्थिता अपि द्विगुणतरं कोपमेवाचरन्तस्तदीवं सकलं-साधनं धनादिकं हरन्तः प्रहरन्तश्च

निर्वलमसहायं भगवदेकसहायं, दीनब्राह्मणं नितान्तमपराधिनमिव निरपराधमपि साबाधं पीडयन्तः पाशैर्बध्वा कर्षन्तस्तं निःशेषञ्च तद्गृहं वह्निसात्कृत्वा भृशं तं निगड्य्य वन्दिनं चक्रुः। तद्गृहञ्च यावन्निःशेषं भस्मसान्नाऽभूत्तावत्ते तत्रैव स्थिताः न कांश्चिदपि समागतानग्निप्रशमनाय विहितप्रयत्नान् तत्रोपस्थितानपि ससाधनान् तथाकर्तुं न तान् पारयन्ति स्म प्रत्युत न्यषेधन्नेव। यथा यथा ह्यग्निः प्रचण्डतामुद्वहति स्म तथा तथैव वृद्धः स द्विजो भृशमार्तनादं कुर्वन् रोदिति स्म प्रलपति स्म, यतो हि तस्य सप्तहायनो बालक एकमात्रस्तत्कुलाऽङ्कुर एवासीत् नितान्तं रुग्णः, प्रोत्थातुमशक्तस्तस्मिन्नेव गृहे नीचैर्भागे शयान आसीत् ज्वालामालाऽऽकुले प्रदीप्ते। तद्रक्षणाय बहुधा निवेदिता अपि न ते शुश्रुवुः। ततस्ते नीचतमा निर्घृणाः ब्राह्मणं निगडय्य तत्रानैषुः. यत्र स जरद्गवयायितो अहिफेनमदविह्वलस्तन्द्रिल इवातिष्ठद्यवनद्वृद्धः।

यद्यपि तद्गृहोपरि च कतिपयान् यवनसैनिकान् निःशेषभस्मीभावावधि नियोजयामासुः, तथापि भगदिच्छा बलीयसी भवति, भगवान् यत्र स्वयं स्वभक्तस्य कुलं रक्षितुमुद्युक्तः कस्तं नाशयितुं प्रभुर्भवेत्? तेष्वेव सैनिष्वेकः सहृदयः सैनिकोऽप्यासीत्, यदाहि तस्य दृष्टिस्तस्मिन् बालके निपतिता, तस्मिन्नेव क्षणे स सैनिकः सद्यो दीपितगृहे प्रविश्य समुत्थाप्य च तं शिशुं ह्यस्पृष्टवह्नि, बहिर्निष्काशयामास। तस्य तथाविधां चेष्टामालक्ष्य तदीया अन्ये सैनिकास्तं निर्भर्त्सयन्तो विमनस्कायमानाः संवृत्ताः, परञ्च दयालुः स न तान् विगणय्य बालकं सुरक्षितमेव तत्पार्श्ववर्तिने कस्मैचन गृहस्थद्विजाय समर्पयामास, निक्षेपमिव न्यदधात्। सोऽपि तस्मिन्नेव क्षणे तं बालकं श्रीरामानन्दस्वामिनां समीपे नीत्वा सर्वं वृत्तान्तञ्च संश्राव्य बालकं समर्प्य सम्प्रत्यस्य संरक्षकः श्रीमानेवेति बालकं तच्छरणीचकार ( शरणीकारयामास )।

तञ्च ब्राह्मणं पाशैर्बद्ध्वा यवनसैनिकाः मस्जिदस्थलं नीत्वा तत्रत्य "काजी" ति प्रथिततदीयन्यायाधीशापसदस्य सम्मुख तमुपस्थापयामासुः। अन्येऽपि यवनापसदास्तत्र समुपस्थिता अभूवन्। "काजी" नामा न्यायकर्ता ब्राह्मणं प्रति स्वकीयां कर्कशां दृष्टिं प्रचिक्षेप।

प्रोवाच च "जरठब्राह्मण ! जराव्याप्तदेहं धमनिशतसमाकुलितं सर्वाङ्गव्याप्तवार्धक्य सितकेशत्वमुदीक्ष्य ते साधारणतया मानवतनुधारिणश्चेतसि दयाप्रवृत्तिः प्रसरत्येवेति नाश्चर्यं, किन्तु त्वदीयं तत्कर्म स्मृत्वा कस्यापि यवनधर्मपक्षपातिनः स्वान्तं न मनागपि द्रवीभवितुमर्हति। यतो हि अस्माकं भगवत्प्रा-

र्थंनाऽवसरे यत्र नितान्तं शान्तवातावरणमेव भवितव्यम्, तदानीमेव "नमाज" पठनकाले त्वया महाशङ्खरवेण भूयान् विघ्नः समुत्पादितः तेन न केवलं ममैव भजनविच्छेदोऽभवत्, अपितु "अस्माकं अक्षुण्णनियमस्यापि व्याघातोऽभूत्, येन सकलयवनजातेः यवनशासनस्याप्यवमानं, समुत्पन्न-प्रभावपतनं, प्रतिष्ठाव्याघातः समपादि। अस्मद्धर्मोपरि कुठाराघातश्च त्वया विहितः। अतोऽस्माकं शासन-गौरवरक्षानियमानुसारमेवंविधकृताऽपराधाय प्राणदण्ड एव सम्मतः। ततोऽपि न भवित्री तथाविधेनापि दण्डेन त्वदाऽऽकलितशङ्खवादनजनितनमाजकालिक "खुदा" ऽऽराधनकर्मधर्माचरणोद्भाविताऽशान्ति - समुद्भूतपूतामर्षावेगावधूननविक्षोभशान्तिः, तदीयप्रतिशोधस्तु तदैव सम्पत्स्यते यदा त्वदीयं सकलं कुटुम्बमेव तिलशः कृन्तयित्वा तच्छरीरस्थमांसपिण्डानि बलिभुक्-चिल्लेभ्यः प्रक्षिप्येरन्।

किन्त्वहम् तवेमां मरणासन्नामवस्थां जराग्रस्तामालक्ष्य निर्णयं वितरामि यत् त्वमपि सद्य एवाऽस्मद् यावनं धर्ममङ्गीकृत्य कृतस्य कर्मणः प्रायश्चित्तं व्यधाः। नान्यथा सकुटुम्बस्य ते क्षेमं पश्यामि। अस्मद् धर्म - प्रवेशानन्तरं ते सर्वेऽपराधाः भविष्यन्ति यवनजातेः क्षमाभाजनानि।

कथय, किमपेक्ष्यतेऽस्मद् धर्मप्रवेशः, तज्जन्यमपूर्वं सौख्यमुत मरणम्?'

ब्राह्मणः—यवनराजशासक! विष्टाभक्षणेन जीवनरक्षणात् मरणमेव श्रेयः।

द्विजवरः सः प्रतिसवनयाजी राजीवाक्षचिन्तनपरः स्वाजीवनाय 'काजी"—हतककथनं कथमङ्गीकुर्यात्। सहि भगवत्सेवावसाने मरणमेव मुक्तिहेतुममन्यत।

इति ब्राह्मणस्य तथाविधं निश्चयमाकर्ण्य निर्णायकोऽतिक्रोधान्धः सन् स "काजी" प्रपाजीवनगर्तमिवाशुचिमतिः सद्यस्तत्प्राणदण्डाज्ञां प्रससार।

"मस्जिद" स्थाः सर्वे यवनापसदाः "अल्लाहोअकबर" इति घोषयन्तो मुमुदिरे। ब्राह्मणोऽपि तादृशं प्राणदण्डं श्रुत्वा, स्वकीयं रुग्णं बालकं गेहेन सहैव भस्मसाद्भूतं विज्ञाय, स्ववंशोच्छेदमाशङ्क्य, भृशं रुरोद, न स्वात्मप्राण-दण्डभियेति।

तदानीमेव कश्चिद् यवनसैनिकः सत्वर समागत्य यथानियमं प्रणतिं विधाय 'काजी" महोदय समाजीयकार्यदक्षतापादनाय न्यवेदयत्—भगवन्! अयमपरः सेवको हिन्दूपदभाक् ब्राह्मणस्यास्य गेहप्रज्वालनसमये गेहाऽभ्यन्तरे रुग्णं सुप्तमेकं नव-दश-वर्षीय बालकं गेहेन सह प्रज्ज्वलन्तं क्रोशन्तं विलोक्य समुपस्थातुमशक्तं केवलं कातराभ्यामेव नयनाभ्यां स्वकीयप्राणरक्षार्थं प्राणभिक्षामिव याचमानं हस्ताभ्यां साञ्जलिबद्धं चेष्टमानं सकरुणं भूयो भूयो क्रन्दन्तं, विलोक्य अस्मदनुमतिमप्युपेक्षमाणः

सत्वरं भयङ्करप्रचण्डज्वालामालाकुलिते समन्ततः प्रदीपिते गेहे महामहाग्नौ दोधूयमानेऽपि प्रविश्य सपदि तं बालकं कन्थाकलापावृतं विधाय प्रज्ज्वलिताद् गृहान्निष्काश्य सत्वरं धावन् न जाने कुत्र तं रक्षितवान्, वारं-वारमस्माभिः पृच्छ्यमानोऽपि न ब्रूते न वा प्रकटयति स्वविहितं तद्गोपनमयं कर्मेति । भवानेव प्रमाणमत्रे ।

इति श्रुत्वैव प्रचण्डाग्निप्रज्वलितचुल्लीचक्रस्थिताद् स्वल्पतमाद् पात्राद् भूर्य्यग्निसन्तापेनोत्तप्यमानपयःपूरोद्गार इवापारः क्रोधः सहसा काजीवदनाद् दुर्वाक्यालिः प्रासरत्:—क्वाऽऽस्ते स दुरात्मा सत्ताद्रोही सैनिकाधमः । तं सत्वरमस्मत्सम्मुखमुपस्थापयेति ।

इत्थं काजीमुखादनर्गलवचनबाणप्रसारणं राजमदगर्वितप्रभावोन्मादबहुलसत्ताऽन्धत्वं समीक्ष्य तत्रैव विद्यमानः क्षत्रियसैनिकसिंहोदुर्वचनबाणाहत इव सहसा जगर्ज-अरे ए, यवनसत्तासाम्राज्यमदोन्मत्त, यवनकुलकलङ्क, न्यायसिंहासनाऽऽसीनहीनकौणपाजी काजी नामापसद । धिक् धिक् त्वां मुस्लिमधर्मप्रतिकूलाचरणं स्वार्थसाधनैकशरणं स्वोदरभरणायैव विहितापहरणम् न्यायापदेशेन स्वधर्मकलङ्कीकरणम् मानवरूपधारिणं राक्षसकर्मकारिणम् । कोनाम हीन त्वां न्यायासीनं चकार । अरे ! दुष्टदानवायित ! त्वादृशा एव पामरा जना स्वार्थलोलुपाः परस्परं विरोधं भेदभावनां विस्तार्य्य द्वेषं शात्रवं प्रवर्तयन्ति ।

अन्यथा भगवतः सृष्टौ सर्वे जीवाः सर्वे प्राणिनो भगवत एव लब्धजन्मानो हिन्दूपदवाच्याः, यवननामानो वा सर्वे भ्रातर एव सन्ति धर्मोऽपि तेषां समान एव शास्त्राण्यपि समानान्येव भवन्ति, सर्वेषां सिद्धन्तस्त्वेको यतो हि भगवानेव समेषामाराध्यः स च नानारूपनामधारी स वै नः ईश्वरो भगवान् यो हि मुस्लिमबन्धूनां "अल्लाह" 'अकबरः' नाम्ना प्रसिद्धः ।

[ किञ्च "अल्ला" अक्का, अम्बा, इति भगवतः शक्तिः, तां "अल्लोति" व्याप्नोति, इति "अल्लाहः" जगत्कारणं भगवान् । तथैव "अकबरः" 'अ' वासुदेवः 'कं' ब्रह्म, अक्षर ब्रह्म तस्य "वं" सुखं, 'रः' 'गति' 'ददाति' ( 'अल्'-धातुः 'भूषणपर्याप्ति-वारणेषु,' तथा 'अह'-व्याप्तौ' इति धातुद्वयी । ( भ्वादिगणे ) अलति इति ( स्वादिगणे ) "अह्नोति" इति ।

इति अकबरः । तथाहि—"अकारो वासुदेवाख्यः स एव ब्रह्म' कं' मतम् ।
तस्य 'वं' परमानन्दं राति, दत्ते, 'ह्यकब्बरः ॥'

स एव हि परमानन्ददाता भगवान् 'अकबर' शब्दबोध्यो भवितुमर्हति ] 'अल्लाहः' सर्वशक्तिमान् भगवान् एव । यथा पुराणेषु प्रतिपादितस्तथैव 'कुरानेऽपि' वर्ण्यते तर्हि

:को भेदः ! न हि वास्तविकाः 'मुस्लिम' वाच्याः जातिस्वभावतः क्रूराः, न निर्दयाः राक्षसा वा भवन्ति, किन्तु भवादृशा एव तान् मिथ्याप्रतारणैः वञ्चयित्वा, तैः क्रूरं कृत्यं कारयन्ति, परस्परं द्वेषाऽग्नि प्रज्वालयन्ति, निरपराधान् जिघांसयन्ति। अतः किञ्चिन्मात्रं धर्मं विविच्य स्वात्मानमपि तथाविधं मत्वा, पुनस्तदर्थं तदनुरूपं दण्डं कल्पयन्तु। अन्यथा सर्वथा पापकृत्यमेव स्वार्थसाधकं जनतोपरि प्रभावपातनमेवते।

अतोऽहं वदामि, यद् न्यायव्याजेन यः खलु प्रकाश्यते, न स धर्मः, स त प्रपञ्चः। 'धर्म' शब्दवाच्यस्तु स एवास्ति, यस्मिन् 'दया', क्षमा शान्तिः, सत्यं, अहिंसा, सुजनता, विश्वप्रेम, बन्धुत्वभावना भवेयुः। अतो हिन्दूधर्मे किं वा मुस्लिम-धर्मे सर्वत्र एक एव सिद्धान्तः, केवलमाचारविचारेष्वेव भेदः प्रतीयते न तु क्वचन धर्मस्वरूपे। यत्र च धर्मनाम्ना सर्वत्र देशे प्रवर्तते ह्युल्कापातो जनसंहारः धर्म-सम्पद्वि-लुण्ठनम्, किं वा जागर्ति च मानवेषु मिथो रक्तपिपासा, तत्र कारणम् केवलं भवादृशानां द्वेषमूलकः स्वार्थैकमात्रसाधको दुर्बोधमयो व्यवहारव्यापारः तस्यैवाऽयं दुष्परिणामः, प्रत्यक्षमेवाऽक्षिलक्ष्यीक्रियते। अन्यथा नाऽस्ति भगवति रामे, भवद-भिमते 'रहीमे' वा कश्चनान्तरायः, केवलमस्ति नामभेदः। सिद्धान्तस्तूभयत्रैव पवित्र-तमः प्रतिभाति। अतो नास्ति कुत्रापि धर्मग्रन्थेषु यद् कमपि सङ्कटापन्नं न रक्षेदिति, न वा निरपराधानपि दण्डयेत्। किं वा केषाञ्चन धनदारादिकं समपहरेत्, गृहादीन् वा प्रज्वालयेत्। तर्हि कथं भवता सर्वमिदं दुर्वृत्तमिदमाचर्य्यते ? कुत्र लिखित-मस्ति यद् दुग्धमुखं सर्वथा निर्दोषं बालकमपि जीवितमेवाग्निमध्यपतितमपि न रक्षेत्। मया तु दीनस्यैव अग्निकाण्डे निपतितस्य सङ्कटापन्नस्य सर्वथा अबोधबालक-स्यैव रक्षा कृता। नैव सा कुत्राऽप्यपराधे गण्यते, तर्हि कथमहम् सापराधो भण्यते, समुद्घोष्यते च। यद्ययमपि आर्तत्राण-मयोकर्म अपराधशब्देन व्यवह्रियेत तर्हि प्रत्यहमेव, एवंविधानि शुभकर्माण्यपि भगवान् दीनजनत्राणानि कारयेन्मामिति मे प्रार्थना।

सैनिकेन निःशङ्कमित्थं दत्तमुत्तरमाकर्ण्य 'भृशं वक्रिमभ्रूलतो विजितकौणपाजी काजी लज्जितोऽपि स्वप्रतिष्ठागौरवसंरक्षणाय-निर्ह्रीकत्वं विदधन् जरठे वराटिकायि-ते स्वचक्षुषी विस्फार्य प्रावोचत्—

'काजीः'—अरे ! कृतघ्न स्वामिद्रोहकर सैनिकाधम ! अस्मदीयमन्नमुपभुञ्जानोऽ-प्यस्मानपवदसि द्रुह्यसि चाऽस्मभ्यमेव लभसे च भृतिमस्मदेव, पुनरस्मान-नुशास्सि च। अवगच्छसि न वाऽरे मूढ़ ! किं भविष्यत्यस्य परिणामः ? स्वामिद्रोहस्य वा किं फलम् ?

सैनिकः—सर्वमहं वेद्मि, कुपथगामिनां दुःशासनानां नियमं को न जानाति, स्वार्थैक-लक्ष्यानामुचितानुचितभक्ष्याणाम्। नास्ति मृत्योरधिकं किमपि भयङ्करं दुष्कर्म ? नाहं बिभेमि।

काजी—एतावद्दुर्धर्षत्वम्, कथय रे! क्व तावद्रक्षितः स वृद्धस्यास्य वालकः ? सम्प्रति समुपस्थापय तं दण्डचस्य तनयम्।

सैनिकः—वृद्धस्यास्य स वालको विद्यते मत्सविधे, सुरक्षितो यमेभ्यः। तत्सैनिक-मुखादमृतमयान् "अस्ति सुरक्षितो यमेभ्योऽपि भवादृशेभ्यः स मत्सविधे वृद्धब्राह्मणवालकः" इति शव्दानाकर्ण्य सुधावृष्टिसमवचनविन्यासेन वृद्धोऽपि लब्धसंज्ञः साश्रुपूर्णनयनाभ्यां तमुद्वीक्ष्य सैनिकं शुभाशीः परम्परां प्रससार—

ब्राह्मणः—यन्निवोवाच, चिरायुष्मन्! भ्रातः सैनिकः सत्यमेवैतद् यदुक्तं भवता "अस्ति सुरक्षितो मत्सविधे स वाल इति ?"

सैनिकः—"आम्" पूज्यपादाः! सर्वात्मना सुरक्षितः स्वस्थः सः।

ब्राह्मणः—सम्प्रति सुखेन मरिष्ये दुःशासनपाशपतितः। भगवान् वितनोतु ते कल्याणम् दीर्घायुष्यञ्च वालकाय।

"काजी":—तर्हि किं नाऽर्पयसि वालकं, कथमुपक्षसेऽस्मद्वचनम् ? धाष्ट्र्य-माचरन् राजकीयाज्ञामुल्लङ्घयसि, भुंक्ष्व फलम्।

सैनिकः—नैषा माननीया त्वदाऽऽज्ञा, यस्यां द्रोहः, पक्षपातः हठधर्मित्वञ्च जरीजृम्भते, मरीमर्द्यते च प्रजायाः साधिकारो मानः, सरीसर्प्यते स्वार्थ-लोलुपता, परीपर्य्यते प्रतापपापपोषणपद्धतिः। जरीहर्य्यते च हिन्दूनां हितसंहतिः। नाऽहमाचरिष्यामि ते हितम्। किञ्च, सर्वात्मनाऽहं सम्प्रति राजसत्तायाः शुभाकांक्षी सेवकः, तथापि नाहं केवलमात्मोदरभरणमेव पर्य्याप्तं मन्ये। इतोऽप्यधिक मे किमस्त्यधिकं कर्तव्यम् यदहं स्वात्मीय-जनतायाः कृते न कुर्यां क्वचन कदाचिद्विश्वासघातम्। न नाशयिष्यामि वा प्रजायाः स्वाऽभिमानम् हिन्दूजातेश्च परम्परागतं स्वात्मगौरवम्। नाऽहं कतिपयराजतशकल भृतिरूपमवाप्य-हिन्दूप्रजायाः शोणितपङ्कविनिर्मितेष्टका-खण्डसंघटन - कलितभित्तिकाऽऽधारोल्लसित - राजसत्ताभवनस्थिरीकरण-साहाय्याचरणमपि मे प्रभविष्यति, मामकीन-सामान्यमानवताकलङ्कपङ्काऽ-ङ्कितत्वम्, स्वसमाजद्वारोद्रेकविलसनम्, दुर्दान्तदानवायितारब्धदुष्कृतोद्दी-

पनञ्चेति। नाऽहं पारयामि तथा विधातुम्। एतादृशं क्रूरतमं कर्म तु स एव कर्तुं शक्नोति योहि न बिभेति परमात्मनो धर्मविलोपाद्वा, यश्च प्रतारयति मनुजान् मानवरूपोदानवः, प्रकटितो हि पिशाचावतारः संसारे।

किञ्च विलोक्यतां विवेकबुद्ध्या, यत् सर्वत्रैव शासनसत्तायाः सुस्थिरत्वं दाढर्यं वा प्रजायाः प्रसादितायाः आशीर्भिरभिनन्दित-शुभकामनास्वेव। या हि सत्ता प्रजामानं सौख्यसाधनमाहरणं प्रजागौरवञ्च धूलिसात्कर्तुमुद्युक्ता भवति यदा, तदा प्रभृत्येव तस्याः पतनमाशुभावि। सद्य एव दीनजनताऽन्तःकरणदाह-ज्वालावली कवलिता-दुःखोद्दीपिनी राजसत्ता स्वयमेव भस्मासाद्भवति पराधीनदीनजनशाप-तापदग्धा।

इति श्रुत्वा नितान्तदुर्दान्तोऽशान्तः 'काजी' आमर्षाऽऽवेगविनाशितपूर्वापर-विज्ञानः शोणिताक्षिकोणः सङ्कुचित-वक्रिमभ्रूकुटिघोणः प्रसारित-लशुनपलाण्डु-पूतिगन्धो, निर्मुक्त सीमित-वचनबन्धोऽनर्गलं प्राजल्पत् स्वीय-शासनाऽधिकारि-पदासीनोन्मादमन्थरमेघ :—

काजी—अरे रे कृतघ्न सैनिकाऽधम? अलमलमतिमात्रप्रजल्पनेन। सम्प्रति संवृत्तस्त्वंसत्ताविद्रोहीति त्वया ब्राह्मणादप्यधिकमेवाऽपराध्यते प्रत्यक्षमेव राजद्रोहः समुद्घोष्यते। अतोऽनेन ब्राह्मणेन सहैव तवापि भवतु शूलाऽऽरोहणम्। निबध्नन्तु सैनिका एनमपि दण्डम्। गवेषयन्तु चाऽस्य ब्राह्मणबालकं यो ह्यनेन यत्र सुरक्षीकृतः। प्राप्ते च तस्मिन्, तमपि यावनं धर्मं स्वीकारयन्तु-नो चेत् खड्गेन खण्डशो विधाय चिल्लेभ्यो वायसेभ्यः प्रक्षेपणीयो भवद्भिरित्ययं मे निर्णय आदेशो वा न्यायालयस्येति।

इति निर्णयं दत्वा न्यायालयो विसर्जितः। अन्यत्र :—

श्रीरामानन्दस्वामिमहानुभावः—तमेव ब्राह्मणबालकम्-वारं वारं प्रबोधयति स्म—"वत्स! धैर्यं धर मा रोदीः सम्प्रति त्वम् भगवतश्चरणशरणे समागतः नाऽधुना ते यमस्याऽपि भयं किं पुनः सामान्यशासकजनस्य। सम्प्रति निर्भयो भव, परिहर पितृसम्बन्धिनीं दुरन्तां चिन्तां, तस्याऽपि संरक्षणं भगवानेव विधास्यति, नान्यः कश्चनमानवः। ये हि भगवत्सेवाकृते, सेवानिरता वा जनाः क्वचन सङ्कटग्रस्ताः भवन्ति चेत् तेषां संरक्षणं स्वयमेव प्रभुर्विदधाति। अतः परिहाय चिन्तासन्तानं स्वस्थो निर्भयश्च भवेति।

तस्मिन्नेव क्षणे कश्चन शिष्यः समागत्य श्रीरामानन्दस्वामिनमसूसुचयत्-भगवन् यो हि सैनिको बालकमेतमादाय मठेऽस्मिन् ह्यभयं दापितवान् सोऽपि

बालकस्याऽस्य पित्रा सहैव शूलारोपणार्थमादिष्टो यवनशासकेन काजीनामकेनेति, द्वावेतौ प्राणदण्डितौ हिंसकाऽधीनीकृतौ च। अद्यैव तौ खड्गधाराऽर्पितशिरस्कौ भविष्यतः। इति श्रुत्वा ब्राह्मणबालकस्तु भृशं मुक्तकण्ठो प्ररुरोद - वारं वारं चुक्रोश। निरन्तरं प्रबोधनेनाऽपि बालकस्य करुणक्रन्दनं नावरुद्धमभूत् प्रत्युत प्रवर्द्धमानमेवाभवत्। अहो भगवतो मोहः।

सपदि ब्राह्मणसैनिकयोः प्राणदण्डवृत्तान्तः समन्तात् कोणकोणं समस्ते एव नगरे प्रासरत्। शासकानामत्याचारान् सकलैव प्रजा निन्दति स्म, किन्तु दुष्टदुर्जनदुःशासनभयात् प्रकटं कोऽपि किमपि नाऽजल्पत्।

इत्थम् दण्डप्रदानकालः करालः समायातः। उभावेव सैनिकब्राह्मणौ वध्यस्थले समानीतौ, घातुकाः स्वस्वखड्गं कोषाद् बहिर्निःसारितवन्तः स्थिता आसन्। तदानीमेकवारं पुनस्तौ मुस्लिमधर्मस्वीकारार्थं पृष्टौ, किन्तु धिक्कृति-पुरःसरं न्यक्कृते तत्कथने खड्गपातनकाले यथा हि घण्टानादो हिंसासूचकः प्रारभ्येत ततः पूर्वमेव तस्मिन् स्थले—"मस्जिदे" यवनशासकन्यायस्थले यवनानां—"नमाज पठनस्थले सर्वत्रैव यवनानां शवगर्तनिखातभूमौ-मृतोपरि-निर्मायितस्थानेषु च परितोऽनन्तशङ्ख - महारावःसहसाभयङ्करः प्रादुरभूत्। तच्छ्रुत्वा च सः काजी स च न्यायकर्ता ते च यवनसैनिका अन्ये च यवनशासकाः सपदि तत्रसुः। हिंसकानां हस्तेभ्यः खड्गाः सहसा न्यपतन्। सर्वे च बधिरी-कृतकर्णकुहराः परस्परं समालापमपि श्रोतुं न प्राभवन्। यत्र कुत्रापि ते ह्यगच्छन् तत्रैव महाशङ्खविरावो महा-महा-शङ्खघोषस्तेषां श्रोत्ररन्ध्राणि विदारयानास। किं बहुना तेषां हृदयेष्वपि निरन्तरं स एव शंखमहाघोषः समदीधमत्। इत्थं विचित्रामिमां घटनां विलोक्य कान्दिशीकाः समन्तात् धावमानाः न क्वचन शान्तिमवापुः। यत्र क्वचन वा शरणे ह्यलिन्दे मस्जिदेऽपि गतास्तत्रैव मस्जिदभित्तिभ्यः प्राङ्गणात्, प्रासादात्, द्वारदेशात् कोष्ठात् गवाक्षात् भूतलात्, अभितः परित ऊर्द्ध्वभागात्, अधोभागात् पार्श्वतः पृष्ठतः साम्मुख्यतः, किं बहुना प्रत्येकप्रस्तरात् इष्टकाभ्यः शिलातलात्, सर्वत्रैव शंखनादोऽन्वभावि तैः। इत्थं भयार्दितास्ते सर्वे यवनशासकाः सैनिका न्यायकर्तारः काजीप्रभृतयः परितो बम्भ्रम्यमाणा अपि कुत्रापि शरणमनवाप्य, स्वीयान् सैनिकान् सद्यः समादिदेश काज़ी,—अपि मामकीनाः सैनिकाः सावधानतया शृण्वन्तु-यवनानां प्राणरक्षार्थं सद्य एव, एतौ हि ब्राह्मण-सैनिकौ निगडबन्धनान्मुक्तौ कुर्वन्तु। एतौ हि महामहैन्द्रजालिकौ प्रतीयेते, शंखघोषरूपाऽप्येषा काचनविद्या,

समुत्पादिता, कृत्यारूपैवैताभ्याम् । इत्थं तेषां शासकानां काजीनिर्णयकस्य च वचनं श्रुत्वा सद्यस्तौ मोचयित्वा विसर्जयामासुः ।

इत्थं यथास्थानं गतयोरपि तयोः स शङ्खमहाघोषः शान्ति नैवागच्छत् । यवनतान्त्रिकाः भूयांसो मुल्ला अपि यथाज्ञानं स्वं स्व मन्त्रं, तन्त्रं,यन्त्रं, अन्यांश्च नानाविधान् निष्फलान् प्रयोगान् कलयन्तोऽपि प्रशामयितु तं घोषं न प्राभवन् । प्रत्युत यत्र यत्रैव ते गच्छन्ति स्म तत्र तत्रैव गेहे कुटीरे नगरे कानने देवालये, भोजनालये पाकालये, शौचालये, स्नानागारे, शयनागारे, गृहद्वारे कूमारे सर्वत्रैव कोटिशःशंखाः दाध्मायमानाः कर्णकुहरान् भिन्दन्ति स्म । इत्थं प्रत्यक्षमेव शङ्खाः स्वयमेव ध्मायमानाः सप्तदिनानि यावद् दृष्टिगोचरा भवन्ति स्म, तदा सर्वे यवना खिन्ना भीता शरणप्रेप्सवः सञ्जाता परन्तु न पश्यन्ति स्म ते कञ्चन रक्षकं, तदा किङ्कर्तव्यविमूढाः किं कुर्मः क्व यामः इति परस्परं पृच्छन्तो विलपन्तः, तोवा तोवा, खुदा खुदा वदन्तो रुदन्तश्च कैश्चन सज्जनयवनैः प्रतिबोधिताः मैव रुदन्तु मन्दाः स्वकृतस्य दुष्कर्मणः प्रायश्चित्तं चरन्तु तावेव ब्राह्मणसैनिकौ, चरणपातपुरःसरं प्रार्थयन्ताम्, क्षमायाचनाञ्च विदधतु-ततश्च तावेव पुरस्कृत्य-पञ्चगङ्गातटे श्रीराघवानन्दाचार्याणामाश्रमे, वर्तमानं तेषां शिष्यं नवीनसंन्यासिनं विशिष्टचमत्कारिणञ्च समुपसृत्य स्वात्मरक्षार्थं विनयेन भूरिभक्त्या दैन्येन निवेदयन्तु । तदा वः सर्वं कष्टमिदं शान्तिमेष्यति नान्यथेति ।

इति तेऽपि सर्वे सत्परामर्शानुसारं संहत्य सविनयं पञ्चगङ्गातटे तस्मिन्नेवाश्रमे श्रीरामानन्दस्वामिचरणे न्यपतन् प्रार्थयामासुश्च स्वापराधार्थं पुनः पुनः क्षमां याचन्ते स्म । काजी च सः स्वश्मश्रुकूर्चाभ्याञ्च भूमिं मार्जयन् विनयेन स्वापराधक्षमां प्रार्थयामास । तेषां प्रार्थनामङ्गीकृत्य श्री रामानन्दस्तानुवाच :—भोः भोः यवनशासकाः काजीमहाभाग !

भवद्भिः सततं दुराचाररतैः यथाऽभ्यासं निर्दोषस्याऽस्य ब्राह्मणस्यापराधः कृतः । सर्वस्वञ्चास्य नाशितं गेहं भस्मीकृतम् । अतएव भगवद्भक्तस्यापराधेनैव भवन्तो विपद्ग्रस्ताः समभूवन् । अतोऽयं दण्डो भगवतैव दत्तः स च आवश्यक आसीत् । यदि अस्माद् भयाद्भवन्तो निवर्तनम् स्वात्मनोरक्षणं कामयन्ते, तर्हि ब्राह्मणस्य क्षतिपूर्ति कुर्वन्तु क्षमां याचन्ताम्, सैनिकमपि प्रार्थयन्ताम् क्षमायाचनापुरःसरम् । भविष्यत्काले च कदापि कस्यापि धर्मे व्याघातं मा कलयन्तु । सकलामेव प्रजां पुत्रवत् सम्मानपूर्वकं स्नेहेन प्रेम्णा संरक्षन्तु । भगवद्भक्तांश्च-मा त्रासयेयुः न तेषामाराधनाकाले विघ्नितान् तान् कलयन्तु । न वा तेषां धर्माचरणे बाधा-

मुपस्थापयन्तु। येषाञ्च गृहाणि स्थानानि भवद्भिर्बलादपहृतानि तानि सर्वेभ्यः, यद् यस्याऽऽसीत् तत् तस्मै प्रत्यावर्तयन्तु। इमां च वसतिं तेभ्यः आच्छिद्य स्वायत्तीकृतवन्तस्तां तथैव पुनः स्वाधिकारविमुक्तां कृत्वाऽन्यत्र व्रजन्तु। यदि स्वात्मनः कुशलं काम्यते तर्हि सत्वरमेव मयोक्तं शुद्धेन चेतसा स्वीकुर्वन्तु, सर्वैः सह स्वस्वात्मीयजनवद्, व्यवहरन् न क्वचन कस्मैचन द्रुह्यन्तु न द्वेषं न वा मात्सर्यं रचयन्तु। न वा धनदारादिहरणं क्वचन कदाचन विदधतु, स्वयं सर्वात्मना सत्येन स्वधर्मं साक्ष्यीकृत्य शपथपूर्वकं प्रतिज्ञां कुर्वन्तु, तदा सङ्कटान् मुक्तिर्मिलिष्यति नान्यथेति ध्रुवमेवैतत्।

यो हि खलु शासको भवति स न कदाचन भवदिव शासनव्याजेन प्रजानां धर्मन् धनम्, दारान्, भवनम् स्वातन्त्र्यम् व्यवहारादिकं व्यापारादिकम् लुण्ठति। एतादृशं लुण्ठनन्तु लुण्ठाकानां भवति न शासकानाम्। राजा शासको वा सर्वं स्वपरभेदं दूरीकृत्य स्वपुत्रसमामेव मनुते समस्तां प्रजान्। न कस्यचन धर्मे हस्तक्षेपं कुरुते। ( महाभारते लिखितम् :—) 'धर्मं यो बाधते धर्मो न स धर्मः कुधर्मकः।' अतः वैरभावं परित्यज्य स्वस्वधर्मं परिपालयन्तु, दुःखाद्विमुक्ता भवन्तु। प्रत्यावर्त्तयन्तु सर्वां सम्पत्तिं तेभ्यस्तेभ्यो या यस्माद्धृता।

इत्थम् श्रीरामानन्दमुखादमृतसमां वाचं निशम्य शुद्धभावा समभूवन् सर्वं वैरभावं परित्यज्य, समपहृतां सकलां सामग्रीं यथापूर्वां तां तां तस्मै तस्मै दत्वा, सर्वे यवनशासकाः परस्परं प्रेमभावमाकलय्य यथोपदेशं सर्वं विधाय सुखिनोऽभवन्।

ब्राह्मणः सः सैनिकश्च यथापूर्वं मृत्युपाशाद्विमुक्तौ जातौ। श्रीस्वामिनां शिष्यौ बभूवतुः। ससुखं च तत्रैवोषतुः।

---

# पञ्चदशः परिच्छेदः

सर्वत्र प्रवर्द्धमानचमत्कृतिमहित - श्रीरामानन्द - तपःपुञ्जप्रसारितानन्तवैभव विलासापूर्वगुणगणविकासोल्लासित - प्रथितमाहात्म्यचमत्कृतचेतसां श्रीराघवानन्दाचार्य्याणां मनसि समजनि लोकोत्तराह्लादः। दर्शं दर्शञ्चाद्भुतगुणगणपल्लवां वितत-वैभवप्रतानां सम्मानमानप्रसूनसमृद्धिसन्तानां वैदुष्यविकासिसाद्गुण्यसौरभसमुल्लासित-भुवनतलां श्रीरामानन्दस्वामि - समुत्पादितकीर्तिवल्लरीम्, नितान्तप्रमुदित - स्वान्तः श्रीराघवानन्दाचार्यः, सर्वतोविकासिगौरवोल्लासि काशीमण्डलाधिप्रतिष्ठितविद्वन्मण्डली-मामन्त्र्य स्वाश्रमवासिजनमनोऽभिलषितं सकलसम्मानितसमाहूत - सुधीजनपूत-सम्मतिसमन्वितं, स्वकीयाऽऽश्रमपीठाऽऽचार्य्यपदासीनोत्सवाऽनुरूपं श्रीरामानन्दस्वामिनः सर्वसम्मत्या स्वीयाऽऽचार्यपदाऽभिषेकं सर्वलोकाऽनुमतं सकलशास्त्रसम्मतविधिना समुदं सोल्लासम् सुसम्पन्नं व्यधत्त।

सम्पन्ने च सकलशास्त्रविधाने समभिषिक्ते च तस्मिन् पीठे श्रीरामानन्दे समुद्घोषिते च श्रीरामानन्दाचार्य 'नाम्नि, गुरुवरः श्रीपूज्यपाद श्रीराघवानन्दा-चार्यवर्य्यः तत्कालानुकूलं स्वाधिकारसम्भारव्यापार - परिवर्तन - प्रकाशन - प्रयुक्तं स्वकीयाऽऽशीःपरम्परासमलङ्कृतं समुचितोपदेशविशेषं प्रकाशयामास :—

वत्स रामानन्द ! वैदिकसनातनधर्ममर्य्यादापरम्परापरिलसितमिममाचार्यपीठं सर्वात्मनाऽद्यावधि सुषेवितं - दयादाक्षिण्यौदार्यबहुलगुणगणगरिष्ठं लोकसेवासमा-सादनवरिष्ठं वैदुष्यपरम्पराप्रतिष्ठं सुरक्षितं व्यधायि यथायोग्यं मयका। सम्प्रति वार्धक्यशिथिलसकलशारीरिकसन्धिबन्धो नाऽधुनाऽधिकं यथापूर्वं समाराधयितुं स्वात्मानं सर्वथा समर्थमनुभवामि। अत इतः प्रभृति पीठस्याऽस्य सञ्चालननिखिल-कार्यभारः सुव्यवस्थितरूपेण यथाप्रवर्तितः प्रसरितः सुरक्षितो भवेत् तदर्थमेव निक्षिपामि सर्वथा सुयोग्ये पीठस्थसर्वविधकार्यभार-संवाहनदक्षे भवति सकलजनीन-सुभगभावनालक्ष्ये। अतोऽधुनाक्षणमारभ्य सर्वविधं पीठस्थकार्योत्तरदायित्वं त्वयि समाश्रितमेवेति सर्वं तुभ्यं समर्प्य सम्प्रति बन्धनिर्मुक्तो भवामि, पीठाचार्य्यपदं

सम्प्रदायाचार्यपदं, आचार्य्यपरम्परा-प्रचारकपदञ्च त्वय्येव निदधे, घोषयामि च त्वां 'श्रीरामानन्दाचार्यः' इत्याचार्यपदमण्डितं ते नामकरणम्। भगवान् श्रीराघवेन्द्रः सर्वदाऽभिरक्षन् विधास्यति ते क्षेमम्। प्रतिक्षणं विलक्षणं ते प्रसारमयतामाचार्याऽनुरूपं वैदुष्यविलसनम्। सर्वदा ते सन्निधिं भजन् पूरयेन्मनोरथांस्ते यशसासमं श्रीसाकेतविहारी भगवान् जानकीजानिः श्रीरामः, इत्याशीर्भिरभिनन्दयामि त्वामिति ओम्।'

श्रीराघवानन्दाचार्यः—वत्स! रामानन्दाचार्य! यद्यपि त्वयि सर्वविधा योग्यता राजते तथापि प्रसङ्गोपात्तं विद्यते किमपि वक्तव्यम्। अधुना त्वं कर्तव्यमुदीक्ष्य समुपदेष्टव्यं, ते निदर्शयामि,—यद् भवान् स्वकीयधर्माचार्यपदस्योत्तरदायित्वं सर्वदा ह्यवदधत् स्वधर्मपरिपालने क्वचन प्रमादो न त्वां प्रमादयेत्, आलस्यं वा न व्याप्नुयात्, अभिमानञ्च नाऽभिभवेत्, आचार-विचार-परम्पराऽपि न विस्खलिता स्यात्, इति सर्वं सतर्कतया भवता सुव्यवस्थिततया रक्षणीयत्वेन भाव्यम्। मठस्य सञ्चालने, अस्य च गुणगौरवप्रतिष्ठायां सर्वात्मना स्वशक्तेः समुपयोगोऽपि पूर्णतया विधातव्यः। स्वयमात्मना च सर्वदा 'पद्मपत्रमिवाऽम्भसा' परित्यक्तसर्वेन्द्रियव्यापारेण भवता भाव्यम् सर्वसौख्यभोगाभिनिवेशभावनया च दूरत एवाऽस्पृष्टविग्रहेण मठ-मन्दिर-धर्मस्थानानाञ्च स्वीयोपयोगावद्यगर्ह्यकर्मपराङ्मुखप्रवृत्त्यैव सर्वदा स्थातव्यम्, तेषाञ्च पारमार्थिकरूपेण जनकल्याणकर्माणि सार्वजनीने वा व्यापारे भगवद्भक्ति-प्रचार-प्रसार-कार्ये च सन्ततं समुपयोगो यथा भवेत् तथा प्रयतितव्यमेव। नात्मनः सौख्याय समुपभोगाय वा विनियोगः स्यादित्यवधेयमेव।

सर्वदा विशुद्धपवित्राचरणस्याऽऽदर्शः समुपस्थापनीयः प्रसारणीयश्च लोके, सततं सदुपदेशैः सच्छिक्षया सर्वोद्धारभावनयैव मन्त्रराजप्रसारप्रचारः करणीय एव, अनारतञ्चानयैव भावनया :—

'कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि।
अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि॥' किञ्च—

'प्रतिष्ठा सूकरी विष्टा, गौरवं रौरवं मतम्।
अतिमानं सुरापानं, त्रयं त्यक्त्वा सुखी भवेत्॥'

इति समवधार्य सर्वदैव स्थातव्यं, पालनीयश्चाश्रमनियमः। अयमेव समु-

पदेशः इदमेव कर्तव्यम्, एषैवाऽऽज्ञा, सर्वं विविच्य विश्वासेन श्रद्धया दृढानुरागया भक्त्या च व्यवहरिष्यसीति शम् ।

स्वीयाचार्यमुखाऽम्भोजविनिःसृत - मधुपानमवाप्य तच्चरणाऽम्बुजचञ्चरीकायितचेताः श्रीरामानन्दाचार्यः प्रणति पुरःसरं न्यवेदीत् :—

श्रीरामानन्दाचार्यः—परमसम्मानार्हं श्रीभगवत्स्वरूपगुरुवरचरणाः ?

श्रीमतामेव सच्छिक्षाप्रतापेन मत्तोऽप्यधिकाऽधिकगुणगणगौरवशालिनो विद्वांसो विराजमानाः सन्त्याश्रमे ये हि सर्वथा मठस्याऽस्य कार्यभारं संवाहयितुं सर्वथा सुयोग्याः शक्तिमन्तः सन्तः। तथापि—ममोपरि योऽनुग्रहः कृतः, नाहं तादृक् समर्थः, किन्तु श्रीचरणानां वरदहस्तमेव विहितशिरोमण्डनं समाश्रित्य श्रीचरणाऽभिलाषाऽनुरूपं कार्यभारं वोढुं समर्थमेव प्रसावयिष्याम्यात्मानमित्याशाशतवलं हृदि कृत्वा प्रवर्तयिष्ये, प्रयतिष्ये च तथाविधं पारयितुम् । सम्प्रति तु—'आज्ञागुरूणामविचारणीया' इत्याधारीकृत्य श्रीगुरुचरणाऽनुग्रहवलसम्पन्नः स्वीकरोमीति ।

इत्यपि नाऽविदितचरमस्ति, यन्निखिलेऽस्मिन् भारतवर्षे धर्मव्याजेन नानाविधाः स्वमताऽनुरूपा धर्मप्रवृत्तयः समुज्जृम्भन्ते, कलयन्ति च परस्परं घोरतरं सङ्घर्षम् । किम्वहुना वैदिकं सनातनंधर्मं विच्छेत्तुं प्रवर्तन्ते विभिन्नाः बौद्ध-जैन-चार्वाकप्रभृतयो धर्मध्वंसनव्यसनिनः । वर्तमानामास्माकीनां परम्पराऽऽगतां सनातनधर्म संस्कृतिं समुच्छिद्य पातालतलं मण्डयितुं प्रहितुकामाः रामाऽऽरामविहारोल्लासविलासविलसितमतयः, प्रचारयन्त्यपरिमितां कुपथप्रवृत्तिम् । कामयन्ते च साम्प्रतिका जना अपि तथाविधानि सुलभसौख्यसाधनानि विहाराऽऽहारविलासलसितानि । अस्यां वर्तमानायां परिस्थितौ तथाविधं धर्माचार्यपदसंरक्षणं न सुकरम्, सहजं सौख्याकरं रसभरम्. अपितु कण्टकाकीर्णपथाऽनुसरणमिवालक्ष्यते ।

तथापि स्वीकरोमि-जानामि च यद् धर्माचार्यः स्वकीये क्षेत्रे तदैव साफल्यं लप्स्यते यदा तस्मिन् सुदृढं चारित्र्यं धर्माचरणम्, सुधैर्यं, साहसोविवेकस्तपोबलञ्च पूर्णतया साम्राज्यं स्थापयेयुः स्वेन्द्रियलौल्यञ्च दूरतस्तिष्ठेत् यश्च सर्वदा-चरित्रवान् 'निःस्पृहः सर्वकामेभ्यो निर्लिप्तो हि जितेन्द्रियः ।'

भगवद्भावनायुक्तो भक्तो विद्वान् सुधार्मिकः ॥' यश्च—

'गुणैरेतैर्विहीनश्चेत्स्वच्छन्दो लोलुपोऽलसः ।
रागी क्रोधी हठी स्त्रीजित्, नाचार्यो भवितुं क्षमः' ॥१॥

सः प्रत्युत स्वयं याति, नरकं पातयत्यपि ।
स्वानुगान्, धर्म निर्मूलं, करोति पदलोलुपः ।। २ ।।

इति सर्वं विज्ञाय श्रीमद्भिः प्रदत्तं समुपदेशम् सुदृढं स्वहृदि संस्थाप्य प्रत्तच्छेदं धर्माचार्यपदम् सावधानतयाऽव्यग्रेणैव चेतसा, अप्रमादेन सत्कर्मणा च परिपालयन् पूर्णतया स्वोत्तरदायित्वं धर्ममर्यादापुरःसरं कौशलत्वेन निर्वाहयेयमिति श्रीमतामाशीर्वादम् जगन्नियन्तुः श्रीकरुणावरुणालयस्य श्रीसाकेतविहारिणो भगवतः श्रीरामस्य कृपाबलम् च माम् कर्तव्यशिखरारूढं विदध्यादिति मेऽभ्यर्थना ।

श्रुत्वेत्थं श्रीरामानन्दाचार्यस्य विनम्रभाषणम्, हर्षप्रकर्षोल्लासेन जय जय ध्वनिं समुद्घोष्य श्रीराघवानन्दाचार्याः श्रीरामानन्दाचार्यमाशीर्भिरभिनन्द्य समागन्तुकान् ससम्मानं विसर्जयामासुः ।

---

# षड्विंशः परिच्छेदः

पद्माकरं दिनकरो विकचीकरोति चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति सन्तः स्वयं परहिते सक्तामियोगाः ॥

"न हि कस्तूरिकाऽऽमोदः शपथेन विभाव्यते, तिरोहितं विधातुं वा शक्यते न कथञ्चन ।
सज्जनानां तथा कीर्तिर्न प्रयासमपेक्षते स्वतः संवर्द्धमाना सा विश्वं व्याप्य प्रतिष्ठते ॥

इत्थम् श्रीरामानन्दार्ये धर्माचार्यपदे प्रतिष्ठिते सति श्रीराममन्त्रस्य प्रचारः प्रभावश्च विश्वव्यापी सम्बभूव । तेन च ( श्रीराममन्त्रप्रभावेण ) श्रीरामानन्दस्य कीर्तिरपि देशदेशान्तरे प्रास्तृता स्वं माहात्म्यं, प्रसरणशीलत्वञ्च प्रादुश्चकार ।

अद्यावधि जनसमाजे च या धारणा आसीत् यत्, श्रीराममन्त्रः स्वसमुपासकेभ्यः केवलं धन-सन्तानादिकमेव लौकिकं स्वल्पं फलमेव प्रयच्छति नाधिकम् । न वा स वेदविहितः, अवैदिकत्वाच्च न सर्वलोकोपकारीति प्रस्तृतां दुर्भावनां स्वप्रवचन-पाटवेन, प्रचण्डवाताऽऽहतघनघनावलीव, सिंहशावकनिपातेन - कलभकलाप इव-च्छिन्नभिन्नां चकार । प्रस्थापयामास च तस्य वैदिकत्वम्, विविध वेदमन्त्रैरुप-निषद्भिः संहितासूक्तैः स्मृतिपटलैश्चेति । यथाः—

आनन्दसहितायाम् 'एकैकं राममन्त्रस्तु सर्वपापप्रणाशनम् ।
सहस्रनामसमतां फलदं वेदविश्रुतम् ॥

किञ्च—"ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतराः ।
मन्त्राधिकारिणः सर्वे ह्यनन्यशरणा यदि ॥ (हारीतस्मृतिः)

श्रीराममन्त्रदीक्षायान्तु-आपामारं सर्वेषामेवाधिकारः समानः, न तत्र कश्चन भेदः । ( उक्तञ्च वैष्णवतन्त्रे ) "वैष्णवेष्वपि मन्त्रेषु राममन्त्रः फलाधिकः" । उदार-प्रचारश्चायम् नास्त्यवैदिकः न वा शास्त्रविरुद्धोऽपि नानेन च वर्णव्यवस्थालोपः ।

"श्रुतिर्ब्रह्म हि षड्वर्णं, स्मृतिर्वर्णद्वयात्मिकम् ।

अगस्त्य— षड्वर्णं ब्राह्मणादीनां त्रयाणां यद् द्विवर्णकम् ।
संहितायाम् तदन्येषां देशिकेन वक्तव्यं तारकं परम् ॥

भावार्थस्तु—षडक्षरो मन्त्रस्तु वेदोक्तः तथा द्व्यक्षरोमन्त्रः शास्त्रोक्तः । अतएव ब्राह्मण-क्षत्रिय-विशाम् कृते षडक्षरतारकमन्त्रस्य दीक्षाक्रमः । तथा स्त्रीशूद्रादीनां कृते द्व्यक्षरात्मकस्य दीक्षाप्रचारः कृतः । श्रीरामानन्दाचार्याः न केवलं मन्त्रादानविधाने एव वैदिकमर्यादायाः पालनं कृतवन्तः अपितु तेषां दैनन्दिन्यां लौकिकाऽलौकिकशारीरिकवाचनिककर्मकलापमय्यामपि प्रक्रियायां क्रियायामपि च न क्वचन वैदिकमर्यादोल्लंघनं व्यदधुः । अत एवाऽस्मिन् प्रचारे प्रसारे वैदिकाः ब्राह्मणाः विद्वांसश्च भागं जगृहुः ।

अथैकदा श्रीरामानन्दाचार्याः विद्यापीठे विद्यार्थिनो वेदाध्यापनं कारयन्ति स्म, तदानीमेकः कश्चन प्रकटितब्रह्मवर्चाः परितः प्रसृतप्रभापटलसमुल्लासिताभिमुखागतमनुजवदनाम्बुजनिचयः, कर्पूरपूरायितपाण्डुरच्छविः प्ररूढयौवनोल्लासविकासिताननसुधाधरप्रसृमरशीतलद्युतिः समागतः सुभगकुसुमसुकुमारो ब्राह्मणकुमारः । पदविन्याससहकृतामेव प्रणतिप्रसृतिं वितन्वन् सविनयं समुदं सोल्लासं साग्रहं साञ्जलिः सानुनयं प्रोवाच—

भगवन् ! संसारार्णवनिपतित - तरलतमतरङ्गततिविह्वलितकिंकर्तव्यमूढायितसमुद्धारककैवर्तकायितानुग्रहनिलय ! विविधभावनोद्भावितमनोरथशतपरिपूरणोद्भूतपरमपूतकल्पतरुसहस्रायितचरणनलिननिष्यन्दनिर्झर - सन्तर्पितभक्तजनकुल ! निगमाऽऽगमनिखिलविद्याविलासोल्लासविशालविहरणनिकेतन ! शारदशशधरकलाकलापायिताविशदयशोराशिप्रसाराऽऽसारधवलिताऽखिलभुवनमण्डल ! विविधसांसारिकसन्तापपाप - पटलपवमानसखविषमज्वलज्ज्वालामालाकुलितजनसन्तापहरहिमकर - निकरशीलसुभगसौम्यस्वरूपधर ! तरुणारुणामलकमलानुपममृदुलमञ्जुलचरणशरणीभूताशेषजनसंरक्षणसक्षण ! अशरणशरण ! विश्वविततविख्याताद्भुतमाहात्म्यमण्डलमण्डनायितमहीतल ! जगद्गुरो, अहमस्म्येकः संसारसागरोत्तुङ्गतरङ्गोद्वेजितः, कठिनतममायिकसुदृढबन्धननिगडितकरचरणः शरणागतो दीनहीनो द्विजवरकुमारः कामये सर्वात्मना संरक्षणम् । त्राहि माम्, त्राहि त्राहि, शरणागतमनन्यगतिकम् चरणपतितम् । जयतु जयत्वाचार्यवर्य्यः ।

इत्युक्त्वा श्रीरामानन्दाचार्य - चरणकमलमकरन्दमिलिन्दायमानो दण्डवन्निपतितः समाश्रिताङ्घ्रियुगलः स न तत्याजाभयं चरणम् । श्रीरामानन्दाचार्यः— ब्राह्मणकुमारस्यानन्यभावं, प्रगल्भप्रतिभापाटवं प्रसमीक्ष्य सपदि द्रवितान्तरालः

कारुण्यार्द्रस्वान्तो नितान्तं हृष्टः, सुलभसुकुमारं चमत्कृतिचर्चितवचनरचनाप्रकारं ब्राह्मणकुमारं शुभाशीर्भिरभिनन्द्य तदभीप्सितं विज्ञातुं समालापमानतान—

श्रीरामानन्दाचार्यः—"वत्स ! कस्त्वम् ? कुतः समागतः ? कस्मिन्नन्ववाये, लब्धजनि दीपकायते, कस्य नयनानन्दकरो गृहमण्डनम् च ?

ब्राह्मणकुमारः—स्वात्मानं परमसौभाग्यशालिनं मत्वा, तदीयकरुणाऽमृताप्लावितान्तरङ्गः सगद्गदकण्ठः सप्रश्रयमुवाच—

आचार्यचरण ! शरणागतवत्सल ! श्रीसरयूतरङ्गिणीतीरनिषेवितपरमपूतमहेशपुराभिधेयग्रामवास्तव्यश्रीविश्वनाथशर्मतनुजनुः अनन्तनामधेयो द्विजबालकोऽहं ते चरणाम्बुजचञ्चरीकः।

प्रभो ! अहमेवैका पितुराद्यासन्ततिः, ज्येष्ठश्रेष्ठत्वात् सर्वतोस्नेहभाजनमहमेवास्मि जननीजनकयोः। तातस्तु मां प्राणादप्यधिकं प्रियं मनुते, अहमेवैकः स्वकुलाधारकस्तयोर्नयनतारकः, अतएव सांसारिकपरम्पराऽनुसारं मां गार्हस्थ्यबन्धननिबद्धं विधाय बलाद् द्वितीयाश्रमपतितं कर्तुं कामयते। किन्त्वहं संसारचक्रनिपतने निपतनमेव मत्वा बिभेमि, ततो नितरां सुदूरमेव स्थित्वा ह्यखण्डब्रह्मचर्यमेव धृत्वा भगवद्भजन-कीर्तत-श्रवण-स्मरण-मनन-निदिध्यासनैकतानो भगवच्चरणारविन्दानन्दानुभूतिकामः स्वात्मनः कल्याणकरं जीवनसाफल्यञ्च भगवदाराधने, तद्भक्तजनसत्सङ्गतौ मन्ये। अतएव स्वर्णपञ्जरस्थितशकुन्त इव सुलभाऽवसरं प्रतीक्षमाणः यथावसरं भगवदनुग्रहेण मुक्तिं लब्ध्वा पुनर्बन्धनपातभीतः ततोऽपसृत्य श्रीचरणसन्निधिमुपगतोऽस्म्यभयं समीहमानो व्याकुलश्च पुनः संसारतापनिपातात्।

इति तदभिप्रायमाकर्ण्य श्रीरामानन्दाचार्यः शास्त्रोक्तवचनैर्युक्त्या लौकिकव्यवहारनीत्या च तं वारं वारं गृहस्थाश्रमनिर्वेशाय प्रेरयामास। परञ्च परमविरक्तभावनाऽनुरक्तहृदयो लौकिकगृहस्थाश्रमाऽऽसक्तिविरक्तिमेव परिचिन्तयन् विरक्तः सन् भगवद्भक्तिमेव निःश्रेयसहेतुं कामयते स्म, नाङ्गीचकार स गार्हस्थ्यबन्धनं, बन्धनम्।

तदा श्रीरामानन्दाचार्यः तदीयमविचलं दृढनिश्चयं विज्ञाय जगाद—

श्रीरामानन्दाचार्यः—"वत्स ! दृढनिश्चयेनानेन नितरां सन्तुष्टो हृष्टोऽस्मि।

किन्तु तदर्थं यावन्न न ते जननीजनकयोः सहानुभूतिः प्रीतेन चेतसा सम्मतिः प्राप्यते, न हि तावदहं त्वाम् विरक्तसमुपास्यां वैष्णवीदीक्षां दातुं प्रभवामि। अतस्तवपित्रोराज्ञा प्रसादाऽनुमतिः प्राप्तव्यैव।

इति श्रुत्वा किञ्चिन्मनःक्षोभं दर्शयन् पुनर्निर्भयं मौनाऽनुमतोऽभूत् ।

ततस्तत् पिताश्रीविश्वनाथशर्मा समागतः । स च सम्पन्नो-धन-जन-शास्त्रीय-ज्ञान-विज्ञाननिष्णातो, ज्ञान-वयोवृद्धः समृद्धः सर्वदा भगवदनुकम्पया परमया भक्त्या-च सांसारिकनित्याऽनित्यविवेकवहुलः "ईश्वरेच्छा वलीयसी" ति सुदृढं विश्वस्तोऽपि लोकानुरीतिमनुसृत्य पितुः स्वाभाविकस्नेहोद्रेकात् प्रथमं सर्वविधयाहिताऽहित-व्यावहारिक्या रीत्या नीत्या च स्वसुतं प्रबोध्य गृहस्थाश्रममेव सर्वसुलभसकलाश्रम-संरक्षकं सर्वाश्रमफलप्रदं, भगवदभिमतं, सर्वविधसमुपासनानुसाधनसमादृतं जनहितकरं भुक्तिमुक्तिप्रदमपि सुसिद्धं संसाध्य-दृढनिश्चयं सर्वदाविरक्तं स्वसुतं विज्ञाय स्वीया-ग्रहं परित्यज्य स्वसुताय स्वानुमतिं प्रदाय, स्वयमेव श्रीरामानन्दाचार्यवर्य्यं समुप-सृत्य स्वपुत्रहस्तं श्रीमदाचार्यहस्ते निधाय सविनयं सश्रद्धं न्यवेदयत् । श्रीपूज्यपाद-यतिराजचरणाः, अद्यावधि मामकीनोऽयं वालः, सम्प्रति श्रीमतां शरणमुपयातः श्रीमत्क एव संवृत्तः । शरणीभूतमेनं स्वचरणानुग्रहभाजनं विधाय कृतकृत्यं कलयन्त्विति, किमधिकं निवेदयेयम् । अस्यैकस्यैव कल्याणेन समेषां नः कल्याणं सम्पत्स्यते, इत्यहं दृढं विश्वसिमि, वैराग्यञ्चास्य सम्मानयामि ।

श्रीरामानन्दाचार्याः—"तथास्तु" एवमस्त्वित्युक्त्वा वालकस्य समुज्ज्वलं वैराग्य-मालक्ष्य-प्रहृष्टा आचार्याः प्रोचुः यदयं वालः स्वकीयं पितृकुलं गुरुकुलञ्च गौरवान्वितं विधास्यति । इत्युक्त्वा पुनः शुभे मुहूर्ते यथानियमं पञ्चसंस्कार-पुरः सर वालकमनन्तनामानं, वैदिकविधिना श्रीवैष्णवदीक्षायां विधाय संस्कारैः संस्कृत्य-नामकरणे-"अनन्तानन्दः" इतिनाम्नाऽलञ्चक्रुः ।

ततश्चायं वालः श्रीमदाचार्य-चरणसेवानिरतः श्रीगुरुचरणसन्निधाने स्थित्वा वेदादीनां वेदान्तानां सम्यगध्ययनं विधाय प्रकाण्डपण्डितः सन् भगवद्भक्ति-प्रचार-प्रसारं कुर्वन् लोककल्याणं विदधत् सर्वात्मना प्रतिष्ठां गौरवं ख्यातिञ्च लब्धवान् ।

—:※:—

# सप्तविंशः परिच्छेदः

सकलभुवनशेखरीभूते, भूतेशविहिताऽधिष्ठानसम्मानसमुल्लासिते, जन-धनसमुद्भासितवैभवपटले, विविधधनधान्यसमुद्भूति - समृद्धिवृद्धे, प्रवृद्धेश्वरभक्तिभावप्रभावाधिगताऽवनिमण्डलसौभाग्यमण्डने. अशेषदेशदेशागत-दीनजनदैन्य-दुरूहदुरितदानवदलनदक्षकक्षे, सन्ततसमागततापसजनमनः - समुल्लासैक - कान्ताकान्तरमनोहरे, ह्यनवरतकुसुमसमृद्धिसम्पत्सुभगपादपपटलाऽऽलिङ्गित - सुललितलताप्रतानपरिरञ्जित-निकुञ्जबहुले, निजाऽपूर्वपुण्यपरिपाकसमाकृष्ट - विशिष्टसंसृष्टसुरपुरानुपमसुषमालवमालवमहीसुभगशृङ्गारायितं "गांगरौन" समाख्या प्रसिद्धं, सिद्धवैभवसम्पन्नं, "राजगढेति" प्रथितं राज्यमासीत् ।

तदानीं तत्र स्वगुणगौरव - समुद्भासितराठौढवंशः, सुप्रसिद्ध क्षत्रियवंशावतंसः, सुलभप्रतापपरितापिताऽमित्रमण्डलः, सुभगसाद्गुण्यधन्यसुयशःपुञ्जसमुद्भासितवैभवानुरूपौदार्य्यदारिताखिलयाचकनिचयदैन्यपटलः "श्री पीपाजी" ति पावनपुण्यपुनीतनामधेयो, नरपतिः सकलसामन्तचक्रचूडामणिचुम्बितचरणः समायातगुणिगणगुणगौरवानुरूपसत्कृतिवितरणः सर्वदैवाऽशरणशरणः प्रसारितपुण्यपीयूषकिरणः पीयूषकिरण इव राजतेस्म ।

स च जगज्जननि-चरणपङ्कजनिःष्यन्दाऽमन्दमकरन्दपानप्रकाम - समुज्जृम्भिताऽभिलाषविशेषनिबद्धभावावेशवशंवदचञ्चरीकायमानचेताः, सुलभभ्रुकुटीविलास विजृम्भणविरचितनिखिल - ब्रह्माण्डसमुद्भूत - सुराऽसुरसिद्धगन्धर्वयक्षरक्षो-नरकिन्नर-नागविद्याधर - भूतादिनिश्शेष - समाराधिताङ्घ्रियुगलायाः भगवत्याः भक्तजनपरिपूरितमनोरथशतोद्भावित - वैभवविस्तारायास्तारायाः, समुपासनाऽनुरागरञ्जितः समस्तशाक्तजनानुकूलभक्तिमूलोपस्करसमाहरण - विस्तारितार्चनपरम्परोल्लासित-वलिपुष्पोपहार - प्राप्तविविधकौलकुलक्रमायातपञ्चमकाराधारभूतप्रभूत "कलश-भूतनाथादिविहिताचक्रपूजनप्रसारः सन्ततशक्तिसमाराधनैकसिद्धस्वभावः सन्ततं

सेवते स्म शाक्तैः सहचेष्टदेव्याः समाराधनम् महाराजोपचारैः सत्राराजपरिवारैः । पुनः पुनः प्रेरयति स्म भगवत्याः समाराधनाय समस्तप्रजापरिवारम् ।

किन्तु वैष्णवाऽऽचारविचारपरिपक्वभावनाविभावितस्वान्ताऽन्ताः सकलाः प्रजाः नितान्तमास्तिक्यभावोद्भावितदृढभक्तिभूषित सर्वदाचारा भगवद्भक्त्येकमात्राधारा न कामयन्ते स्म तथाविधामर्चनापद्धतिम् । नाऽनुमोदन्ते स्म महाराजः श्रीपीपाजी विहिततादृक्पूजनपरिपाटीम्, न समर्थन्ते स्म तथाविधं विधिम्; प्रत्युत प्रार्थयन्ते स्म स्वस्वेष्टदेवमहर्दिवम् महाराजस्य तथाविधां धारणां, परिवर्तयितुमिति ।

विलक्षणमहोविधेर्विधानम् । को जानीते, कदा कस्य कीदृशी भावना भवित्री ? को वेत्ति च सः किं कल्पयति किञ्च विधत्ते ? कोऽवगच्छति यद् सः क्व प्रतिष्ठते कुत्र याति च कोऽनुमिनोति-, यद्, यो यद् करोति, तदेव सः सम्पादयिष्यति ? उक्तञ्च "नरो यत्कामयते न तन्नारायणः । जनचिन्तितन्तु चिन्तितमेव तिष्ठति प्रत्युत वन्ध्यत्वमेति किन्तु भगवच्चिन्तितं सद्यः फलति ।

अथैकदा दैवयोगात् भूयांसो महात्मानः सन्तश्च परिभ्रमन्तः श्रीपीपाजी महाराजस्य राजधानीं प्राविशन् । समाकर्ण्य च महात्मनां स्वनगरे निवासं परिकल्पयतामुदन्तजातं समुपजातकौतूहलो, विविधलौकिकालौकिकचरितानां, समुत्पन्न - भगवद्भावावेशजनिताद्भुतचमत्कृतिचञ्चत्समाऽऽकृष्टसकलपुर - पुरन्ध्रीपटलप्रसारितानुपमगुणगणसरितानाम्, स्वसमागमसमकालोपसृतभगवद्गुणवर्णनाकर्णनसञ्जात - नैर्मल्यपुण्योद्रेकपरिप्लुताऽन्तःकरणप्रसारितभक्तिसुधासरितानाम् महामनसां दर्शन समालापमवाप्तुकामः सवामः सपदि समागतो यत्र सर्वलोकोपकारपरायणाः महात्मानो राजन्ते स्म । समागत्य च भगवद्भक्ति - समुज्जृम्भणविलासोल्लासहास - वैभवविकासं समुद्वीक्ष्य, कञ्चित्कालं तत्पार्श्वं समुपसेव्य, लब्धानन्दपूरपूरितस्वान्तः, प्रशान्ते, तदानीन्तने, भक्तिप्रसरे, स्वयं प्रोत्पन्नपूज्यपूजनभावोऽद्भुतप्रभावांस्तान् सश्रद्धं सानुनयं साग्रहं स्वनिवासाऽऽवासे, राजप्रासादे, पदं धारयितुं साञ्जलिः प्रार्थयामास पीपाजी महाराजः ।

महात्मानोऽपि तदीयं भक्त्युद्रेकमालक्ष्य स्वीकृत्य च तदाऽऽग्रहं समलंचक्रु राजप्रासादमपरेद्युः भगवच्चरणारविन्दाऽनुध्यानस्मरणोद्गीरणपराणां तेषां पादप्रक्षेपणमात्रपरिपावितसकलराजप्रासादादि - परिकर - परिवृतराजपरिवारः स नृपतिः सद्यो नवीन इवाऽभवत् तच्चरणरजः संसर्गात् । दर्शं दर्शं महात्मनां भगवदाविर्भूतमहसां मुखारविन्दानि, श्रावं श्रावञ्च तन्मुखकमलनिःसृतभगव-

-द्भक्तिसमुद्रिक्तहरिगुणगण-गौरवोद्गानगभीरं वचनामृतम्, पायं पायञ्चापरिमित-प्रमृतपीयूषप्रस्रवणपूरोल्लसित - भक्तिरूपेयम्. चायञ्चाऽयञ्चानन्तभगवन्नाम-महामहिमरत्नपटलम्. सपदि कृतार्थ इव संवृत्तः सः पीपाजी महाराजः ।

ततो महात्मानोऽपि नाऽधिकं सत्सङ्गमयं समयं दत्त्वा ततो लब्धसम्मानाः कीर्तयतश्च भगवद्गुणानन्यत्र प्रस्थिता नाऽधिकमतिष्ठन् ।

इत्थमनधिकसत्सङ्गोऽपि क्षणिकपरिचयेनैव विशकलितनिजहृदय-ग्रन्थिकः परिवर्तितसकलपूर्वतनव्यापारो भगवन्नामकीर्तन - संस्मरणदत्तावधानो वारं वारमकामयत भगवज्जनसमागमसत्सङ्गावसरप्रसरम् । क्षणिकसमागमेनैव लब्धानन्तापूर्वानन्दः पुनः पुनस्तथाविधानन्दमनुभवितुमुत्सुकोऽतिविकल इव नाऽनु-भवति स्म क्वचन शान्तिसौख्यलेशम् ।

उक्तञ्च—"सत्सङ्गतिः कथय किं न करोति पुंसाम् ।" किञ्चः—

'परिचरितव्याः सन्तो यद्यपि कथयन्ति न सदुपदेशम् ।
यास्त्वेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥"

इत्थम् महामहिमशालिनां महात्मनां, क्षणिकसत्सङ्गरङ्गरञ्जितस्वान्तो, नितान्तमेकान्तरमाकान्तकान्तनामाऽविरतस्मरणजनिताऽवाप्तसमस्तजीवनानन्दरसनिः-ष्यन्दः, सच्चिदानन्दकन्द - भगवच्चरणारविन्दसंयोजितचेताः, प्रणेता च निजभगव-दीयजनसमागमसमुद्भूताऽच्युतगुणगणवर्णनानन्ताऽऽनन्द - सुरसरित्सुलभमज्जन-पानाह्लादानाम्, विजेता च सकलेन्द्रियविषयोपभोगोद्भूत - वैतृष्ण्याऽभिलाष-मोहमदमात्सर्यरागद्वेषाऽऽदि भगवद्भजनविघातकदुरूहदुष्टदुर्हृदाम्, नेता च नित्यनैमित्तिकयज्ञयागादिविविधकर्माऽनुष्ठानाऽऽचरणपरिपूतचरितानाम्, भक्तिसुधा-स्रोतरसपूरभरितानां विमलमानसानां परमहंसानां समागमसुखलिप्सया विहितयत्नः क्षत्रियकुलप्रदीपः—श्रीपीपाजी स्वेष्टदेवोपासनाप्रभावेणावगतपरमभगवदीय श्रीरामा-नन्दाचार्यचरणशरणग्रहणोत्तरकालावच्छिन्नसकलमनोरथसिद्धिवृत्तान्तः, सर्वदोल्लसित-भगवदासक्तिभावनोद्भूत— 'कदा राम ! भविष्यामि कर्मनिर्मूलनक्षमः" इति धारणापरिपूरितरसनः सपदि काशीगमनाय कार्यक्रमं व्यधत्त ।

अथ सततनमनजनितश्रमस्वेदखेद - क्षुधातृषादिविजितसकलदैहिकधर्मा विहिताऽपूर्वभगवच्चरणारविन्दस्मरणमननानुरक्त्यानन्दमयकर्मा घर्मधामप्रचण्ड-मरीचिनिचयनाय सन्तप्ततनुकलिततपाः श्वसोच्छ्वासनिर्गमनाऽऽगमनसहचरीभूत-परिपूत भगवन्नामजपान्तःस्वादनसमृद्ध - मनोरथशतसमुपबृंहितगुरुचरणशरणाऽनुरागः,

परिकलितसमयविभागः सांसारिकमायामोहन्धकारविध्वंसनविलक्षण - विवेकशत-प्रदीपायितः पीपाजी समासादितवान् श्रीरामानन्दाचार्याश्रमं ह्यविभ्रमम् ।

समासाद्याऽऽश्रमद्वारं प्रतीहारिद्वारं निजागमनोदारसमाचारमपाराऽऽनन्द-प्रदगुरुवरदर्शनकामुकमात्मानमुपस्थितिविषयकं निवेदयामास ।

प्रत्यावर्तितद्वारपालमुखादेव विज्ञाय श्रीगुरुचरणानुग्रहमयममृतप्रतिस्पर्द्धि, मनोरथसमृद्धिसिद्धिसंसूचकं, सद्योविवेकोद्भूतिमूलकं, स्वकृपापात्राऽनुरूपं, सकल सुभगसद्गुणकूपं. प्रस्फुरितभगवल्लीलारङ्गमञ्चविरचनं, सरसवचनम्—"यावन्नोऽदयते दृढतरवैराग्यभावनाविभावको मानसाऽऽवासप्रसारितसन्ततसन्ततिका-ज्ञानध्वान्तविध्वंसनपटीयान् स्वकीयाऽऽत्मन्यकिञ्चनकर - सर्वसाधनविहीनदीन-भावनाविवस्वान्, न तावद् समीचीना वा भवति गुरूपसत्तिः प्रतिपत्तिसाधिका, प्रत्युत बाधिका भवत्यपरिपक्वकषायितमतीनाम्, स्वात्माभिमानाकलितकृतीनामिति-समाकर्ण्य, सद्भावनया सेवितसाधुजनसत्सङ्गसमाजो महाराजः पीपाजी, सद्य एव गुरुचरणाऽऽज्ञानुभावमाज्ञाय सपदि विधृतं स्वकीयराजकीयवेषविन्यासं परित्यज्य निरस्य चाऽनर्घ्यमूल्यरत्नाऽऽभरणपटलः समपसारितभृत्यपरिकरः, परिकलित-सामान्यजनोचित-सितदुकूल-धौतवसनावृततनुलतिकः, सर्वदा श्रीकौशल्यानन्दन चरणा-रविन्दासक्तिसुधासिक्तसिद्धमतिको, भूपतिकोऽपि निशिदिनभगवन्नामसङ्कीर्तननिरत-साधुमण्डलमण्डितसत्सङ्गाऽञ्चितरतिकः, सुलभदयासागर - भक्तजनोद्धारकसमाश्रित-निजजनसन्तापहारक-सकलाऽभीप्सितकारक—तारकमन्त्रदीक्षाग्रहणानुरूपलब्धाऽनुमतिकः, सर्वात्मना परीक्षिताऽनन्यभक्तजनाऽऽचरितकृतिकः, सर्वथाऽनुकूलभक्त्येकमूलसुखद-वेलायां, दैवज्ञजनसमादिष्टे प्रकृष्टे शुभमुहूर्ते, यथानियमं, पञ्चसंस्कारविधिविधानपुरः-सराम् षडक्षरमन्त्रराजमयीं ( श्रीराममन्त्रमयीम् ) दीक्षां लब्धुकामो यथानिदेशं यथाप्रदेशं यथावेषं दीक्षितकुलप्रवेशं समासाद्य सर्वात्मना साधितमनोरथः पीपाजी-महाराजः सुसिद्धः प्रसिद्धो भक्तराजः सञ्जातः श्रीरामानन्दाचार्याणां प्रियोऽनन्यसेवकः सेवाहेवाकः ।

एकदा श्रीरामानन्दाचार्यः स्वकीयमभिनवं शिष्यम् राजकुलोत्पन्नमपि-परमप्रसन्न साधुजनसमाजे निवसन्तं सन्तमिव कलयन्तं हरिगुरुसेवाम् विरचितसमाजं पीपाजी महाराजं समाहूय स्वपार्श्वस्थितं तं प्रेम्णा समुदमाज्ञापयामास :—राजन् ! भूयान् समयो व्यतीतः स्वराजकार्यभारं परित्यज्य समायातस्याऽत्रभवतः, महारारयोऽपि विरहविधुराः नाऽधिकं भवद्दर्शनवञ्चिताः चिन्ताकुलाः सन्त्यो भगवद्भक्तेन भवताऽधुना ह्यकारणमेव दुःखनिमग्नाः विधातव्याः । स्वदर्शनदानेन

निजसमागमभगवत्सत्सङ्गनामसङ्कीर्तनादि महामहोत्सवसमाकलनादिनित्यनैमित्तिकनिजादिनचर्यावलोकनकुतूहालिन्यो विधातव्याः, अहरहः श्रीरामार्चनानुरक्ति-भक्तिविवेकोल्लासविलाससमासक्ताः सत्सङ्गाऽऽनन्दनिमग्ना भग्नाऽऽधिहृदयाः सहृदया विधाय सर्वदानन्दकन्दलितभक्तिनिःष्यन्द-पूरपूरितान्तःकरणाः सपदि कलयतु भवान् स्वराजधानीमपि सुलभसौख्यमाधानीं विधेहि समुत्कण्ठितां तां त्वद्दर्शनाऽभिलाषिणीं प्रजाम् ।

तत्र गत्वा च यथाऽवसरं समागन्तुकानतिथीन् सतो महतः साधून् भगवद्भक्तजनान् यथारूपं यथागुणं यथावैभवं परिषेवस्व सपरिकरः सद्भावैः भगवद्गुरुभावेन सश्रद्धं सोल्लासं सभक्त्युद्रेकम् । रक्षायित्वा च तत्र कञ्चित्कालम् लभस्व तैः सह सत्सङ्गसमालाप-भगवद्गुणकीर्तन-स्मरण-सत्कथाऽऽलापसमागमैः स्वयमानन्दाऽनुभवं कुर्वन् प्रजाजनमपि सत्सङ्गलाभाऽन्वितं कारयेति, सप्रसादं समुदं त्वदीयकल्याणोदयसमृद्ध्यर्थमेव त्वदीयप्रजाजनाऽभिलषितानुरूपमेव तन्मनोरथसिद्धयेऽहमेवमाज्ञापयामि । अतो गुर्वाज्ञानुरूपमेव समाचरेति भवतु ते श्रेयः । सम्प्रति समुत्कण्ठितानां भगवद्भक्तानां तेषामपि पूरय मनोरथानिति ।

इत्थं श्रीगुरुचरणाज्ञप्तोऽनभिमतगृहागमनकाम 'आज्ञा गुरूणामविचारणीये'ति मत्वा यथानिर्देशं प्रत्यावर्तनमारभमाणो वारं वारं गुरुचरणवन्दनमविरलवाष्पधाराकलुषितनयनमाकलय्य गुरुमुखकमलरसास्वादनचञ्चरीकचेताः निमेषविरहितदृष्टिः संसक्तो यदाऽभवत् तदा तदीयं हार्दभावं विज्ञाय श्रीरामानन्दाचार्यः समाश्वासयन् तमुवाच, राजन् ! मा विचिन्तयान्यथा किमपि, अहमप्येकस्मिन् दिने त्वदीयां राजधानीमवश्यमेत्रावलोकयिष्यामि । इति लब्धवरः सः पीपाजी महाराजः स्वकीयां राजधानीं पुनरेवाऽऽससाद ।

# अष्टाविंशः परिच्छेदः

एवमेव श्रीरामानन्दाचार्याणां तपःप्रभावोल्लासविजृम्भिताऽद्भुतचमत्कृतिनिचयचञ्चच्चतुरस्रप्रसृत-वैभवख्यातिगुणगणमहितावालोल्लासि-सुभगकीर्तिवल्लरीसुमनोभरसुरभिसुरभितदिगन्तरालमहामहिममाहात्म्यमाकर्ण्य दिग्दिगन्तेभ्यः श्रद्धालवो दीक्षाजिघृक्षवो मुमुक्षवः समायाति स्म यूथशः। केचन सत्सङ्गार्थं कतिचनाऽध्ययनार्थम् भूयांसश्च दीक्षामाधातुम्, वहवो वचनामृतश्रवणार्थमेव भूरिशः स्वात्मोद्धारायैव समाजग्मुः।

तेष्वेव सन्त्यनेकशो ये हि तेषामन्तेवासिनः सन्तः श्रीराममन्त्रेण दीक्षिताः, भूयांसस्तु तन्मुखान्निःसृत-रामनामाभिधं द्व्यक्षरात्मकमेव मन्त्रमवाप्य श्रद्धासमृद्धाः सन्तोमहात्मानः समभूवन् यथा श्री कवीरो, रैदासो, धनाजी, सैनजी प्रभृतयः शिष्याः। वहवश्च नियमितपञ्चसंस्कारसमलङ्कृतास्तारकमन्त्रोद्धृतात्मानः सिद्धाः समृद्धाः सञ्जाताः, यथा श्री अनन्तानन्दाचार्याः सुखानन्दाचार्याः सुरसुरानन्दाचार्याः, नरहरियानन्दाचार्याः भावानन्दाचार्याः गालवानन्दाचार्याः योगानन्दाचार्याः तथैव स्त्रीशिष्यासु पद्माजी प्रभृतयः। प्रायः सर्व एवैते श्रीरामभक्तिप्रचारकाः जनकल्मषपरिहारकाः भगवन्माहात्म्यप्रसारकाः लोकसमुद्धारका एव संवृत्ताः।

तत्र केचन तात्कालिक दुष्टदुराचारनिरत-यवनशासकोद्भावितोग्रस्वभावसमुद्वेजितजनमानसकारकविचारपरिपोषितभावनानुरूपव्यापाराऽऽतङ्कपरित्रस्तानपि यावच्छक्तिसन्मार्गाऽनुसरणस्वभावान् कलयितुं, सर्वात्मना समर्थं दुःशासकजनमानसेष्वपि सद्भावयितुमेव शतधा प्रयतमाना महाकवयोऽपि भूत्वा स्वकविताकौशलेन पारस्परिकं वैमनस्यं दूरीकर्तुं मुहुर्मुहुः समुपदिशन्ति स्म यथा कवीरादयः। एतेऽप्यासन् प्राचीनानां पुरुषाणामेवाऽवताराः। ये हि भगवत्प्रेरणया तन्माहात्म्यद्योतनायैव विधृतजन्मानोऽप्यद्भुतकर्माण्यारचयन्तिस्म। श्रूयते हि श्रीकवीरोऽपि कस्याश्चन

द्विजकुमार्या गर्भतो लब्धजनिरासीत्, सा हिलोकापवादभिया समुद्भूतमद्भुतस्वरूप-मपि तं परित्यज्य स्वीयमातृस्नेहवञ्चितं व्यधात्। किन्तु भगवानेव तस्य यदि संरक्षकः समभूर्त्तर्हि कस्तं मारयितुं प्रभुर्भवेदिति क्षणानन्तरमेव कौश्चन यवनदम्पती समागत्य तं बालकं कुसुमसुकुमारमालोक्य निःसन्ततिकतया तमेव भगवद्दत्तं विज्ञाय स्वभवनमानीय पालयामासतुः। स एव बालकः कबीरः पूर्वजन्मानुस्मरणजन्यसं-स्कारोद्बुद्धभावनापरवशः केवलं पालकयवनजनकजननीकतया विधृतयवनसंज्ञकः श्रीरामानन्दचार्यशिष्यकामनयाप्रवृद्धभावोपि तान् सनातनधर्ममर्य्यादापालनानुरूपा-ऽस्वीकृतयवनदीक्षाविधानान्, विज्ञाय साक्षाद् दीक्षाविधिवञ्चनस्वव्यथाखिन्नो निश्चित-शिष्यभवनदृढभावस्तेषां गङ्गास्नानतट एव सोपानसरणीमार्गे कुण्डलीकृताङ्गयष्टिकः स्वल्पवया अपि लब्धापूर्वभक्तहृदयस्तथा सुप्तोऽभूद् यथा न तच्चाक्षुषविषयता मापद्येत, इत्थं विहितप्रयत्नः सः स्वचिन्तनाऽनुसारं साफल्यमवाप।

यदाहि श्रीरामानन्दाचार्याः स्नातुं समायाताः तथैव तेषां मृदुलतमः पादा-घातः सोपानश्रेणिसंसक्ताङ्गतयाऽलक्ष्यीभूतशरीरस्य तस्य शरीरे स्पृष्टोऽभवत् तथैव सः स्वबाल्यभावं प्रदर्शयन् रोदनस्वरं व्यतानीत्। सद्य एव ते सहजदयार्द्रहृदयाः सस्नेहं तमुवाच, वत्स ! मा रोदीः, श्रीरामराम, कथय, रोदनं विहाय राम रामेति वद। इत्युक्त्वा ते तु यथाव्यापारं प्रवृत्ताः सञ्जाताः। बालश्चायं ततः प्रभृति, श्रीरामानन्दाचार्यं स्वगुरुं मत्वा तद्दीक्षितञ्च तमेव द्व्यक्षरं मन्त्रमहर्निशजपन् कबीरः सिद्धो महात्मा समभवत्। भक्तः कबीरः 'हिन्दू-मुस्लिम'योः परस्परमैक्यभावभावनां समुद्भावयितुं भूयो भूयो यत्नं चकार। स्वकीयां काव्यधारामपि निर्गुणसिद्धान्त-मयीं प्रावाहयदुभयोरैक्यसम्पादनायैव। प्रोवाच दोहामयीं रचनाम् :—

'भक्ति भवनमत्युच्चकैर्दूरतरं प्रतिभाति।'
भक्तिं यस्तनुते दृढां भक्त्या तज्जानाति॥

भक्ति कन्दुकं, विस्तृतं क्षेत्रमति प्रणयेत्।
रङ्के राज्ञि न भेद-दृक् खेलेत् कोऽपि नयेत्॥

यावन्तस्तरवो जगति सर्वेपाञ्च फलानि,
भुक्त्वा याचेऽहं मुहुर्दर्शयतेऽब्जमुखानि।

मग्नाः स्मो भवसागरे प्रेष्ठ स्मृतिं विधेहि।
भक्ष्यामो यदि नो भुजग्रहणमाशु नाथेहि।

कृपादृष्टिं मयि ! मयि वितर।

४. "दयादृशं कलय प्रभो भवसिन्धौ मग्नोऽस्मि ।
दया तरणिमिह नो लभे प्रवहेय भग्नोऽस्मि ॥"

५. "ब्रह्मैकं द्वे नामनी, राम-रहीमौ ते हि । मा भ्रम सैवैकःसखे, ह्युभयोरैक्यमवेहि ॥

६. "रोजां रक्षसि किं दिने, हंसि निशीथे गाः ह । हत्यैषा सा वन्दना, हृष्टः कथमल्लाह ॥"

इत्थम् स्वकीयरचनाचातुर्यविकासन प्रतिपादितसन्मार्गोपदेशव्याजेन भगवद्भक्ति-निरन्तरस्मरणप्रतिपादनमुखेन भक्तिमार्गे सर्वेषामेव समानरूपेण प्रवेशाऽधिकारो यथेच्छ-मधिकाधिकां भक्तिं कर्तुं सकलप्राणिमात्रः समर्थः इति प्रत्यपादयत् कवीरः । नैतावदेव, अपितु निर्गुणोपासनां, भगवतो मुक्तिप्राप्तिकामनाम्, तत्कारुण्यकृपायाचनाम्, तदुपेक्षया जीवानां संसारसागरनिपतनपुरःसरम् भूयोभूयो जन्ममरणक्लेशविशेषभोगः भगवत्कृपयैव समुद्धारः इति सकलं सुस्पष्टमेव कवीरः स्वकाव्ये स्वलिखित-दोहाच्छन्दोभिर्वर्णितवान् ।

किञ्च परस्परं विरुद्धाचरणाकरणदिदुराग्रहग्रहग्रस्तानां हिन्दूमुस्लिमो-पाधिभाजां, नानाधर्मद्वेषिणां कृते समन्वयवादमयीं काव्यरचनां कृत्वा यावनसभासु वारं वारं श्रावयन्-"राम-रहीम-नाम्नोः ब्रह्मैक्यत्वं साधयन्-नामभ्रमभावं दूरीकृत्य भगवन्तमेकमेवोपास्यमुभयोः नास्त्युपास्यदेवभेदो लोके केवलनाममात्र एव भेदबुद्धया स्वस्वभावनया विरोधं कलयतां व्यर्थं द्वेषमूलकत्वं संसाध्य भावनाशुद्धयर्थं प्रयत्नमा-चरन् महात्मा कवीरोऽभूत् समाजसुधारकः, पारस्परिकभेदपरिहारकः । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" "अहिंसा परमोधर्मः" इत्यादिसिद्धान्तं परिपालयन् प्रसारयंश्च तथाविधामेव भावनां, प्रेरयंश्च भगवद्भक्तौ सर्वानेव प्रबोधयंश्च यवनबन्धून्—स्वय डिमडिमघोषेणाऽऽघोषयिष्यति ।

"न जातिभेदो न च कर्मभेदो, नोपासनाभेद इहास्ति भक्तौ ।
नैवोच्चनीचो यवनादि भेदो हरिं भजेद्यः, स हरिप्रियोऽसौ ॥"

१ "भक्तिमहल बहु ऊँच है, दूरहि ते दरसाय ।
जो कोई जन भक्ती करैं, सोभा बरनि न जाय ॥

२ "भक्ति गैंद चौगानकी भावै कोइ लै जाय ।
कहै कबीर कछु भेद नहिं कहा रंक कहँ राय ॥

३ सबहीं तरु तर जाइके सब फल लीन्हौ चीख ।
फिर फिर माँगत कबीर है,दरसन की ही भीख ॥

४ सुरति करो मेरे साइयाँ हम हैं भवजल माँहि ।
आपेही बह जायँगे जो नहिं पकरौ बाँहि ॥

५ रामरहीमा एक है नाम धराया दोय ।
कहै कबीर दो नाम सुन भरम परो मत कोय ॥

६ दिनभर रोजा रहत हैं, रात हनत हैं गाय ।
यहै खून वह बन्दगी, क्यों कर खुसी खुदाय ॥

# एकोनत्रिंशत्तमः परिच्छेदः

श्रीमद्रामानन्दाचार्याणामाज्ञामवाप्य परमभगवदीयतामापन्नः श्रद्धाविवृद्धभगवद्भक्तिरसपरिपुष्टक्रियाकलापाकलिताऽऽचरणः सर्वदाभगवत्सेवा-समासादित-श्रीनित्यसाकेतविहारिवरचरणाऽनुरागसमर्द्धितनिजसौभाग्यवैभवः, प्रायः समायात-महर्षिकल्परचितक्रियाकलाप-समाराधनविधानव्यसनि महात्मजनाहर्निशपरिचर्याचार-पावितनिजकरयुगल, सन्ततसत्सङ्गरङ्गरञ्जितस्वान्तः सदैव भगवद्गुणगणगानमहित-श्रीरामनामध्वनिध्वनितनिजप्रासादाऽऽवास—समासादितविविधभक्तिसभो समारोह-समाहूतनिखिलनागरिकजन - मानसानुरञ्जनोल्लासनप्रसारितभक्तिविवेकः, सकलपुर-पुरन्ध्रीगण - परिराजितान्तःपुरेऽपि निशिवासरमहिलासमाजाऽऽहितसत्सङ्गमण्डल-प्रकल्पिताऽऽयोजननियोजितोत्सवसमारम्भप्रसारितभक्तिभावसमुद्रेकः श्रीपीपाजीमहाराजो भक्तराजः स्वराज्ये विधृतचरणपङ्कज एव सकलराजधान्यामापामरमनुजमनांसि प्रमोदयन्, गृहे गृहे च सर्वत्र श्रीरामभक्तिमहाऽमृताम्बुवाहिनीः प्रवाहयन्, वनोपवनवाटिका - प्रमदवनादिषु तुलसीवनानि परिकल्पयन्, स्थाने स्थाने च सत्सङ्गभवनस्थापनपुरःसरं सकलोपकरणसनाहरणसमुल्लासित-भगवत्कीर्तनप्रसारित-भगवद्भक्तिमहायज्ञान् प्रसारयन्, निखिलप्रजाजनभवनेष्वपि समागताऽतिथिगण-विद्वज्जन - भगवद्भक्तिभावभावितान्तःकरणसाधुजन - समाराधनैकनिजनिज-गार्हस्थ्य-परमधर्मस्वरूपाऽऽवश्यककर्तव्यभावनां जागरयन्, समुल्लासयन् सहृदयत्वसौजन्या-दिगुणगणगरिमाणम् निखिलामेव निजां महीमहामण्डलमण्डनीभूतां परमभागवतीं हरिपदपद्मानुरागवतीं, प्रतिसवनयजनयागाऽऽराधन-गोब्राह्मणादिसमुपासनासौभाग्यवतीं समागतसाधुपदपङ्कजपरागवतीं, सन्ततभगवत्सेवानिरताऽमरीभूतमानव-चरिताऽधरीकृतत्रिदशनगरीं नगरीं विरचयामास विधिविरचिताशेषलोकरम्यर-चनाऽगम्यगुणगौरवाम् ।

इत्थमाकोणकोणं समस्तभूमण्डलविस्तारितवैभवां परितःप्रस्फुरितामल-शरच्चन्द्रचन्द्रिकायितवां, कीर्तिकल्पवल्लीमतल्लीं, निजसुमनोभराऽऽमोदसुरभित-दिगन्तरालां ध्रायं ध्रायं चञ्चरीकायमाणे सञ्जाते च निखिलविद्वज्जनसाधुसमाजे,

विशदीकृते च भुवनपटले आंह्लादयति च भगवदीयजनमानसमराले, धवलीकृते च परितो हिममहीधरशिखरे, द्विगुणतरं धवलीभूते हि कैलासगिरौ चन्दयतिस्म नितरां, निशिनिशि राकाकामुकोऽपि सुमुज्जृम्भमाणे तद्यशश्चन्द्रे निःशेषं मनुजसमाजम् ।

यथाहि प्रावृषि तारापथे प्रसरितान् पयोदपटलान् निपतितास्वपि वारिधारासु, समाप्यायमानासु विश्वमपि, चातकचक्रं, चञ्चच्चञ्चुपुटेन वियदुन्मुखेन, स्वातिबिन्दुमेव गृहीतुं कामयते. नान्यद्विश्वतर्पणमपि तृषार्तोऽपि, भृशं स्वाङ्गीकुरुते मेघपतितमपि पयोविन्दुम् । नान्यो वारिविन्दुस्तदुपयुक्तो भवतीति ।

तथैव परितो व्याप्तोऽपि स्वयशःपुञ्जे, भक्तवरश्रीपीपाजी-हृदयनिकुञ्जे नैव गुञ्जतिस्म सुस्थिराशान्तिमधुकरी । यशः सुरभिसदामोदमोदितेऽपि भुवस्तलेऽपि नाऽनुभवति स्म मनागपि सन्तोषामोदगन्धम् । स त्वहर्निशं चिन्तयति स्म यत् कदा स तादृशो भाग्योदयविवस्वान् समुदेष्यति, यदा सः सुलभकरुणाकूपारः श्रीगुरुवरः श्रीरामानन्दाचार्यमहाराजः पुरीमिमां मत्सनाथामप्यनाथामिव समुत्कण्ठितां कामिनीमिव तद्दर्शनकामुकीं स्वचरणारविन्दपरागपटलेन समनुरञ्जयन् पावयिष्यति समलङ्करिष्यति च स्ववदनचन्द्रचन्द्रिकाऽऽभरणेन । निजवचनाऽमृतसुरतरङ्गिणीं समुपजातज्ञातमयोपदेशलोलकल्लोलशताम्, भक्तिभावाऽऽवर्तसहस्रमञ्जुलाम्, प्रोच्छलदच्छापूर्वानन्दशीकरनिकरशीतलस्पर्शसौख्यपटलाम् प्रवाहयिष्यति, श्रोतृगणश्रवणक्षेत्रपटलीं सन्तर्पयिष्यति, समापयिष्यति जनमनःसन्तापान्धपरम्परान्, समारोपयिष्यति नवनवश्रीरामभक्तिप्ररोहाऽङ्कुरान् ।

श्रीराममन्त्रमयीं दीक्षामाप्तवति श्रीपीपाजी महाराजे सम्प्रति दशमासात्मकः कालो व्यतीतः समासन्ना च माघमासीय कृष्णपक्षस्था सप्तमी, यस्यामजनि श्रीरामानन्दाचार्यः स्वामी । स्वीयगुरुं प्रति निजां परमां श्रद्धां भक्त्युद्रेकञ्च समस्तनगरे प्रकाशयितुमनाः सुतरां समायातमिममवसरं सुवर्णमयमिति विज्ञाय श्रीगुरुवरचरणजयन्तीसमारोहं मानयितुमुपक्रममनुसरति स्म समुद्घोषयति स्म राजकीयमहोत्सवमखिलराज्ये महाराजः ।

तदानीं राजभवनसान्निध्ये सुविशालप्राङ्गणे सहस्रावधिस्तम्भमण्डलमण्डितं सुविस्तृतं समास्तृतं महापटमण्डपम् । समन्ताद् विविधरङ्गरञ्जितचीनांशुकविनिर्मित-तरङ्गायितपटमालिकापरिमण्डित - नानाविधराजत-शातकौम्भीयतन्तुकल्पितमुक्ताकलापाऽऽकलितापूर्वशोभासमुद्भासितम् । स्थाने स्थाने च कलश-तोरण-ध्वजैर्नानाविधभगवल्लीलामयमनोज्ञचित्रैश्चित्रितम् । अनेकाद्भुतशोभाऽऽधायकराजपरिकर-विद्वन्निकर-महामहिमभक्तजन-महात्मनां कृते स्वरूपाऽनुरूपासनादि सिंहासनमहार्ह-

राजकीयाऽऽस्यन्दिकानिवह-व्यवस्थया परिराजितमध्यभागम्। मध्ये च समुज्ज्वल-प्रोन्नतसुवर्णमयपीठिकासनाथीकृतचारुरत्नराशिखचितचतुष्किकोपरि स्थापितभगवच्चित्रफलकम्, तत्पार्श्वैकदेशे विशदपीठिकाधिष्ठापित - श्रीरामानन्दाचार्य - चरणपादुका-युगलम्, मण्डपमध्यभागोच्छ्रितसमुन्नतमहासुवर्णदण्डोपरि श्रीमद्धनुमच्चित्राङ्कित-रक्तांशुकविरचितस्फुरत्पताकम्। अभितो मण्डपश्च प्रस्पन्दितपताकासहस्रम् सुसम्पन्नमभूत्।

ततो महोत्सवसमारम्भोद्योगः प्रावर्तत। प्रागेव सप्तदिनेभ्यः माघकृष्ण प्रतिपदि श्रीरामानन्दाचार्याणां पादुकास्थापनविधौ, नगरपरिक्रमापूर्वकं समायोजि महोत्सवो महाराजेन। नानाविधराजकीयनागरिक समुपलब्ध-मुखमारुतोद्धूतविविधमुखवाद्य-सहकृत-पटह-भेरी-काहल-वेणु-झल्लरी-कांस्यताल-काष्ठतरङ्गजलतरङ्गतारतरतन्त्रीनिनादोल्लासितानेकमहावाद्यघोषसमुज्जृम्भितमहाह्लादे, यूथशश्च नागरिकभक्तजनसमायोजित-कीर्तन - महामण्डलीकलकण्ठोद्गीतभगवद्गुणगाने, अन्तरान्तराले च पुरपुरन्ध्रीपटलप्रसारितपरमानन्दपूरपूरितप्रणयोल्लसितमहितभक्तोद्भावितललितभगवच्चरितानुरचितपदविन्यासप्रसारिताऽऽनन्दनिर्झरीरसपूरे कामिनीकदम्बे कीर्तयति कलमञ्जुले, मङ्गलामुखीगणसमारब्धे च मङ्लगीतिकाविलासे, सुभगवसनालङ्कारसुसज्जितसमस्तमानवसमाजे, नानारत्नावलीविलसितविलासिनीवृन्दबहुले, निजनिजशस्त्राऽस्त्रसज्जितसैनिकसनाथे, अनेकानेकगज - वाजि - रथक्रमेलकालिकलितशोभे जयन्तिमहोत्सवे प्रवृत्ते सकलं नगरमेव विविधवाद्यध्वनिध्वानितं, मङ्गलमयगीतिगानगुञ्जितम्, भक्तजनोद्भावितभजनभावभावनामयम्, अनेकविधकीर्तनमण्डलीकलितभगवद्गुणाकर्णनसमुत्पन्नसहस्रकर्णमिव, सुदूरदूरात्समागतदर्शकजनसमवायसमवेतं, जगति नवनवमेव जनतामयम्। अशेष सुसज्जितविविध - भवनविशेषैरलङ्कृतं, दर्शनीयतममपि स्वयं नगरस्थितनरनारीनिवहव्याजेन निर्निमेषाऽऽलोकनरसिक - विस्फारिताऽनन्तनयनपटलैर्निरीक्षमाणमिव, प्रतिभवनं गवाक्षनिहितनवसीमन्तिनीवदनचन्द्रचक्रवालविलसितरसिकयुवककुलाऽऽलोकनकौतुकक्रीडामयमिव, जनसम्मर्दपरस्परपरिमर्दितपार्श्वतनुलतावितानोत्तानितमिव, नगरापूर्वद्युतितिदर्शनार्थमेव विधिना विनिर्मितमिदं नारीलोकविशेषसर्जनम् भूमौ प्रहितमिवालोक्यते स्म जनैः। कतिपयजम्बूतरु - वञ्जुलाऽशोकरसालादिपादपनवपल्लवैर्विरचितनवमालिकाऽन्तराले नवमालिका - मल्लिकापाटला चारुकेसरादिसुमनोगुच्छकैः सरसिजसनाथैः सर्वतोऽलङ्कृतैः कुसुमाकरसमृद्धिशतैरिवातनुत वासन्तिकीमेकीभूतां दिव्यतमां द्युतिम्।

इत्थम् विविधपूजनसम्भारसुसज्जितां सामग्रीमग्रीभूतपात्रसंस्थितां नानाविधफल-पुष्पधूपदीपगन्धनैवेद्योपयुक्तपक्वान्नराजिराजितानन्तपात्रसम्भृतां, ऋतुफल-

पूगीफलश्रीफलादिसहितामहितां-पुरस्कृत्य विविधवैदिकतान्त्रिकपौराणिकप्रकारै-र्मन्त्रतन्त्रैर्रीत्या नीत्वा-च महता समारोहेण च सुवर्णपीठिकाऽधिष्ठित-रत्नराजिराजि-तस्थालीमध्ये कुङ्कुमकेशरक्षोदैः रत्नप्रेङ्खितहिरण्यशलाकयोल्लिखितषड्दलोपरिराजित-श्रीरामादिस्वरूपं प्रतिष्ठाप्य पञ्चामृतैः हाटलकलशसम्भृतसुरसरिज्जलैः राजोपचार-महाराजोपचारविधानैः श्रीरामार्चां विधाय-तदनन्तरं श्रीमदाचार्य-वर्यपादुकापूजन-मारभ्य-नैवेद्य-ताम्बूल-श्रीफलसुवर्णपुष्पदक्षिणापुरःसरं महामहाऽर्चनं विधाय-पुष्परस-निःष्यन्द-निर्यासादि समर्प्य कर्पूर-शत-सहस्र-वर्तिका-प्रदीपादि नीराजनं सभक्ति-मन्त्रोच्चारणपूर्वकमारार्तिकं कलयामास समहिषीकः सकलराजपरिकरपरिसज्जितो महाराजः समस्तनगरनिवासिमण्डलमण्डितः सर्वविधपूजनप्रकाराधारप्रशस्तपद्धति-पण्डितः श्रीपीपाजी महाराजः ।

इत्थं प्रतिपदमारभ्य सप्तमीपर्य्यन्तं प्रदिदिनमेव श्रीरामार्चानिधानम्-पादुका-पूजनम्-यथासमयं दैनन्दिनमेव समागतविद्वज्जनानां सतां महताञ्च भक्ति-भाव-भावितभव्य-वाग्विलसितभूरिभाषणानि, धर्मोपदेशा विज्ञानवार्ताः पुराण-गीता-रामायणादिप्रसङ्गपरिबृंहितप्रवचनानि समजायन्त ।

यदा च समाप्तिसमापन्नदिने यथानियमं श्रीरामार्चां विधाय, श्रीपादुका-पूजनं सम्पाद्य नीराजनानन्तरं यथाहि भक्तिभावभाविताऽन्तःकरणेन महाराजेन श्रीरामप्रणामस्तोत्रपाठानन्तरं श्रीगुरुवन्दनारम्भेनिमग्नावसरे प्रवृत्तिः कलिता, तदैव सहसा समुद्भूतो भक्त्युद्रेकः, प्रेक्षितञ्च पार्श्वस्थितैः स्वीयजनैर्यन्महाराजस्य लोचने सामिनिमीलिते संवृत्ते साश्रुधाराशतसुस्नाते, निपतितनयनवारिसिञ्चिते च स्वाञ्जलिविधृतपुष्पपटले, निश्चिलनिरुद्धीभूते च निःश्वासे, विधृताऽद्भूतयोगाचरित-इव जाते महाराजे, क्षणं प्रशान्तमिवाऽभवत् समस्तं क्षुब्धम्. वातावरणमेव ।

कलितार्द्धसमाधि-ध्याने महाराजे सहसैव श्रीगुरुचरणानां श्रीरामानन्दा-चार्याणां दर्शनमिवाभूत् । समाह्लदिताऽन्तः-स्वान्ते महाराजे श्रीगुरुमुखादिवाश्रूयत स्वाभिलषितचिरोपासितभावनामयो वर इव, भक्तप्रवर ! मैवं विशेषेण चिन्तितो भवेः । सद्य एवाह-मत्र त्वदुपकण्ठं त्वन्नगरे पदं धारयिष्यामीति तदर्थं प्रेषय त्वदीयं कञ्चनात्मीयं-जनं यो हि सम्यक् मार्गदर्शको भवेत् नयेच्च मां त्वदीप्सितं पदम् ।

इत्थं सहसा वरमिवाद्भुतं सदर्शनमलौकिकचमत्कारमुदीक्ष्य श्रीपीपाजी सहर्षं सोल्लासं सानन्दममन्दोत्साहेन समायोजनमहायशं सम्पन्नं कलयामास । यथा-निर्देशं स्वजनं काशीं प्रेषयामास ।

: * :

# त्रिंशत्तमः परिच्छेदः

श्रीपीपा जी प्रेषितो राजभक्तो दूतोऽपि पवनसूतः श्रीरामभक्त इव सन्तताऽविश्रान्तगतिकः परितः परिभ्रमद्वनवराहमृग-मृगयुगवयतरक्षु-वृकशृगालभल्लूकवानरबहुलो, कंटकाकीर्ण-विस्तीर्ण-काननसङ्कुले, निजगह्वरनिहितसुतजागरितमृगपतिनिकरभयङ्करे, कण्टकिद्रुमलतासन्तानाच्छन्नगिरिवरगहने, पदे पदे च समविषमनतोन्नतसरलवक्र-गिरिशिखरनिपतित - शिलाखण्डावरुद्ध-कण्टकायितलघुप्रस्तरशकलऽगम्यातिदुर्गममार्गेऽप्यविरलनिरवच्छिन्नगतितया प्रचलन् द्विगुणिततरसमुत्साहसाहसाऽगणिताऽध्वक्लेशविशेषः सविशेषविधृतोत्साह - प्रवर्द्धितमहाधैर्यः प्रदर्शितशौर्यो नाऽधिकन्यूनगुणगणोत्सहधैर्य - वीर्यश्रमक्लेशसहनसहिष्णुत्वादिधर्माधिकदृढकर्मठसहचरगणमण्डितः, स्वीयलक्ष्यसाधनपण्डितः, ह्यखण्डितश्रीरामनामस्मरणमहामन्त्रशक्तिसमुज्जृम्भितमहोत्साहः सकुशलं स शस्त्रवाहनः काशीं प्रकाशी-भूताऽद्भुतमहागौरवाम् प्राप्तवान् नितान्तं मोदमानाः सर्व एव सवाहनाः राजसेवकाः श्रीरामानन्दाचार्यवर्याश्रमपदं प्रापुः। स्ववाहान् अश्वादीन् यथास्थानं निबध्य श्रीरामानन्दाचार्यचरणान् प्राप्य यथा-नियमं प्रणामपरम्पराभिः शिष्टाचारानुरूपं-सर्वं विधाय श्रीपीपाजी-प्रहितं राजकीयमुद्राङ्कितं भक्त्युद्रेको भावपूरितो वर्णमालापरिराजितं प्रार्थनाविनयभावोल्लासितं प्रशस्तं पत्रं समर्प्य तदुक्तं श्रीपीपाजी द्वारा निवेदितं मौखिकमपि सकलोदन्तजातं निवेद्य तैः सहैव तद्राजधानीं प्रति प्रस्थातुं, तत्रत्यान् नागरिकाञ्जनान्-नुगृहीतुं स्वदर्शनस्पर्शनमालापप्रवचनादिकृपाव्यापारमयीं करुणां विस्तार्य सकलमनःकामनां पूरयितुं भगवद्भक्तिभावनां समुद्भावयितुं निजपदारविन्दपराग-पावनरागेण च सकलां राजधानीं पावयितुं प्रार्थयामासुः।

श्रीरामानन्दाचार्याः सर्वान् यथायोग्यमाशीः-परम्पराभिरभिनन्द्य समेषां कृते भोजननिवासादिव्यवस्थां यथस्वरूपां कारयित्वा वाहनानां कृते यथाक्रमं सर्वविधां राजगृहोचितामेव व्यवस्थां कारयित्वा विश्रामार्थं तान् स्वकीयातिथिशालायां सर्वविधसौकर्यसाधनोपकरणपुरःसरं भोजनाऽऽस्तरणादीनां, तथा च नगरनिरीक्षणं गङ्गास्नानं श्रीविश्वनाथादिदेवदर्शनादितीर्थाऽनुरूपकर्मानुष्ठानविधानादिकीं क्रियां सम्पादयितुं समाज्ञाय सहयोगप्रदानाय च स्वसेवकान् संयोज्य, परेद्युः सानन्दं तैः सह प्रस्थानाय च स्वकीयां विद्वन्मण्डलीं, निजसहचरान्, सहानु-

यायिनां भक्तवरांश्च, पीपाजी महाराजस्य परमश्रद्धालोः भक्तवरस्य च राजधानीं "गांगरौनगढ़" नाम्नीं प्रति गमनायाज्ञां दत्तवान् ।

मार्गे मार्गे स्थाने स्थाने च प्रसारितोपदेशैः सकलजनमनोमोहयन्तः प्रसारन्तः श्रीरामनाममन्त्रमहात्म्यम्, प्रतिनगरं प्रतिग्रामं प्रतिमनुजं श्रीमद्रामभक्तिभावनाऽऽह्लादमयीं प्रवृत्तिं प्रवर्तयन्तो जागरयन्तश्च जनताहृदयप्रसुप्तं भगवच्चरणारविन्दाऽनुरागम् । तन्नामसङ्कीर्तनापूर्वपीयूषपानव्यसनेन सह भगवत्कथाश्रवणदर्शनप्रवचनसत्सङ्गकरणरसिकताम् प्रादुर्भावयन्तः, संस्थापयन्तश्च जनतायां महिलासत्सङ्गमण्डलानि । नवयुवक भक्तिप्रचारकसत्सङ्गमण्डल-प्रसारणमहासमिति-निर्माण-कर्माणि व्यापारयन्तः, व्यवहारयन्तश्च वयस्कहितकर - धर्मोद्धारकमहासङ्घप्रवृत्तिप्रयोगान् । प्रतिष्ठापयन्तश्च वयोतीतग्रामीणाऽनधीतशास्त्र निचयाऽसेवितसाधुजनसत्सङ्ग-मानवकुलाय विज्ञान-पथप्रदर्शनीः दैनिक-प्रवचनकल्पलतासमितिपटलीः, निशि विश्रामं कुर्वन्तो यान्ति स्म ।

इत्थम् प्रचलन्तः शनैः शनैः, पूरयन्तो महामनोरथान् भक्तानाम्, कतिपयदिनव्यापिनीं ससुखमार्गयापिनीं यापयन्तो मङ्गलयात्राम्, समुपदिशन्तो हि श्रीरामभक्तिसमुपदेशान्, समुत्तरयन्तश्च भक्तजनपरिप्रष्टान् प्रश्नान् प्रदर्शयन्तः परिभ्रष्टान् सन्मार्गं दर्शनम् सुखयन्तः संक्लिष्टान् क्लेशकर्मविपाकपरिपाकैः शोकोपजापपापतापसम्प्लुष्टान् निजोपदेशपीयूषवर्षणैः । श्रावयन्तो विविध रसभावनामयीं श्रीरामचरितावलीमनुभावयन्तोऽभिनवकल्पलवलीम्, विस्मारयन्तोऽध्वगमनश्रमक्लेदम्, धारयन्तः स्ववचनरचनाविन्यासेषु प्रतिपदं माधुर्यौजःप्रसादादिगुणगाम्भीर्यम्, समपसारयन्तः प्रतिपक्षिपक्षपोषकपाषण्डापवादान् सदाऽऽसारयन्तश्च भगवद्भक्तिरसवर्द्धिनीं वाग्धाराम्, निकषा च कञ्चनग्रामं नयनपथपथिकीचक्रुः कमपि कलकलमहारावसहचरं जनसम्मर्दम् ।

ततः श्रीगुरुचरणानामिच्छाऽनुरूपां परिपृच्छां विधाय, नलकच्छान्तरस्थजनमुखाद् विज्ञाय स्वच्छाऽम्बरधारिणा स्वसेवकेन विज्ञापिताः श्रीरामानन्दाचार्या सपदि तत्रैव जग्मुर्यत्र विविध 'विल्व कदम्ब-माकन्दमधूककदम्बे, चलदलन्यग्रोधजम्बूजम्बीरपीलूमन्दारपरिजाताद्यनेक - पादपततिसमाकुले, नानामनोहारिसुमनोभरनुललिते, सततसलिलसंस्रावि सामयिक - स्रोतस्विनीकूले कलितकलाकृतिकौशलकमनीये, प्रतप्तचामीकर विनिर्मित विपञ्चीकृत' पञ्चीकृतकलशशोभि तारापथस्पर्शि पताकास्फुरणविच्छुरितभानुगमनमार्गाऽवकराऽपसारणदक्षे गगनचुम्बि-शिखरोत्तंसे भगवत्याः महिषासुरमर्दिन्याः कपर्दिन्यासभूतायाः स्वयं समुद्भूतायाः सकलसिद्धिप्रसूतायाः

(विपञ्चीकृत = तन्त्रीस्वरूपाकाराः पञ्चीकृत = एकोपरिएकविधृताः पञ्चकलशाः)

वितरित-वैभवप्रभूतायाः समागताखिलसिद्धगन्धर्व - यक्षसुराऽसुरकिन्नरनरनागलोका-द्यनन्तपुरन्ध्रीगणपरिषेवितपादपीठायाः समायातसिमन्तिनीनिचयर्चचितचरणार-विन्दनिष्यन्दिताऽभीप्सित - वरदानरूपमकरन्दावाप्तितर्पिताशेषभुवनवास्तव्यजनतायाः, स्वाभाविकाऽमितकारुण्यपूरपूरितसकलभक्तमनोरथायाः दूरीकृतदुरितदैन्यदानवदलन-दीक्षितदारितदीनजनमानसव्यथायाः, चामुण्डायाः श्रीदेव्याः तदीयचरणाऽम्बुजकोष-गन्धान्धपुष्पन्धयायितसहृदयहृदयचन्दिरे मन्दिरे, प्रावर्तत महामहापूजासहोत्सवः कश्चन शारदीयोत्सवः।

तत्र भूयांसो विद्वांसः स्थूलस्थूलरुद्राक्षवलयालङ्कृतवाहुदण्डमणिबन्धाः, सुभगभद्राक्षरुद्राक्षमालामण्डितकन्धराः, पौराणिकयुगन्धराः, ललितकौङ्कुमविन्दु-राजितमध्यभागोज्ज्वलत्रिपुण्ड्रविलसितभालविच्छुरितप्रभापुञ्जपिञ्जरीकृतवसुन्धरा; परितः परिक्रमाभित्तिसंलग्नसमुन्नतपट्टपीठिकाधिष्ठिताः प्रतिष्ठिताः श्रीसप्तशतीपाठसरंताः शतचण्डीप्रयोग-समाराधनविधानकृताः राजन्ते स्म। अन्ये बद्धपद्मासना गोमुखी-संवृतहस्ताः प्रशस्ताः महामन्त्रजपकर्तारः स्वहृद्देशसंरक्षितविघृतजपमालामण्डित-कराः सिद्धा इव भासन्ते स्म, केचिन्मन्दिरप्राङ्गणे समासज्जितगणेश-मातृका-नवग्रह - चतुष्षष्टियोगिनी - काल - भैरव - प्रधान - सर्वतोभद्रादि विविधमण्डलपीठ परिराजित भव्यप्रदेशे-मध्ये च दक्षिणाग्नि-आहवनीयाग्नि गार्हपत्याग्नि-समलङ्कृत-शतकुण्डीय महायज्ञप्रकरं कलयन्ति स्म। शतशो महामहाश्रोत्रिया वैदिका ब्रह्मणो वदनावतारा इव चतुरो वेदान् ऋग्-यजुः - साम-अथर्वाङ्गिरसाभिधान् सस्वरं मधुर-मुच्चैर्गायन्तः सर्वविधयजनकर्मरहस्यविदः, ऋत्विजः, अध्वर्यवो होतारः ब्रह्माणश्च प्रतिवेदिम् नियुक्ताः पृथक्-पृथक् स्वस्वयज्ञकुण्डे हव्यैः आज्यैः, देवांस्तत्तन्मन्त्रपूर्वकं तर्पयन्तो भ्राजन्ते स्म। प्रीणयन्ति स्म च पुरोडाशाद्यैः पूषादिदेवताः। एकतश्च बहिर्भागे सुविशालप्राचीरप्राङ्गणे चण्डिकावलिदानाय समानीताः शतशः पशवो ह्यजातनयाः स्वस्वामिभिरेवाऽऽनीताः व्यापारिणो विक्रेतारश्चापि विक्रेतुमानीतवन्तः तत्रैकदेशे अजान् वद्ध्वा स्थिता आसन्। कतिचन द्वादशद्वारिकोपकण्ठमकुण्ठितधियो ब्राह्मणाः 'बहुविधतिलकचर्चितमालाः कौङ्कुमसिन्दूरविन्दुसज्जितानावृताशिरस्काः लौकिकपौराणिकमन्त्रान् भृशं पठन्तः समायातग्रामीणजनान् मुग्धान् मोहयन्तः पूजाप्रकारे प्रसार्य पुष्पस्रजं परिधाप्य बलिदानार्थमजादीनां पूजां कारयन्तस्तेभ्यो दक्षिणां यथेच्छं गृह्णन्तः स्वस्तिवाचनपूर्वकमाशीर्वचनैरभिनन्दयन्तस्तिष्ठन्ति स्म।

श्रीचण्डिकायाः निजमन्दिरे तत्रत्यशाक्तशिरोमणिभिस्तदीयकौलपरम्परया-परिसमापिते च भगवत्या विशेषाऽर्चनविधाने, प्रागेव नीराजनावसरात्-मंदिराद् बहिर्निःसृत्य समुद्घोषितम्—

"भो भोः परमश्रद्धावद्धादराः दरानुग्रह-पूरितमनोरथाः, रथाऽश्वक्रमेलकादिवाहनाधिरूढाः, रूढाऽऽचार-परम्परानुकूलाऽऽनीतवलिसमुपहाराः, हाराऽनुकाराऽऽकलितराजतसुवर्णमुद्रामयोपाहृतवलिपुष्पाः, पुष्पार्चनपराः, पराऽम्बिकाचरणपङ्कजचञ्चरीकाः, निर्भीका वलिकर्तारश्च सावधानाः भवन्तु-सपदि जगदम्बायाः प्रीतये श्रीचामुण्डाप्रीणनार्थमेव स्वस्वानीतपशूनां वलिं समुपहरन्तु। तदनन्तरम् महामहाऽऽरार्तिककार्यक्रमः प्रारप्स्यते, अतो यथाकामं यथाशक्ति यथाश्रद्धम् यथा-तथा मनःकल्पितं स्वस्वमान्यताऽनुरूपं कलयन्तु यथाऽऽचारम्।" इति—

श्रुत्वैव सर्वे नानादूरदूरदेशात् समागताः समानीतवलिसमुपायना नराः नागरिकाः शतशोग्राम्याः स्वान् स्वान् अजान् वधस्तम्भसमीपमानीय हिंसकजनसम्मुखमुपस्थापयन्ति स्म। मांसाशिनो लोलुपा भक्तध्रुवाः हिंसारतिकाश्च दर्शकाः समन्तात् नङ्क्षुः समुपस्थिताः समभूवन्।

वलिविधानेन निरर्थकमेव मूकप्राणिनां क्रदनक्रूरकर्म कर्णकुहरीकृत्य स्तब्धोर्द्ध्वकर्णाः सहजदयापारावारायितहृदयाः हृदयाऽदारकदुष्कर्मकल्पनयैव समुत्पन्नसर्वाङ्गज्वराः, ज्वराऽऽक्रान्ता इव कम्पितशरीराऽवयवाः, यवाऽङ्कुरायितरोमोद्गमाः आगमाऽनुरूपमेव 'मा हिंस्याः सर्वभूतानि' 'अहिंसा परमो धर्मः' इति सिद्धान्तवादिनो हि भगवद्गुणानाम्, सकलजनाऽनुकार्याः श्रीरामानन्दाचार्याः सहसैव तत्रागत्य मत्तद्विरदयूथमध्ये समुद्भटसटोविकटो मृगेन्द्राधिपतिरिव गर्जयित्वा समागत्य प्रोचु :—भोः भोः परेतराट् पार्श्ववर्तिनो महाभटाः! शस्त्रपाणयः किमेवं मूकपशूनां जगन्मातुः श्रीपराम्बिकायाः करुणाभाजनभूतानां, वाग्विकलवानां, मूकानां, दीनानामजापुत्राणां हिंसनं कुरुथ? भगवत्या भक्ताभवन्तोऽपि भवन्तस्तदीयानेवपुत्रान् हत्वा तस्यै समर्पयितुमुद्युक्ताः सन्तस्तां प्रीणयितुमुपक्रमन्ते, किं तेन कर्मणा तथाविधेन जगदम्बा प्रसीदति, प्रसेत्स्यति वा, ? किञ्च साऽस्माकं जगदम्बा जगतः समस्तस्यैव चराचरस्य माता किमुत भाषणकर्तॄणामेव प्राणिनां न मूकानाम्? यदि च सा सर्वेषामेव जीवधारिणां जननी तर्हि एतेऽपि मूका एव न मनुष्यवत् स्पष्टं भाषयितुं शक्ताः तस्याः पुत्राः सन्ति न वा। यदि सकलासृष्टिः तया प्रसर्जिताः तत एव समुत्पन्ना तर्हि ते पशवोऽपि तयैवोत्पादिताः तस्या एव पुत्राः।

तर्हि कथं सा स्वकीयानेव मूकान् मुग्धान् प्राणिनः पुत्रान् मारयित्वा खण्डशः कृतान् खादितुं प्रसन्ना भविष्यति? अस्ति लोके काऽप्येतादृशी माता या स्वाकृतान् अन्यपुत्रैः हतान् स्वयं भक्षितुं प्रवृत्ता स्यात् प्रेरयेद्वा तदर्थं (तद्वधार्थमजान् अन्यान् तदीयवन्धून्) अतो देव्याः भक्तवराः सर्वेऽपि सहृदयहृदा विचिन्तयन्तु विवेचयन्तु दयार्द्रदृशा करुणास्पृशा भवन्तः। किमुचितमेवैतत्कर्म? यदेको भ्राता

ह्यन्यस्य मुग्धस्य पशुभूतस्य मूकस्य कण्ठोपरि धेनुकां(छुरिकां)स्फोरयेत् ? तर्हि विवेकशीला अपि भवादृशा ह्यचिताऽनुचितविदोऽप्येवं कुर्युस्तर्हि हठधर्मिणां मूढानान्तु कथैव केति ।

अतएव बान्धवाः इत्थम् निर्दोषान् प्राणिनः स्वकीयरसनालोलुपतया हत्वा, तद्रक्तरञ्जितामम्बिकां विधाय मातुः स्वाभाविस्नेहमय्याः प्रतिष्ठायां भक्तजननिष्ठायां वात्सल्यविशिष्टायां वरिष्ठायां जनन्याः गुणगरिष्ठायां मूकप्राणिभूतस्वसुतभक्षरसिकैषा जननीति कलङ्कपङ्कपङ्किलत्वम्, कालुष्यलाञ्छनं, मा स्थापयेयुः । इति मे साञ्जलि प्रार्थना ।

इत्युक्तवति नीतिरीतिगुणगम्भीरे धीरे सुधास्पर्द्धिनि भावप्रवर्द्धिनि जगदाचार्ये श्रीरामानन्दाचार्ये, परित्यक्तसप्तसप्तिवाहनशीले, परिहृतपरिताप-प्रसारितप्रकाशप्रतापेऽद्भुततेजोविशेषे भास्वति, सम्प्रसारित केवलनिशीथिनीनायकत्वेऽप्यहर्निशमेकैवरूपाह्लादिनी कलाकलापविताने सुन्धाशौ प्रसादसुमुखे च तदाननचन्द्रे निर्निमेषाक्षिललितानि व्यापारयन्तस्तत्रत्याः समस्ताः प्रशस्ता विद्वान्सो, यायजूकाः जापकाराः वल्युपहारिणो नागरिका ग्राम्या यावन्तः समुपस्थिता आसन् सर्व एव हतप्रभाः स्तब्धा रुद्धा बद्धा इव संवृत्ताः । हिंसकानां हस्तेभ्यश्च सहसाः खड्गा अप्यपतन् । अपश्यश्च ते वस्तुतो निर्दोषानजान् केवलं स्वार्थलिप्सया हनने निर्दयत्वमात्मनः । नानुभवन्ति स्म जगज्जनन्यास्तस्मात् हिंसन व्यापारात् तर्पणम् स्वात्मन्यप्यसन्तोपश्च क्रूरतमादस्मात्कर्मणः सहसा समभवत् । आचार्यवचनाल्लब्धबोधास्ते स्वयमिव ततो विरताः संवृत्ताः ।

इत्थम् 'रङ्गी रङ्गे भङ्गः' प्रवर्तमाने च व्यापारे सहसैवाऽवरोध, कौलकृत्येऽपि व्याघातः, विकसितबलिदानादिकुसुमसमृद्धौ हिमपातः, तेषां नित्ये नैमित्तिके च कर्मणि वज्रपात इवाऽनुभवन् क्रोधान्धो मद्यपानमत्तः सपदि जगर्ज भैरवनाथः शाक्तः सिद्धः अपशब्दान् व्यवहरन् जगाद—'को भवान् ? कुत आयातः ? कथमिमामनधिकारचेष्टां वितनुते ? कथामचरति विघ्नमिमम् ।

श्रीरामानन्दाचार्यः—सस्मितं समुदतरत्—यानि क्रूरतमानि नृशंसकर्माणि 'धर्म' इति मत्वा स्वयमाचरन्नन्यानप्याचारयति भवान्, स्वयन्त्वन्धे कूपे निपतन् स्वाऽनुयायिनोऽपि पातयतीति न रुचिरमेतत् । किमनेन विहिंसनव्यापारेण प्रसीदति जगदम्बा ? कथं सा जगज्जननी स्वसम्मुखे एव स्वसुतान् मुग्धप्राणिनस्तथाविधं विहन्तुं विहन्यमानांश्च तान् द्रष्टुं समर्था भवितुमर्हति ? अतः सा मां प्रैरयत् यदहं तान् क्रूरैर्दानवायितैर्मानवापसदै ईक्षितुं प्रयतेय, नृशंसस्याऽस्य कर्मणः समाप्तिकामो धर्म-सेवको भवेयमिति । यथाशक्त्या च

तथाविधाद् दुष्कर्मणोजनतायाः प्रवृत्तिमपसारयेयम् । इत्याचार्यवाक् घृताहुतिरिव प्रचण्डक्रोधाग्नौ भैरवनाथस्य ज्वालामालाप्रवर्द्धिनी विस्फोटकसमा समभूत्—सः प्रकोपानलसन्दग्ध इव विधूतकेशो दुर्मुखायमानो दन्तैर्दन्तान् सम्पेष्य कटकाटायितरदनः, प्रतप्तताम्रवदनः प्रस्फारयन्नोष्ठपुटं महामहाऽमर्षवातप्रवेपमानसर्वाङ्गश्चुक्रोशोच्चैः किं वयम् दानवाः ? दानवीयमेतदास्माकीनं बलिदानविधानं परम्परायातं कर्म ? किमेवं देव्याः खर्परस्य शोणितसम्भृतीकरणम्, परम्परापरिकल्पितमसृगासवेन सन्तर्पणम् कौलकुलाऽऽम्नायविधानमपि तथाभूतमेव ? अद्यावधि व्यवहृतस्याऽस्य प्रवर्तकाः प्रचारकाः सर्व एवाऽज्ञा आसन् ? न ते किमपि जानन्ति स्म भवानेव तथाकरो विद्वान् ब्रह्मपदं प्राप्तः सुधीः ? इत्थमेनं सनातनं धर्मं प्रति दुर्वचनान्यवाच्यानि वदतस्ते जिह्वा न शीर्यत इति कष्टम् ? स्वामिश्रीरामानन्दाचार्याः—राम-राम ! श्रीराम ! अरे ! महामानव ! मद्यमांसशोणितपूतिप्रसारकेनाऽनेन ते मुखरेण मुखेन सनातनधर्मनामोच्चारणं कुर्वता किमर्थं व्यर्थं पावनतमः परम्परातो दूष्यते सनातनोधर्मः ? अरे तस्य तु गन्धोऽपि नाऽधुनाऽत्वयाघ्रातः ( नाऽधुनापर्य्यन्तं चाक्षुषीकृतः स्वप्नेऽपि सः ) तादृशोवाऽपरोऽपि धर्मो यो हि पाठयत्यस्मान्—'आत्मनः प्रतिकूलानि परेषां न समाचरेदिति' 'किञ्च आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।'

सुखं वा यदि वा दुःखं । (गी० ६।३२)

इत्यादिभिः शिक्षयति-मानवान् मानवधर्मम् । 'मा हिंस्यात् सर्वाभूतानि'' इति निषेधति च विहिंसनम् । न हि कुत्रचन सनातनधर्मे हिंसाविधानम् दृश्यते ।

यदि च क्वचन तथाविधानि वचनान्यप्युपलभ्येरन् तानि सर्वाणि प्रकरणोपात्तानि विशेषप्रवाहाऽवरोधकानि 'तुष्यतु दुर्जनः' इतिन्यायाऽऽधारकानि सन्ति. यथा कस्मैचन मद्यपायिने-वस्तुतो मद्यं विना प्राणोत्क्रमणसन्देहः स्फुटतरः प्रतीयेत-तदर्थं सकृदेव प्रतिदिनमेकवारमेव प्रदानाज्ञां कश्चन डाक्तरोभिषक्-मद्यपानार्थमनुमतः सन् प्रदद्यात्, तद्वदेव तत् । यथाहि—'वैदिकी हिंसा न हिंसा भवति ।' 'याज्ञिकपशोरालभनं न हिंसा' इत्यादि वाक्यान्यपि तथाविधान्येव, बालप्रतारणपराणि, बालहठनिवारकाण्येव—यथा च लोके क्रीडनकदानेन बालस्य सन्तोषो विधीयेत तद्वदेव राक्षसीप्रकृतिवतां तोषाय न तेऽग्रे स्वप्रवृत्ति वर्द्धयेयुः' तावता प्रयोगेणैव स्वां प्रवृत्तिमनुरुन्ध्युः । न तानि वाक्यानि सिद्धान्तभूतानि प्रवर्तकानि वा । यदि कश्चित् तान्येव चोदनावाक्यानि मत्वा प्रवर्तेत न तत्र शास्त्रकारस्य दोषः यथा पिता स्वात्मरक्षार्थं स्वपुत्रं शस्त्रोत्तोलनं शिक्षयति, तदा तत्पुत्रस्तेनैव शस्त्रेण स्वशिरश्छेदनं विदधाति न तत्र पितुर्दोषः । एवमेवान्यथाकरणेऽन्यथावा व्यवहारे कर्तरि दोषो न शिक्षयितुः । एवं शास्त्रेऽपि ।

किञ्च सनातनधर्मस्य तु "यद्द्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
(महाभारतेशान्तिपर्वणि) अनुग्रहश्च दानश्च सतां धर्मः सनातनः ।।"

एवमेव 'अहिंसा सर्वभूतेभ्यः', मा हिंस्यात् सर्वाभूतानि, "पापाय परपीडनम्" इत्यादि व्यवस्थितान्यपि वाक्यान्यवहेलयन्- स्वमनःपरिकल्पितमेव कञ्चनधर्मं "खज्जेपिज्जे हि मोक्षः" 'यथेच्छं विहरेत्' इति कल्पितवाक्यानि ब्रुवन् प्रतारयन् मानवान्नन्धकूपे पातयेत् नरके वा जिगमिषून् विदध्यान्न सः किं दानवः ?

भैरवनाथः—कथम् प्रतारणम् ? "यज्ञार्थं बलयः सृष्टाः स्वयमेव स्वयंभुवा ।
( मनुः-५-६ ) 'यज्ञस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवधः ।।"

श्रीरामानन्दाचार्याः—सस्मितमूचुः—'भगवन् ! नाऽयं निश्चप्रचोऽन्तिमनिर्णीतः सिद्धान्तः 'यज्ञनिमित्तम्' निर्दिशन् प्रकारान्तरेण हिंसा प्रवृत्तेः सर्वतोव्यापिन्याः निषेध एव विहितः विवेकदृष्ट्या विविच्यताम्—

उक्तञ्च तत्रैवाऽग्रे— यो बन्धनवधक्लेशान् प्राणिनां न चिकीर्षति ।
(मनुः-५-४६) स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ।'

स्पष्टमप्यग्रे—"न च प्राणिवधः स्वर्ग्यस्तस्मान् मांसं विवर्जयेत् ।" इति (५-४८)
अपरञ्च न केवलं शस्त्रेण हिंसका एव हिंसका भवन्ति अपितु तेऽपि घातकाः
ये हि—'अनुमन्ता, विशसिता, निहन्ता क्रय-विक्रयी ।
संस्कर्ता चोपहर्ता च स्वादकश्चेति घातकाः ।।" इति ( मनु, ५-५१ )

भैरवनाथः—तर्हि किं पुराणवचनान्यपि—"दलिं च प्रत्यहं दद्यादोदनं मांसमार्षवत् ।"
(मार्कण्डेये सप्तशत्याम् —) 'पशुपुष्पार्घधूपैश्च गन्ध-दीपैस्तथोत्तमैः ।" व्यर्थानि ?

श्रीरामानन्दाचार्याः—तत्राऽपि अधिकारिभेदेन व्यवस्था ये हि तामसा भक्ताः मांसाऽशिनः सन्ति ते तथैव मांसादिभिः समर्प्य सम्पूज्य स्वभक्त्यनुसारं तदा मांसं ते भक्षयन्तु नान्यथा । किन्त्वन्ये सात्त्विका राजसा वा द्विजातयो न ते तथा पूजयेयुः । तत्र निषेधः ( 'बलिमांसानि पूजेयं विप्रवर्ज्या मयेरिता)" इति पुराणादिष्वपि हिंसा निरोधकानि सन्ति भूयांसि वचनानि-प्रत्युत हिंसा हि निरय-दर्शिका, दुर्गतिकारिणी 'ये ममार्चनमित्युक्त्वा प्राणिहिंसनतत्पराः' ( पद्मपुराणे-पद्मोत्तरखण्डे० ) 'तत्पूजनं ममाऽमेध्यं यद्दोपात्तदधोगतिः ।'

"मदर्थे शिव कुर्वन्ति तामसा जीवघातनम् ।
"आकल्पकोटि निरये तेषां वासो न संशयः ।।"
"मद्व्याजेन पशून् हत्वा यो भक्षेत् सह बन्धुभिः ।
तद् गात्रलोमसंख्याऽब्दैरसिपत्रवने वसेत् ।।
'पशून् हत्वा तथा त्वां मां योऽर्चयेद् मांसशोणितैः ।
तावत्तन्नरके वासो यावच्चन्द्र-दिवाकरौ ।' इति । हिंसया नरकपातः ।

देवी भागवतेऽपि हिंसारहितस्यैव यज्ञस्य 'पुरोडाशा' दिभिर्विधानम्-यथाः—
'पशुहीनाः कृता यज्ञाः पुरोडाशादिभिः किल ।' ( देवीभाग० १-२ )भविष्यो त्तरे पञ्चोपचार-विधौ—

"चन्दनाऽगुरु-कर्पूरैर्यस्तु दुर्गां प्रपूजयेत् ।
स स्वमेकशतं दिव्य शक्रलोके महीयते ।"

"गन्धानुलेपनं कृत्वा ज्योतिष्टोमफलं लभेत्" सप्तशत्यां दुर्गापूजाऽपि :—

"स्तुता सम्पूजिता पुष्पैर्धूपगन्धादिभिस्तथा ।
ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ॥

महाभारतेऽपि :—"यदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः ।"
( शान्ति-पर्व-अध्याय २६२ )

अतो देशकालानुरोधविवेचनपूर्वकं विविच्यैव करणीयम् नाऽन्यथा पशुहिंसा-पूर्वकमधर्माचरणम् श्रेयस्करं भवति न च प्रसीदति तथाविधेन दुष्टेन कर्मणा जगदम्बाऽपि । यदि हिंसा प्रियाः हिंसयैव भगवत्याः प्रीतिं मन्वते-तर्हि स्वपुत्रस्यैव कथं नैं वलिमुपहरेयुः तेन भगवती ह्यधिकतरां प्रसत्स्यति-यथा अजा-पुत्रः, तथैव स्वपुत्रोऽपि मन्तव्यः । कथं न ते तथा कुर्वन्ति ।

भैरवनाथ :—तर्हि-सोमयाजिनो यायजूकाः कथं सोमयागाऽङ्गभूतं पशुं विशसन्ति जानन्ति ते-यत् सोमयज्ञजन्य-स्वर्गाऽपूर्वसिद्धि-सौख्यापेक्षया पशुहिंसाजन्या-द्यफलमल्पतममेव-तत्तु तत्कर्मसम्पादनापूर्वपुण्यद्वारैव नष्टं भविता, अतो न तथाकरणे प्रायश्चित्तम् । एवमेव भगवत्याः समाराधनेऽपि ।

श्री रामानन्दाचार्याः—अयमेव भवतां बुद्धिभ्रमव्याकोपः । उक्तञ्च भागवते :—

"यथा पङ्केन पङ्काम्भः सुरया वा सुरा कृतम् ।
भूतहत्यां तथैवैकां न यज्ञै - र्माष्टुंमर्हति ॥"

भैरवनाथ :—"तर्हि कथम् :—"प्रतिसम्वत्सरं सोमः पशुः प्रत्ययनं तथा ।"

श्री रामानन्दाचार्याः—यत्रश्रुतो तथालिखितं तथैवाग्रे—"माहिंस्यात् सर्वाभूतानि ।" इति लिखितम् इत्थम्—परस्परविरोधदर्शनेऽपि न्यूनाऽधिकविधानानुरूपं निर्णेतव्यम् अतः यत्रकुत्रचन हिंसावाक्यानि देशकालस्वभावानुरूपोपासना-निरूपणं प्रसङ्गे विलोक्येरन्—तत्र विशेषतो विधानमनुसृत्य व्यवस्थातव्यम् अतः सर्वत्र तु अहिंसाया एवाग्रहः समुपलभ्यते—"अहिंसा परमोधर्मः हिंसाऽन्याऽधर्मलक्षणा" ।

पुराणेष्वपि—"नैतादृशः परोधर्मो नृणां सद्धर्ममिच्छताम् ।

न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः (भाग० ७-१५-८) तथैव

श्राद्धादावपि मांसपिण्ड वर्जं श्राद्धविधानम्—न तृप्तिः पितृणां मांसपिण्डैः।

तथाहि :—"न दद्यादामिषं श्राद्धे न चाद्याद् धर्मतत्ववित्।

मुन्यन्नैः स्यात् परा प्रीतिर्यथा, न पशुहिंसया॥" (भाग० ७-१५-७)

अतो यत्र मांसपिण्डदानम्, तत्र तत् तद्देशपरकं, यत्र नान्नोपलब्धिः, ये हि मत्स्योपजीविनो वनेचरा वा निरन्नदेश स्थान - वास्तव्याः श्राद्धकर्तार - स्तेषां कृते तथा। एवमेव "यं ते मन्थं यमोदनं, यन्मांसं निपृणामि ते।

ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चयुत '(अथर्व० १८।४।४२)।।" इत्यादि सर्वत्र सर्वदेशीया नाऽस्ति व्यवस्था। येहि खलु एतादृशा अभिविद्यन्ते-भूमण्डले देशाः यत्र मत्स्य मांसं विहाय अन्नादीनां तु दर्शनमेव दुर्लभम्-तत्परेयं-व्यवस्था- वेदास्तु सर्वेषां कृते सकलदेशवास्तव्यानां श्रद्धालूनां श्रोतृणां कर्मठानां कृते सन्ति निरन्ने देशे श्राद्धं विदध्युः अतस्तद्देशवासिनां हिताय कर्मलोपो माभूद् इति कृत्वा व्यवस्था सामयिकी, न सर्वदा सर्वथा सार्वकालिकी सार्वदेशीया वा। नैषा भारतीयानां कृते, भारतन्तु समृद्धमन्नबहुलमेव, नातोऽत्र प्रसज्येत सा व्यवस्था। भारते तु सर्वदैव 'यदन्नं यस्य भवति तदन्नास्तस्यदेवताः' इति हविष्यान्नाद्यैरेव, श्राद्धादयो विधेया भारतीयैर्बहुक्तान्नप्रदेशवास्तव्यैः।

इत्यादि न विस्मर्तव्यम्-यद् वेदाः केवलं भारतीयानामेव नान्येषामिति न, यतो हि वेदाः सर्वेषां सर्वदेशवास्तव्यानां कृते मान्याः सन्ति अतः सकलदेशान् लक्ष्यीकृत्यैव सर्वविधा सर्वहितैषिणी सार्वजनीनैव वेदे विद्यते व्यवस्था। सर्वेषां हि धर्म-विज्ञानज्ञानभाण्डागाराः सन्ति वेदाः। अतो न भ्रमितव्यम् भारतीयैः धार्मिकबन्धुभिः।

अतो निश्चीयताम् यत् देवता न हिं हिंसया प्रसन्ना भवति भगवती। वृद्धपाराशरस्मृतावपि :—

"यस्तु प्राणिवधं कृत्वा पितृन् मांसेन तर्पयेत्।

स विद्वां-श्चन्दनं दग्ध्वा कुर्यादङ्गाऽवलेपनम्। इति।"

किम्बहुना :—मांसाहारिणीप्रवृत्तिरेवैषा दुष्टा दुष्टतमा दुराग्रहपूर्णा, मानवता-विरुद्धा सर्वथा सर्वथैवाऽमान्या हेया सर्वात्मना। न देवा न देवी जीवा वाऽङ्गी-कुर्युः।

अतोऽहं सर्वानेव समुपस्थितान् धार्मिकान् धर्मप्राणान् निवेदायमि-यत् ते नैवं निरपराधान् वाग्विहीनान् मुग्धान् पशुरूपान् प्राणिनः हत्वा देव्याः जगज्जनन्याः

सकलकल्याणकारिण्याः प्रीतिर्भविष्यतीति चिन्तयेयुः। न काऽपि माता स्वपुत्राणां हननं विलोक्यापि प्रीता भवति। इति निश्चितमेव। यथा हि भवतां पुत्राः सन्ति तथैवैते भगवत्याः। इति विचार्य मोचयन्त्वेतान्।

यदि भवन्तः सर्वात्मना भगवतीं प्रसादयितुकामाः पूजनेप्सवः सन्ति तर्हि शीघ्रमेवैतान् मूकपुत्रान् मुक्त्वा, एषां प्राणरक्षाञ्च विधाय, ससुखानामेषां हृदयाशीर्भिरभिनन्दिता ससुखं वसन्तः स्वसुतानां क्षेमं कामयमानाः मानवत्ताया मुखोपरि समागन्तुकस्य हिंसाजन्यकलङ्कस्य प्रक्षालनं विधाय समुज्ज्वलं मानववदनं कलयन्तु। निरपराधपशुहिंसनापराधजनितसर्वनाशाद् स्वस्वात्मानं विदधतु सुरक्षितम्।

इत्थम् श्रीरामानन्दाचार्यमुखान्निःसृतां दिव्यज्ञानसुधोर्मिवन्धुरां पवित्रीकृतवसुन्धरां वचजसुरतरङ्गिणीसुधां निपीय सर्वे ते तादृग् दुष्कर्मतः स्वयमेव पराङ्मुखाः सन्तः श्रीमदाचार्यचरणपङ्कजं शरणीकृत्य प्रतिजानतेस्म—यदद्य प्रभृति न वयं क्वचन कदाचन तथाविधं कर्म समाचरिष्यामहे। अद्यावधि च यत्कृतम् तन्नोऽज्ञानकृतं भगवान् क्षमताम्। इत्युक्त्वा तान् पशून् वन्धनान्मुमुचुः।

• इत्थम् सपदि सर्वेषां मानसिकान् भावान् सहसैव परिवर्तितानालोक्य द्विगुणित-क्रोधकलुषितान्तरात्मा, सर्वेषां समक्ष एव स्वमहिमानमधोगर्तगलितमिवालोच्य किं कर्तव्यविमूढः स्वप्रतिष्ठासंरक्षणायैव किमपि प्रलपन् रोषारुणाक्षो मद्यमदोन्मादस्खलितपदः, अत एव निपतिताऽस्तव्यस्तपदः प्रशस्तपदे ( भगवत्याः प्रधानपीठे ) नियुक्तोऽपि निरस्तसम्मानपदः किमप्यग्रे वक्तुं विध्वस्तवचनविन्यासपदः स्वात्मानं किमपिविधातुमशक्तमिति विज्ञाय सहसा हवनकुण्डाद् प्रज्ज्वलज्ज्वालानङ्गारान् निष्काश्य श्रीरामानन्दाचार्यं प्रति प्रक्षेप्तुमारभत भैरवनाथः कौलकुलकज्जलः संन्यासी। किन्तु सर्वे एवाऽङ्गाराः सर्वदा निर्वैरस्य प्रशान्तचेतसः सर्वत्रैव भगवद्रूपत्वमनुभवतः शुनि चैव श्वपाके च समदर्शनस्य भगवति भगवद्विभूतिषु च नान्तरायं वीक्षमाणस्य विशिष्टाऽद्वैतदर्शनस्य ब्रह्मविदो ब्रह्मभूतस्योपरि निपतन्तोऽपि सद्यः शीतलत्वमापन्नाः शतदलकुसुमसमानाः सुरभिमयाः सम्भूवन्।

प्रयोगमेनमपि निरर्थकमेव गतमिति विज्ञाय निजमतिगर्हितमतिविकाराऽनुसारं तान्त्रिकारं समाश्रयितुमुपाक्रामत्। ततश्च सः स्वयमेव धूलिधूसरितः सन् निजाक्षिनिक्षिप्तधूलिपटलः, अविज्ञात - भगवद्भक्तमाहात्म्यः सहसाऽभिचारप्रयोगमाचरितवान्। तदनुसारं प्रथमम् धूलेः, ततोऽस्थ्नाम् वृष्टिमारभत। किन्तु—'महत्सु कृतोपचारः स्वात्मन्येव प्रतिफलति' इति न्यायेन सा हि—अस्थ्नां-वर्षा-तस्यैवापघातमृत्यवे सम्भूत्। अस्थ्नां वर्षा' तस्योपर्य्येव सञ्जाता,॰ सङ्कल्पविकल्पनात् वैपरीत्यमादनेधाना सा ( वर्षा ) तमेव यमाऽतिथिं विदधे। नाऽस्पृशच्छ्रीरामानन्दा-

चार्यान् । एतादृशेनाप्रतिमेनाद्भुतेन चमत्कारेण सर्वे दर्शका महाश्चर्यचकिताः सम्भूवन् । श्रीरामानन्दाचार्ये च विशेषतः श्रद्धालवः प्रभावान्विताः सञ्जाताः । सर्वे च ते पुनः सम्प्राथ्यं श्रीरामानान्दाचार्यान् भक्त्या स्वातिथ्येन सच्चक्रुः ।

एवं निखिलमूकप्राणिनामाशिषं गृहीत्वा, अनन्तांश्च जीवनदानं दापयित्वा यावन्निशमेकामुषित्वा तत्रैव ज्ञानपिपासून् समुपदिश्य सन्मार्गञ्च प्रदर्श्य-तस्मिन् जनसम्मर्दे समागतान् सुदूरदूरदेशादागतान् निजवाक्सुधाभिराप्लाव्य सत्कर्म सदाचारपरिपाटीञ्च विज्ञाप्य कृतार्थांश्च विधाय मालवमण्डनीभूतां भक्तोत्तंस श्रीपीपाजीवरकरावलम्बनमवाप्य सौभाग्यशालिनीं, सद्यः समागामिष्यमाणापूर्वमहापुरुषचरणनिक्षेपपावितरजकां गांगरौननाम्नीं गङ्गोद्भवामिव पवित्रतमावनीं प्रति निजशिष्यमण्डलीमण्डिताः विद्वज्जननिकररञ्जिताः भक्तवरसहृचरसुसेविताः श्रीरामानन्दाचार्याः शनैः शनै प्रतस्थिरे ।

तत्र च श्रीमदाचार्यपदधारणोदन्तजातमाकर्ण्य हर्षप्रकर्षप्रफुल्लितस्वान्तः श्रीपीपाजी राजाज्ञां समस्तनगरे घोपितवान् 'यद् पूज्यपादाः श्रीगुरवः पदं धारयिष्यन्ति नगरे अतः समस्तमेव नगरं सुसज्जितं भवेद् यथा वैवाहिकोत्सवे क्रियते तथैव सर्वैः स्वस्वभवनं सज्जयेयुः सर्वे नागारिकाः', इति तदनुसारं प्रतिगृहं प्रतिद्वारम् उभयतः कदलीस्तम्भमण्डितं कलशैः नवाम्रपल्लवपुष्पगुच्छरञ्जितैः सुसज्जितम् परितश्चाऽशोकदलललिताभिर्वन्दनमालिकाभिः समन्तात्स्फुरत्पताकाभिः समाह्वयदिव द्वारं द्वारं रङ्गैरङ्गकुङ्कुमक्षोदैः परिकल्पितरङ्गवल्लीवितानम् स्थाने स्थाने च पटद्वाराणि वन्दनमालिका सुमनोमालिका प्रसूनपुञ्जैः समञ्चितानि निर्मायितानि, एवमेव राजप्रासादस्तु पुरन्दरमन्दिरमिव राजते स्म विविधमणिगणराजित मौक्तिकदामभिः स्वर्णराजतकलशपञ्चकमञ्चिः सकल सर्वविधसाधनसञ्चितः प्रपञ्चितोऽद्भुत ब्रह्मसृष्टौ चित्रविचत्रनवनवोपस्करैः । इत्थम् सुसज्जीकारयित्वाऽखिलनगरं, श्रीगुरोः स्वागतार्थञ्च सद्य एक विशिष्टनागरैः नगरश्रेष्ठिभिरमात्यपटनैः विद्वन्निकरैः वेदाचार्यैः पुरोहिताचार्यैः समस्तराजकीयवैभवसहितो नानाविध वाद्यध्वनिप्रतिध्वनितदिगन्तरालो माङ्गलिकमहोत्सवोपयोगि सुवासिनी पुरपुरन्ध्रीजन-प्रस्तुतगीतकैः जयजय-ध्वनिध्वनितसकलपथः श्रीपीपाजी महाराजः समभिमुखमुपस्थाय समीपमागत्य चरणनिपतितो दण्डवद् प्रणामसन्तति रचयामास, समुचितसामयिकशिष्टाचाराऽनुरूपे गुरुशिष्ययोः पारस्परिकः समुदचारः प्रावर्तत । लब्धाशीः परम्पराऽभ्युदयः श्रीपीपाजी प्रार्थयामास नगरं प्रविश्य राजप्रासादम् समलङ्कुर्युरिति । समलञ्चक्रुः श्रीमदाचार्याः राजप्रासादम् पूरयन्ति स्म तदीयमनोरथानिति ।

# एकत्रिंशत्तमः परिच्छेदः

"गङ्गा पापं शशी ताप दैन्यं कल्पतरुस्तथा।
पापं तापं तथा दैन्यं, हरति श्रीपतौ रतिः॥"

यथानियमं ब्राह्मे मुहूर्ते समुत्थाय श्रीमद्रामचन्द्रचरणस्मरणं विधाय कृतनित्यक्रियाः परिसमापितसकलदैहिक-दन्तधावनशौचस्नानादिक्रियाकलापाः सन्ध्यावन्दन-भगवच्चरणार्चन-मन्त्रराजजपस्तोत्रपाठादि नित्यनैमित्तिककर्माणि समासाद्य भक्त-जनमानसप्रमोदाय, सत्सङ्गभवनमुपेत्य प्रवचनपीठमधिष्ठाय तेजोमण्डलदुर्धर्षाः प्रहर्षोल्लसिताननाः ज्ञानविज्ञानरश्मिजालसमञ्चित-वाग्विलासाः श्रीरामानन्दाचार्याः भक्तिमार्गप्रकाशाय प्रवचनसुधां प्रासारयन्।

यथास्थानमधितिष्ठत्सु च भक्ततल्लजेषु एकतो विराजमानासु च राजवनितासु सपरिकरासु च पुरपुरन्ध्रीपटलीषु, सम्मुखे समुपतिष्ठत्सु च विद्वन्निकरेषु पार्श्व एव परिराजितेषु सकलसामन्तमण्डलेषु, सर्वतोऽग्रभागे भासमाने च भक्तशिरोमणौ श्री-पीपाजी महाराजे नवीनतमविनयभक्तिसृष्टिसमुद्भूतभास्वद्रत्नभास्करायिते सविनयं सप्रश्रयं सानन्दं सश्रद्धं प्रवृद्धभावमहिम्नि गन्ध-पुष्पाक्षतैः पादार्चनं विधाय पृच्छति सति महाराजे—प्रभुचरणाः! सन्ततं सांसारिकवासनावासितान्तःकरणानां, "अहं ममे" त्यसद्ग्रहग्रस्तानां त्रस्तानां सकलदुर्मोहपाशनिबद्धानां भगवद्भावनाविशुद्धानां प्रबुद्धानामपि समनुबद्धानां जनानां सपदि समुद्धाराय कतमः सुकरः सुगमः सुलभः पन्थाः समस्तप्राणिमात्रकल्याणकारी निखिलसन्तापहारी अनन्ताऽऽनन्दप्रसारी भगवत्प्राप्त्यनुसारी व्यवहारीक्रियेत मानवैः येन भगवद्भक्तिपोषः सम्पूर्णं कायिक-मानसिक-वाचनिकादित्रिविधदुरितमोषः स्वात्मसन्तोषघोषः परिपोषश्च सद्भावानाम् अक्षयकोषश्चानन्दनिधीनां, समुद्घोषश्च वेदवेदान्तविधीनाम्, निःशेषशोषश्च स्वान्तःप्रणिधीनाम् सम्भवेत्।

ततः श्रीरामानन्दाचार्याः श्रीपीपाजीमहाराजं सम्बोध्य सर्वान् तत्रस्थितान् ज्ञानपिपासून् जनान् समुपदिदिशुः। अयि भक्तशिरोमणयो भगवदीयाः-सुविज्ञातमेतत् यद् संसारे सर्वप्रथमं तु मानुषदेहलब्धिरेव सुदुर्लभा-ततो भगवद्भक्तिः-ततो वैष्णवत्वम्-नितरां दुर्लभमेव।

उक्तञ्च "नृदेहमाद्यं सुलभं सुदुर्लभं, प्लवं सुकल्पं गुरुकर्णधारम्।
(भागवते ११,२०,१७) मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा॥
किञ्च मानवदेहप्राप्त्यर्थन्तु देवा अपि यतन्ते "सुरैरपि समर्चितम्"

(भागवते ११-७-२१) "पुरुषत्वे च मां धीराः सांख्य-योगविशारदाः।
अविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम्॥ इति॥

देहिनो हि मानवीयं देहं प्राप्य सांख्ययोगाभ्यां सर्वशक्तिमतो ब्रह्मणो ज्ञानं लभन्ते किञ्च—"सञ्चितं सुमहत्पुण्यमक्षय्यममलं शुभम्।

कदा वयं हि लप्स्यामो जन्म भारत भूतले॥ (नारदपुराणे वचनम्)।

(महाभारतेऽपि युधिष्ठिरं प्रति) "सुदुर्लभं भारतवर्षे जन्म, मनुष्यजातौ महतां कुलेषु।"
अतः सुदुर्लभतरं मानुषं देहं प्राप्यापि यो भवाब्धिं न तरेत् स आत्महा भवति।

(किञ्च तत्रैव) "लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते मानुष्यमर्थदमनित्यमपीह धीरः।"
तूर्णं यतेत न पतेदनुमृत्युयावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात्॥

इति स्पष्टमेवोक्तम् यद् बहुजन्मनामन्ते लब्ध्वामिमां मानवीं तनुं सर्वकर्म कर्तुं प्रभवां प्राप्याऽपि भगवद्भक्तिर्न समाश्रिता नादृतानि च मोक्षोपयोगीनि साधनानि नाऽऽचरितञ्चेच्छ्रेयस्करं कर्म-सः नरकभाक् भवति, आत्महा च। अतो भवति जिज्ञासा यत् किन्तन्निरयनिवारकं श्रेयस्करत्कर्म?

तदुत्तरमेतदेवाऽस्ति-यद् "भगवद्भक्तिरेव परमं श्रेयस्करं कर्मेति।"

तल्लक्षणञ्च :—"माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा॥"

प्रायो हि मनुष्याणां "गृहे वने, सुते दारे, स्वात्मनि स्नेहबन्धनम्" इत्यादीनि-स्नेहस्थानानि तेषु यः स्वाभाविको भवति मानवस्य स्नेहः तेभ्यः सर्वेभ्य एवाऽधिकतरः-सुदृढो गाढप्रेमबन्धनरूपः स्नेह एव भक्तिशब्दवाच्यः। एतादृशी भगवति सुदृढविशुद्ध-प्रेमरूपा भक्तिर्यदा भवेति तदा श्रेयो जीवस्येति।

उक्तमपि "भक्तिः प्रसिद्धा भवमोक्षणाय।" श्रीमद्भागवतेऽपि (स्कं० २-२-३३) "न ह्यन्योऽस्ति शिवः पन्था विशतः संसृताविह।
वासुदेवे भगवति भक्तियोगः प्रयोजितः॥"

किञ्च "सर्वोत्कृष्टसुखप्राप्तिं सर्वदुःख परिक्षयम्।
यदिच्छसि तदैकं त्वं समाराधय माधवम्॥"

तथैव—"यथा समस्तलोकानां जीवनं सलिलं स्मृतम्।
तथा समस्तसिद्धीनां जीवनं भक्तिरुच्यते॥"

अतः प्रियबान्धवाः! यथा "राम" इत्यक्षरद्वय्यां अखिलं ब्रह्माण्डं धारयितुममोघाशक्तिर्विद्यते तथैव "भक्ति" रित्यक्षरद्वयेऽपि लोकत्रयस्थितं समस्तं वस्तुजातं करतलीकर्तुं कारयितुञ्च विद्यते सामर्थ्यमिति निर्विवादम्। उक्तञ्च श्रीमद्भागवते-पञ्चमस्कन्धे अध्याये १८।३२ श्लोके।

"यस्याऽस्ति भक्तिर्भगवत्यकिञ्चना, सर्वैर्गुणैस्तत्र समासते सुराः।"

नारदपञ्चरात्रेऽपिः—"हरिभक्तेर्महादेव्याः सर्वा मुक्त्यादिसिद्धयः।
मुक्तयश्चाऽद्भुताः सर्वा सेविकावदनुव्रता॥"

गीतायामपि भगवतोक्तम्—"सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गाऽपवर्गं यद्धाम कथञ्चिद्यदि वाञ्छति॥"

(तत्रैव गीताः १८।५५) "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः।"
"ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्॥"

किञ्चः—"भक्त्याऽहमेकया ग्राह्यः।"

श्री मद्भागवते (स्कं.११अ.१४श्लो.२२) "धर्मः सत्यदयोपेतो विद्या वा तपसाऽन्विता।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि"॥

किञ्च धर्मत्यागपूर्वकमपि भगवद्भजनम् "धर्मान्संत्यज्य यः सर्वान् मां भजेत् स सत्तमः।' अपिच भक्तस्य गतिरपि वर्णिता यतो न पुनरावर्तनम् नित्यसाकेत-गोलोक-परमेष्ठिमण्डल स्वयम्भूमण्डलान्तम् भगवल्लोकप्राप्तिः "योगस्य तपसश्चैव-न्यासस्यगतयोऽमलाः (श्रीमद्भागवते स्कं-११ अ० २४ श्लो. १४) महर्जनस्तपःसत्यं, भक्तियोगस्य मद्गतिः।" भगवद्धामप्राप्तिः "न स पुनरावर्तते इति-किञ्च-"यद्गत्वा न निवर्तन्ते तद्धाम परमं मम।" अतो निर्विवादमेतत् यत् प्राणिनां कृते-भगवत्प्राप्ति-हेतुकी भक्तिरेव सर्वोत्कृष्टं साधनम्। किञ्च भक्तेः स्वरूपमपि शान्तिमयम्-परमानन्दमयञ्चेति-सर्वेषां कृतेसुलभंसुलभतरञ्च यथाऽन्यकृच्छ-चान्द्रयणादौ योगादौ तु कष्टतमं साधनम् ततोऽप्यधिकं फलम्" न तथा भक्तियोगे तावाच्छ्रमः, न वाऽन्यत्सापेक्षत्वमति। तत्र निरतिशयमेव सुखम्। यथा

(गीताः १२।८) "मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव, अत ऊर्ध्वं न संशयः ।।"

पञ्चमहाभूतात्मकेऽस्मिन् शरीरे मनसो बुद्धेर्वा व्यापारो विद्यते अमितश्च सः सर्वदैव प्रचलति यतोहि—"न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति गीतोक्त्या स्पष्टमेव । यदा हि प्रवृत्तिरेतयोर्न क्षणमपि विश्राम्यति । तर्हि मनुजैरेतदेवावलोकनीयं भवति, यत् सा प्रवृत्तिः-स्वात्मकल्याणमनुवर्तते किमुत प्रातिकूल्यं भजतीति विचिन्त्य प्रतिकूला चेत् तर्हि तामनुकूलां विधातुमात्मनीनेष्वपि कर्मसु प्रवर्तितां विदध्याज्जनः । यथा हि नदीप्रवाह-पतितातरणी विरुद्धामेव दिशमनुयाति-तदा तां-स्वात्मनोऽनुकूले पथि समानेतुं कुशलः कैवर्तकः सावधानतया तां तथा निरुद्ध्य सत्पथमानयति तद्वदेव भक्तजनोऽपि विरुद्धमपि तं स्वमनो-बुद्धिव्यापारं स्वात्मनः कौशलाय नियोजयेत् क्षेमवर्त्मनि । तत्रापि मनोव्यापारः प्रबलः । उक्तञ्च "मन एव मनुष्याणां कारणं बन्ध-मोक्षयोः ।" तत्र श्रुतिर्निर्णयति-यत् —"बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्" । यदा विषयासक्तं भवति मनः, तदा स जनस्तथैवाचरति, निबध्यते च कर्मभिः । यदि च तदेव विषयासक्तिरहितं भवति तदा सः जना मोक्षाय प्रयतते, भवति च मुक्तः ।

मनसः स्वाभाविकी ह्येषा प्रवृत्ति यत् तदिन्द्रियैः सह संयुज्य यथा स्वच्छन्दं कर्म करोति, न तथा स्वशरण्येन, आत्मना सह संयोगं कलयितुं कामयते । यथा बालः स्वेष्टं मृण्मयमेव क्रीडनकमेव लब्धुं यथोत्कण्ठते, न तथा स्वशरीरपोषकैः हितकरैर्वा पदार्थैः स्वात्मानमनुरञ्जयितुं चेष्टते, नैव गृह्णाति पोषकतत्त्वानि । स्वस्मै यद्यद्रोचते तत्तदेव गृह्णाति जनः । अतएव मनोऽपि इन्द्रियैः सहैव रमते, इन्द्रियाणामधिपतिस्तत् । इन्द्रियाणि च सर्वदा पराङ्मुखानि । विद्यन्ते निम्नप्रवृत्तीनि च तानि यतोहि—"पराञ्चिखानि व्यतृणत् स्वयम्भूः" अत इन्द्रियसाहचर्य्यान्मनसोऽपि निम्नगैव भवति प्रवृत्तिः । निम्नगञ्च मनः बुद्धिमपि दूषयति, दूषिता च बुद्धिस्तथैवाऽऽचरति यथा मनः । विवेकशून्या हिताऽहितचिन्तनपराङ्मुखी सती स्वपथाद् विचलति, विचलिता च नष्टा सती स्वाधारमप्यधः पातयति शरीरिणं सशरीरमिति । अतः मनोवृत्तेर्निरोधो यथा भवेत् तथैवाऽहर्निशं प्रयतितव्यम् । वायोः प्रवृत्तिरिव दुर्निरोधाऽस्य प्रवृत्तिः, अतो गीतोक्तः प्रकारः "अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।" इत्युक्तदिशैव मनसो वशीकरणमावश्यकम् । उक्तञ्च शास्त्रेषु :—

"मनो यस्य वशे तस्य भवेत् सर्वं जगद्वशे, मनसस्तु वशे योऽस्ति स सर्वजगतो वशे ।"

एवं च, "इन्द्रियाणि वशे यस्य, मनस्तस्य वशे स्थितम्। तत्रापि वाक् करौ पादौ वशीभूताः, मनो वशम्।" इति निश्चप्रचोऽयं महात्मनामनुभूतः सिद्धान्तः।

किञ्च—"निवृत्तिर्विषयाऽऽसक्तेः लोलुपत्वविघातनम्।
शातनं स्वेन्द्रियेच्छानां स्तम्भनं हस्तवाक्-पदाम्॥

सारांशः— "श्रोत्रवाक्चक्षुषां रोधो निरोधो हस्तपादयोः।
सिद्धश्चेन्मसःसिद्धं वशीकरणमुत्तमम्॥"

हिन्दी-कविना रहीमेन कवीरेण वाप्युक्तम्—"मन जावे तो जाणदे इन्द्रिय वस करि राह।" "जो छाया पानी परै काया भीजत नाह।" 'मनो याति 'यातु स्वयं इन्द्रियाणि वशमेतु।" छाया वारिणि याति (पतति) चेत् कायाऽऽर्द्रत्वं नैतु॥" इति संस्कृत कवेः (दोहा) अन्यथा तु "बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" (गीतायाम्) नाऽत्रदशाना-मेवेन्द्रियाणां वशीकरणस्यावश्यकता, केवलं पञ्चानामेव पर्य्याप्तम्।

तत्राहिः—"हस्तौ पादौ श्रोत्रयुग्मं नराणां, चक्षुर्द्वन्द्वं पञ्चमी वाङ् मतेयम्।
एषां वश्ये, नो मनः कर्तुमीष्टे, प्रत्यायास्यत्याशु यातं विरक्तम्॥"

इन्द्रियाणां वशीकरणोपायस्तु—"न तथैतानि शक्यन्ते सन्नियन्तुमसेवकाः।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः॥"

विषयेष्वासक्तानामिन्द्रियाणां, संयमो न विषयपरित्यागेन भवितुं सुलभो यथा विषयेषु दोषोद्भावनपुरःसरं ततः पराङ्मुखीकरणं सुकरम्। एवमेव इन्द्रियेषु-पराङ्मुखेषु सत्सु मनस्तु स्वयं पङ्गु भविष्यति, ततो बुद्धिरपि शुद्धैव स्थास्यति, सा च स्वयमेवाऽऽत्मानं लक्ष्यीकरिष्यति तथा च मनसेन्द्रियैः सह विशुद्धया बुद्ध्या च भगवद्धर्मेसु स्वतः प्रवृत्तिः सम्भाविनी जीवात्मनः।

अतएवोक्तम्—"चक्षुर्वाक् पाणि पादानां निरोधः परमोमतः।

"अनर्थोपशमः, साक्षात् मनोगच्छति, गच्छतु। स्वात्मनः शान्तिलाभाय त्रयोर्निग्रहः स्मृतः।"

पञ्चानां निग्रहे पङ्गुमनो कर्तुं न तत्प्रभु। ततोविशुद्धाऽसंक्षुब्धा मनसा चेन्द्रियैरपि, बुद्धिः स्वीयात्मना साकं रक्ता भागवती भवेत्।

अन्यथा तु—"असंशयं महाबाहो मनोदुर्निग्रहं चलम्।" अतस्तन्निरोधायैवोक्तं-भगवता—"अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते।" (गीता—६—३५)
महर्षिणा पतञ्जलिनाऽपि—"अभ्यासवैराग्याभ्यां तन्निरोधः।" (योगसूत्र १२)
तदग्रे च—"सतु दीर्घकालनैरन्तर्य सत्कर सेवितो दृढभूमिः" सश्रद्धाप्रयत्न-

सापेक्षश्च सः । तेन च—'यथा यथा सदाऽभ्यासान्मनसः स्थिरता भवेत् ।" ततश्च-क्रमेणेन्द्रियाणां स्थैर्यम्—"वायु वाक् काय दृष्टीनां स्थिता च तथा तथा ।" इति ।

किञ्च "विन्दूनाञ्चयनेनैव पूर्यते हि जलाशयः ।
शब्दानां चयनाद्विद्वान् कृषकः कणसञ्चयात् ।'
एवमेव शनैर्नित्यमभ्यासाऽभ्यसनेन हि ।
स्थिरतामेति मनसो वृत्तिश्चेन्द्रियनिग्रहः ।"

इत्थं मनसः बुद्धेर्वा सर्वेन्द्रियैर्मनसा सह बुद्धेः सर्वात्मभावेन भगवति-योगो यस्य भवति स एव भगवद्भक्तेरुत्तमोऽधिकारीति ।

एवं भक्तियोगः—"भक्तियोगो बहुविधो मार्गै भामिनि भाव्यते" इति भगवता श्रीकपिलेन प्रतिपादितः, तथापि समान्यतस्तु द्विविधा भक्तिः-एका सगुणा, अपरा निर्गुणा,-यस्यां स्वार्थपराणां गुणानां संसर्गः अर्थात्-लोकैषणा, वित्तैषणा, दारैषणा, पुत्रैषणा सुखैषणा-सहकृत - स्वार्थलाभायैव समाराधिता भक्तिः जीवः स्वीयसुखोपलब्धये विदधाति भजनं सेवनं वा,-भगवतः सा सगुणा भक्तिः । यत्र च सकललौकिकाऽलौकिकसुखेप्साराहित्येन केवलं भगवत एव प्रीतये समनुष्ठिता सुदृढस्नेहरूपा भक्तिः निर्गुणा, तत्र गुणसङ्गराहित्यमेव निष्कामत्वं प्रधानम् भगवदनुरञ्जनमेव हि लक्ष्यम् सा निर्गुणा । अतः परम् सुदृढ सर्वतोऽधिक-स्नेहरूपाया भक्तिः सा प्रेमा भक्तिः । सा च क्वचन वात्सल्यरूपा-भवति निष्कामा केवलं भगवतस्तोषणरूपा, सर्वात्मभावा, तत्र जीवात्मनोऽपि मनोरञ्जनम् भगवदात्मत्वञ्च अहरहो भगवच्चिन्तनमेव सिद्ध्यति यथा श्री यशोदायाः । क्वचनप्रिया-प्रियत्वेन च समुपास्यमाना लौकिकाऽनुरञ्जिनी विगताऽन्यत्वभावनामयी भावात्मिका दासीभूतजीवाराधिता भक्तिः प्रेमात्मिका यथा श्रीगोपिकानाम् इत्थमधिका-रिभेदान्नानाविधत्वं भजते भक्तिः । तत्रापि गुणधर्ममिश्रणाद्बाहुल्यं भक्तौ । यथा, तामसीभक्तिः राजसीभक्तिः, सात्विकीभक्तिः, पुनश्चैषां गुणानां परस्परं मिश्रणात्-तामस-राजसी, तामससात्त्विकी, तामसतामसी. एवं राजसतामसी. राजससात्त्विकी, राजसराजसी, तथा सात्त्विकतामसी, सात्त्विकराजसी, सात्त्विकसात्त्विकी, ततोऽपि—

'परस्परालोकनकर्मजाता ख्यातिप्रसिद्धिप्रथिताप्रदृश्या ।
कामाऽनुकूलाऽऽकलिता कृता चेत् प्रावाहिकी साऽभिमता मुनीन्द्रैः ॥
शास्त्रोक्तरीत्या नवधा श्रिताचेत्कालाऽनुरूपाखलु लोकसिद्धा ।
राजोपचारै-र्विविधोत्सवाद्यै-र्मर्यादिकी, मुक्ति सुमुक्तिदा सा ॥

सर्वं प्रभुः, साधन-साध्यरूपः क्रियाकलाप स्तदनुग्रहोऽयम् ।
सेव्यः स, सेवा, स हि सेवकोऽपि नाहं तदन्यः स हि पुष्टिभक्तः ॥

यद् यद् यथा कारयितुं तदीहा प्रभुस्तथा प्रेरयति स्वभृत्यम् ।
सर्वस्वमुद्भावयति, स्वसेवां सम्पादयत्येव, न जीवसाध्या ॥

"यथा वृत्रासुरो जातः पुष्टिभक्तस्तथा पराः ।
गोपिकाः पुष्टिपुष्टास्तास्तदनुग्रहभाजनम् ॥"

"इत्थम्,—प्रावाहिकी भक्तिः, मर्यादा भक्ति ( या नवविधा पुष्टिभक्तिर्भगवतः केवलाऽनुग्रहाऽभिधा वर्णिता ) रीहिता, तथा पुष्टिभक्तिः या केवलं भगवदनुग्रहपरा, प्रेमैकरूपा स्वात्मभावनाऽभिन्ना । तथैव सगुणायाः भक्तेरपि गुणभेदादार्तादि ( आर्तादिभेदात् ) वा नारदीयभक्ति सूत्रे— "गौणी त्रिधागुणभेदात्, आर्तादिभेदाद्वा" यथापूर्वं प्रपञ्चिता । तथैव गीतायामपि-तामसी राजसी सात्त्विकी स्वरूपम्ः—

"अभिसन्धाय यो हिंसां दम्भमात्सर्यमेव वा ।
संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥"

"विषयानभिसन्धाय यश ऐश्वर्यमेव वा ।
अर्चादावर्चयेद् यो मां पृथग्भावः स राजसः ॥"

"कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद् यष्टव्य-मिति वा पृथग्भावः स सात्त्विकः ।

किञ्च—"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तोजिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥"

अत्र चतुर्विधेषु भक्तेषु क्रमशः—"आर्त्तो ( दुःखी ) भक्तः सगुण-तमोगुणी, अर्थार्थी ( धनार्थी ) सगुणरजोगुणी भक्तः एवं जिज्ञासुभक्तः ( सगुणसत्त्वगुणीति ) वर्ण्यते । चतुर्थो ज्ञानी भक्तस्तु निर्गुणभक्तिभाग्भवति स हि सगुणभक्तेषु श्रेष्ठः । किञ्च सगुणयैव भक्त्या भक्तिश्चेश्वविकासो भवति अतः सगुणा नितान्तमुपयोगिनी परमावश्यकी चेति ।

भक्ति-साधनानि-स्वरूपाणि वा नवविधानि भवन्ति । भागवतेऽप्युक्तम्ः—

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्य-मात्मनिवेदनम् ॥"

( भाग-७ । ५ । २३ ) साधनानामेषामभावे न सिद्ध्यति भक्तिः । एषाहि मर्यादारूपा । एभिरेव साधनैः सुगमतया वयं भगवदनुग्रहभाजनत्वं लब्धुं शक्ता भवितुमर्हामः । तत्रापि न समेषामावश्यकत्वम्-कस्याप्येकस्य साधनस्य संसाधने सिद्ध्यति स्वेप्सितफलप्राप्तिः भगवत्प्राप्तिरूपासिद्धि :— भगवदनुग्रहोपलब्धिश्चेति । अथ श्रवणाद्युपासकाः नवविधा एव पृथग्भक्ताः अभूवन्—

यथाः— "सिद्धोऽयं श्रवणे परीक्षिदभवत्, सङ्कीर्तने नारदः ।
प्रह्लादः स्मरणे, हरेश्चरणयोः संसेवने पद्मजा ।
अक्रूरो ह्यभिवन्दने, प्रथितसद्भक्तोऽम्बरीषोऽर्चने,
दास्ये मारुति-रर्जुनः सखिरसे, पौलस्त्य आत्मार्पणे ।"

प्राचीनं पद्यम्तु- भक्तौ संश्रवणे परीक्षिदभवद्वैयासकिः कीर्तने ।
प्रह्लादः स्मरणे, तदङ्घ्रिभजने लक्ष्मीः, पृथुः पूजने ।
अक्रूरो ह्यभिवन्दने, कपिपतिर्दास्येऽथ सख्येऽर्जुनः,
सर्वस्वात्मसमर्पणे बलिरभूद्भक्ता नवोक्ता इमे ।।

इत्थम् नवविधासु भक्तिषु प्रत्येकं भिन्नः समभवद्भक्तः-यथा—

१ श्रवणे -श्रीपरीक्षिद् यादृगनन्यो भगवद्गुणगणश्रवणे नान्यस्तथा ।

२ कीर्तने—श्रीशुकाचार्या यथाऽभूवन् नान्ये गुणाऽऽख्याने केऽपि ।

३ स्मरणे—यथा श्रीप्रह्लादो दृढः स्मरणकर्ता बभूव न तथाऽन्यः ।

४ पादसेवने—यादृशी श्रीक्षीराब्धितनया जाता नाऽन्या तथा ।

५ अर्चने—यथा श्री पृथुर्महाराजः ( अम्बरीषोवा ) समभूत् नान्यः ।

६ वन्दने—अक्रूरः प्रसिद्धो वन्दनभक्तोऽभून्नान्यः ।

७ दास्ये—यथा श्रीकपिपतिः पवनात्मजो हनूमान् न तथान्यः ।

८ सख्ये—यादृगर्जुनः पृथापुत्रः समभूत् नान्यः सख्यभक्तः ।

९ आत्मनिवेदने—यथा श्रीबलिः सर्वस्वार्पणे स्वात्मना सह बभूव ।

किञ्च—प्रपत्तिरूपायां शरणागतौ तु विभीषणः पौलस्त्यः समभवत्[1] । अतः परं पुष्टिभक्ताः केवलं भगवदनुग्रहमात्रसाधनायां पुष्टिभक्तौ नितान्तसंसक्ताः ।

यथाः—"तन्मनस्का-स्तदालापा-स्तद्विचेष्टा-स्तदाश्रयाः ।
तद्गुणानेवगायन्त्यो नात्माऽऽगाराणि सस्मरुः ।।"

---

१—पौलस्त्यो विभीषणः ।

इति तन्मयाः भक्ताः श्रीगोपीजनाः व्रजयुवतयः। यथा आसन् नान्ये तथैव "इत्थं सांसारिकप्रपञ्चेभ्यो विनिर्मुक्तः स एवाऽधिकारी निर्गुणाया भक्तेर्भवति मायिक गुणसत्त्वरजस्तमसां सम्बन्धरहिता केवल निर्गुणब्रह्मपरा, या, भक्तिः सैव लौकिकालौकिकभुक्ति (विषयोपभोगवासनाविरहितैव) सुखैषणारहिता-निर्गुणा-केवलमुक्तिदा निमित्तरहिता मुमुक्षुभिः समाराध्या। तथाच "अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसि" इति-यत्र भगवानेव फलम् स एवोपास्यः स एव सर्व-मित्यात्मिकैव निर्गुणा।

यथोक्तम् भगवता-- "मय्यर्पितात्मनः सम्यङ् निरपेक्षस्य सर्वतः।
(भागवते ११।१४।१२) मयाऽऽत्मनासुखं यत्तत्कुतः स्याद्विषयात्मनाम् ॥"

अतो जीवमात्रस्य स्वात्मकल्याणाय भगवद्भक्तेः परं नास्ति किञ्चन लोके सुलभम् साधनम्। भक्तिः कीदृश्यपि भवेत् सगुणा-निर्गुणा वा स्व-स्वप्रवृत्त्यनुसारं समुपासिता भगवत्प्राप्तिकरैव परमपुरुषार्थरूपा। सर्वेषामेव कृते विमुक्तबन्धनं ह्यनावृत्तकपाटं द्वारम् निष्कण्टकश्च पन्थाः, भुक्तेर्मुक्तेर्वा प्रेप्सूनां कृते स्फीतं सुगमं सुलभं कर्म भक्तिरेव। "सर्वं त्यक्त्वा हरिं स्मरेत्" इति ॐ॥ भक्तांस्तुतोष स्वाचार्यः।

——

# द्वात्रिंशत्तमः परिच्छेदः

"चन्दनं शीतलं लोके चन्दनादपि चन्द्रमाः ।
चन्द्रचन्दनतः श्रेष्ठा शीतला साधुसङ्गतिः ॥

अन्येद्युर्यथानियमं विहितसकलनित्यनैत्तिकाह्निकक्रमाः क्रमानुसार-समाकलितविविधार्चनगन्धमाल्यादिसमलङ्कृतहस्ताः, हस्तान्तरस्थिति - जनित-सौकर्यलाभसन्तुष्टस्वान्ताः, स्वान्तोद्भूतपरिपूतसुदृढगुरुभक्तिसमुद्रेकाऽविवेकविवेक-निर्मलभक्तिभावाः भावानुरूपानुपमसपर्य्या-पर्य्याकुलितसपर्य्याशालाः शालायित-विरचितललितपटमण्डपविशालाः विशालाऽऽदर्शभक्तिसमुल्लासोल्लासितनागरिकभक्तजन-मानसमरालाः मरालानुकारिविवेकिजनसमुदायसभाजितसभा-समास्ताराः, सश्रद्धं सानन्दंसमक्त्युद्रेकं विविधोपचारैः श्रीमद्गुरुवर श्रीस्वामीरामानन्दाचार्य - चरण-पूजनं विधाय-सविनयं साञ्जलि प्रार्थयामासुः प्रवचनसुधानन्ददानाय श्रीभक्तराज-महाराज पीपाजी प्रभृतयो भक्तप्रवराः ।

समाकर्ण्य भक्तजनमानसोद्गारगभीरां धीरां प्रवचनाऽभ्यर्थनां श्रीरामानन्दा-चार्याः सहर्षं प्रवचनसुधां समवर्षयन्—

भाग्यवन्तो भगवदीयाः वैष्णवाग्रगण्याः ! ह्यस्तने सत्सङ्गसत्रे भक्तिविवेचनं सौपपत्तिकमाकर्णितमेव श्रीमद्भिः । सम्प्रति भक्तिप्रपत्त्योर्यावान् यादृशो वा भेदः सोऽप्यधुना स्पष्टीक्रियते—

सन्त्यधुना भूयांसो भक्ता नितरां भ्रान्ता यत् प्रपत्तिरपि काचन नवीनैव समुद्भूता भक्तितो विभिन्नेति कृतिः परञ्च नात्र कश्चन भक्तिप्रपत्त्योर्भेदः । प्रपत्तिर्हि भक्तेः सिद्धिरूपा स्वकीय समुपास्य-देवे सर्वात्मना सर्वदा सर्वभावेन सर्वस्वसमर्पणपुरःसरं स्वात्मनस्तदधीनीभवनजनितसकल - क्रियाकलापविलसित-निजसमस्तमनोबुद्धिदेहेन्द्रियादिलौकिकालौकिक - दारागारपुत्रवित्तावाप्तिसौख्याऽनु-भूतिसहकृताऽपूर्वस्वर्गादिसौख्यानुभवादि सुखैषणादीनां भगवति सन्यसनम् समर्पणम्,

समुपयोगः ! भगवानेव ते सर्वस्वम्, स एव शरणम्, शरण्यम्, नाहं किञ्चन, अकिञ्चनकिङ्करः; अमूल्यदासः, तदनुग्रहभाजनम् निःसाधनोऽधनोभवतः इत्याकारा स्थितिरेव प्रपत्तिः। एवंव भक्तेः सिद्धावस्था, चरमं वा साधनम् भक्तानाम्। तन्मयीभवनं वा भगवति स्वोपास्यदेवे।

नात्र श्रवणादीनां नवविधानां विशेषतो विधानम्, न वाऽत्र नियमोपनियमानां पालनसाधनप्रपञ्चः, इह तु केवलं भगवदनुग्रह एव सर्वस्वम्। स एव साधनम् साध्यः फलञ्च भगवति तन्मयीभवनमेव पुरुषार्थः। भगवदनुग्रहोपलब्धिरेव जीवनसाफल्यं जीवानाम्।

उक्तञ्च ब्रह्मपुराणे—"शरणं त्वां प्रपन्ना ये ध्यानयोग-विवर्जिताः।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥"

श्रीवाल्मीकीये रामायणेऽपि—"सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥"

गीतायामपि भगवतोक्तम्—"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच॥"

इममेव भावं प्रदर्शयता महर्षिश्रीवाल्मीकिना श्रीरामं प्रति निवेदितम्—
"धर्माऽधर्मान् परित्यज्य त्वामेव भजतोऽनिशम्।
सीतया सह ते राम! तस्य हृत् सुखमन्दिरम्॥"

इत्यादिभिः स्पष्टमस्ति यद् धर्माऽधर्म - विहिताऽविहित - नित्यनैमित्तिकादि-सुख-दुःखसाधनीभूत-भयबन्धनादिकं सकलं परित्यज्य केवलं भगवच्चरणारविन्द-मकरन्दजुट्चञ्चरीकायमाणः सन् सर्वात्मना तच्छरणः, तदनुग्रहभाजनम् भवेदित्येव प्रपत्तिस्वरूपम्।

अत्र षड्विधः प्रपत्तेः प्रकारः—"आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्।
"रक्षयिष्यति विश्वासः गोप्तृत्ववरणं तथा। आत्मनिरपेक्षकार्पण्ये, षड्विधा शरणागतिः॥

१—"भगवदानुकूल्यम्। २—"प्रतिकूलत्वपरित्यागः। ३—"भगवानेव मे रक्षक" इति विश्वासः। ४—समये रक्षिष्यति च स एव, इति दार्ढ्यम्" ५—सकलमिदं भगवत एव न ममेति समर्पणम् स्वात्मनोऽपि। ६—स्वात्मनि दीनत्वभावना - अहन्तु निःसाधनो हीनो दीनश्चेति।

(१) तत्र प्रपत्तेः प्रथमाङ्गम् - आनुकूल्यम्—तथाहि देश-काल - कर्म-स्वभावानुकूलं समापतितं सुखदुःखादिकं हर्षशोकमोहादिविवर्जित - स्थैर्यभावेन

भगवदिच्छैवैतादृशीति मत्वा ह्यविषह्यमपि सह्यं विधाय मनसा वचसा कर्मणा वा भगवदाज्ञारूपाणां श्रुति स्मृति पुराणादिवाक्यानां परिपालनमेवानुकूल्यम् ।

उक्तञ्च:— सौख्यं दुःखमु-जीवनञ्च मरणं हानिः सुलाभो यशोऽ-
मानं मानमिति स्वभाव कृतितोदिग्देशकालोद्भवः ।
मत्वा तान् भगवत्समीहितगुणान्, नीद्वेजितः पालयेत्
शास्त्राज्ञामनुकूलनेत्यभिमता वाक्काय सत्कर्मभिः ॥

(२) प्रातिकूल्यविवर्जनं द्वितियाङ्गञ्च 'कामक्रोधादिषट्शत्रून् देशकाल-स्वभावजान् "वित्ताऽपत्यकलत्रादि प्रतिकूलानि चेत् त्यजेत् ।" भगवद्भक्तिविघ्नां-स्तान् दूरतः सन्त्यजेद्बुधः ॥

भगवत्सेवायां ये ये प्रतिकूलतामुपयान्ति - सर्वांस्तान् दूरतः परित्यजेदिति प्रातिकूल्यविवर्जनम् । ये वा सेवाविघातकाः घातुका कामादयो दारादयो वा तेपि त्याज्या एव ।

(३) "रक्षयिष्यति", इति विश्वासो नाम—"अहं भगवदधीनो भगवान् मे परं बलम् । 'प्रत्यजानात् स नो रक्षामवश्यं संविधास्यति" उक्तञ्च श्रीमद्भाग-वतेऽम्बरीष संवादे—"ये, दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ।
हित्वा मां शरणं याताः, कथं तांस्त्यक्तुमुत्सहे ॥" इति
"सर्वदाऽनुग्रहाकांक्षी स मे स्वामी दृढव्रती ।"
"अम्बरीषमिवाऽस्माकं रक्षणे चक्रनन्दकी" । इति ।

(४) रक्षकत्ववरणम् — "न मे मातापितावन्धुः सुहृत् सार्थी कुटुम्बजः ।
"परित्रस्तं विपद्ग्रस्तं यो रक्षेन्नाथ पाहि माम् ॥"

तथाहि:— "भवाऽम्बुधिनिमज्जितस्तरलतुङ्गवीचीशतप्रचण्डकरताडनै रभिहतो भृशं पीड़ितः" "समुद्धर दयानिधे ! जगति न त्वदन्योऽविता, पिताऽथ न गुरुः सुहृत् त्वमसि, भीतितो रक्षमाम् ।'

किञ्च:—"सपदि विपदि रक्षामादधानः प्रभुर्नः स्मरति भजति भक्तेऽकिञ्चने निःसहाये ।
"दययति करुणाब्धिस्त्रायते सङ्कटौघात्, स्वसममिव वयस्यं सव्यधात् सम्पदाभिः ॥

इत्थम् स्वात्मनः संरक्षाणार्थं भगवतः समाह्वानमेव रक्षकत्ववरणम्:—यथा कौरव-सभायां दुष्टदुःशासनेनसमाकृष्ट वसन व्यसन पतितया पाञ्चाल्या कृतम् ।

तथाहि:—"एते मे पतयोऽपि रुद्धगतयो भीष्मादयः स्तम्भिताः ।
चीराकर्षणहर्षणोऽति बलवान् दुःशासनो दुर्मतिः ॥
एकाकिन्यहमस्मि नाथ ! शरणं नाऽन्यस्त्वदन्योऽधुना ।
दीनानाथ दयाम्बुधे ! हि दयतां दासी त्वदालम्बिनी ॥

किञ्चः—"भीष्मद्रोणकृपाः कृपां विदधते नो, पाण्डवा निर्जिताः
कर्तुं ते प्रभवन्ति नाथ ! न मनाक्, सङ्कीलिता धर्मतः ॥
दुर्दान्तो हि कृतान्तति ह्यकरुणो दुःशासनश्चीरहृद्
दीना हीनबलाऽबलाऽस्मि शरणं, मां पाहि सर्वेश्वर ! ॥

( ५ ) सर्वस्वं स्वात्मानमपि भगवतेऽर्पणम्ः—"त्वदीयंवस्तुगोविन्द तुभ्यमेव समर्पये ।

किञ्च—"देहं गेहमसुं सहस्वविभवप्राणेन्द्रियैर्वाङ्‌मनो
विद्यागौरव वंश - वाहनमहैश्वर्यप्रतिष्ठादयः ।
यद्दत्तं भवता, ममेत्यभिमता दारात्मजाः सङ्गताः,
सर्वास्तान् भवनेऽर्पयामि, न ममेत्येतत् त्वदीयं हि ते (विभो) ॥

अर्थात्—अपि ! भगवन् करुणा - वरुणालय ! लोके जन्मनो यत् किमपि वस्तु विद्यते तत्सर्वं त्वयैव दत्तं, मया तु त्वत्तो लब्धं सकलं ममैवेति विज्ञातम् किन्तु वस्तुतो न मे किञ्चित्, सर्वं तवैव, अतः सकलं, देहं गेहं जीवं, स्वकीयं वैभवम्, प्राणान् इन्द्रियाणि, वाचं मनः विद्यां गौरवं, वशम् वाहनानि. महैश्वर्यम् प्रतिष्ठादिकञ्चेति सर्वं तुभ्यमेव समर्पयेयम् ( समर्पयामि ) इत्याकारकम् सर्वस्व - देह प्राणेन्द्रियात्मनां समर्पणमेव सर्वसमर्पणम् ।

( ६ ) स्वात्मनि दीनत्वभावना—नाथ ! अहमकिञ्चनकरो दीनहीनस्त्वदीयः ।

तथाहि :—"दासोऽहं दीनहीनस्तवशरणगतः सर्वदा तेऽपराधी
साऽधिव्याधि प्रकोपाऽनल जगदनिलोद्धूतसंज्वालमालः ।
नाहं कस्याऽपि नो मे सुतधनवनितादेहविद्रोहिणोऽमी
सर्वस्वं मे त्वमेव ह्यशरणकृपणं पाहि मां विश्वबन्धो ॥

हे भगवन् ! अहं तव सर्वात्मना, अपराधी, आधि-व्याधि-काम-क्रोधादि-युक्तः अहं ममेत्यसद्रूपाग्निज्वालामालावृतः सांसारिकमहावात-निर्धूतोऽस्मि मामकीना हि ये दाराऽऽगाराऽऽत्मजादयः सर्वे मे देहद्रोहिण एव अतो न ते मामकीना, न चाऽहममीषाम्, अधुनातु त्वमेव मे शरणं रक्षकः अहं दीनः सर्वसाधनविहीनः कृपणः केवलं तव चरणशरणगतोऽस्मि, अतस्त्वमेव सकलचराचरविश्वस्य बन्धुः अतएव ममापि बन्धुस्त्वमेवेति मां पाहि, त्राहि माम् । इत्थं शुद्धात्मना सर्वथा दीनहीनः साधनविहीनो भगवदधीनो भवेदिति । एवंव षडङ्गसम्पन्ना प्रपत्तिरेव यदा सिद्धा भवति तदैव सा पुरुषार्थरूपा फलदा सिद्ध्यति । इयमपि प्रपत्तिः यथाऽधिकारिगता नानाविधा भवति राजसी, तामसी, सात्त्विकी, त्रिगुणमयी, तथा कायिकी मानसिकी

वाचनिकीति किन्तु पूर्वोक्तदिशा यदा प्रपत्तिः शुद्धभावात्मिका सिद्धा भवति, तदा सर्वे एतादृशा भेदा गौणा भवन्ति ।

सम्प्रपत्तेः काऽऽवश्यकता ? किमर्थं सा समुपादीयते ? इति विचार :—

"जीवो हि यदा निजनिजजन्मान्तरीयकर्मबन्धचक्रनिपतितः' 'पुनरपि जननं पुनरपि मरणं, पुनरपि जननी जठरे शयनम्" कुर्वन् निन्तान्त-संक्लान्तः क्लेशविशेषाऽभिभूतः प्रभूतसंसाराब्धिनिपतितः, कामक्रोधलोभमोहमदमात्सर्य्यादि-प्रबलतमतरङ्गावर्तभीषणनिमज्जनोन्मज्जनचक्र नक्रायितेर्ष्याद्वेषादिमहाव्यालविस्फारित-लोल ललज्जिह्वाऽवलीढो विभ्रान्तो नान्तं दुःखाब्धेः पश्यन् संभ्रान्तः सम्भवति, नानाकर्मविपाकजनितवितनितचतुरशीति लक्षपरिमिताऽमितयोनिगमननिर्गमनमहाक्लेशाऽसहिष्णुः प्रभविष्णुमेव महाविष्णुं सम्भविष्णुनिजनाथमनाथनाथमेव संसारपाथोधितरणाय शरणीकरोति । तदा परमकारुणिकः स निःसाधनजनप्रियः सतताऽपन्निगडितमवेक्ष्य प्रपन्नं समुद्दिधीर्षुस्तदीय - क्लेशलेशमप्यक्षिश्लेषमनुभूय सपदि द्रुतहृदयोदयाकूपारो ह्यपारकरुणां वितरन्-सद्यस्तं कृमि कीट पतङ्ग पशुपक्षिप्रभृति ज्ञानविज्ञानशून्याऽकिञ्चनकरयोनिगमनागमन बन्धनान्मोचयित्वा सर्वविधविवेकोल्लास-विलसित-सकलसाधनोपयोगिनीं मानवीयां तनुं ह्यतनुविज्ञानविजृम्भितां प्रयच्छति तस्मै समस्मै पुरुषार्थाय ।

तदानीं जीवो भगवदनुकम्पाबलमवाप्य निजाऽनुशयसहचरत्वमवाप्य यथाक्रमं चन्द्रलोकात्सञ्चरन् आकाशं ततोवायुम् वायोः तेजसि तेजसोऽभ्रं, अभ्रान्मेघं मेघाज्जलरूपतां गच्छन् भूमौ वर्षति तत भूमिमवाप्य अन्नादिषु प्रवर्तते, अन्नरूपाः सन् यदा भगवदनुकम्पया रमणीयां योनिमापित्सुः मनुजश्रेष्ठैर्भक्षितोऽन्नरूपः, स तस्य शरीरे क्रमेण रसवीर्यतामासाद्य-जननीजनकयोः संसर्गेण मातुर्गर्भे पञ्चमहाभूतात्मकं पिण्डमुपलभ्य तस्मिन् क्रमेण—'एकरात्रेण' 'कलल' रूपः, सप्तरात्रेण 'बुदबुद' रूपः, पञ्चदशदिनेषु सत्सु 'पिण्डात्मकः', तथा मासे काठिन्यमुपगतः, द्विमासे शिरोभागविवृत्तिः, मासत्रये पादाद्यानां पृथक् भवनम् ( उद्भवः ), मासचतुष्टये गुल्फजठरादीनां समुद्भूतिः, पञ्चमे मासि पृष्ठवंशोद्गमो दार्ढ्यञ्च, षष्ठे मासि मुखनासिकादीनां सम्भूतिः, अथ सप्तमेमासि जीवेन सह संयुक्तो भवति, पित्रोः रेतसमुद्भवोऽयं-पिण्डात्मकः कायः । अष्टमे मासि सर्वलक्षणसम्पन्नः पितुरेव प्राधान्यात्पुंस्त्वं प्राप्तो मनोबुद्ध्यादिभिर्युक्तः क्षुत्पिपासानुभवं कुर्वन् तिष्ठति, ततो नवमे मासि मातृभुक्तपीताऽन्नपानादिनैव स्वात्मनः पोषमापन्नः [ मात्राऽशित पीत नाडीसूत्रगतेन स्वप्राणानाप्यायमानः ] निजपूर्वयोनिसहस्राणि संस्मर्य्य, तैस्तैः शरीरैः कृतानि सकलानि-

पुण्यपापमयानि कर्माणि स्मारं स्मारं, गर्भवासजन्यं कष्टमनुभवन्, स्वात्मनो विवशताञ्च ज्ञात्वा तस्मात्सङ्कटाच्छीघ्रमेव मोचनार्थं भगवन्तं जगद्विधातारं स्वात्मनस्त्रातारं श्रद्धया भक्त्या च स्तौति,—प्रार्थयते च नाथ ! येषां परिजनानां कृते उचितानुचितानि नानाविधानि कर्माणि कुर्वन् तेषां भरण पोषणं कृतवान्, ते तु सर्वे मामेकाकिनमेव परित्यज्य, फलभोगसौख्यानि भुक्त्वा, न जाने कुत्र गताः, केवलमेक एवाहं तत्कृतानां कर्मणां फलं भुनज्मि, दुःखौघवारिनिधौ निमग्नो न पश्याम्यधुनाऽस्य प्रतिक्रियाम्। परन्तु प्रभो प्रतिजानेऽहं 'यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरम्', 'यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये नारायणम्' अशुभक्षयकर्तारं फलमुक्तिप्रदायकम्।' यदि योन्याः प्रमुच्येऽहं ध्याये ब्रह्म सनातनम्' इति सकरुणं प्रार्थयते। अपारकरुणासागरः, आर्तत्राणपरायणः, सद्यस्तं गर्भवासदुःखादुद्धरति।

स च सूतिमारुतेन प्रेरितो योनिद्वारमासाद्य यन्त्रेण, आपीड्यमानो, महता कष्टे सङ्कुचितपरिपीडित-सर्वाङ्गः, सूक्ष्मद्वाराद् कथञ्चन भगवदनुग्रहेण बहिर्निःसृतो जीवो, भूमिं स्पृशन्नेव, अवाक्शिरा:निपतितो, जातमात्र एव वैष्णवेन वायुना, भगवतो जगन्मोहिन्या मायया च संस्पृष्टो व्याकुलश्च, समस्तं ज्ञानं, सकलां स्मृतिं जन्मजन्मान्तरीया, सहसा विस्मरति, नावेक्षते च स्वरक्षकं, तत्सङ्कटान्मोचयितारं समुद्धर्तार भगवन्तं, तदा विवशः सन् अज्ञानावृतः केवलं रौरवीति, न किमपि कर्तुं पारयति। अहो भगवन्माया बलीयसी।

उक्तञ्च भगवतैव :—"दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥"

(गीता० ७। १४)

अतो जीवात्मात्वज्ञानी, मायापरवशो न किमपि कर्तुं शक्नोति, न स्मरति केवलं भगवदाश्रय एव तदुद्धारको मायाऽपहारकः अतो भगवतः शरणागतिरेव श्रेयस्करी जीवानां, नान्या काचन प्रपत्तेः परेति। शम् ॥

# त्रयस्त्रिंशत्तमः परिच्छेदः

समुदितभास्करमण्डलस्य सर्वतः प्रसरणशीलाः मरीचयः समन्ताद् विततं नैशं तमः समुत्सारयन्त्यः सकललोकान् स्व-स्वव्यापारे प्रेयसे श्रेयसे तेषां, यथानियमं प्रवर्तयन्त्यः, स्वस्वामिनं भगवन्तं भास्वन्तं, कर्मसाक्षित्वेन, लोक चक्षुष्ट्वेन, समलङ्कारयन्त्यः, समस्तभवनमण्डलं सुदूर-दूरतरमेव प्रसारयन्ति निजमहिमानम् समलङ्कुर्वन्ति च, धरणिमण्डलम् । तद्वदेव श्रीमद्रामानन्दाचार्याणां प्रवचनमाधुरी माधुर्य्याणाम्, निजविषयप्रतिपादनचातुरी तुरीवेमानुकारियुक्तिशतप्रकरैर्निर्मापयन्ती भक्तजनमानसपटले पटलेखां भक्तिरेखाम्,—सुलभसरस भगवद्भावनिर्झरिणीशीतलयन्तीव संसारानलज्वालावलीसन्तप्तं स्वान्तं नितान्तज्ञानविपित्सूनां पिपासूनाम् ), चञ्चलचपलेव चञ्चन्तीसुयशस्ततिरपि सुदूरदूरं सद्यः प्रस्फुरितकिरणा–शारदशशधरशुभ्राऽऽभेव समाह्लादयन्ती समागतशुश्रूषुगणमानसानि व्याप्नोति स्म निःशेषं मालवप्रदेशम् ।

आयान्ति स्म सुश्रुतकीर्तयः प्रदर्शित भगवद्भक्तिप्रीतयो दविष्ठप्रदेशाऽऽगता विशिष्टा विद्वांसो, विलक्षणप्रतिभाजुषो भक्तियुषः । मीमांसकाः कर्मठाः, वैदिकाः, याज्ञिकाः, लोकायतिकाः, वैज्ञानिकाः, भक्ताः अनुरक्ताः समासक्ताः प्रसक्ता लौकिकोपभोगेषु, किंवहुना तत्रत्याः प्रसिद्धाः सिद्धाः समुपासकाः शाक्ताः कौलभक्ता अपि समाययुः । तेष्वेकतमोऽग्रगण्यः श्रीकार्तिकेयचरणनामा श्रद्धाप्रवृद्धादरः समुपसृत्य प्रणम्य च श्रीस्वामिचरणान् गन्धाद्युपचारैः सम्पूज्य च प्रगान्तगभीरया धीरया वाचा सप्रश्रयं सविनयं प्रोवाच —आचार्यवर्याः ! सुचिरदारिद्र्यदुर्दैवसमासादनविषण्णचेताः क्वचनाऽन्नकणानादातुमटन्नद्धपथेऽपारं रत्नधनराशिमवाप्य तृष्णाव्याकुलितलोललोचनः सुलभसुखद-कल्पनाशतसंकल्पशोचनो न विमोक्तुं शक्नोति, प्रभवत्यपि च न यथेष्टं सञ्चेतुम्, कुर्वन्नपि सञ्चयं न भवति तृप्तो न वा तर्पयत्येवाऽऽत्मानम्, कामयते च ानन्तजन्मपर्य्यन्तं तर्तुं दैन्योदधिम् । भर्तुं वा भवनकोषम्,

तथैवाऽस्माकीना स्थितः समुपलभ्यानन्तगुणापारं समुपदेशामृतकूपारम्, पायं पायमपि प्रवचनसुधास्वादं प्रबलतरा जागर्ति ज्ञानपिपासा। सञ्चिन्वतामप्युपदेशमहारत्नानि न तृप्यति स्वान्तरात्मा।

किञ्च भक्ति-प्रपत्तिविवेचनंविश्लेषणपुरःसरं समाकर्ण्यमुखस्यति पुनःप्रार्थयितुं शुश्रूषा-यदधुना 'शरण्य-शरण' स्वरूपप्रतिपादनेन समनुगृह्णन्त्वस्मानिति जरीजृम्भते समेषामेषा जिज्ञासा। इति विज्ञाय भगवदनुरक्ति, समुपदेशश्रवणासक्ति, प्रश्नमतिगभीरं श्रुत्वा परमानन्दनिमग्ना इव प्रशशंसुः श्रीमदाचार्याः।

तदा श्रीकार्तिकेयचरण-विहित जिज्ञासां विज्ञाय भक्तजनस्वान्तं संतर्पयितुं समुपक्रममाणाः श्रीरामानन्दाचार्याः वेदोक्तशान्तिपाठमुदीर्य स्वाशीर्भिरभिनन्दयन्तः प्रवचनसुधावर्षणमारभन्त—भगवदीयाः शुश्रूषवो जिज्ञासितारः!

'इममेव प्रश्नं श्रीमदगस्त्यमहामुनिः श्रीहनुमन्तं पप्रच्छ-तदा श्रीहनुमान् समुदतरत् :—

'ज्ञेयं प्राप्यस्य रामस्य रूपं प्राप्तुस्तथैव च।
प्राप्त्युपायं फलञ्चैव तथा प्राप्ति विरोधि च।' (हनुमत्संहिता)

इत्यनेन—'शरण्यः' परब्रह्म श्रीरामः प्राप्यः, तस्य स्वरूपं, किञ्च प्राप्ता जीवः, शरणः ईश्वरांशः, अविनाशी, नित्यश्चेतनः, तथैव परब्रह्मप्राप्त्युपायो विवेकः, यो हि 'अर्थपचक' शब्देन वैदिकपरिभाषायां प्रसिद्धः, तथा च फलमपि भगवत्प्राप्तिरूपम्, तत्र च भगवत्प्राप्तौ यः कश्चन-अन्तरायो (विघ्नोऽपि) पतेत् तस्यापि ज्ञानमावश्यकमेव इति विज्ञाय प्रवर्तेत। तथाहि—भगवच्छरणागतौ पञ्चविधं ज्ञानमपेक्ष्यते (१) शरण्यम् (२) शरणम् (३) विवेकः (प्रात्प्युपायः) (४) प्राप्तौ मध्यापातो विघ्नः (५) फलम् (भगवत्प्राप्तिः) इति विज्ञायैव शरणागतिं साधयेत्।

तत्र 'प्राप्यो' नाम यल्लब्ध्वा जीवः कृतार्थो भवति, यश्च मानवकल्याणाय दृढसङ्कल्पः परमकारुणिकः सर्वदैव तदुपास्यो जीवैः परमपुरुषार्थरूपः। भगवाञ्छ्रीरामः। तथाहि :—

"दिव्यानन्तगुणः श्रीमान् दिव्यमङ्गलविग्रहः।
षड्गुणैश्वर्यसम्पन्नो मनोवाचामगोचरः॥
वेदवेद्यः सर्वसाक्षी सर्वोपास्यः स्वतन्त्रकः।
नित्यानां नित्यभक्तानां भोग्यभूतः श्रियः पतिः॥"

अर्थात् दिव्यमङ्गलमूर्तिः, पोषणत्व-भरणत्व-आधारत्व-शरण्यत्व, व्यापकत्व, कारुण्यादि षड्गुणैश्वर्य सम्पन्नः सर्वतन्त्र स्वतन्त्रः, चराचरसाक्षी, अगणिताऽनन्दो भक्तवत्सलः श्रीराम एव प्राप्यः। किञ्च :—'ब्रह्मविष्णुमहेशानां कारणं सर्वव्यापकः मूलं तु ह्यवताराणां धर्मसंस्थापकः परः।'

तथाच :—'यस्यांशेनैव ब्रह्मविष्णुमहेश्वरा अपि जाता महाविष्णुर्यस्य दिव्यगुणाश्च स एव कार्यकारणयोः परः परमः पुरुषो रामो दाशरथिर्बभूव' (अथर्व–) श्रीरामतापनीयोपनिषदि च 'यो वै श्रीरामचन्द्रः स भगवान् यत् परं ब्रह्म, भूर्भुवः स्वस्तस्मै वै नमोनमः' श्रीसनत्कुमार संहितायाम्—'श्रीरामः सत्यं परं ब्रह्म रामात् किञ्चिन्न विद्यते।'

"द्विभुजश्चापहस्तश्च, भक्ताऽभीष्ट - प्रपूरकः।
वैदेहीवल्लभो नित्यं कैशोरे वयसि स्थितः
एवं भूतश्च ज्ञातव्यो रामो राजीवलोचनः॥"

नारदपञ्चरात्रे

"द्विहस्तमेकवक्त्रञ्च शुद्धस्फटिकसन्निभम्। सहस्रकोटि वह्नीन्दुलक्षकोटयर्क-सदृशम्। मरीचिमण्डलेसंस्थं बाणाद्यायुधलाञ्छितम् किरीटहारकेयूर वनमाला-विभूषितम्। पीताम्बरधरं सौम्यं रूपमाद्यमिदं हरेः॥"

श्रीरामतापनीयोपनिषदि—"ततः सिंहासनस्थः सन् द्विभुजो रघुनन्दनः।
धनुर्धरः प्रसन्नात्मा सर्वाभरणभूषितः॥"

स तादृशस्वरूपो भगवाञ्छ्रीरामः एवं शरण्यम्" स एव प्राप्यः। इति

२ (प्राप्ता) यो हि प्राप्यं वस्तु प्राप्तुं शरण्यं लब्धुं यतते स एव प्राप्ता।

स हि प्राप्ता जीव एव, यो हि भगवतो ह्यंशभूतः अविनाशी चेतनो नित्यश्च शरणेप्सुः। सहि

"(हनुमत्संहिता"—)

"स्थूलसूक्ष्मकारणतो भिन्नं, कोषचतुष्टयात्।
जाग्रत्स्वप्नाद्यवस्थानां साक्षिभूतं तु सर्वदा॥

"चिदानन्दमयं नित्यं दिव्यविग्रहसंयुतम्।
अखण्डैकरसं, चैव कैशोरे वयसिस्थितम्"

द्विभुजं सत्त्वसम्पन्नं ईशसेवाप्रयोजनम्।
प्रभोर्नियाम्यं शेषञ्च ज्ञातव्यं स्वस्वरूपकम्॥"

"जीवस्वरूपं हि स्थूल-सूक्ष्म-कारण - शरीरेभ्योभिन्नं, अन्नमय, प्राणमय, मनोमय-विज्ञानमयेति कोषचतुष्टयादपि भिन्नं (आनन्दमयरूपाशयम्), अखण्डं, एकरसं,

सत्त्वसम्पन्नं, भगवत्सेवापरायणम्, यस्य नियामकश्च-श्रीराम एव, तदंशभूतश्च सः भगवतः प्रपत्तिमेव कामयमानो भगवद्दासः ।

किञ्च-- "नित्योऽज्ञश्चेतनोऽजः सततपरवशः सूक्ष्मतोऽत्यन्तसूक्ष्मो
भिन्नोवद्धादिभेदैः प्रतिकृपणमसौ नैकधा सूरिवर्य्यैः ।
श्रीशाऽऽक्रान्तालयस्थो निजकृतिफलभुक् तत्सहायोऽभिमानी
जीवः सम्प्रोच्यते श्रीहरिपदसुमते तत्त्वजिज्ञासुवेद्यः ॥"

अर्थात्—जीवो नित्यः आदिमध्यान्तहीनः भगवदपेक्षयाऽल्पज्ञः, अजन्मा, चेतनः भगवदधीनः सूक्ष्मातिसूक्ष्मरूपः प्रतिशरीरं बद्धो मुक्तश्च, नित्यः, बुभुक्षा,-मुमुक्षाऽऽदिभेदैरभिन्नोऽपि भिन्नः स्वकर्मफलभोक्ता स्वात्मानं बद्धं मुक्तं, अहंममेतिग्रहग्रस्तमेव मन्वानो भगवच्चरणपङ्कजचञ्चरीकस्तत्त्वजिज्ञासुश्चेति ।

भगवताऽऽप्युक्तम्--"न जायते म्रियते वा कदाचिद्, नायं भूत्वा भविता वा न भूयः।
( गीताः २।२० ) अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥"

(एवमेव कठोपनिषदि—) "न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥'

वृहदारण्यके ३।७।३-२३) ("यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यमयत्येष स आत्मा०)
किञ्च—"द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरेकः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्योऽभिचाकशीति ॥"(मुण्डकोपनि ०३।१)
पुराणेष्वपि-"द्वासुपर्णा०-तयोरेकः खादति पिप्पलान्नं, अन्यो निरन्नोऽपि बलेन भूयान् ।"

इत्थं जीवेश्वरयोः परस्परं सम्बन्धः, सखित्वम्, सहचरत्वम्, साक्षित्वादिकं वर्णितम् । जीवस्य सांसारिकपदार्थोपभोगे बद्धत्वम्-ईश्वरस्य च भोगराहित्ये स्वातन्त्र्यञ्चेति ।

ये हि स्वकीयमानन्दरूपत्वं विस्मृत्य-असत्यरूपाया मायाया मोहे निपतित एवाऽऽत्मानं आनन्दमयमेव मन्वते । किञ्च काम क्रोध लोभ मोह मद मात्सर्य्यादिविकारावृत्तो मानवीयां तनुं प्राप्यापि भगवदाभिमुख्यं न भजन्ते, प्रत्युत-परनिन्दायां, पराऽपकारे, दुर्जनसङ्गे प्रसक्तिम् सत्संङ्गादि प्रातिकूल्ये रुचिम् भगवत्सेवाया विरक्ति, सांसारिक कामिनीकेलिरंगेऽनुरक्ति, लौकिकभोगेषु समासक्तिः किञ्च न्याये अन्याये, अधर्मकर्मणि असत्ये अहङ्कारे दम्भे माने मदे क्रूरत्वे कर्मण्यकर्मणि शठतायां दुर्जनतायां, निर्लज्जतायाञ्च विविध दुष्कर्मणि प्रवृत्तिञ्च सेवन्ते तदनुरूपञ्चैव फलमेव भुञ्जन्तोऽपि सौख्यं मन्वते किंवा तुदन्त्यात्मानमपि त एव बद्धा जीवाः त एव आसुरा आसुरभावापन्नाः कथ्यन्ते । ( गीतायामपि १६ । १०–२० )

"काममाश्रित्यदुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥

अनेकचित्तविभ्रान्ता मोहजालसमावृता ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेशुचौ ।

"तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥

'आसुरीं योनिमापन्ना मूढाजन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥

एतादृशा आसुरभावाऽभिभूता अपि जीवाः भगवदनुग्रहेण कदाचिदपि केनापि व्याजेन कथञ्चिदपि भगवदभिमुखा भवन्ति यथा, तदैव तेषांमुद्धारः यथा स्वसुतव्याजेन 'नारायण' इति चतुराक्षरनाम्ना व्याजहार तदा यमदूतभ्यो भयमापन्नोऽप्यजमिलो समुद्धृतिमवाप—यतोहि भगवान् जीव समुद्दिधीर्षुः स्वयमनुग्रहं कृत्वा तद्धृदयस्थः तदघं विधूय तमेव निष्कल्मषं कृत्वा समुद्धरति । तेषां भगवत्स्मरणेनैव श्रेयः ।

ये हि सर्वदैव सतां महतां सत्सङ्गे शास्त्राऽभ्यासेन सद्गुरूपसत्त्या च अहरहो भगवद्दर्शन-भगवद्गुणानुवाद-कीर्तनादौ, प्रतिक्षणं भगवदर्चने च संरताः, अहन्ताममतात्मकञ्च संसारं क्षणिकसुखमनित्यं विज्ञाय स्वात्मानं शुद्धं बुद्धं लौकिकविषयातीतं नित्यमपरिच्छिन्नं नित्यानन्दमयं निश्चित्य मोक्षसाधनानि समाकलयन्ति प्रतिपलं भगवच्चरणारविन्दमनुसेवन्ते चञ्चरीकायमाणचेतसः । ते हि मुमुक्षवः ।

"बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥
(गीता १८ । ५१-५३)

'ध्यानयोगपरो नित्यं वैराग्यं समुपश्रितः ।
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥'

इत्थं योहि ब्रह्मभूयाय कल्पते स एव भगवत्पादाऽधिकारी मुमुक्षुर्जीवः ।

किञ्च मुमुक्षुर्हि स्वाराध्यं भगवन्तं श्रीरामं श्रीकृष्णं वा प्रतिक्षणं प्रत्यक्षीकर्तुं सर्वदैवातुरस्तिष्ठति, अतोऽहरहोध्यानात् तन्मयत्वमवाप्य तद्रूपमेव लभते । एषैव मुमुक्षोः सिद्धावस्थेति ।

# अधुना मुक्तजीवानां स्थितिर्विविच्यते

मुक्ता जीवास्त एव निगद्यन्ते ये हि-कर्मणा वचसा मनसा श्रद्धया च परमया षड्गुणैश्वर्यसम्पन्नं भगवन्तं श्रीरामं यावज्जीवनं समुपासमानाः, भगवदनुकम्पालब्धापूर्वमाहात्म्याः, नित्यनैमित्तिककर्मकुर्वाणा अपि तत्कर्मफलनिराकांक्षाः, स्वतो भगवत्प्रेरणयैव विहितसकल - देहधर्माणो, लौकिकालौकिकोपभोगबहिर्मुखनिखिलेन्द्रियव्यापाराः, आविर्भूतभगवद्गुणाः, प्रतिपलं भगवन्तमेव श्रीरामं स्मरन्तः प्रतिश्वासञ्च श्रीरामनामकीर्त्तयन्तः, प्रयाणकालेऽपि कोटिकन्दर्पलावण्यं मानसमन्दिरे विराजमानं ध्यानयोगेन प्रत्यक्षमक्षिविषयं कलयन्तः, स्वतो निर्मुक्त लौकिकमंबन्धना निरिन्धनाऽविन्धन ( विद्युत् ) स्वरूपभूताः, अर्चिरादिमार्गमासाद्य, सुसमुत्क्रान्तप्राणाः ज्योतिर्लोकानतीत्य सूर्यमण्डलीयोर्द्ध्वं साममण्डलं समुत्तीर्य ह्यमानवेन समागतेन भगवत्प्रेरितेन विद्युत्पुरुषेण सह महर्लोकान्तरिक्षं निर्भिद्य जनलोके परमेष्ठिमण्डलमवाप्य,-नित्यसाकेतधाम-गोलोकधाम नित्यानन्दधाम लभन्ते, यथेच्छं भगवता सह विहरन्ति। प्राणोत्क्रमणात् प्राक्कालेऽपि, जीवनाऽवसरेऽपि मुक्तभावेनैव निवसन्तः, सर्वदैव भगवत्सेवां विदधत एव तिष्ठन्ति, लौकिककामक्रोधादिकमायिक - कर्मबन्धनबहिर्भूताः, प्रभूतानन्दकौशल्यानन्दनन्दननतमस्तकाः, समस्तकालकर्मस्वभाव-प्रभावऽनभिभूताः, भूताऽनुकम्पिनो, महामनस्विनो राजन्ते ते एव जीवनमुक्ताः विरक्तोत्तंसाः परमहंसाः भवन्ति।

उक्तञ्च :—"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते, तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्. आपूर्यमाणपक्षाद् यान् षड् उदङ् एति मासांस्तान्। मासेभ्यः संवत्सरं, संवत्सरादादित्यम्, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः, स एनान् ब्रह्म गमयत्येष देवयानः पन्थाः। इति ( छान्दोग्योपनिषदि-अध्याय ५ खण्ड १० मं० १–२ ) किञ्च ( छान्दोग्ये–७। २६। २ ) 'तदेषः श्लोको न पश्यो मृत्युं, पश्यति न रोगं, नोत्त दुःखतां, सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति, स एकधा भवति त्रिधा भवति,—'पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं च दश चैकश्च सहस्राणि च विंशतिः।' इति मुक्ता जीवा अनेकविधाः संकल्पमात्रस्वरूपा भगतत्सेवार्थं यदा यस्य स्वरूपस्यावश्यकता भवति तदेव तत्क्षणं विदधते। यथा श्रीहनुमदादयः समयानुरूपं कपीश-मानवादिरूपाणि भजन्ति स्म। सर्वदैव भगवत्कैङ्कर्य्यं समाचरन्ति। एतादृशा एव जीवा मुक्ताः कथ्यन्ते।

श्रीहनुमदादयो हि सर्वात्मना भगवत्सेवानिरताः भगवद्रूपा एवे मन्यन्तो यतो हि भगवद्धर्माः भगवद्गुणा-भगवदनन्यभक्ताः सर्वं एव नित्याः मुक्ताः शुद्धाः भगवद्रूपा एव। ४ नित्याजीवाः अपि त एव भवन्ति ये हि सदा भगवत्सान्निध्यं सेवन्ते (विदधति च सर्वात्मभावेन प्रभोः सेवाम्) प्रभुदत्तस्य समस्तैश्वर्यस्य भगवदुपयोगे प्रयोगं कुर्वन्तो भगवदुपभोग्यैश्वर्यादिकमेव साक्षात्कारीभूतसुखमिवात्मन [भगवति कृतमेव स्वात्मनि कृतं०] मन्यमानाः अहर्निशं भगवद्धयाने निरन्तरस्मरणे एव आनन्दमग्नाः स्वात्मानमपि विस्मरन्तः प्रतिक्षण भगवदनुग्रहानन्दजुषः अवतारदशायामपि भगवदाज्ञया प्रभुनिर्दिष्टविग्रहं। पशु-पक्षि वानर नरादिशरीरं धारयित्वा प्रभुणा सार्द्धं, तत्रैव यत्र प्रभुः प्राकट्यमेति तत्रैव स्वयमपि समुत्पद्यन्ते, समनुभवन्ति च प्रभुणा साकं नित्यानन्दलीलासुधाम्, समर्पयन्ति निजभाग्यवत्ता-बोधिनीं प्रबोधिनीं सर्वदा सेव्यसेवकीयाऽविच्छिन्नपरम्परां, तत्कर्माऽनुकारिणीं भगवदिङ्गितां भगवदालिङ्गिताधिदेवां स्वकीयां सेवाम्। निरन्तरं भगवत्यनन्यभावाः सर्वदैकाऽग्रधियो न भणयन्ति भगवदिच्छानुरूपं तत्प्रेरणयैव लब्धं 'पुनरपि जननं पुनरपि मरणम्' अपि, यदि भगवत्प्रीतिकृतं भवति तर्हि तदपि गृहीतुं संनद्धाः, स्वर्गं नरकादिकं पातालादिकमपि भगवत्कायार्थं गन्तुंसाभिलाषाः न व्यथन्ते, क्वचन भयङ्करादप्यतिर्भयावहे कर्मणि प्रवर्तमाना अपि न विषीदन्ति, न क्वचन म्रियन्ते न जायन्ते अपितु यथाकार्यं भगवदर्थमाविर्भवन्ति, तिरोभवन्ति, त एव लब्धभगवच्छक्तिकाः सर्वदा भास्वानिव भासन्ते यथा श्रीहनुमान् विभीषण-बलि-व्यासादयः।

५ केवल जीवाः—केवल जीव शब्दवाच्या त एव कथ्यन्ते, येहि - अष्टाङ्ग (यम नियम आसन प्राणायाम प्रत्याहार धारणा ध्यान-समाधि रूप) योगं समभ्यस्य, योगाभ्यासवशीकृतसर्वेन्द्रिगणा विशुद्धात्मानः, सन्तत स्वात्मनि (निजहृदयारविन्द-मन्दिरे) सर्वदा विराजमान भगवन्तं दर्शं दर्शं 'तदृदर्शनाह्लादविधूतहृद्रुजः' स्वात्मन्येव स्वात्मना (परमात्मना) सहैव रमन्ते यावच्छरीरावधि, ततः समये भगवत्सायुज्य-सौख्यानुबुभूषवः ब्रह्मरन्ध्रं भित्वा प्रयान्ति।

इत्थं जीवनां पञ्चविधाः कोटयो भवन्ति सकलैताः सनातनगताः सन्ति, सभेद-प्रपञ्चमेषां भेदानां ज्ञान विधाय भगवच्छरणागति-भावापन्नाः जीवाः प्रवर्तन्ते भगववद्भक्तौ तेषां मार्गो निष्कण्टकः स्फीतः सुसाध्यो भवति। उक्तस्वरूपं प्राप्यस्य भगवतः, प्राप्तुश्च जीवस्येति सम्यग् विज्ञाय-ततो भगवतः प्राप्त्युपायोऽन्वेष्टव्यः, स हि कः ? किं स्वरूपश्चेति विविच्यते।

# अथ तृतीयो भगवत्प्राप्त्युपायो निरूप्यते

'यैरुपायैः प्राप्ता जीवः स्वकीयं समुपास्यं, परमप्रेष्ठं, परमात्मानं सरलरीत्या प्राप्यम् प्राप्तुं समर्थो भवेत्-ते समुपाया ह्येते एव :—

"सर्वभूतदया चैव सर्वत्र समदर्शनम् । अन्यत्राऽनिन्दनं चैव स्वेशे स्नेहाधिकं तथा ।
"गुरावीश्वरभावश्च (बुद्धिः) तदाज्ञापारिपालनं । स्वेशस्यैतज्जनानाञ्चसेवनं मायया विना ।
"प्रभोः कृपावलम्बित्वं भोक्तव्यं तत्समर्पितं । सच्छास्त्रेषु च विश्वासः प्राप्त्युपाया इमे स्मृताः ।। (इति हनुमत्संहिता)

अर्थात् प्राणिमात्रं प्रति दया, समदृष्टित्वं सर्वत्र, परनिन्दाविवर्जनम्, स्वेष्टदेवे सर्वतोऽधिकः स्नेहः, गुरौ अपि भगवद्भावना, गुरोः आज्ञापालनम् निश्छलभावेन, भगवदीयेषु ( वैष्णवेषु ) सद्भावपूर्वकं सेवनविधिः, सर्वदा केवलं भगवदवलम्बनमेव, लौकिकसकलवस्तूनां अन्नपानादीनामपि-भगवते सर्वं समर्प्यैव - स्वात्मनः पोषार्थं ग्रहणम् । असमर्पितवस्तूनां सर्वथा परित्यागः, भगवच्छास्त्रेषु ( गीता भागवत रामायणादि समस्त भगवद्गुणकीर्तनपरेषु ) सुदृढो विश्वासः । इत्यादिकाः सर्वे भगवत्प्रीति-पोषका-लौकिकस्वार्थाऽन्धमतिमोषकाः भगवत्परितोषकाः सन्ति ।

( १ ) इत्याकारका अष्टौ भेदाः सन्ति प्राप्त्युपायानाम् । तत्र सर्व प्रथमः

समुपायो 'दया'-सा हि—'परोपकारो दानञ्च, सर्वदास्मितभाषणम् ।'
विनयो न्यूनताभावः सर्वेषु समता मतिः ।।'

परेषामुपकारो हि सम्मानपूर्णेन वचनविन्यासेन सहैव दानम् किंवा तद्धित-साधनम् । दानञ्च स्वसत्त्वनिवृत्तिपूर्वकं दानीयजनसत्तोत्पादनम् । सदैव मधुरहास-युक्तं भाषणम्, नम्रता, सम्भाष्यजनोत्कर्षं प्रदर्शयन्नेव स्वात्मनो तदपेक्षया न्यूनत्व-प्रदर्शनम्-सर्वेषु आपामरजनं समानत्वव्यवहार इति षड्विधा दया भवति अनयैव मानवो मानवतां धत्ते अन्यथा स दानवो भवति । विश्वधर्मस्येदं स्रोतः, यत्र दया तत्र धर्मः, धर्मोहि वैराग्यमूलम्, तेन च भक्तिः' तया भगवत्प्राप्तिः, तदभावे न मोक्षोपि । अतश्चराचरे जगति सर्वत्र भगवन्निवासं पश्यन् दययैव व्यवहर्तव्यम् ।

अपरः समदृष्टि उपाय :—'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इति न्यायेन सर्वत्र हेयत्वोच्चत्वभावनानिरासः प्रत्युत समत्वमेव । विषमदृष्टिर्हि शरीर-भेदात् न त्वात्मनो भेदात् भिन्नतामुत्पादयति । आत्मा तु सकलप्राणिष्वेक एव । तर्हि को मूर्खः कश्च पण्डितः, ! नीचः, उच्चः, दीनो, धनी, शत्रुर्मित्रम्, लघुदीर्घः

अल्प महद् सर्वं भावना-शारीरिको वा भेदः, पशु-पक्षिणोऽप्याकारतो भिन्ना नैवाऽऽत्मना। एषैव सर्वत्र समदृक् भगवत्प्रसादसाधिका।

गीतायामपि—'समः सर्वेषुभूतेषु यः पश्यति स पश्यति'।' इति।

अन्यः समुपायः—'नैव कञ्चन निन्दयेत्' 'न प्रशंसेन्न निन्दयेत्।' इत्थं परनिन्दापराङ्मुखः सन् स्वसमुपास्यदेवं प्रति सर्वतोऽधिकं प्रेम प्रवर्तयेत्। स्वेष्टदेवः सर्वदेवेषु विद्यमानः सर्वरूपः इति मत्वैव सुस्थिरचेतसा तमेव ध्यायेत् न स्वां निष्ठां शिथिलीकृत्य इतस्ततो धावेत्। ये ह्येक विहायान्यं सेवन्ते, क्वचन देवं कदाचिद्देवीं, क्वचिद्भैरवं क्वचिच्चहनुमन्तम्, कदाचन शङ्करम् कदाचित्प्रलयङ्करं वेतालादिकम्-ते हि चर्षणी शब्दवाच्या भवन्ति जीवाः। परञ्चैतेऽपि न साक्षाद् भजन्ति भगवन्तम्, किन्तु परम्परयैव-तेषां फलमपि तथैव, क्षणिकमन्तवल्लभन्ते-अन्ततो भगवतः सर्वदेवरूपत्वात्तमेव समुपासते। किन्त्वेवं कालान्तरसापेक्षिता भवति भगवत्प्राप्तिः, तत्तन्मार्गेण तत्तन्माध्यमेन। अर्थात् अन्यदेवोपासका अपि भगवद्भक्ता एव भगवदनुग्रहेणैव तत्तदेवेभ्यः तत्तत्फलं समुपभुञ्जन्ति सीमितं तत्तद्देवाधिकारजनितमेव नाधिकम्। अधिकन्तु साक्षाद् भगवत एव समुपासनातो लभ्यते तदनन्तं निःसीमानन्दरूपम् नित्यमेव। उक्तञ्च—'येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विता=' (४)= स्वगुरावीश्वरबुद्धिः—लोके हि गुरवोऽपि सामान्यमनुष्याकारा एव भवन्ति किन्तु ते सन्मार्गोपदेष्टारः भगवत्सान्निध्यप्रदातारो भवन्ति अतस्ते साक्षाद् भगवद्रूपा एव, मनुष्यरूपेण मानवभाषया मानवीयक्रियाकलापेन सम्यक् स्वस्वरूपप्रतिपादनार्थमेव परमाग्रहं विधाय लोके प्रकटीभूय परात्मैवास्माकम् समुद्धाराय गुरुरूपेण समुपस्थितः, इत्थमेव सर्वदा भावयितव्यम्। उक्तञ्च—'गुरुरेव हरिः साक्षात्' शास्त्रान्तरेऽपि—'गुरुर्यस्य भवेद्तुष्टस्तस्य तुष्टो हरिः स्वयम्। यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ।'

किञ्च भागवतेऽपि :— 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचित्।'
न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः॥'
(स्कं० ११ अ० १७ श्लो० २७)

पद्मपुराणेऽपि— 'नास्ति तीर्थं गुरुसमं, बन्धच्छेदकरं द्विज।'

वाल्मीकिसंहितायामपि :—"गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्माता गुरुःपिताः।
गुरुर्बन्धुर्गुरुर्मित्रं गुरुरेव सुखप्रदः॥"

तथा च 'न गुरुं कोपयेत् क्वचित्" "शिवे रुष्टे गुरुस्त्राता गुरुरुष्टे न कश्चनेति।"

( तथा च वाल्मी० संहिता अ० ६ )

"रुष्टेषु सर्वदेवेषु रक्षतीह रमापतिः।
क्रुद्धे रमापतौ ह्यत्र गुरू रक्षां करोति हि॥
कोऽपि रक्षाकरो नास्ति-गुरौ संरुष्टतां गते, ।"
ततः सर्वप्रयत्नेन प्रसाद्यो गुरुरञ्जसा॥"

'ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम्।
मन्त्रमूलं गुरोर्वाक्यम्, नक्तिमूलं गुरोः कृपा॥' (स्कन्द पु० गुरुगीता)

सर्वत्रैव गुरुकृपैव प्रधानम्—सफलाऽपूर्वकर्मसाधिकाभवतीति ध्रुवम्।

(५) गुरोराज्ञाऽनुपालनम्—शास्त्रेषु भगवान् गुरुरूपेण भक्तेष्वनुग्रहं कुरुते।

अतः साक्षाद्भगवानेव गुरुः—तदाज्ञापालनमेव भगवदाज्ञापालनं भवति।
गुरोः सेवाऽपि भगवत्सेवा-तथैव गुरुः प्रीतो भवति तेनैव भगवानपि दयते सुप्रीतः।

उक्तञ्च— 'गुरुवाक्यञ्च यः कुर्याद् गुरुशुश्रूषणे रतः।
अनुल्लङ्घनमाज्ञायां-तस्य मुक्तिर्न संशयः॥'

अतो भगवदीयानामनन्यवैष्णवानां कर्तव्यमेतत् यत्ते गुरोराज्ञां पालयेयुः।

(६) भगवतो भगवद्भक्तानाञ्च सदासेवनमेव षष्ठः समुपायः—

यतो हिः—'भक्तो भक्तिर्गुरुः साक्षाद् भगवानिति चतुष्टयो।" (वांश्च)
एकैव ब्रह्मणो मूर्तिर्नाम्ना भेदः प्रदृश्यते।"

किञ्च— 'न मे पूजा तथा प्रीता भक्तानां पूजनं यथा'।
भक्ताः सम्पूजिता यत्र तत्रैवाहं सुपूजितः॥" (इति भक्तिसारे०)

यतो हिं—अहमेव सर्वदा भक्तानां हृदये तिष्ठामि-सन्तुष्टे च भक्तहृदये स्वत-एवाहं तुष्टः 'उक्तञ्च भगवता—'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज।' 'नाह-मात्मानमाशासे मद्भक्तैः साधुभिर्विना' किञ्च—'साधुभिर्ग्रस्तहृदयो-भक्तैर्भक्त-जनप्रियः।' अतो भगवतः सेवा, तथैव भक्तानामपि करणीया।

(७) भगवतः कृपायाः अवलम्बनम् (सुदृढो विश्वासश्चेति)

'यावन्नोदेति विश्वासो न सिद्धिस्तस्य कर्मणि।'
'विश्वासेनैव सिद्ध्यन्ति कार्याणि भुवि नान्यथा।' उक्तञ्च गीतायामपि—
'श्रद्धामयोऽयं पुरुषः यो यच्छ्रद्धः स एव सः।' श्रद्धैव विश्वासः।
'विश्वासः फलदायकः' अन्यथा तु 'अज्ञश्चाऽश्रद्दधानश्च, संशयात्मा विनश्यतीति' विरुद्धफलमुपलभ्यते।

उक्तञ्च गीतायाम्:—'सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
(अ०१२/श्लो.१४) मय्यर्पितमनो बुद्धिर्यो मद्भक्तः स मे प्रियः।'

किञ्चः—'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याऽभियुक्तानां योगक्षेमं वहाम्यहम्॥' (९।२२)

इति स्वप्रतिज्ञानुसारं भगवानवश्यमेव मे रक्षां विधास्यतीति सुदृढो विश्वासः। भक्तानां कृते नितान्तमावश्यकः।

(८) भगवदर्पितस्यैव ग्रहणम्-असमर्पितवस्तु-परित्यागः—

संसारे यावन्तः पदार्था मनुजोपभोग्याः सन्ति, ये च प्रत्यहं समुपयोगे समुपादीयन्ते ते सर्वे—सर्वप्रथम स्वप्रभवते भगवते समर्प्यैव भगवत्प्रसादरूपेणैव ग्राह्या नान्यथा—यदि भगवद्दत्तं समुत्पादितं, समुपस्थापितं वा पदार्थं भगवते ह्यनिवेद्य न स्वात्मन उपयोगेऽपि स्वीकार्यम्। उत्तोत्तमवैष्णवास्तु–दैनिकोपयोगिवस्तुजातमपि भक्ष्य-पान-द्रव्यं अपि-यदा यदा स्वीकुर्वते नितान्ततृषाविक्लान्ता अपि जलं कामयन्ते पिबन्ति च तदा तज्जलमपि भगवत्प्रसादि भवेदन्यथा नवीनं कूपादुद्धृत्याऽऽनीतञ्चेत् तत् प्रथमं क्षणं नेत्रे निमील्य ध्यानगम्यस्य स्वेष्टदेवस्य सम्मुखे संरक्ष्य भावनया समर्प्यं च ततो गृह्णन्ति—तथैवाचरितव्यं भगवदीयैः। यः प्रभुः सर्वमस्मभ्यं वितरति तस्मै समर्पणमकृत्यैव ग्रहणो, संग्रहीता स्तेनो भवति भवति च दण्डभाक् 'यो भुंक्ते स्तेन एव सः, स स्तेनोदण्डमर्हति।' यतो हि जगति यावन्त पदार्थाः सन्ति सर्वे ते भगवद्भोग्या एव, तानेव नः प्रभुः स्वभक्तेभ्यो ददाति स्वानुग्रहफलभूतान्। अतो भगवत्कृपालब्धं वस्तु भगवते निवेद्यैव ग्राह्यम्। भगवतः प्रसादं मत्वा नान्यथा। उक्तञ्च—'असमर्पित वस्तूनां तस्माद् वर्जनमाचरेत्।' प्रसादस्य फलमपि मोक्ष एव। 'परं मोक्षमवाप्नोति प्रसादाज्जगतीपतेः।' ये हि केवलं स्वीयोदरभरण एव रता भवन्ति तेऽहर्निशं पापमेव कुर्वन्ति "भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" (गीता ३।१३) ये च समर्प्यभुञ्जते ते तु—"यज्ञशिष्टाऽमृतभुजो यान्ति ब्रह्मसनातनम्"। समर्पणं स्वयं भगवता प्रतिपादितम्—''यत्करोषि, यदश्नासि, यज्जुहोषि ददासि यत्। यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्।"
(गीता- ९।२७)

अत एव असमर्पणे पापादतिरिक्तं तु भगवदाज्ञाया उल्लङ्घनमपि भवति।

(९) (भगवच्छास्त्रेषु-वेद–गीतोपनिषत्पुराणपटल स्मृत्यादिधर्मशास्त्रेषु सुदृढो विश्वासः, शास्त्राज्ञापालनमपि सर्वात्मनेतिः—शास्त्रं नाम-ऋषि-महर्षिभिः प्रमाणत्वेन परिगृहीतं, स्वीकृतञ्चेति। यद्धि-भगवत्स्वरूपप्रतिपादकम्, भगवन्माहात्म्यवोधकम्

भवति—

तथाहि— 'ऋग्यजुः सामाथर्वाणो भारतं पञ्चरात्रकम्'।
श्रीमद्रामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतेषां शास्त्रत्वं तस्य कीर्त्यते ॥

अन्यदपि— वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि' ।
समाधिभाषा व्यासस्य, प्रमाणं तच्चतुष्टयम् ।'

एषामेव शास्त्राणां सन्ततमध्ययनं, अध्यापनम्, श्रवणं श्रावणम्, तदुक्त-विधिनिषेधवाक्यानां सश्रद्धं सानुरागं परिपालनमेव वैष्णवैर्भक्तैः कर्तव्यमेव। अकरणे तु राजदण्डवत् प्रत्यवायो भवति।' उक्तञ्च भगवता—'श्रुतिः स्मृति-र्ममैवाज्ञा, यस्यामुल्लङ्घ्य वर्तते। आज्ञाच्छेदी ममद्रोही न भक्तो न च वैष्णवः ॥ (गोतम सहिता) इत्यकरणं निन्दाऽपि। अतः शास्त्रानुसारं-दृढविश्वासेन सदाचारेण व्यवहर्तव्यम्। इति।

तत्र प्राप्तिफलम्:— 'प्रारब्धं परिभुज्याथ भित्वा सूर्यादिमण्डलम्'।
(श्रीहनुमत्संहिताः—) प्रकृते मण्डलं त्यक्त्वा स्नात्वा तु विरजाम्भसा' ॥

सवासनं देहद्वयं विसृज्य विरुजो भवेद्।
अतिवेगेन तां तीर्त्वा प्राप्य साकेतकं तथा।'

'प्रविश्य राजमार्गेण सप्तावरणसंयुतम्।
नानारत्नमयं दिव्यं श्रीरामभवनं शुभम्' ॥

तत्र श्रीभरताद्यैश्च सेव्यमानं सदा प्रभुम्।
विराजमानं वैदेह्यारत्न सिंहासने शुभे' ॥

स्वभावनयाश्रीरामं प्राप्य सर्वं सुखप्रदम्।
परमानन्दमयोभूत्वाऽवस्थानं फलमुच्यते ॥

इति निरूपणाज्ज्ञायते यज्जीवः निजप्रारब्धकर्मभोगानन्तरं भगवद्भक्ति-माहात्म्यात् भगवदनुग्रहबलसहचरः यथेच्छं अर्चिरादिमार्गेण गच्छन् सूर्य-चन्द्र मण्डला-दीनि भित्वा प्रकृतिमण्डलं समुत्तीर्य्य श्रीविरजानद्यास्तटमवाप्य स्नात्वा विरजा-ऽम्भसि क्षणं यथानियमं सुचिरविधृतभगवन्नाम निजजिह्वारंगस्थलनर्तकं स्मारं स्मारं निजवासनात्मकमुभयविधं सूक्ष्मं कारणात्मकं वा देहबन्धनं विहाय विशुद्ध-भगवद्भक्तस्वरूपं दिव्यं (अमानवं रूपं प्राप्य) जीवः भगवद्दर्शनोत्कटसमुत्कण्ठा-वेगोल्लासित-तीव्रतमजवेन विरजां सानन्दं समुत्तीर्य परम्पारं गत एव भगवत्प्रेरितैः

स्वपार्षदगणैः सादरं सुसेवितः समुदं महर्षमुपनीतो भगवत्सान्निध्यमवाप्य स्वप्राणप्रियेण सह तथा संयुक्तो भवति न यथा लौकिकदृष्टान्तविरहितापूर्वसुदृढप्रेमार्द्रहृदयो चिरविरहदूयमानस्वान्तौ नितान्ताऽऽनन्दरससम्पृक्तौ परस्परासक्तमानसौ प्रियाप्रियतमावपि-अभिन्नाऽऽकारी भवतः।

यत्र साकेतधाम्नि-भक्त-भक्तवत्सलयोः परस्परानन्दमयः सुसङ्गमो भवति तस्यैवाऽऽनन्दवहुलस्य धाम्नो वर्णनाय नाऽस्ति वैखरीवाणी पूर्णार्था पर्य्याप्ता, तत्र केवलं कल्पनासाहाय्यमेवाऽऽश्रित्य लौकिकानेवोपमानपदार्थानाधारीकृत्य, तदनुसारं वर्णनेन त्वलौकिकगुणसिन्धोः केवलमुपहास इव भवति—अतः सहृदयधुरीणैर्भावनामयमेव भावनीयं भगवद्धाम—लौकिकशब्दैस्तु नैकविधकल्पनातीतकल्पतरुतति-शतसंवलितललितलतालास्योल्लासित - वनोपवनपरिषेसितं, दिव्यदेवायितविहगकुलकलितकलकलोज्जृम्भितनवनवलास्यलालितविटपततिमनोहर - विटपिशतविलसितशालं, विविधरसाल - ताल-तमालमालायितपारिजातपटली - समञ्चितचञ्चच्चलदल-चलकरपल्लवसमाहूतशकुन्ततति-लोललीलाशतविलसितम्, प्रतिविटपि-विटपकेलिकौतुककौतुकिकलविङ्कसहस्रकलकलितशुकसारिकाशतानुकीर्तितभगवत्स्तवनश्रवणरसिकपरभृतपटलप्रकाशितनवसमागतभक्तजनसमागममुदितभगवत्स्वरूपानन्दवर्णनसमाकर्णनरसिकनिभृतपारावतपटलीविमुद्रिताद्धोन्मीलितनवनवाऽऽवलोकनसमुत्कण्ठितशिखावलसहस्रसमधिष्ठितशाखिशाखम्, अनवरतसुधारसपरिपूरित वापीसहस्रसोपानखचितनानापद्मरागाऽश्मगर्भनीलमणिविद्रुममाणिक्यप्रसृमरकिरण - निकरसङ्क्रमणसङ्क्रान्तविक्रान्तेन्द्रचापाऽनुकारिवहुविध-मरीचिमालिमरीचिपटलसम्भिन्नाऽनन्तद्युतिदीपितचतुष्पथम्-प्रतिकासारसलिलप्रसृतपङ्कजपरागणीतसुरभिनसंसर्गजनितशीतलसुरभिसमीरणमन्दमन्दस्पर्शानन्दमनुभावयन् इव दिव्यभगवत्स्वरूपाऽभिन्नविग्रहोल्लसित - पुरपुरन्दरायितपुरुषसञ्चारणाऽङ्गपद्मगन्धोन्मादितभृङ्गकुलझङ्कृतिसङ्गीतमयमिव विराजमानम् परितो नानामणिगणमण्डितरत्नप्रेङ्खितशातकुम्भकुम्भोत्तम्भितशिखरशोभिप्राकारसप्तकपरिवृतम् स्थाने स्थाने ललितलवङ्गैलालवलीविलुलितमृदुलदलकेलिरसिककुसुमगुच्छविधृतरतिसमुन्मादमत्तमधुलिण्निकरसुभगम्, सुवर्णमणिस्तम्भसमाकुलितमनोज्ञसभामण्डपमण्डितानन्तभवनराजिपरिराजित-समस्तपथम् समुत्पथाऽनुयायिजनदुरापम्, सत्पथप्रवर्तितभक्तजनसुखापम् अकामकामनाऽवापम् निःसीमानन्दगुणग्राम—भगवद्धाम समवाप्य प्रविश्य च समन्ततो विलोकयन्नेवाऽनन्दपूरपूरितान्तःकरणो भगवच्चरणैकशरणः सन् सपदि भगवत्सान्निध्यमुपनीतः सम्मुखे सुवर्णकलित मणिभवनमध्यविराजमानानन्तमणिगणसमञ्चितमञ्जुमञ्चे विभासमानं भास्वत्सहस्रदीप्तिमन्तं, चन्द्रकोटिसुशीतलं प्रसन्नवदनाऽम्भोजं परमकारुणिकं भरत-सौमित्रि ( सुमित्रानन्दन ) शत्रुघ्न हनुमत-

सुग्रीव - विभीषणाऽङ्गदादिभिः परितश्चामर - मयूरपिच्छ-व्यजनादिसमलङ्कृतहस्तैः समुपास्यमानम्, परब्रह्मानन्तकोटि - ब्रह्माण्डनायकं श्रीसीतासमारोपितवामभागं, सकलविश्वाऽभिरामं श्रीरामं स्वमनोरथरथनायकं विधृतरुचिरचापसायकं विलोक्य जीवः कृतकृत्यः सकलसमभीप्सितफलसम्पन्नो भगवदनुग्रहभाजनं समभवत्। सपदि भगवद्दर्शनाह्लादविधूतहृद्रुक् सर्वदानन्दमयं भगवत्कैङ्कर्य्यं अविच्छिन्नचरणारविन्द-मकरन्दमिलिन्दायमानत्वेन भगवद्दासत्वमवाप्याक्षय्यस्थितिं जुषमाणः सुचिरं मोदते इत्येव भगवत्प्राप्तिफलम्। भक्तेः प्रपत्तेश्चेदमेव चरमं लक्ष्यम्। मानवजीवनस्याऽपि परममिदमेव कर्तव्यम्, भगवत्प्राप्त्येव जीवनसाफल्यम् भक्ति-प्रपत्त्योः परस्परं भेदः अत्र भक्ति-प्रपत्त्योः परस्परं भेदमूलकमिदमेव रहस्यम्, यद्-भक्तौ तु स्वयं भक्त एव सर्वात्मभावेन भगवन्तं समुपासानः सार्वकालिकमेव स्मरणं कुर्वन् न मनागपि विस्मरति स्वेष्टदेवं, प्रतिक्षणं चिन्तयन्नेवाऽऽस्ते। मरणकालेऽपि स्वयमेव सावधानः सन् भक्तो भगवत्स्मरणं चरमक्षणेऽपि।

(५) भगवत्प्राप्ती-विरोधस्य (व्याघातस्य) वा स्वरूपम्:—

(श्रीहनुमत्संहितायाम्:—)

'अनात्मन्यात्मबुद्धिस्तु स्वात्मशेषित्वभावना।
भगवद्दासवैमुख्यं तदाज्ञोल्लङ्घनं तथा॥
ब्रह्मेशेन्द्रादिदेवानामर्चनं वन्दनादिकम्।
असच्छास्त्राभिलाषश्च, सच्छास्त्रस्यावमाननम्॥
मर्त्यसामान्यभावेन गुर्वादीनाऽति गौरवम्।
स्वातन्त्र्यं चाऽप्यहङ्कारो ममकारस्तथैव च॥'

जीवनशेषक्षणानां कुरुते न तदर्थमातुरो भवति स्वयं भगवान्। किन्तु प्रपत्तौ सत्याम्, सिद्धायां वा शरणागतौ, जाते च साक्षाद् ब्रह्मसम्बन्धे स्वीकृतायाञ्च तदीय-प्रपत्तौ भक्तविषये स्वयमेव भगवान् सर्वात्मना चिन्तातुरो भवति, भक्तस्तु सम्बन्धानन्तरं सद्य एव सकलचिन्तादिभ्यो विमुक्तो भवति। स्वेष्टदेवस्याऽहरहः स्मरणभारः स्वेष्टदेवोपरि स्वयं समापतति, भक्तस्तु निर्भयस्तिष्ठति।

यदा हि मरणकाले स्वभक्तः स्मरणविकलो, मूर्च्छामापन्नो भवति, तदानीं सर्वथा विपन्नं, सर्वेन्द्रियवैकल्यात् स्मरणादि-क्रियाकलापविरहितं, परवशं वा स्वजनं; भक्तवरं, सर्वात्मभावेन सुदृढप्रपन्नं, भक्तवत्सलो भगवान् पश्यति तदा स्वयं प्रभुस्तं स्मृत्वा समुद्धरति। क्वचन जीवोऽपि स्मरति चेत् तदा तस्य पूर्वाऽभ्यस्तेच्छा, प्रबलः स्नेहः सुदृढाऽऽसक्तिर्वा स्वेष्टदेवे, परन्तु क्वचन मरणकाले विकलज्ञानो, विरहितस्मरणोऽपि यदि तिष्ठेत्, तदा स्वयं भगवानेव तं स्मरति स्वशरणापन्नं भक्तराजम्। इति विशेषः।

भगवान् स्वयं स्मृत्वा, स्वयमेव तमाहूय, स्वपार्श्वे संस्थाप्य, सर्वात्मभावेन, स्वकीयाऽनुग्रहेण, परमानन्ददानेन, च तमानन्दयति । स्वयं गौणो भूत्वा, तमेव प्रधान-मुपभोक्तारं विधाय, स्वस्वरूपानन्दं प्रयच्छति । तथाहि श्रुति :—

['सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।'

गीतायामपि १८।६६] ['सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' ]

श्लोकस्यास्याऽऽनन्दभाष्ये :—

स्पष्टीकृतम् :—यत्—'स्वोपायबुद्धया, सर्वधर्माणां परित्यागः करणीय इति वर्णितः । स्वीकारस्य = स्वेच्छयाऽङ्गीकृतस्योपायस्यैव निषेधः । भगवत्कैङ्कर्य्यं-भावेन, तु, सकलाऽनुष्ठानविधानमेवाऽऽवश्यकम् । कैङ्कर्य्यभावेन धर्माऽऽराधनं कुर्वन्नेवान्तकाले, भगवत्स्मरणमावश्यकं भवति भक्ताय । उक्तञ्च [ 'अन्तकाले तु मामेव स्मरन्मुक्त्वा कलेवरं । यः प्रयाति स मद्भावं, याति नास्त्यत्र संशयः ॥' ] इति वचनात् । किन्तु भगवत् प्रपन्नोजनस्तु, भगवद्वचनात् :—

[ "सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येद्व्रतं मम ॥" ] इति—

सकृदेव गृहीतशरणागतिको जनः, सद्य एवाऽभयो भवति, अर्थात् भगवदनुग्रह-बलयुक्तः स्वच्छन्दं विहरति । भगवान् स्वयमेव तस्य सर्वविधं सौख्यं यथा भवेत्; तथैव सम्पादयति सर्वपदार्थान् । यदा च मरणकालिकीं, व्यामोहनिद्रां, निश्चेतन-मयीं मूर्च्छां वा, श्रितः, सर्वथा स्मृतिहीनो भवति तदा स्वयं भगवानेव, तत्स्मरणं कुरुते, तदुद्धाराय च प्रयतते, स्वप्रतिज्ञानुसारम् ।

उक्तञ्च :— "स्थिरे मनसि सुस्वस्थे शरीरे सति यो नरः ।
धातुसाम्ये स्थिरे स्मर्त्ता विश्वरूपं च मां भजन् ॥"
"ततस्तं म्रियमाणञ्च काष्ठपाषाणसन्निभम् ।
अहं स्मारामि मद्भक्तं नयामि परमां गतिम् ॥"

इत्यादि वचनात् भगवान् स्वयमेव स्वाऽनुग्रहेण तदुद्धारं कुरुते । जीवन-कालेऽपि तदर्थं प्रभुः स्वयमेव तत्सुखसाधनसमासादनादि सर्वविधक्रियाकलाकलाप सम्पादन-चिन्तातुरः सन् सकलं कलयति । शरणापन्नस्तु स्वच्छन्दं विहरति, स्म-रति च यथेच्छं स्वप्रवृत्त्यनुसारमिति । अयमेव भक्ति-प्रपत्त्योः परस्परं भेदः । भक्तौ तु भक्त, प्रपत्तौ तु भगवान् विचिन्तयति स्वप्रियमिति रहस्यम् ।

"द्वादशी विमुखत्वञ्च ह्यकृत्यकरणं तथा ।
ज्ञेयं विरोधि रूपं तु स्वस्वरूपस्य सर्वदा ॥"

( १ ) अर्थात्—अन्तवत्यस्मिन् देहे, एव चार्वाकादीनामिव, आत्मत्वभावना,

( २ ) 'अहमेव-भगवानस्मि, न मत्तो भिन्नः कश्चनान्यो भगवान् ।'

( ३ ) 'भगवद्दासताया अनङ्गीकारः नाहं दासः अहन्तु साक्षाद्भगवानेव । तदाज्ञायाः, वेद-वेदान्त - वाक्यानामाप्यनङ्गीकरणम् तद्विरुद्धाचरणमेव शरणीकरणम् ।

( ४ ) भगवतो वहिर्मुखः सन् स्वकल्याणकामनया-ब्रह्मेन्द्रवरुण - कुवेरादीनां देवीभैरवशिवादीनां पृथक्-पृथक भेदवुद्ध्या स्वस्वकामना भावनयैव समाराधनम्, द्वैतवुद्ध्या परस्परविरोध-निन्दा-मय्या वा समाराधनम् ।

( ५ ) भगवच्छास्त्रं निन्दन्नेव व्यर्थमेव कामक्रोधोन्मादकग्रन्थानां पठनम् ।

( ६ ) निजगुर्वादी सामान्यमनुष्यभावना सावमानव्यवहारः, सम्मानाऽकरणम् ।

( ७ ) धर्मशास्त्राज्ञां समुल्लंघ्य शास्त्रमर्यादां परित्यज्य लोकलज्जां वा निरस्य सर्वतन्त्रः स्वतन्त्रः सन्, अहङ्कारमदगर्वोद्धतकन्धरः सन् यथेच्छाचारं परिचरन् साहङ्कारं लौकिक-भोगविलासेष्वनवरतरतिकः, प्रतिवस्तु अहन्ता-ममताधिक्यं प्रकटयन्-संसारेऽनुरक्तिवाहुल्येन स्थितिः ।

( ८ ) वैष्णवागमेषु निर्दिश्यमानम् 'एकादशी व्रतादि' कर्मणां परित्यागः ।

( ९ ) नीति-धर्मशास्त्र-सदाचारादीनां विरुद्धमेव आचरणोपासनम् ।

इत्यादयो नवविधा भगवत्प्राप्ति कृते, भक्तिमार्गे च महान्तो विघ्नरूपाः सन्ति । एतेषां सर्वात्मना परित्याग एव श्रेयस्करः । अङ्गीकारे त्वेषां भक्तिमार्गात् परिभ्रष्टो भवति जनः । नैतावदेव अपितु तदनुरूपमाचरतः स्वच्छन्दचारिणः वुद्धिरेव तादृशी भवति, येन सः भगवन्तं द्विषन्नेव स्वमातापितरौ, ज्येष्ठान् श्रेष्ठान् च गुरुन् पितामहादीन् ज्येष्ठभ्रातॄन् वा अवमनुते । स्वात्मानमेव सर्वोत्कृष्टं कलयन् तथैवाचरन्नधः पतति नवा क्वचन सम्मानमपि लभते ।

अतः उक्तदोषाणां परित्यागे, किंवा तादृग्दोषवतां मानवानामपि दुःसङ्गमिव परित्यागं कुर्यात् तदेव श्रेयः प्राप्तिः प्रेयोलाभश्चेति । तदैव जीवस्य कल्याणम्, संसारे पुनः पुनरागमननिवृत्तिः परमपदप्राप्तिः भवितुमर्हति नान्यथेति । भगवच्छरणागतेः प्रपत्तेर्वा भगवत्तत्वस्य, अस्य च शरण्य-शरणविवेकस्य 'अर्थपञ्चक' रूपस्य सम्यग् ज्ञानं विधाय, स्वरुचिभगवत्स्वरूपे निजां भावनां दृढीकृत्य भक्तिमार्गे प्रपत्तिविधौ प्रवृत्तिर्विधेया, प्रपत्तेर्भगवत्प्राप्तिर्निश्चप्रचेति ।

———

# चतुस्त्रिंशतमः परिच्छेदः

इत्थं भगवच्चरणचञ्चरीकचरितानां संतत भगवद्भावभरितानां, भगवदीयानां, नित्यं भगवत्स्वरूपवर्णनामृतपानावगणितकालमर्यादानां, समर्य्यादानां, सपर्य्यासंसक्तहृदयानां, सहृदयानां भगवद्भजनकीर्तनोपदेशश्रवणानुरक्तानां भगवद्भक्तानां, निज-दर्शन-स्वचरणस्पर्शन-निजवाक्-पीयूषपानपोषणशुश्रूषुजनाऽघमोषण - श्रद्धालुभक्तहृत्तोषणैः स्वकीयसत्सङ्गानन्ददान - परितोषितानां, भगवन्माहात्म्यघोषितानारतप्रसारितभक्तिवल्लरीणां, पुरपुरन्ध्रीगण-परिराजितराजकुलरमणीनां, दैनिकसत्सङ्गमण्डलमण्डनीभूतपरिपूतस्वान्तानां, समायातप्राघुणिकसदस्यानां वरिवस्यानञ्च दूरदूरादायातविद्वद्गणोल्लसितमाहात्म्यानां, सतां, महतांश्च, मनस्तोषं, भगवद्भक्तिपरिपोषं विधत्तां श्रीरामानन्दाचार्याणां सार्द्धमासमयः समयः सरसभगवद्गुणवर्णन-सुरसरित्-समाधिनिलीन इव विलीनो भगवच्चरणरविन्दाऽऽनन्दमहोदयो संवृत्तः। धर्मशास्त्रीयमर्यादामनुसृत्य नैकत्र क्वचनान्यत्रस्थातव्यं संन्यासिभिरिति कृत्वा श्रीरामानन्दाचार्याः स्वशिष्यतल्लजस्य, भक्तोत्तंसस्य राजहंसस्य, श्रीपीपाजीत्यभिधेयस्य, मनसि समुद्वेगो यथा न भवेत् तथा शनैर्मन्दं हसन्त एव, मधुरया गिरा महाराजं सम्बोध्य, इतः परमधिककालपर्य्यन्तमेकत्रस्थातुं स्वात्मनोविवशतां प्रकटयन्तः शास्त्रोक्तदिशा संन्यासिकर्तव्योल्लङ्घनभिया च - ततः प्रस्थाय भगवत्साक्षात्कारव्यापारं विधातु मनसो महामनसः श्रीद्वारिकाधाम प्रति प्रस्थातुमात्मनोऽभिप्रायं प्रकटयाञ्चक्रुः। राजन्! भवांस्त्वित्थमेव सर्वदा भगवतो भगवदीयानां समागतानां सतां महतांश्च महात्मनां विदुषां सेवां विदधत् सानन्दं सोल्लासं निवसन् भक्तिमार्गेऽग्रेसरो भवन् सपरिकरो ह्यक्षुण्णभक्तिरसानन्दमनुभवंश्च राज्यभारसञ्चालनं करोत्विति निजाऽऽशीः परम्पराभिरभिनन्दयामीति मे हृदयाशीर्वादः।

न क्वचन भगवति भगवदीयेष्वनन्यभक्तवैष्णवेषु ते भिन्नदृष्टिर्भवतु-न वा न्यूनाधिकत्वकल्पना वा समुपतिष्ठेत्। सन्तो हि महात्मानः सर्वदा समर्पितनिजस्वान्ताः, भगवत्यनन्यभावाः भावोद्रेकविवशीकृतभगवन्निवासाः ह्यधिवासीकृतभगवच्चरणमय-

हृदयाः सहृदयाः नहि भगवतो भिन्ना भवन्ति कदाचन-प्रत्युत भगवतोऽधिकमाहात्म्याः भवन्ति। यतो हि भगवांस्तु भक्तपरवश एव सर्वदा तिष्ठति-उक्तश्च स्वयमेव भगवता दुर्वाससं प्रति :—

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः॥
'नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना॥'

किञ्च— 'साधवो हृदयं मह्यं-साधूनां हृदयं त्वहम्।
मदन्यत् ते न जानन्ति, नाहं तेभ्यो मनागपि॥'

किञ्च भगवानेव कदाचन भक्तगृहे साधूनां महात्मनां वा रूपं विधाय भक्तस्य हृदयस्थितं स्वात्मनि स्नेहोद्रेकं विज्ञातुकामः पदं धारयति, इति जीवो न ज्ञातुं शक्नोति यद् भगवान् कदा कस्मिन् दिने कस्मिन् स्थले कथं ( कस्मिन् रूपे ) प्रकटीभूय तत्सेवां गृह्णाति-एतदर्थं सर्वदैव भगवद्भावनयैव भगवदीयानां सेवनं सश्रद्धं, सप्रेम, सानुरागं, समधुरवचनम् सर्वात्मभावेनैव समुपासनीयम्। यतो हि—श्रद्धामयोऽयं पुरुषः, यो यच्छ्रद्धः स एव सः' ( गीता : १।७३ )। यदि च भगवान् न समागतः विशुद्धो भगवद्भक्त एवाऽऽगतः, किन्तु वैष्णवस्तमेव परमात्मबुद्ध्या साक्षात्समागतं भगवन्तमेव विज्ञाय समुपास्ते, तदर्थं स्वयं भगवानेव तद्रूपे प्रकटीभूय सेवामङ्गीकरोति भक्तभावनापरवश एव। 'उक्तश्च' 'मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद' इति भगवतैवोक्तम् नारदं प्रति। अतः, राजन् भगवद्भावनयैव सर्वदा समागतानां सम्मानं कुर्वन्नेव भक्तिं समाचर। यथा महाराजो 'रन्तिदेवः' स्वयं चकार। अनुभूतवाश्च भगवत्सेवनम्।

यत्र यस्मिन् भक्तगृहे भगवान् भगवदीयः परमवैष्णवाश्च पूज्यन्ते तत्र सर्वे देवाः सर्वाणि तीर्थानि, निवसन्ति। तद्गृहमपि साक्षात् तीर्थभूतमेव। तत्रैव च सर्वाः सिद्धयो विलसन्ति— 'यत्र पूजापरो विष्णुः, तत्र विघ्नं न चाद्यते।
( बृहन्नारदीये ) राजा च तस्कराश्चैव व्याधिताश्च न कुत्र हि॥'

सेवा माहात्म्यन्तु— 'वैष्णवा विष्णुवत्पूज्या मम मान्या विशेषतः।'
'तेषां कृतेऽवमाने तु विनाशो जायते ध्रुवम्॥'

"महाभागवता यत्र वसन्ति विमलाशयाः।
तद्देशं मङ्गलं प्रोक्तं यथा विष्णुपदं शुभम्॥"
"वैष्णवं जनमालोक्य नाऽभ्युत्थानं करोति यः।
प्रणयाऽऽदरतो विप्रः स नरो नरकाऽतिथिः॥"

यत्र यत्र राज्ये नगरे ग्रामे वा निर्मलभावनामयाः वैष्णवाः निवसन्ति, तद्देश मङ्गलमयं साक्षाद् वैकुण्ठसमं भवति। किञ्च—समागतं वैष्णवं विलोक्य, यो जनः अभ्युत्थानं (तत्समादरसूचकम्) न करोति तस्य नरस्य सर्वाणि पुण्यानि नश्यन्ति स च नरकगामी भवति।

अपरञ्च— "भागवतानां यो लोके चोपहासं नृपोत्तम।
करोति, तस्य नश्यन्ति, अर्थधर्मयशः सुताः॥"

अतः सर्वदा सावधानः सन् वर्तस्व, स्वद्वारोपरि समागतं अतिथिं विलोक्य भोजनवेलायां, तमपृच्छय विनैव तं भोजयित्वा यदि यः स्वयमेव भुंक्ते सः नरकगामी विष्टायां कृमिरिव तदेव भुंक्ते। अतः सर्वदाह्य प्रमादेन भवतास्थातव्यम्। "अतिथिदेवो भव" इत्यादिः श्रुतिः। यत्र द्वारागताः अतिथयो न समादृताः भवन्ति, तद्देशं, ग्रामो नगरं वा, किं वहुना इन्द्रलोकोऽपि श्मशानायते।

(कठोपनिषदि च—) "आशा प्रतीक्षे संगत ँ सूनृतां च, इष्टापूर्ते पुत्रपशूँश्च सर्वान्।
एतदवृंक्ते पुरुषस्याल्पमेधसो, यस्यानश्नन् वसति ब्राह्मणो गृहे॥'

अर्थाद् यस्याल्पबुद्धेः गृहस्थस्य भवने समायातो "अतिथिरूपोऽग्निः" विना—अन्नमयं हविः संगृह्य तिष्ठति। अर्थात् समागतस्यातिथेः अन्नेन जलेन वा शीतलेनाऽपि सत्कारो न भवति, तस्य अकर्तुः गृहस्थस्य सर्वा आशाः, सकलाः प्रतीक्षाः, समस्तं वा शुभं कर्म, प्रियावाणी, इष्टापूर्तिः सकलमभीष्टजातं, पुत्राः पशवः सर्वाः समृद्धयश्च सद्यो नश्यन्ति।

अतः— 'सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके।
अन्नञ्चैव यथाशक्ति सत्कृत्य विधिपूर्वकम्॥'

अतः समागताय, अतिथये आसनं पाद्यं शीतलं जलं अन्नञ्च यथाशक्ति सम्मानपूर्वकं दत्वा अहरहः सत्कारं तस्य कुर्यात्। इति (हारीतस्मृतिवचनम्)

प्रत्येकस्य पृथक्-पृथक् फलम्—'आसनेन तु दत्तेन प्रीतो भवति देवराट्।
(हारीतस्मृति अ० ४—) पादशौचेन पितरः प्रीतिमायान्ति दुर्लभाम्॥'

'अन्नदानेन युक्तेन तृप्यते हि प्रजापतिः। तस्मादतिथये कार्यं पूजनं गृहमेविना' किञ्च 'स्वागतेनाऽग्नयस्तुष्टाः' इति अतिथेः स्वागतेन अग्निदेवस्तुष्यति।' अतो गृहस्थाश्रमिभिरतिथिसत्कारो न परिहार्य्यः। अपितु चरणौ प्रक्षाल्य चरणामृतेन स्वात्मा पावनीयः—'नातः परतरं तीर्थं वैष्णवाङ्घ्रिजलाच्छुभात्।
तेषां पादोदकं नित्यं गङ्गामपि पुनाति हि॥'

अनेन, अतिथिपादोदकस्य गङ्गातोऽप्यधिकपावनत्वं सिद्धयति, गंगामपि पावयितुं शक्नोति। अर्थात् तच्चरणौ प्रक्षाल्य परमयाश्रद्धया तं भोजनादिभिस्तोषयेत्। ततस्तदनुकम्पया तदाज्ञया च तच्चरणामृतग्रहणपुरःसरं स्वयं यज्ञशिष्टान्नेन-स्वोदरं पोषयेत्। तदन्नं अतिथिप्रसादरूपं भवति, तत्प्रसादस्य माहात्म्यम् तु:—

'रामभक्तानुशेषं तु यो हि भुंक्ते दिने दिने।
सिक्थे सिक्थे भवेत् पुण्यं चान्द्रायणशताधिकम्॥'

पुनराशीर्वचनेन 'मानहा-भवशत्रूणां चिरं पालय मेदिनीम्। पुत्रपौत्रैश्च मोदस्व, मा च ते सन्तु विद्विषः' श्री पीपाजी महाराजं तोषयन्ति स्म श्रीमद्रामानन्दाचार्याः।

यथा कश्चिज्जनः सरसमधुरभोज्यपदार्थान् भुञ्जनोः रसस्निग्धमधुरपदार्थान्तर्गतं कटुतीक्ष्णलवणमरीच्यादिरसमनुभवन् सहसा समुद्विग्नो भवति तद्वदेव श्रीगुरुवरमुखान्निःसृतसरसवचनामृतमधुधारां पिवन् श्रीपीपाजी महाराजः सहसा श्रीगुरुचरणानां द्वारिकाधामगमनप्रस्तावमाकर्ण्य नितान्तं खिन्नः परमदुःखमन्वभवत्। प्रफुल्लकमलवनोपरि सहसा तुषारपात इवाऽभवत्। चिन्तोद्वेगमहाव्यालयुगलसन्दष्ट-इवार्द्ध मूर्च्छितःसन् समवरुद्धकण्ठः विशुष्यत्तालुमूलः शनैः शनैः विलुप्तचेतन इवार्द्धोन्मीलितनयनयुगलः चिन्ताऽद्भुतसमाधिनिलीन इव लौकिकवाह्यज्ञानशून्यो जड़ इव चेष्टादिविशेषचेतनधर्मविहीनतनुः किमप्युत्तरितुं न शशाक केवलं जडमतिरिव गुरुचरणेषु प्रणतिव्याजेन तद्वियोगाधिमसहमान इव निपपात।

श्रीरामानन्दाचार्या इत्थं भूतगुणं निर्गुणमिव पादपतितं धीरप्रशान्तमधुर-वचनसुधासदृक्ष - सञ्जीवनौषधमयीं वाङ्माधुरीमधुभरीं प्रसारयन्तः इव स्वकीयाऽकृत्रिमकरुणासुरसरिद्वरां प्रावाहयन्त इव, निजभक्तमानसनिविष्ट-वियोगव्यथामहा-पातकपुञ्जं प्रक्षालयन्त इव, सपदि मूर्च्छाविस्मृत्यपस्मारादिरोगोपशमनीं शिथिलीभूतधमनीततिचेतनाधमनीं वचनसुधाधारां कर्णकुहरपवित्रपानपात्रप्रसारितहृदयाऽऽप्यायिनीं पूरयन्तो नीरसस्वान्तमपि सपदि सरसं सचेतनम् विधाय श्रीपीपाजी पृष्ठोपरि-मस्तकोपरि च पुनः पुनः स्वकीयमभयंकरं करं संस्थाप्य मूर्च्छापस्मारहारकं सपदि चेतनाकारकं तन्त्रमिव कलयन्तः करस्पर्शेन पृष्ठं संस्पृश्य सावधानं चक्रुः। परिसान्त्वयन्तश्च तं निजवरदहस्तेन परमृशन्तोः प्रोचुः--राजन्! मैवमधीरो भव, भवतोऽनेन सामान्यभक्तजनाऽसम्भवनीयेन विहिताऽऽतिथ्येन, प्रकटितगुरुभक्तिनिष्ठया विशिष्टया ततोऽप्यधिकतरेण सत्सङ्गप्रचारप्रसारेण सार्वजनीनैर्नानाविध-भक्तिभावसमुल्लासैः समागतसाधुजनसंसेवनैः श्रीमद्रामचरणशरणमन्त्रराजाहर्निश-महाजापयज्ञैः नितान्तं हृष्टः प्रसन्नचेता अहमपि भक्तिरसाह्लादविस्मृतसकलयात्रा-

सङ्गमो नाऽस्म्यजानाम्येतावन्तं सामयिकं सार्द्धमासमितं निर्गतं कालगतिचक्रक्रमम् । त्वमपि परमभागवतः संवृत्तो वैष्णवो विदितशास्त्रतत्त्वरसः सकलसंन्यासिजनोचित-क्रियाकलापव्यापाराऽभिज्ञो विजानात्येव यत् स्वस्थानं विहायाऽन्यत्रकियत्कालं स्थेयं संन्यासिभिरिति । यत्र च पुनः सुलभसकललोकोत्तरपदार्थलाभोहरहोऽचिन्त्यचिन्त-नीयसुकरसङ्गमः सौख्यप्रवाहः प्रसरेत् तत्र किमु रुचिरसौख्यकासारे विहरणमेव श्रेयः, किमु संन्यासिनां कृते वहुदिनवासः समुचितः ? तत्रापि राजप्रासादेषु गुरुगौरवमनु-भवतां, प्रतिष्ठाधिष्ठान समर्हणासमासादितराजसोपभोग्यवस्तुरसास्वादननिमग्नत्वम् किमु हितकरं मादृशां संन्यासपथजुषां स्वधर्मपालनपुषां मनुजवपुषाम् ?

भवतु, राजन् साधारणजनानुरूपमित्थं मोहाऽन्धकूपनिपतनं परित्यज्य, सावधानेन चेतसा विचिन्त्य, भगवदीयत्वेन भगवानेव सर्वं वितनुते निजमनोऽनु-कूलां, सर्वसुखमूलांस्तांरचनाजवनिकां, समागम-विगमन-मिलनविच्छुरण संयोग-वियोग-लीलाविलसितिम्, न तत्र मनुजेच्छासमनुरञ्जनविचारापेक्षेति, विवेकपुरःसरं भगवत एव सकलविमोहनं कल्याणकरं कर्मेति निश्चित्य, प्रसन्नचित्तः सन् श्री द्वारिकानाथदर्शनार्थं प्रस्थानायानुमतिं प्रयच्छेति, येन श्रेयस्करी स्यान्मामकीनाऽपीयं यात्रा, भगवद्भक्तप्रसादपरिपुष्टेति ।

इति गुरुचरणानामनुरोधं विलोक्य किमपि वक्तुमशक्तः वियोगव्यथामसहमान इव विरहाऽऽपन्निपतनशङ्कया वेपमानवपुः निरुद्धकण्ठः सगद्गदं निवेदयामास महाराजः श्रीपीपाजी—भगवन् सुलभकरुणावरुणाऽऽगार ! दीनदासोपरि कृपां करोतु भगवान्, इत्थं निजचरणाम्बुजामृतमहौषधपानलब्धजीवितं, संसारावर्तनिपतितगात्रं विहाय, श्रीचरणमेवैकशरणं सर्वथाशरणं लौकिकसन्तापसन्तप्तमानसं स्वजन-परजनाऽहन्ताम-मताशतहस्त - चपेटाताड़नोल्फुल्लकपोलफलकवेदनाविमूढचेतसम्, निराधारं लौकिक-प्रवाहवैतरंगिणीनिमज्जितं परित्यज्य, सर्वदाऽऽपन्नम् प्रपन्नं मामनाथमिव श्रीचरणसनाथमपि नाधुना समुपेक्षणीयमपि श्रीचरणकृपापात्रं दूरीकृत्यैकाकिभिः श्रीपूज्यपादैः समनुष्ठीयते प्रस्थानमहोत्सवः, दासश्च परिहीयतेऽयमेव दुःखाकरो विषयः । प्रभो ! श्रीमन्तमनन्तदयासागरं विना यथा जलविहीनो दीनो मीनः सलिलाभावे ( जीवनाऽभावे ) कामापदमनुभविष्यति, ततोऽप्यधिकास्थितिर्भवित्री दासस्यापीति श्रिताङ्घ्रियुगलस्यानुमीयते । अतो वारं वारं साञ्जलिमामकीनमेतदेव निवेदनम् यद् दासजनोऽप्ययं स्वीयाङ्घ्रिसेवकः सहैव नेतव्यः येन श्रीगुरुचरण-सेवाऽवसरः सत्सङ्गलाभश्चेति द्वयमेव 'धर्माऽर्थयुगलं' किं वा, 'अर्थकामद्वयी' सुलभसिद्धा भवेद् दासायापि । नाहमधुना श्रीचरणान् विहाय स्थातुं कामये, पुनः पतितुं वा भवसागरे ।

इति पीपाजी महाराजस्य सुदृढ़तरमाग्रहमालोक्य, विचारप्रवाहस्खलितपदां इवा भवन् श्रीमदाचार्याः—क्षणं मौनमास्थाय सुविचार्य श्रीरामानन्दाचार्याः—पुनः प्रोचुः—भगवन् ! क्षणं विविच्य पश्चाद् गमानाय मतिं कुरु।

सम्प्रति भवन्तमेवाऽवलम्वते समस्तराज्यभारः। एतावतो विशालराज्यस्य संवाहनरूपोत्तरदायित्वमपि भवदुपरि समापतितमस्ति, यद्यस्य न सम्यक् सञ्चालनं भवति तर्हि राजा स्वयमेव निरययायी भवतीति ध्रुवम्।

किञ्च साम्प्रत न भवान् संन्यासी अस्मदादीनामिव, येषां नाऽग्रे न पश्चाद् कश्चन सुखदुःखाऽनुभवीजनो यो हि रोदनमपि विधास्यति भवांस्तु-महाराजः वहुपरिग्रहशीलो गृहस्थः कुटुम्बवहुलः, सकलपरिजनानामेक एवाऽवलम्वनः, कथमेवमनाधारांस्तान् विहाय सहसा चलितुं प्रभुर्भवितुमर्हति प्रभुः सन्। कथं वा स्थास्यन्ति ते निराधाराः भवदाधारं परित्यज्य, त्वद्विरहवेदनां कथं वा सहिष्यते ते सकलः परिग्रहो राजमहिषीगणः। यदि च हठाद् भवान् चलिष्यति तर्हि त्वद्विरहवेदनासन्ततहृदयस्य ते राजमहिषीवृन्दस्य प्रतिक्षणनिःसृतोष्णश्वसनसन्तापशापपापपङ्कपतितो भविष्यतीत्यपि निश्चयः।

समस्ते च राज्ये भवति प्रयाते सति सपद्येव-अराजकतायाः साम्राज्यं प्रसरिष्यति। किञ्च—सम्प्रति भवान् गृहस्थाश्रमधर्मपालनयोग्यः, नाधुना ते गृहस्थाश्रमपरित्यागकालः। समयात् प्राक् कार्यकरणं न श्रेयस्करं भवति। यावन्न वैराग्योदयो दृढतरः, न तावत् तादृग्विधं सोढुं शक्यते कष्टम्।

सम्प्रति हि पुरन्दरपुरोपम - संकल्पमात्रसुलभसकलसौख्यसाधन - समुल्लसितैश्वर्यसंसेवितः, सकलदेवविस्मापनवैभवविलसितसौकर्यसमुज्जृम्भितनित्यनैमित्तिकक्रियाकलापः स्वलावण्योल्लासविलासविलज्जितसुरसुन्दरीगणसौन्दर्याऽभिमानमदैश्वर्य्यप्रस्फुरितेन्दुकलामण्डलोल्लामिताह्लादनिषेविताऽऽननसौभाग्यशालिनीसीमन्तिनीनिचयाऽञ्चितचरणयुगलः कन्दर्पदर्पदलनदक्षवक्षश्छुरितच्छविप्रस्तारितयौवनोद्गारवसन्तायिततनुत्विट् विमोहिताऽशेषरमणीरमणीकोऽपि कामकलाविलासोपभोगसाधनसम्पन्नोऽपि कथं विपन्न इवाऽस्मत्सार्थवाही भवितुं कामयते भवान्। राजन् ! क्षणम् विचिन्त्यतामिह, सकलसौख्योपभोगभाग्यशालीभवन् भवान् राजप्रासादजनितसुखशय्यासनसिंहासनादि हिन्दोलाऽऽन्दोलनलोललीलाविलासहासपरिहासप्रसङ्गरङ्गमञ्चकमनीयकेलिकौतुकानि समुपभुञ्जन् - विविध वाहन-यान-सौकर्य्यसाधनसमाराधितोऽपि कथमस्माभिः सह पादपद्धतिपथानुवर्तनं विधास्यति पद्भ्यामेवाऽनुपानत्को महाराजः। कथं वा प्रकीर्णविस्तीर्णकुटिलकण्टकाकीर्णगहनप्रदेशविशेषशयनासनादि कर्कश-

तपस्विजनोपयुक्तनिवासविश्रामादिशारीरिकं महामहाकष्टं सहिष्यते, कथं तद्रुचिरं-रुचिकरं वा भविष्यति ते सुखसेवनाय इति सर्वं विविच्य पुनःपुनः पर्य्यालोच्य निर्णीयताम्, तथा सहसा साहसीकरणमुचितम् श्रेयस्करं वा भवति । इति गुरूपदेशं निपीय श्रोत्रचषकैः निःशङ्कम् :—

श्री पीपाजी —निवेदयामास; प्रभो ! श्रीगुरुवरचरणविनिःसृत-श्रीस्त्रिविक्रम वामपादाऽङ्गुष्ठनिष्ठ्यूतप्रस्तुतसुरसरिद्वपरमपावनाऽनन्तसौख्यशान्तिसम्पादकपुण्यसलिल-सदृक्षशीतल - पावितान्तःस्वान्तसन्तापप्रशमनौषधमिवोपदेशामृतमुपसेव्येदमेव निवेदितुं समुत्सहे-यद् भगवता विविधा लौकिक्यो वाधाः प्रदर्शिता न तास्तु मे बाधिकाः भवष्यन्तीति, नाहं कश्चन लौकिकं व्यापारं कर्तुं प्रवृत्तो भवामि यस्मिन् वा बाधां कर्तुं पारिता भावितुमर्हन्ति ।

किन्त्वहं तु तादृशं कर्तुं प्रभवामि कर्म, यत्र तासां गतिः । अलौकिक एव मे व्यापारः, अपूर्वधर्म - कर्मशरणीकरणमेव लक्ष्यम्, सर्वविधबाधापहरण-सक्षम - क्षमा-सौख्य - शान्ति - निकेतनीभूता पूर्वानन्दप्रवाहप्रसारणसन्तोपितभक्तजनस्वान्तनितान्त-सौख्याऽऽगारापारकारुण्यपारावार - समर्थ-सदर्थं सार्थकीकृतनिजाभिधेयानन्दगुरुरुप-दिष्टमार्गप्रवर्तितभक्तिलेशाऽऽस्वादननिरतः अशेषजनसंक्लेशशमनविधायक - भक्त-त्राणायैव विधृतवाणासनसायकः श्रीरघुकुलनायकागणिताऽऽनन्दकन्दः श्रीनित्यसाकेत-विहारिचरणशरणीकरणे प्रवृत्तो भवामि, न तत्र गतस्य क्वचन भयं; शोकादि-क्लेशलेशो वा भवितुमर्हति, 'अभयमेव तत्पदम् ।' इति ।

कण्टकाकीर्ण घोरतमकाननीयपथगमनकष्टानां तु का कथा, तत् पदप्रपन्नानां कृते तु स्वय भागवतमुख्येन श्रीप्रह्लादेनाप्युक्तम्-यत्—

'रामनामजपतां कुतो भयं विश्वतापशमनैकभेषजम् ।
पश्य तात ! मम गात्रसन्निधौ पावकोऽपि सलिलायतेऽधुना ॥'

अतएवाऽहं निवेदयामि, यत्-शरण्यो भवान् शरणागतश्चाहम्, शरणागतं सर्वात्मना प्रपन्नं जनं कथं गुरुचरणास्त्यक्तुं समुत्सहन्ते । अतः दीनं प्रपन्नं मां निज-परिजनपटले प्रवेशीकृत्यानुगृह्णन्तु ।

ततः श्रीरानानन्दाचार्याः अनेक धातं लौकिकालौकिकविवेकसहकृतदृष्टान्तादिभिः सम्बोधयन्तोऽपि यदा स्वनिश्चयादविचलन्तं दृढप्रतिज्ञमाज्ञाय, सर्वात्मभावेनाशिथिलिताऽऽग्रहाय तस्मै आज्ञां प्रयच्छन्तः राज्ञीनामनुमतिं ग्रहीतुं प्रेरयामासुः श्रीपीपाजी महाराजम् ।

इत्थं स्वीकृतिमवाप्य भृशं प्रमुदितवदनो यथाऽधनोऽपारं धनराशिमवाप्य हर्षोन्मादविकल इव त्वरितगतिरभ्यन्तरं प्रविश्य सकलः सकलकलाकलाधरवदनाः, मन्दस्मितोल्लासितकुन्दकालिकायितरदनाः, सुहावभावपरिपूरिताभिनवनीलारविन्द-कान्तिहारिहलोल्लासितपोललोचनोद्भावितप्रस्फुरितमदनाः, नवनवोद्भूतयौवनो-द्गारगर्वितमनोहारि - सुलभसीमन्तिनीजनोचितविलासवैभवविजितरतिपतिललनाः, त्रिदशविलासिनीकदम्बस्पृह्यमानापूर्वसौन्दर्यसदनाः समाहूय सप्रणयं ससम्मानं सविनयं स्वाभिप्रायं व्याचख्यौ श्रीपीपाजी महाराजः । प्रोक्तवांश्च देव्यः ! सम्प्रति सांसारिकसम्बन्धबन्धान्मुक्तिं कामयमानः, श्रीगुरुचरणशरणमवाप्य तन्माध्यमेनैव, ह्यनन्तकरुणाकूपारं पारावारातीतवात्सल्योद्भावितभक्तपरित्राणाऽनुकूलविहित-सार्वकालिकसार्वदैशिक-सार्वजनीनाक्रियाकलापस्य श्रीकौशल्याहृदयनन्दनस्य सकलचराचर-रक्षणस्य श्रीजनकनान्दिनीविलसितवामभागस्य, तन्मुखचन्द्रचन्द्रिकाऽऽचमनचञ्चल-चटुलचञ्चुपुटचालनचतुरचकोरायितचञ्चचक्षुषः श्रीत्रिभुवनरक्षणोद्यतसायकस्य श्रीरघु-कुलनायकस्य शरणं जिगमिषुः, तदाङ्घ्रिकमलनिःसृतमकरन्दमिलिन्दायमानमानसः सन् प्रपन्नमात्मानं चिकीर्षुः, अहरहस्तच्चरणाऽकिञ्चनकिङ्करीबुभूषुः, अद्यविधिविहित-कामकलाकल्लोलितललितविलासविलसितमनोभावान् जीवनावधि सञ्जुघुक्षुः, भगव-दनुग्रहैकमात्रसुकृतबुभुक्षुः सर्वविधाऽहन्ताममतात्मकमायामोहमेव सततं तित्यजिषुः, अशेषस्वीयराज्यभारं स्वात्मजोपरि निक्षिप्य ह्यभयपदं विव्रजिषुः, सम्प्रति सर्वासां भवतीनामनुमतिं जिघृक्षुः समागतोऽहं भवतीनां सम्मुखे, अत आज्ञापयन्तु मामिति गुरुचरणैः सह प्रव्रजनायेति ।

यद्यपि राजकुमारः स्वयं बुद्धिमान् प्रज्ञावान्, कार्यकुशलः समस्तराजनीति-विद्याविशारदः, मया सहैव राज्यकार्यं संवहतः तस्य पञ्चवर्षाणि व्यतीयुः, सम्प्रत्यपि मे वामेतरभुज इवालम्बनोऽधिकृतभूखण्डस्य, सकलगुणमण्डितः पण्डितोनीतिविद्या-प्रयोगे, ह्यखण्डितोन्यायवर्त्मनि, नो दण्डितोऽद्यावधि कश्चनाऽपराधरहितः, नाऽदण्डितो वा सापराधोजनस्तेन, समये तण्डयतेऽपि दुष्पथगामी, तेन कण्डयते क्वचन गुरु-शास्त्रवचनेषु, पण्डयते च सुदूरमेव दुष्पथपादरक्षणात्, मण्डयते च सततं निजकुल-गौरवस्तेन । किम्बहुना स्वल्पपदैरक्षरैरेव चुड्डयते स्वकीयाऽभिप्रायः, नहि तेन कदाचिदपि दुराग्रहमवलम्ब्य समड्डयते सत्रा सहन्यायकर्तृभिः, न वा कड्डयते क्वचन कठोरपदविन्यासैः । किञ्च सः लुम्बति सर्वदा दुराचारान्, तुम्बति दुर्विनीतान्, कुम्बति प्रायो मित्रगण-द्विजकुलाज्ञातजनितदोषान्, चुम्बति च सर्वदागुरुजन-चरणरेणून्, शुम्भति च सदैव मृदुमधुरम्—इत्याद्यनेकशो गुणगणगरिष्ठं सर्वतोवरिष्ठं तं विनीतं • सुतं समेक्ष्य सुयोग्यतरञ्च तं शासनभारवहनसमर्थं परीक्ष्य नियोजयामि

समभिषिञ्चयामि राजपीठे युवराजं महाराज इवेति। तथापि भवत्यः सन्ति तन्मातरः भवतीभिरपि समये समये प्रबोधनीयः सदुपदेशैरविशेषैर्राजनीति नवधर्मैश्च सः। सन्ततश्रेयोधामा ह्यकामाश्चितपादपद्मः श्रीनित्यवासाकेतविहारी श्रीरामः कुर्याद्वः क्षेमम्।

इत्थमश्रुतपूर्वं श्रीपीपाजी मुखाद्वचनं निशम्य सर्वाः राम्यः सहसाऽऽघातं विद्युत्सम्पातमिवाऽसह्यं सोढुमशक्ताः तदनुरक्ताः विविधकल्पनाशतभावनाऽऽसक्ताः घन-घनाऽऽगम इव निर्मुक्त बन्धनाः वारिधरा इव सकज्जलनयनेभ्यो वारिधारा-सम्पातममुञ्चन्। तास्वेकाऽतिप्रेयसी लघिष्ठा बहुगुणवरिष्ठा प्रणयमहिष्ठा श्रीसीता-देवीति नाम्नी महाराज्ञी श्रुत्वैव चेतनामजहात्। सर्वासां राजमहिषीणामीदृशीं करुणक्रन्दनभूयिष्ठां दशामालोक्य स्वयं महाराजोऽपि क्षणं क्षुब्धो विगतधैर्यमिवात्मान-मालक्ष्य ससाहसं समागतकातरत्व, कार्पण्य स्नेहबन्धनत्वावेगसम्मोहादिशत्रुभिः परा-जित इव विवेकशून्यहृदय इव स्वात्मन्यपि सम्मोहमूर्च्छनावेगमनुभवन्-भगवत्स्मरण-गुरुचरणध्यान-सद्यः श्रुतोपदेशादिमहत् तीक्ष्णतमास्त्रप्रयोगेण तां मायाजवनिकां (मोहमहान्धपटलीम्) समाच्छिद्य सहसा सावधानः सन्-प्रोच्छलदश्रुपटलकलुषिता-क्षियुगलं दुकूलाऽञ्चलेन सम्प्रोञ्छ्य-विगतमाधुर्यसमवरुद्धकण्ठस्वरं सुस्वरं विधाय-सोत्साहं पुरुषायितः प्रोवाच :—

अयि प्रेयस्यः! कथमेवं लौकिकसामान्यमामिन्य इव मम हृदयस्वामिन्योऽपि शोकसन्तापसन्तप्तस्वान्ताः संवृत्ताः? भवत्यस्तु क्षत्रियवंशावतंसाः समाकलितनवस्नेह-गेहद्वारप्रवेशसमुत्साहिततरलिताभिनवसमागमभावनासहस्रसम्भृतस्वान्ता अपि कान्ताऽ-नुकूलसमयोचितयुद्धोद्यतं स्वरमणमपि, समाक्रान्तशत्रुगणशिरः कन्दुकलीलया क्रीडयितुं, खरतरकठिनकृपाणं कृशानुवर्षणायितं कलयितुं, सपदि शार्दूलविक्रीडित-मिव, द्विषद् दुर्दान्तदन्तावलावलिमादोत्कटकटविपाटनविलक्षणप्रखरनखरराजिराजिता-मितबलशालि - भुजोत्तोलितमहाशस्त्राऽस्त्रोत्क्षेपण-झञ्झावातायिताक्रमणमहावेगप्रक-म्पिताऽरिहृदयपटलं, अनिर्मुक्तसद्योजातवैवाहिककरकङ्कणमपि, धनुष्टङ्कणं समारब्धुम् निजदेशजातिमर्यादापरिक्षणाय, युद्धगतिविधिं संशयात्मकजयपराजयचक्रभ्रमण-निपतित वीरवर - क्लिन्नसमुत्कण्ठितमृत्युवधूटीसमालिङ्गनादिरसानुरक्तसंसवतव्यापारं विदधातुं, प्रयातुं सोत्साहं; दुःसहमपि सपत्नीसङ्गमं, विलासिनीमनो विमर्दनं सहमाना अपि सहर्षं सोत्साहं स्वकरकमलेनैव तिलकीकृतभालं स्वहस्तसमुपस्थापितकृपाण-मण्डितकटिभागं-विधाय, वीररमणीरमणीयवचनविन्यासेन सम्मानयन्त्यो निःसङ्कोचं-सङ्गराय प्रहिण्वन्त्यः कथयन्ति नाथ! वीरायितानां विजयशालिनां समायातः सुस्वा-

गतार्थमत्रद्वारे सुवर्णकलशपरिपूरिताऽभिषेकपुरःसरं नीराजनार्थमुपस्थिता प्रतीक्षमाणामेव मां जानन्तः शत्रुसङ्घोपरिविजयं प्राप्तुं सोत्साहाः प्रयान्तु।

किम्बहुना प्रियजनहृदयं पापशङ्कि भवतीति - सिद्धान्तानुसारं दुर्दैवात् वीरगतिं गन्तुं सुरवरललनाविलासोल्लासकल्लोलितहृदयाः तदनुपथपथिकीभूता भवितुं समुत्कण्ठिताः समभूवन्निति दुःश्रवश्रवणसहकाल कृशानुसमर्पिततन्व्य तन्व्यः तत्रैव सुरपुरगोपुरोपास्थिताः सनीराजनपात्रहस्ताः साम्मुखीनाः सत्यः सेवां विधास्याम इति भाषमाणाः वज्रकठोरहृदयाः क्षत्रियवीररमण्यो भवन्ति, तथाभूता एव शुद्धक्षत्रियवीर्यसम्भवाः कथमसम्भवाथितं करुणदृश्यमुवस्थापयितुमुपक्रामन्ति। क्षत्रियवंशजाः कामिन्यः शुभकामिन्यो भवन्ति स्वकान्तेभ्यः, केवलं तां कामिन्यः कामुक्यो विभान्ति। अतो भवतीनामिदमेव कर्त्तव्यं यन्मे शुभे कर्मणि सहयोगिन्य भवन्त्वति। देव्यः! विवेकदृष्ट्या विवेचयन्तु - अद्यावधि यत् किमपि मयाऽऽचरितं तत् सर्वं भवतीनां कृते किंवा महाराजकुमाराय, राज्यहिताय, सर्वेषां वः क्षेमायैव किमप्याकलयितुं कामये, अतोऽधुना भगवतश्चरणारविन्दशरणं लब्धुकामः प्रयते। अतो ममेप्सितेऽस्मिन् कर्मणि सहायाः भवन्तु। स्त्रीणां हि परमो धर्मः यताः स्वपत्युः प्रियहितायैव स्वात्मशक्तेः विकासं कुर्युः।

अतो मैवं सांसारिकमोहपाशपतिताः मिथ्यामायिकबन्धननिगडिताः शोकसागरनिमग्नाः भवन्तु। प्रसादसुमुख्यः समाः सप्रसादं मां स्वानुमत्याऽनुगृह्णन्त्विति।

इत्थं समस्ताः शोकसागरनिमग्ना अपि स्वस्वामिनः क्षेमकामनया किमपि नैकशब्दमपि जगदुः। ततः सर्वतो गुणगणविशिष्टा रूपसौभ्याग्यशालिनी, कनिष्ठा सती सतीसीतेव साक्षात् निजपतिसेवाहेवाकिनी श्रीरामभक्तिरताः परिपरायणा महारानी सीतादेवी सविनयं निवेदयामास, :—मामकीनाः बहिश्चरप्राणप्रेष्ठाः पतिदेवपादाः! परमसौभाग्यमस्माकं, यच्छ्रीचरणसदृशाः सन्ति नः पतिचरणाः। पूज्यचरणानामयं सुसौष्ठवः संकल्पः नैतत्समोऽन्यः परमोत्तमो भवितुमर्हति। अतोऽस्मिन् पुण्यतमे संसारसागरोत्तारणकारभूतेऽस्मादृशानामपि प्रवेशसौभायं प्रबलतमं भवेत् तर्हि वयमपि भवादृशं परमभागवतं स्वामिनं प्राप्य सुलभतया समुद्धृताः भवेम। सपदि धर्मकर्म वेत्युभयं सुसम्पन्नं भवेत्। अतः प्रार्थयेऽहं श्रीचरणं, यथा रोचेत, तथैव भवन्तो विदधतु, परं निजपतिसेवासौभाग्यविधुरामिमां चरणकिङ्करीमाकलयन्तु। नाहं पतिचरणसमाराधनमन्तराजीवनमपि धारयितुं समर्थं मन्ये स्वात्मानमिति। अतः पुनः पुनर्भगवन्तमभ्यर्थये, यन्मे प्राणानां संरक्षकाः प्राणनाथपादाः

संरक्षक एवेति यशस्करनामानो भवन्त्विति। किञ्चाऽहं प्रतिजानेऽपि, भवद्विधु र: इमे प्राणा: शरीरेऽस्मिस्थातुं न प्रभविष्यन्ति।

इति श्रुत्वा पीपाजी सहसा स्वशरीरं वेपथुमदन्वभवत्, स्तब्धाः रुद्धा कीलित-वाच इवाभवत् - परञ्च धैर्यं स्थैर्यञ्च समाकलय्य प्रावोचत्--देवि ! मैवं हठधार्मिता-मङ्गीकुरु, एषा साधुमण्डली, महात्मान एव सर्वे स्त्रीसंगवर्जिताः नैकत्र स्त्रीपुरुष-सहवासं समनुमोदन्ते, कथं तैः सह भवत्या सहगमनं भावि ? किं कल्पयिष्यन्ति मनुजाः ?

सीतादेवी :—नाथ ! ये हि साधवः सज्जनाः सन्ति, ते तु स्तुतिमेव विधास्यन्ति, दुर्जनानान्तु कथैव विलक्षणा, दुर्जनास्तु दुर्जना एव। किं ततः ?

पीपाजी :— मार्गे भूयांसि सन्ति कष्टानि कथं कोमलाङ्गी तानि सोढुं शक्ष्यति ?

सीतादेवी :—सस्मितम्-भगवन् ! श्रीमद्भिरेव प्रतिपादितं यत् विशुद्धक्षत्रोद्भवा नार्यः कष्ट सोढुं, वह्नौ वा प्रज्वलिते प्रवेष्टुं सक्षमा भवन्त्येव। किञ्च भवता सह कष्टान्यपि सुखान्यतिरिच्यन्ते।

पीपाजी :—अहं तु साधुवेषे स्थास्यामि, तर्हि कथं राजमहिष्याः सार्थवाहित्वम्।

सीता-देवी :—देव ! अहमपि साध्वीवेषमुररीकृत्यैव स्थास्यामि, नेत्थम्।

इति कथनेन साकमेव सद्यो राजवेशभूषां परित्यज्य त्वरितमेव साध्वीरूपं धृत्वा तथासती महाराज-चरणौ प्रणमति स्म।

तथाविधां तां दृष्ट्वा श्रीपीपाजी स्तब्धवाक् संवृत्तः, दृढनिश्चयाञ्च तामपि स्वात्मना सहैव चलितुमाज्ञापयामास। कनिष्ठया राज्या सह महाराजः तीर्थयात्रां कर्तुं साधुमण्डलीमनुसरतीति, वृत्तान्तं सर्वत्र प्रासरत्।

अन्येद्युः शुभे मुहूर्ते यथानियमम् सकलराजपरिकरैः सह महाराजोपकरणैः सकल - मन्त्रिपटलसनाथः स नरनाथः स्वात्मजं अद्यावधिराजकुमारपदभाजं राज्य-सिंहासनासीनं विधाय स्वयं महाराजः स्वहस्तेन गुरुभिः पुरोहिताद्यैः विद्वद्भिः समनु-ज्ञातः, स्वकीयराजमुकुटेन कुमारस्य विविधतीर्थोपहृतपवित्रतमवारिणा वैदिकमन्त्रनिच-येन समभिषिक्तं पवित्रतमोत्तमाङ्गं समलङ्कृत्य,दिव्यं भालपट्टञ्च तिलकविभूषितं चकार।

ततः समस्तप्रजागणसमक्षे नवोदितं राजानं समुचितं राजकीय-शासनानुरूपं समुपदेशैः विनीतमपि विनयनयाद्यैः संसूच्य-सूपदिश्य, लब्धगुरुचरणाशीः प्राप्त-

प्रजाजनाभ्यनुज्ञः सर्वान् पूज्यान् प्रणम्य पोष्यांश्चाशीर्भिः सम्मान्य, मान्यान् यथारूपं यथावयो यथाज्ञानं समर्हणाद्यैः सम्पूज्य, सीतादेवीसनाथः स पीपाजी मनुजनाथः श्रीस्वामिश्रीरामानन्दाचार्यचरणपङ्करुहेषु प्रणम्य, उभावेव दम्पती विधृतसाधु-साध्वीवेषौ स्वात्मानं शरणीकृत्य, श्री द्वारिकाधामयात्राकामावास्ताम् तदानींतनं दृश्यमतीव करुणासम्पृक्तमभवद् सकलराजपरिकरः अद्भुततमरूपौ विचित्रवेषौ राजवेषपरित्यागेन सहैव काषायरागरञ्जितवसनधारिणौ, वानप्रस्थधर्मचारिणौ, साधुकर्मकारिणौ, विलोक्य राजदम्पती साश्रुनयनो रुद्धवाग्व्यापारः केवलं चक्षुर्भ्यामिव विलोकमानश्चित्रलिखित इवाऽतिष्ठद्। श्रीस्वामिपादैः सह महाराजः सपत्नीकः पीपाजी, साधुषु वानप्रस्थप्रतिमूर्तिरिवाऽशोभत।

तत्र श्रीरामानन्दाचार्याः श्रीपीपाजी महाराजस्य राजकीयातिथिभूताः व्यराजन्त, तस्मिन्नेव स्थले श्रीपीपाजीसुतोऽभिनवमहाराजः सश्रद्धं सभक्त्युद्रेकं मन्दिरं निर्माप्य तत्र श्रीरामानन्दाचार्यचरणपादुकां स्थापयामास, ततः प्रभृति तत्स्थलं तात्कालिकानन्दतरङ्गिणीप्रवाहोल्लासस्मारकमुपदेशभवनमिव सत्सङ्गभवन-रूपेण पर्य्यकल्पयत्।

---

# पञ्चत्रिंशत्तमः परिच्छेदः

क्रमेण शनैः शनैः प्रयान्तः श्रीरामानन्दाचार्याः निजसाधुमण्डलीसहिताः विद्वन्निकरपरिवृता, अलौकिकभावोद्भूति, भूतिविलसिताऽद्भुतकाषायाम्बरपरिराजित - देवदम्पती - समाराधितचरणनलिनाः, मार्गे मार्गे प्रतिनगरं प्रतिग्रामं, नगरनिवासिजनतासमाकलितसपर्य्यासाधनानि तद् तत्स्थानोपहृतानि सार्थकीकुर्वन्तः, सन्ततसमुदेशसुधावर्षणैराप्लावयन्तः समागतशुश्रूषुगणस्वान्तानि, शिक्षयन्तो नवयुवकयुवतिगण स्वधर्मपरिपालनपद्धतिं, प्रदर्शन्तो त्रयोतीतान् मुक्तिपथं, क्षेमङ्करं वा सत्कर्म, क्षालयन्तश्च जनतामानसमलीमसं पारस्परिकरागद्वेषजनितम्, तीर्थीकुर्वन्तश्च-तीर्थानि, परस्परं भगवद्गुणगानं, गायन्तः, कीर्तनं कलयन्तः स्थले स्थले विश्रामंकुर्वन्तो यान्ति स्म।

मध्ये मार्ग-यानि यानि तीर्थानि समागतानि तेषु यथाशास्त्रं, स्नानपानसन्ध्यावन्दनादि विदधतो गुप्ततीर्थान्यपि प्रकटयन्तः अतीर्थान्यपि तीर्थीचक्रुः। मध्यपतितासु च कावेरी, पुष्करिणी प्रभृतिषु महानदीषु स्नानादिविधिं व्यदधुः। दर्शनीयानि स्थलानि च दृष्टिपूतानि कलयन्तो भगवन्मन्दिरेषु भगवद्दर्शनं, निवासं प्रसादग्रहणम् तन्माहात्म्यप्रख्यापनञ्च कलयामासुः। क्रमेण च ते 'गिरिनार' नामानं 'रैवतकगिरिराजं' प्रापुः।

तत्र च श्रीरामानन्दाचार्याणामागमनसूचनां कर्णगतीकृत्य तात्कालिकः कश्चन महेन्द्रः ( तत्रत्यो महाराजो नरेन्द्रः ) स्वामिनां स्वागतसम्मानाय पूर्वत एव तन्निवासविश्रामाय च पटमण्डपादिसर्वविधसौकर्यं,गिरिराजोपरि समारोहणाय वाहन-नरवाहिनीपल्यनिका-प्रभृतितत्कालिप्रचलितसाधनानि परिकल्पयामास, रैवतकपर्वतोपत्यकायां स्वागतसमारोहं कलयितुं विविधरंगरञ्जिततोरणोल्लसित, वहुविधराजत-सुवर्णसूत्रकलितवन्दनमालिकामण्डित-मुक्ताकलापावलम्बिनी रन्ध्रमालानिवह-सुशोभित, सुवर्णकलशयुगलसमलङ्कृत - हरितकोमल- सहकाराऽशोक-कदम्ब - जम्बू-वकुलपल्लवराजिपरिराजित - कदलीस्तम्भमण्डित-विविधद्वारभूषित नानाविध - चित्रचित्रितचीनांशुक-

प्रस्फुरितपाताका - सहस्रविलसितमहत्पटनिर्मितप्राकारावृतं - सुवसनोत्तानशातकुम्भ-तन्तुवितानमास्तीर्य सभामण्डपञ्च रचयामास। मध्ये च नानापीठसमविष्ठितबहुविध कोमलाऽऽस्तरणसज्जितान्तराले-सुभग हाटकोल्लासिसिंहासनं राजोजितमखमल्लकौशया-म्बरसुशोभितं समुन्नतं स्थापयामास, पर्वतारोहणाय च तथाविधयानमप्युपास्था-पयत्। तत्र-स्वयं तत्रत्यः शासकः योहीन्द्रायित आसीत् सः सम्मुखमागत्य श्रीस्वामि-श्रीरामानन्दाचार्याणां स्वागतञ्चकार सपरिकरः सनागरिकजननिवह साधुमण्डली-सनाथं सराजदम्पतीकं श्रीमदाचार्यवर्य्यं पर्य्यचरत्। सकलोपकरणसाधने विद्य-मानेऽपि यथानियमं स्वसिद्धन्तानुसारं 'पद्भ्यामेव तीर्थाटनं परिव्राजकस्येति वचनानुसारं-जनतायामपि वहुविधप्रार्थनायां, वाहनादीनां यानानामुपयोगं परित्यज्य स्वपद्भ्यामेव पर्वतारोहण व्यदधुः श्रीरामानन्दाचार्याः।

यदा हि पार्वतीयां सुषमामालोकयन्तः श्रीमदाचार्याः रैवतकस्याऽधित्यकायां पदार्पणमकुर्वन् तत्क्षणमेव भगवतोऽनुग्रहस्वरूप एव विधिप्रयुक्तः कुसुमाकरः सपदि प्रादुरभवत्। रसालमञ्जरीरसास्वादनकलकण्ठानां पुंस्कोकिलकुलानां समन्ततः प्रसारी मधुरः 'कू हू कू हू' निःस्वनो निःस्वनयति, सकलर्तुनायकस्य समागमोदन्त-जातशातम्!

श्रीरामानन्दाचार्यसमागम - दर्शन - सत्प्रवचनसमालापाद्यानन्दपञ्चकप्राप्तिकल्प-नयैव समस्ताऽऽरामाः निखिलानि पार्वतीयानि काननानि सद्योविकसितान्यभूवन्। समस्तापादपततिः प्रहर्षोद्रेकवशंवदासद्यः प्रफुल्लिताऽभवत्, मधुमास महात्म्यमनुभाव-यन्ती मधूकपटलीमधूत्पादकमाध्वीकमदोन्मादनकरी, निशि-निशिहिमांशुहिमकरस्पर्श-सौख्यमवाप्य जनतामानसोन्मादप्रसादनाय मधूककुसुमानि प्रासारयत्, समन्तात्प्रसृता-माकन्दमहीरुहाणां नवनवदलसुसज्जिता मञ्जुमञ्जरीभारनिभृतपिञ्जरीभूतशिरस्का-श्रेणी, मन्दमन्दमारुताऽऽन्दोलिता निज-विट-पिक-कुल-कलितासनविटपसंसर्गानन्द-गर्वितविधूनोल्लासविलसितविटपा, स्वमञ्जरीरसदानवशीकृतपरभृतपटलीकान्तसमन्द-नर्तनहेलिता-लीलायते, कलयति च दर्शकजनमनः समुल्लासम्। अल्पतमेनाऽपि समागमेन मलयजसमीरणसहयोगसहाया, सहकार - वकुल-नीपाऽशोकजम्बू-चलदललुलितलोल-पल्लवततिः समागतसकलजनमानसमरालां परहंसमहात्मजनमण्डलीं वारं-वारं निजकरपल्लवसहस्रैराकारयन्ती, निजकुसुमसमृद्धिवृद्धं प्रसिद्धं समुपस्थितैन्द्रजालिक इव प्रसारित निजसुमनोवैभवं, नानाविधप्रसून गुच्छोल्लासितसकलशाखिशाल-विशालं मकरध्वजसुहृत्तल्लजकुसुमाकर - साम्राज्यं प्रदर्शयन्तीव, हस्तेङ्गितेन-स्वमण्डनीभूत-परिपूतसुभग - मन्दमधुमारुताऽवधूतधूत - प्रभूतमाधवीलतोत्सङ्गक्रीडारसिककुसुमपरि-मलाऽऽमोदमनुभावयन्ती, सुमनोभरामोदमोदमाना, विविधमधुमाधवी-शतदल-पाटला-

व्रतितति:, प्रणयभरमन्थराऽऽन्दोलितोत्तमाङ्गा, प्रसारित - निजपाटलपरागरागा, प्रणयिजनस्वागतायैव-विस्तारि 'पादपट' विस्तारा प्रदर्शिताऽऽनन्द - श्रीरामानन्दाचार्याणां स्वागतसम्मानं सूचयन्ती, भूतलतलस्पृष्टनिजमृदुलशाखाप्रसारणपुरःसरं चरणस्पर्शकर्तुकामाऽभिरामा रामायिताऽऽरामोल्लसिता सितांशुकायित कुसुमसमूहा राजते स्म रैवतकरमण्य इव प्रमुदितवदनाः हरिण्यः सपदि यूथशः समागत्य श्रीरामानन्दाचार्यवदनकमलशोभां निर्निमेषाऽचञ्चल - चक्षुर्भिश्चञ्चलाक्ष्योऽपि निश्चलाक्ष्यः संवृत्ता विलोकयामासुः ।

किम्बहुना तत्रत्याऽधित्यकास्थितक्षेत्रेषु प्ररूढासार्षपक्षुपपक्तिः निजपीतपुष्पाऽऽभरणविभूषिताः स्वशिरःसुधृतकापिशकुसुमगुच्छसहस्रैः सुमधुवातविलोलिता विनम्रीभूतमस्तकाः वसुमतीमालिङ्ग्य प्रणतिशतानि कलयन्ती-स्वकीयपीतपरागेण समागतप्राघूर्णिकपादरञ्जनमिवाऽतनोत् । गन्धर्वगणायिता मधुकरश्रेणिः समन्तोभ्रमन्तीनानाविधपुष्पमकरन्दपानमत्तोवास्पष्टं कलं गुञ्जन्ती श्रीरामानन्दाचार्य-गुणगौरवं गृणन्ती वभ्राजते स्म । निखिलानि सरोवराणि निर्मलनीरनिभृतानि, नीरजनयनसहस्रैः समुन्मीलितैरेवाऽनिमिषविकसित - नलिनव्याजेनैव विलोकमानानि विलसन्ति स्म । निजोपरि मधुलिप्सु मधुपपटलीविहितमधुरझङ्कृतिः, कलकलेन स्वागतगानमिव कुरुते स्म ।

सुदूरदूरतरं सद्यः समुड्डीय शाखामारुह्य वृक्षाद्वृक्षान्तरमुपसेवमानः कोकिलकलापः मधुरमधुरं श्रुतिसुखाकरं कमप्यपूर्वं मनोहरं 'कू-हू' कुह्विति द्व्यक्षरोच्चारणेनैव लौकिकालौकिकानन्दसमाचारद्वयं परितो जडजङ्गमसङ्गमसुखानुभवाय,-यद्वसन्ततुना सहैव स्थिरचरवनवनस्पति - प्रमोदप्रफुल्लितसुमनः सौभाग्यवर्द्धने सत्रा मानवमानसोल्लासाय विलासाय च सतां भगवदनुग्रहागतसाधुसमागम-सत्सङ्गरङ्गललितानि प्रकाशयितुं च श्रीरामानन्दाचार्याणां पदार्पणं, ससहस्रकरसुधांशुसम्मेलनानुभवमिवैवेदम् समजनि, समस्तश्चराचरः प्राणिसमूह आनन्दमनुभवतु, इति— राज्ञां प्रशस्तिपरः कोऽपि बन्दीगण इव-समुद्घोषयति स्म ।

सर्वत्रैव-वनोपवन-प्रमदवन-शोभावहेषु लघुमहन्नगरग्रामग्रामटिका - जनपदादिषु विलसिताः सर्वविधाः—पादप-क्षुप-लवलीमतल्ल्योहर्षप्रकर्ष-प्रमोदामोदसम्भारभासुराः नानाविधाऽभिनवपल्लवालि-प्रसूनपुञ्ज - मञ्जुगुच्छैः समलङ्कृता-नैकवर्णरञ्जिताः कल्पलतानुकारिण्यो मनोहारिण्यः धरणिमण्डलशोभाधारिण्यो विभान्ति स्म प्रतिशाखिशाखं विहारिणीविहगपटली नानाविधराग-विलासानि विस्तारयन्ती सकलसङ्गीतप्रिय - मानवकुलकर्णकुहरेषु पीयूषपूरमिव पूरयन्ती - शीतहेमन्त-शिशिर - सम्मेलन-

महाजाड्यजडीकृतेष्ववयवेषु हर्षोल्लासमुल्लासयन्ती निजकलकूजितेन मनांसि मोदयन्ती मनुजानाम्—सर्वत्र विशिष्टाऽतिथिरूपमुनिगण - महात्मनामागमन-समागममङ्गलगीतकानीव समाचरति। किम्बहुना समस्तराजोचित - सम्मानमिव कुरुते स्म रैवतकः पर्वतराजः सुराजदम्पतीनिषेवितानां श्रीरामानन्दाचार्याणामिति। तदानीं वसन्तागमनेन सहैव सतां, महतामपि समागमः सुरभिसुवर्णसंयोगः इव ह्यभूतापूर्वश्चराचरकृतेऽलौकिकानन्दजनकः समजनि।

तत्र च भूयांसो महामहातपस्विनो गिरिगह्वरेषु स्थिताः सुचिरकालतस्तपश्चरन्ति स्म। कतिपयस्थलेषु बद्धपद्मासनाः नासावंशाग्रदत्तदृष्टि वशीकृताऽक्षिविषयसृष्टिप्रवाह - स्थिरीकृत - मानसविसृ[1]ष्टिजनिताऽद्भुतकल्पनासहस्रोन्मदप्रकृष्टिविसृष्टि[2] कुर्वाणाः सपदि ध्यानस्थित कलयन्ति परं ब्रह्मेति। कुहचन यायजूकाः विस्तारितविविधयज्ञसम्भाराः भारायितामवनीं पापौघप्रसारकवलितसत्कर्मसञ्चारामवितुमाचारानुकूल - सकलदुराचारशूलमुन्मूलयितुमेव, विविधकर्मकाण्डप्रकाण्डपण्डितमण्डलीताण्डवितनैकविधगणपति सर्वतोभद्र-लिङ्गतोभद्रः ज्योतिर्लिङ्गैकादशलिङ्गतोभद्र-ग्रहगण, मातृका-योगिनी वास्तु-मण्डलादि - रचनापाटवप्रदर्शित-याज्ञिकवैभवाः, चतुर्वेदविदाहिताग्निसमाराधित-समाहूतमन्त्रपरिपूतोच्चारणश्रवणागतविविधविबुधगणमण्डितत्र - स्थलोल्लासिनः समन्त्रहव्याहुतिनिक्षेपसन्तुष्टहव्यवाहनमुखाऽमरगणविस्तारिताऽशेषविभवाः, यज्ञैर्यजन्तो यज्ञपुरुषप्रसादानुग्रहपरिपूरिताऽशेषकामाः, मोदन्ते स्म। क्वचन महर्षिकुलाकल्पिताश्रमाकलितवसतिसुलभाऽऽचार-परम्पराऽनुसरणसहकृताऽधीतवेदाऽनुस्मरणनिरतवटुगणसमुच्चार्यमाणसस्वरपदक्रम-घन - जटा-पाठसमुद्घोषाऽपसारिताऽशेषकलिकलुषितस्वान्तध्वान्तानि विलसन्त्याश्रमपदानि। यत्र प्ररूढदीर्घतपोऽधिष्ठितमुनिगणायितेषु, सर्वदोल्लासिताभिनवपल्लवसमञ्चितोद्भूत - कुसुमसमृद्धिसमुज्जृम्भितरुचिरमधुर-सुरभितफलप्रकरावनतशाखासमूहनिगूहितकल्पपादपमाहात्म्येषु, विविधाऽनोकहेषु, विलसितानिकलयन्ती, मधुरातिमधुरकलकलकूजनोन्मादितमानवमानसाः, मानसाऽम्बुजसुरभिसन्तृप्तसमागतमधुकरमालाऽऽकलितझङ्कृतिमर्द्धिताऽऽनन्दरसा, रसालशालहेलारसिकपिककुलकाकलीललितश्रितप्रसारितवासन्तिकोल्लासा, विलासाऽभिरामनर्तनाऽऽकर्षितदर्शकनिवहा विहगपटली मनोहरति समायातानां दर्शककुलानाम्।

तत्र च भगवदाज्ञयाप्रेरितसुरपतिसमनुज्ञातविश्वकर्मविनिर्मिताऽद्भुतरचनाचातुरीसमलङ्कृताविशेषभवनराजि - राजितेन्द्रपुरीव संशोभिताऽधित्यका। यस्यां समासादितपूर्वजन्मार्जिसत्पुण्यपरिपाकफलनिचयजनितसत्कुल - समृद्धि वृद्धि-सौभाग्य-

---

१. बहुविस्तारः। २. विसर्जनम्।

सौभाग्यवन्तः, अविरतलोललक्ष्मीविलासहासोल्लास - विकासिभूरिवैभवाः भवान्तरे वितरित-विविधरत्न-धन-धान्यगजरथ-तुरङ्गमाः, विहिताऽनेकसुवर्णभृङ्गभाजितराजत-खुरततियुतताम्रपृष्ठ-मण्डित-मौक्तिकगुच्छगुम्फित - पुच्छभागविलसितोत्तमवसनमण्डित-सवत्सधेनुसहस्रदानजनितमहापुण्यफल - लब्धराजकुल-धनिकहर्म्यादि सद्गृहस्थान्वय-जन्मानः, सर्वविधभोगोपयुक्तसाधनसम्पन्नाः रत्नराशिमण्डिततनवोमनव इव महामहिमशालिनो, वनमालिनो भक्तिभावानन्दरसभाजः ससुखं सोल्लासं सगर्वं देवायिताः सदयिताः निवसन्ति ।

यत्र गगनचुम्बिशिखरोत्तंसाः हंसाकाराशेषसुधाधवलद्युतयो राजत-सुवर्णभित्तयो महाहालिकाशरेसमाकुलाः ससुवर्णकलशोच्छ्रितध्वजपट - स्फुरणोत्सारिततपनतापाः पापावधूननदक्ष-यजनकक्षसमुपास्यमानसन्ततसुर-भूसूर - समागताऽतिथिसेवननिरताऽखिलवास्तव्याधिष्ठितानेक - प्रासादाः भान्ति । राजन्ते च तत्र शतशो देवप्रासादाः प्रस्फुरद्दीप्तिमन्तः सन्ततत्रिदश - पुरविलासविलसितानीव-स्मारयन्तो, नानापटहघण्टा-घर्घरिकाघोषघोषितगिरिगह्वराः, दीव्यन्ति स्म देवायित-विग्रहाः सविग्रहाः सुकृतधराः, कन्दर्पदर्पलनलब्धदीक्षाः समीक्षाचक्रवर्तिनो विद्वद्धुरीणाः, धनदकुमारा इव धनिककुमाराः, समवयस्काभिर्निजसौन्दर्यातिशय-तिरस्कृतत्रिदशललनालावण्योन्मादाभिः, पद्मपलाशमृदुलपादाभिः, चकितहरिणी-प्रेक्षणाभिः, क्षणाऽभिसारप्रशमितस्मरसाराभिः, प्रियतमवरकरनिहितनिजकरान्दोलितमन्मथशताऽऽकूताऽवितर्कितरसभावोन्मेषोन्मीलनमीनाक्षिसङ्कोचविकासभासित-पारस्परिककन्दर्पकलित - ललितललितानिविभावयन्तीभिः, मिथः संश्लिष्टविशिष्ट-पार्श्वैकभागभावितैकस्तनकन्दुकविभ्रमोन्मादकालिङ्गनस्फुरितवेपथुमद्वक्षस्तटस्पन्दनस-हचर वचनविन्यासभासमानमदनोन्मादतरलिताऽनङ्गनिरङ्गचेष्टाभिः, प्रेष्ठाभिः, सहैव प्रमदवन-वनोद्यानविहाराम् कलयन्ति स्म ।

भूयांसश्च गिरिवरकन्दरादरासादितसिद्धासनाः प्रसिद्धाऽऽसनादियोगाङ्गाऽभ्यासवशीकृतेन्द्रियमनोवृत्तिगतिकाः, सन्ततनिश्चलीकृतभ्रुकुटियुगलान्तरालदृढ-निहितदृष्टियुगलत्राटकीकृतविकासिताऽऽज्ञाचक्रोल्लासिताप्रतिहतगतिकाऽऽशाः । कतिपयाः प्रसारितविविधतन्त्रक्रियाकलापप्रदर्शिताऽद्भुतचरित्राश्चङ्क्रमन्ते । अन्ये निशि-निशितारकाविज्ञानसाधितशुभाशुभफलाऽभिभूतधगच्चक्रप्रवर्तित - लोकव्यवहारदक्षाः साधयन्ति स्म स्वाभिलषितानि । अपरे च विविधवस्तुसङ्ग्रहविक्रयण-क्रयणादिव्यापाररत-वणिग्जनासेवितपादपीठाः पीठाधिष्ठिताः इव महान्तः सन्तः पूज्यन्तो व्यापारिकपटलैः । इतरे-ज्योतिश्चक्रचङ्क्रमणनिपतित-राशि - नक्ष-त्रग्रहगण-गोचरगति-गोचरचणाः जन्म-लग्नपत्र - परिकलन - निरीक्षण-परीक्षणादि - गणितप्रक्रियाविशेष-प्रदर्शितमनुज-भाग्योदयादि योगाऽयोग - लाभव्ययथादि विविधप्रश्नोत्तर - प्रकाशनादि सकलसर्वविधहिताहितप्रकटन कला-चातुरीचणाः समुपार्जयन्ति यथेष्टं धनादिकम् ।

कियन्तश्च पार्वतीयद्रव्यजातं-सिन्दूर-हिङ्गुलु-हरितालमनःशिला - गैरिकादि-धातून्-कतिपयाश्च मणि-माणिक्यवज्र-विद्रुमगारुत्मतादि नानारत्ननिकरं संकलय्य विक्रीणते, क्रीणन्ति, अङ्कितीकारयन्ति स्वाभरणेषु च। इत्थं पद्भ्यामेवाधित्यकायां समन्ततः पर्य्यटन्तः पश्यन्तश्चावनिधरशोभां, तत्रत्यैर्निवासिभिः समायातैर्वा यात्रिभिः, पार्वतीयैः किन्नर-नर-सुरभूसुर-क्षत्रिय-वैश्य-शूद्रादिभिः विरचितां नमस्यां वरिवस्यां वा स्वीकृत्य स्वागतसमाराधनविधानमङ्गीकृत्य, तत्प्रार्थनाश्रद्धासमृद्धिं च विलोक्य स्वकीयपादुकायुगलं तत्रैवपरित्यज्य यत्र प्रथममेव पदार्पणं गिरिवरोपरि कृतवान्-स्थाने स्थाने चाधित्यकास्थलेषु समवेतभक्तजनसमक्षे समुपदेशमपि प्रसार्य्य साधुसेवन-सत्सङ्ग-सन्तसमागमादि-विषयमवलम्ब्य प्रकाशितभाववन्धुरां भक्तिधुरां भक्तजन-कन्धरोल्लासिनीं विलासिनीभुजलतिकामिव जारपटलेषु प्रियतमामोदिनीं, प्रमोदिनीं भागवतेषु, विनोदिनीं वैष्णवमानसानां, संस्थाप्य, विबोधिनीं ज्ञानज्योतिषां, प्रलोभिनीं सकलकर्तव्यानां, विशोधिनीं दुर्मतीनां, निरोधिनीं दुष्पथगानां, सम्बोधिनीं सतीनाम्, प्रवर्तयामासुः सत्सङ्गतिं सज्जनेषु भगवज्जनेषु श्रीरामानन्दाचार्याः।

सन्तोष्य च सर्वान् यात्रानिमित्तीभूतभगवद्दर्शनादि सर्वविधभगवद्गुणगण-माहात्म्यवर्णन - कीर्तन - श्रवण - स्मरण - मननादि विधाय, प्रभासादिक्षेत्रीययात्रार्थं सकलसाधुसज्जन-विद्वज्जनपरिवृताः साधुमण्डलीसनाथाः प्रस्थानमकार्षुः।

तदानीं तत्रत्याः भगवदीया वैष्णवाः, ये हि श्रीरामानन्दाचार्य-वाक्सुधापान-पावितान्तरात्मनो वहुश्रुतोपदेशाः भक्तिभावप्रवृद्धभगवद्धर्माः धर्माऽनुरूपपरम्परा-पालनप्रवीणाः वीणाऽनुरणननिःस्वानश्रवणकुतूहलकेलिहेलितश्रुतियुग्माः अरहस्स-च्चरणस्मरणानुस्मरणशृङ्खलाप्रचार प्रसारायैव तत्पादुकान्यास - प्रयासमाकलयाञ्चक्रु-स्तस्मिन्नेव, यत्र सर्वप्रथमं श्रीरामानन्दाचार्यचरणरक्षणं भूतलतल - पार्वतीयशिखर-स्थलोपरि समजनि। तदानीन्तनीं भगवत्सत्सङ्गतिम् प्रवचनानन्दसमुद्भूतापूर्वसौख्य-सौभाग्य-स्मारिकाम् भगवदीयवैष्णवजन-श्रद्धासमृद्धिविशेषसूचिकां, श्रीरामानन्दाचार्य-पादुकास्थापनपद्धतिं प्रवर्तयामासुः। तेषां तथाभूतभक्त्युद्रेकाऽभिषेकाऽपूर्वोत्साह-समुल्लास-स्मारकमद्यापि विद्यते गिरिनारशिखरोपरि तत्पादुकायुगलसनाथं सुन्दरं— "श्रीरामानन्दपादुकाऽ-" भिधेयं ध्येयं ज्ञेयं दर्शनीयं विमर्शनीयं भक्तजनमनः प्रहर्षणीय-मानन्दमयीं गिरिशोभाऽऽकर्षणीयम् कलिमलकलुषितस्वान्तदुर्दान्तदुष्पथजिगमिषु-धर्मद्रोहाऽऽचरणनिरत-मानसधर्षणीयम् पादुकायुगलम्, सुस्थलम्। प्रत्यब्दञ्च प्रवर्तते वार्षिकोत्सव इव पादुकास्थापनपटोत्सवस्वरूपोऽगणितजनसम्मर्दं - "मेला"त्मको विविधहेलामयः खेलाकरः प्रकृति-कुसुमाकरस्येति।

—

# षट्त्रिंशत्तमः परिच्छेदः

ततः प्रस्थाय प्रभासं क्षेत्रं - यादवानां रणरङ्गभूमिम् "प्रत्यक्षीकर्तुकामाः श्रीरामानन्दाचार्याः पादगमनसरणीं शरणीकृत्य प्रचलन्तः मार्गे समागतसाधुमण्डली-सत्सङ्गसमागमाऽऽलाप - समुपदेशमुपलब्धुकामाः सभामाः श्रीरामाङ्घ्रिसरोज-मधुलिप्सवो, भक्तिरहस्यविविदिषवो यत्र यत्र प्रार्थयामासुस्तत्र तत्रैव स्थित्वा साधुसभासभाजितान्, जितारिषड्वर्गान्, वर्गानुसाराऽऽचारपरम्पराजिज्ञासून्. निजवचनानुकूलाऽऽचरिताऽऽचारान् श्रद्धाविवृद्धभवनाभाविताऽन्तःकरणान् समुपदेश-विशेषपीयूषपानेन सन्तृप्तान् विधायाग्रे प्रासरन् ।

मध्येमार्गं विचित्रवेषः कश्चनसिन्दूर - बिन्दुविभूषितविशालभालो विधृतमहा-स्फटिकरुद्राक्षप्रवाल - चन्द्ररसादिमालो, भुजदण्डमणिबन्धनिबद्ध - स्थूलस्थूलैकादश-महारुद्राक्षो, विभूतिभूषितसकलाङ्गः, काषायाम्बरलसद्गात्रः करधृतखर्परपात्र-स्त्रिशूलमुत्तोलयन् कटितटनिबद्धघण्टिकाकलितक्वणिताऽऽकृष्टवटुकपटलश्चटुलं चलन्न-न्तिकमुपेत्य, निजतान्त्रिक - विद्यावैभवाभिमानमदमत्त इव शोणितसुदीर्घनयनः स्वचमत्कृतिचाकचक्यं विस्तारयन् स्तम्भयन्निखिलपान्थाऽध्वनीनलोचनपटलान् प्रदर्श-यन्नात्मनो विविधविधरूपता सकृत् कुक्कुरः सकृन्मेषः क्षणं वराहः क्षणं शार्दूलः इति पशुरूपाणि दर्शयन्नेव स "ओघड़" (अवघट नामा)—भूतेष्वात्मानमावेश्यक्वचि-च्चक्रवातः क्वचिन्झञ्झावातः पुनर्वात्यारूपधरः सर्वेषां चक्षूंषि दूषयन् रेणुभिः सकृन्नग्निरूपत्वमावहन् दहन् - काननस्थान्नीरसतरुगुल्मादिक्षुपसमूहान् परितो व्याप्य सुसाधुमण्डलमण्डितान्छ्रीरामानन्दाचार्यान् व्यावृणोत्-निजमायाविनिर्मितकृत्रिमप्रचण्ड-तापप्रसारितमहाज्वालामालालिप्ततनुकानिव श्रीरामानन्दाचार्यान् विदधदिवाऽव-शिष्ठते स्म स मान्त्रिको मायिको मायावी ।

इत्थं परितो ज्वालावलीश्लिष्टतनुमाचार्यचरणमालोक्य सर्वे सार्थवाहिनः, शिष्याः साधवो महात्मानश्च नितान्तं खिन्नाः व्याकुलाः समभूवन्, । तथाविधांश्च-

तानालोक्य भगवन्नाममहानारायणास्त्रप्रयोगं प्रयुञ्जानास्तन्निर्मितां वह्निमयीं मायां मायोपशमिन्या नारायणविद्यया श्रीराममन्त्रमय्या सद्यः शमयामासुः श्रीमद्रामानन्दाचार्याः।

क्षणार्द्धाऽनन्तरमेव सः मलिनविद्याविधानदक्षो यक्षराक्षसपिशाचप्रकोपाटोपमण्डिताद्भुतघोरदर्शनः सहसैव, त्राहि त्राहीति, रक्ष रक्षेति मां महास्त्रतेजः समुन्मेषसन्तापपरिप्लुष्टसर्वाङ्गोत्थितमहावेदनो निवेदनमपि कर्तुमसमर्थोऽनर्थविहितफलमात्मदोषजन्यमनुभवन्मुमूर्षुः शरणमापन्नोऽस्मि।

इति तस्य मायाविनः करुणक्रन्दनमाकर्ण्य, सर्वैः प्रदर्शितेऽपि स्वस्वभावनानुरूपे निर्णये यद्यपि–"शठे शाठ्यं समाचरेत्" एकतश्च–

"स्वकृत - दुरितदुःखं, पापपुञ्जोत्थमंहः,
फलमिदमुपभुञ्जन्त्येव दुष्टाः कृतानाम्।
सकलशुभहितेच्छून् विश्वबन्धूनशत्रून्
प्रतिविहितमहाघः सम्फलत्यात्मनीव ॥ १ ॥

इत्याकारको ध्वनिः प्रासरत्-तथापि-करुणावरुणालयस्वान्ताः श्रीमदाचार्याः सपदि कारुण्यार्द्रहृदः समभूवन्, कृतापराधमपि तं क्षमयैवान्वगृह्णन्। किन्तु दुष्टात्मानो दुष्टा एव सिध्यन्ति, तेषु दयास्रोतोऽपि नैष्ठुर्य्यमेवोत्पादयति, मधुरमेलाकाश्मीरजसुरभितमपि दुग्धं सर्पमुखनिपातितम्-विषरूपतां धत्ते। स्नेहोल्लासेन लालितोऽपि भुजङ्गमो दशत्येति सिद्धान्तानुसारं दुर्जनायितो दुरात्मा स "अवघटः" (ओघड़) इति तान्त्रिकः कृतापराधेऽपि लब्धक्षमाफलः, पुनरपि स्वप्रकृतिजां प्रवृत्तिमनुसरन् स्वकीयतन्त्रप्रयोगेणाऽभिचारं कलयन् सपदि वाततत्वमनुरुन्धन्निव स्वेतरसकलप्राणवायुमरुणत्।

ततः सर्वेषां श्रीरामानन्दाचार्यसहचराणां प्राणवायुः सहसाऽवरुद्धोऽभवत्, तेन सर्वे रुद्धप्राणाः निर्जीवा इव पदमपि चलितुं स्वजीवनधारणमपि कर्तुमसमर्थाः सञ्जाताः तदा तेषां तादृशीं गतप्राणमथीं चेष्टा माचेष्टमानाः वायुतत्वनिरोधिनीं लोकविरोधिनीं सकललोकापघातिनीं प्रयोजकनरकपातिनीं तदेव दुष्टजनप्रयुक्तां दुष्प्रवृत्ति विज्ञाय, सद्यः श्रीराममन्त्राख्यसञ्जीविनीं विद्यां प्रयोज्य श्रीराममन्त्राऽभिमन्त्रितं श्रीवैष्णवतन्त्रतन्त्रितं निजकमण्डलुगतं सञ्जीवनमिव जीवनम् ( जलम् )–जीवनप्रदमभिषिच्य निक्षिप्य सकलसाधुजनमुखे, सहचरगणमुखरे सद्यः पुनः पूर्ववदेव प्राणसञ्चारं प्राचारयन् श्रीरामानन्दाचार्याः। विलक्षणमिमं राममन्त्रप्रभावमाकर्ण्य निर्जीवायितानां मुखे निपतदेव रामनाममन्त्रितं पीयूषवारि सद्यः प्रासारयत्प्राण-

सञ्चारमिति, तत्क्षणे–तेषां प्राणवायवस्तु यथाऽवस्थिताः प्रवर्तमाना अभूवन् किन्तु दुश्चेष्टमानस्य दुर्जनस्य कृते सुदर्शनास्त्रमिव दुर्वाससमिवेमं मान्त्रिकं 'अवघट' (ओघड़) महोदयं सपदि निपीडयामास तत्कृतो दुरुपचारस्तस्यैव घातुकः संवृत्तः। इति निश्चित्य सः पुनस्तथैव-क्रोशन्-करुणं विस्वरं-कर्कशतरं क्रूरतमं चोच्चैः. हन्त, अब्रह्मण्यम्, अब्रह्मण्यम्, हा हतोऽस्मि, कारुण्यपाथोधयः ! शरणागतरक्षकाः शरण्याः शरणागतं रक्षन्तु, अवन्तु मामवन्तु दुर्विनीतं नाधुनावधि क्वचनेत्थ चेष्टिष्ये, न दुष्कर्मणि प्रवर्तिष्ये, न महात्मानं प्रति कदाचनापरात्स्यामि "क्षमध्वं मम दौरात्म्यम्, पान्तु ( पाथ ) मां करुणाऽर्णवाः ॥"

इति वारं वारं प्रार्थयन्तं दुरात्मानमपि तं क्षमां ( क्षमापात्रं ) चक्रुः। प्रसादं कृत्वा नीरुजं तं व्यदधुः, ततः प्रभृति सः श्रीरामानन्दाचार्याणां शिष्यत्वमुररीकृत्य साधुवृत्तिं परिकल्प्य नैजं दुर्मन्त्राणां दुष्प्रयोगं सर्वथा तत्याज। श्रीवैष्णवीं दीक्षां गृहीत्वा नैजं तान्त्रिकत्वं विसर्ज्य श्रीवैष्णवः संवृत्तः।

इत्थं मार्गे मार्गे नानाविधानि कौतुकानि कलयन्तः श्रीराममन्त्रप्रभावं चमत्कारातिशयं प्रदर्शयन्तः प्रहर्षयन्तश्च स्वजनचेतांसि, आकर्षयन्तश्च विविधपथप्रवृत्तान् नैजे किष्कण्टके वैष्णवमार्गे, स्थाने स्थाने वर्षयन्तश्चाऽपूर्वप्रवचनपीयूषवृष्टिम्, घर्षयन्तश्च दुष्प्रवृत्तिभृतोदुराचारान्, हर्षयन्तश्च श्रद्धालुसत्सङ्गिनो जनान्। शनैः शनैः प्रभासक्षेत्रस्थल्यां पदं न्यदधुः।

स्मारं स्मारञ्च द्वापरयुगीनं कालम् नितान्तं मनसि विव्यथिरे श्रीमदाचार्याः— साश्रुधारानिपातं खेदायमानाः सकलनिजहरिभक्तान् सहचरबन्धून् बोधयामासुः। विलोकयन्तु सर्वे सावधानाः प्रभासस्थलीं यत्र साक्षाद्भगवतो जगन्नियन्तुः श्रीपूर्णपुरुषोत्तमस्य श्रीकृष्णस्यैवाङ्गजाः सर्वे पुत्राः पौत्राः प्रपौत्रा नप्तारः बन्धवो बान्धवाश्चापि निजमर्य्यादां परित्यज्य निजशास्त्राज्ञां समुल्लङ्घ्य समुच्छृङ्खलवृत्तयो दुर्वृत्तयो भवन्तः सकललोकमान्यान् विश्ववन्द्यान् महर्षीनवहेलयन्तो दुष्पथगा अभूवन्. तदा ते महर्षिभिरेव शप्ताः परस्परं युद्धमाचरन्तो वारुणीं मदिरां पीत्वा मदान्धाः नष्टभ्रष्टमतयो निर्मर्यादिता ज्येष्ठान् श्रेष्ठानप्यवगणयन्तः स्वजनानप्यपरिचिन्वानाः स्वस्वात्मानमेव सर्वतो वरिष्ठं मन्वाना परस्परं दुरालापांस्तन्वानाः, अपशब्दान् गालींवा सन्वानाः शस्त्रास्त्रैः परस्परं क्षण्वानाः सापत्न्यभावं वितन्वाना वृद्धानां हिताऽहितवचांस्यप्यवमन्वानाः मिथस्तुमुलं युध्यमानाः मुहर्षिशापहतमतयो महामहासेनापतयो वारुणीपानरतयः सुमतयोऽपि कुमतयो भूत्वा युद्ध्वा ह्यत्रैव नाशमुपगता विमर्यादाः

समुद्धताः परित्यक्तसदाचाराः दुर्वृत्तवृत्तसेवनरताः कुपथगतास्तेऽगतिंगता एव िवं गताः । सैवेयं यादवस्थली ।

बन्धव ! प्रणमन्त्वेनं वारं वारं, अवगच्छन्तु यद् दुर्व्यसनरतो जनः कोऽपि साक्षाद् भगवदंशमुत्पन्नोऽपि न सुखं शेरते न चिरं तिष्ठति, गृह्णन्तु च सच्छिक्षां, यल्लोकातिगामपि सम्पत्तिमवाप्यापि न प्रमादं विदध्यात् नाऽभिमानं भजेत् नाऽवमन्येत गुरुजनान्, नाऽवहसेत् पूज्यान्—न परिहसेद्वा मुनीन् महात्मनः सतः, नहि मर्यादाविरुद्ध धर्मविरुद्धं शास्त्रविरुद्धं वा समाचरेत् न वा पेयाऽपेयं पिबेत् न भक्ष्याभक्ष्यं कलयेत् । न वा मद्यादिकं निषेवेत, न वाच्याऽवाच्यानि ब्रूयेत । इति । अन्यथा समुत्पथगानां दुर्वृत्तानामीदृशीव भवति दशा यज्जाता यादवानाम् । महद्भ्योऽपि महान्तः साक्षाद्भगवदङ्गजाता अपि नावशिष्यन्ते दुर्दशातः इति ।

ततः किञ्चिद् दूरं गत्वा सम्मुखमायान्तं श्रीसोमनाथमन्दिरशिखरं दृष्ट्वा, मन्ये हि तत् स्वकीयानुभूतां दुर्दान्तदानवयितयवनहतक-विहितघातकाऽहतशतायसमुद्गरीय-घोराऽऽघातजनितसर्वाङ्गवेदनां, भग्नशिरस्कां परितो निर्मथ्यमानावयवां, सर्वतः समुत्पाटितत्वचमिव लुञ्चिताऽशेषसम्पत्तिलतिकां, समाकुञ्चितामितसुवर्णमयानन्तवस्तु-संहतिम्, नग्नीकृतामितकुलाङ्गनात्रपाऽऽभरणाम्, भग्नीकृतात्मस्वरूपस्वामि - सकल-लौकैकनाथश्रीसोमनाथमूर्तिमयीमात्मदशां निवेदितुमेवोपस्थितं; मूकचेष्टयैव सर्वं विज्ञापयितुमेव स्वात्मदुःखकारणमिव,-विगलित सहस्रं ष्टकामयाऽश्रुपटलाऽलोकनोद्भूत-कारुण्यपरिपूतमिवाऽऽकलयितुमात्मानमवनतशिखरशेखरम्, पादपतितमिव चेष्टमानं, विचेष्टमानं स्वेष्टदेवविरहजनिताऽसह्यवेदनम् निवेदनमिवाचरन्तं हरन्तमिवालस्यप्रमाद-कातरत्व—विलासाऽभिलाषप्रवृद्धमहामोहनिद्रापटलम्, दृग्गोचरीभूतं वितर्कयामासुः श्रीरामानन्दाचार्याः ।

सहसैव समजनि निर्वेदसहचरो महाऽमर्षः, सद्यस्ते कस्मिन्नेकस्मिन् भग्नाऽवशेष-मन्दिरखण्डे समुपस्थिताः सिंहगर्जनामिवाऽऽकलयन्तो धार्मिकजनसमुदायं - तत्रत्यं सकलपूजकवर्गं धर्मप्राणां समुपस्थितां जनतां समागतं देशदेशान्तरेभ्यः श्रद्धासमृद्धं प्रऽद्ध यात्रिगणम् सम्बोध्य-भाषमाणाः प्रोत्तेजयामासु :—

भोः भोः सनातनधर्माऽवलम्बिनः सिन्धु-( हिन्दु ) पदभाजः ! कथम् नाधुना-ऽवधि महामोहाज्ञानजृम्भालस्यप्रमादसङ्कुला घोरेयं निद्रा भवतां भग्नाऽभवद् यदा भग्नाऽभवदेषा स्वेष्टदेवविशेषा श्रीसोमनाथमहामूर्तिः ? अहो पराकाष्ठा सञ्जाता भवतां कातरत्वस्य, एषैव किमु भवतामसुमतामसुधारिता ? यद्धि जीवत्स्वपि भवत्सु,

भवतां सम्मुखं एव भवत इष्टदेवस्य मूर्तिरखण्डचत । मन्दिराणि च भूमिसादाक्रियन्त, अवलानां लज्जा-भूषणान्यलुण्ठचन्त ? सकला देवसम्पत्तयः समाच्छिद्याऽनीयन्त, भ्रश्यन्ते स्म च देवमूर्तयः स्फोटचन्ते च देवविग्रहः, किन्तु भवन्तो ह्यकर्मण्याः, बृहन्नलायितावीग्रहाः, कान्दिशीकाः सन्तः पलायन्ते, किमेषैव भवतां धर्मनिष्ठा ? इदमेव हि भवतां पौरुषम्, इयमेव वीरता, इदमेव शौर्य्यम्, अयमेव समुत्साहः ? हन्त ! नैकत्र, नैकदा वा क्वचन जातम्, प्रत्यहमेव भूयो भूयः समाम्रेडचते : किम्बहुनाऽत्रैव भगवतः श्रीसोमनाथोपरि कियन्त्याक्रमणानि सञ्जातानि, नावलोकितानि न श्रुतानि किमु ? तथापि न भवतां प्रमादमोहनिद्रा शिथिलता संवृत्ता प्रत्युत गाढतामेवाऽऽपद्यते । लुप्ता किमु वीरता ? गतन्नु किमु शौर्य्यम् ? निलीना किमु स्वाभिमानिता ? कथं न स्मर्य्यते स्वात्मगौरवम्. कथं न ज्ञानविषयीक्रियते निजकुलप्रतिष्ठा ? कथं नाऽऽकार्यते समुत्साहः ?

क्व गता सा "जननी जन्मभूमिश्च स्वर्गादपिगरीयसी ।
धर्मः स्वनुष्ठितो, देवः समुपास्यः सुधामयः ॥" इति सूक्तिः ?

किञ्च "यतो धर्मस्ततो जयः" इत्युक्ति पुरस्कृत्य धर्म-कर्म-स्वेष्टदेवस्वरूपाणां, मूर्तीनां द्विजधेनूनां, शास्त्रपुराणानां, देवमन्दिराणाम् निजसस्कृतीनां संरक्षणाय प्राणपणेन प्रयतितव्यमेव सनातनधर्मावलम्बिभिः । स्वात्मनि विलुप्ता शक्तिः पुनर्भावनीया प्रादुर्भावनीया वा समुपार्जनीयमेव पुनरात्मबलम्, अग्रेसरीभवितव्यमभ्युदयमार्गे, नाधुनाऽपि बीजलोपः समजनि, सन्ति भवन्तोऽपि तादृशा एव यथा मान्धातृयुधिष्ठिरादयो बभूवुः । अतः पारस्परिकं वैमनस्यं निरस्य, मिथो नीचोच्चभावं विधूय, समस्ताः समवेता द्वैतं दूरीकृत्य ऐकमत्यमुररीकृत्य पुनः सर्वदा विजयदां सनातनधर्मध्वजामुत्तोल्य विजयशङ्खनादमापूर्याऽमितविक्रमाः वीरविक्रमावताराः सम्भूय दृढप्रतिज्ञाः सन्तो ह्यधर्मसत्ताविध्वंसनाय धर्मध्वंसकानां विस्तृतं भयं-सनातनधर्मध्वंसननीतिं चैषां समूलमुन्मूलयन्त्विति । वैदेशिकी सत्तामवसादयन्तु । सम्प्रति समे भवन्तु पुनः सोत्साहाः दर्शयन्तु निजपौरुषम् प्रकाशयन्तु पुनरात्मगौरवम् प्रतिष्ठापयन्तु पुनः स्वप्रतिष्ठाम्, स्वारोपयन्तु पुनः कीर्तिलवलीम् । समुन्मूलयन्तु शलायितां द्वेषलताम् । इति—

इत्थं निर्जीवेष्वपि जीवनसञ्चारिणीम्, निर्बलेषु बलप्रसारिणीम् वीरवरेषु समुत्साहिनीम्, मनस्विषु मनोहारिणीम्, अधीरेषु धीरताविधारिणीम् अकर्मण्येष्वपि कर्मप्रवर्तिनीम् कण्ठीरवजयगर्जनां श्रीरामानन्दाचार्याणामाश्रुत्य सौराष्ट्रदेशवास्तव्येषु यथानामतथागुणेषु प्रकृष्टगुणगर्द्धिनी समुत्साहबलप्रवर्द्धिनी ह्यभूतपूर्वा पुनर्जागर्ति-

गरितारभवत् । सौराष्ट्रदेशीयाः नवयुवानो युवतयश्च धृतवीरव्रताः स्वधर्म-संस्कृति-परिरक्षणाय सक्षणाः प्रतिक्षणं दिवाक्षणदं ह्यक्षुण्णपरम्परां प्रवर्तयितुं कृतसङ्कल्पाः समभूवन् । तत्रत्या नरेन्द्रा अपि श्रीस्वामिमहाराजानां चरणशरणगताः सनातनधर्म-परिरक्षणमेव राजधर्मं विदित्वा धर्मोद्धाराय यथानिर्देशं प्रयत्नपराः सञ्जाताः ।

किञ्च निवेदितवन्तश्च-आचार्यवर्याः ! अस्मासु यद्दौरात्म्यम् यः पारस्परिको भेदवुद्धिर्द्वेषभावना च घोरतमा, कृतापकारस्य प्रतिशोधभावना याऽऽसीद् तस्या एवायं दुष्परिणामः । नैकोऽन्यस्मै साहाय्यमाकलयति स्म न वा संहत्य विधर्मिणां सह योद्धुमुद्युक्ता एव समभवन् प्रत्युत शत्रुहस्तगतं स्ववान्धवं विलोक्य द्वेषाग्निदग्ध-कारुण्याः प्रवलेर्ष्या-कषायितान्तःकरण उपेक्षामेव चक्रम, इति-नाधुना तथाऽऽचरिष्याम इति प्रतिजानीमहे । इति ।

—

# सप्तत्रिंशः परिच्छेदः

ततः प्रभासक्षेत्रं सम्यगालोच्य तदानींतनीं तत्रत्यां स्थितिमालोक्य द्रुतहृदयाः श्रीरामानन्दाचार्याः सर्वान् सम्बोध्य देशकालानुसारिसमुद्बोधनं, विरचय्य सनातनधर्माऽवलम्बिषु पुनः स्वधर्मोपरि कुठाराघातान् वारयितुं प्रोत्साहं पारस्परिकीं द्वेषमात्सर्येर्ष्याप्रवृत्तिं समुन्मूल्य, स्वधर्म-देवप्रतिमां-देवमन्दिर-देवद्रव्यसतीधर्म-कुलवधूलज्जासंरक्षणार्थं दृढप्रतिज्ञत्वं सम्पाद्य - जागरूकतयैव सर्वदा स्थातव्यमित्युपदिश्य श्रीद्वारिकाधामयात्रार्थं प्रस्थानं चक्रुः। यथा यथा श्रीस्वामिमहाभागा धाम प्रत्युन्मुखा अग्रेऽग्रं प्रसृता अभूवन्, समन्ततो नरानार्यश्च तैः सह सुखदसमागमसत्सङ्गाऽवसरमुदीक्ष्य श्रीद्वारिकाधामगमनायैकत्रिताः सन्तःसमवेता बभूवुः। सम्प्रति श्रीरामानन्दाचार्यानुयायिनां मण्डली महामण्डलीव सुरनद्याः श्रीजाह्नव्याः प्रवाहमिव नानागिरिणदीसमागमसञ्जातभूरिभूरिवारिप्रवाहपूरपूरितमिवाऽभवत्।

मार्गे मार्गे च सम्मुखागत - विपक्षिविद्वद्धौरेयैः सह सनातन - धर्मविषयकविशिष्टाद्वैतमतस्थापन-सकलश्रुतिवचन-समन्वयाऽनुरूप-हेयप्रत्यनीकमायिकलौकिकधर्मगुणविरहित-सकलनित्यैश्वर्य्यादि यशः श्रीज्ञानवैराग्यवीर्यसच्चिदानन्दमय - दयादाक्षिण्यभक्तवात्सल्याद्यनन्तगुणगणमाहात्म्योल्लसितजगत्कर्तृत्वादि सद्गुणगरिष्ठ-चिदचिद्विशिष्टपरब्रह्मप्रतिपादनात्मकं शास्त्रार्थं कुर्वाणाः, बहुविधजाड्यजडीभूताऽज्ञानध्वान्ताच्छन्नजनतास्वान्ते ज्ञानज्योतिः समुदयन्तः दिव्यं ज्ञानं समुद्भासयन्तः, भगवत्स्वरूपं प्रकाशयन्तः, नांशयन्तश्च तेषां मानासिकीदुर्भावनासहकृताऽसहकृतभक्तियोग - लौकिकोपभोगव्यासक्तप्रवृत्तिम्, निजप्रवचनसुधावृष्टिमिवाऽपूर्वाऽऽनन्दसृष्टिं रचयन्तः, प्रयान्ति स्म, भान्ति स्म च सकलवृन्दारकवृन्दमण्डलीपरिवृतसुराचार्यपरिकरवरिवृढायमानाः। श्री कृष्णचरणनखचन्द्रचन्द्रिकाचकोरायमाणाः, दर्शनलिप्सव इव समवेतभूलोकनाकलोकनागलोकवास्तव्य - सम्मर्दसदस्यायिताः अहमहमिकयाऽग्रेऽग्रं प्रसरन्तो जयजयशब्दान् घोषयन्तो दिदृक्षवः समाजग्मुः।

इत्थं सनातनधर्मपताकां प्रस्फुरन्तः, सन्ततप्रचण्ड - पाषण्डिजनतुण्डतण्डन-ताण्डवं रचयन्तः, श्रीरामानन्दाचार्याः श्रीद्वारकाधाम निजकामनापूरकमकामकामिनां मोक्षप्रदमवापुः।

यथाहि तेषां समागमनोदन्तं निखिलवायुमण्डले विस्तृतमभूत तत्क्षणमेव समस्तसौराष्ट्रदेशवास्तव्यानां भव्यानां नव्यवयस्क-युवकयुवतिजनानां बालानां वृद्धानां ज्ञानसमृद्धानां भक्तिभावपरिवृद्धानां सतां महताञ्च सिद्धानां महामहापर्वणि - समुद्रादिस्नानार्थमिव भागवद्दर्शनार्थं महान् मनुजसम्मर्द इवावालोक्यत। क्रमेण तत्र-द्वारिकाधामस्थितेषु पवित्रतमजलाशयेषु, श्रीगोमत्याम् वा सविधिस्नात्वा सन्ध्यावन्दन-देवर्षिपितृतर्पण - भगवत्स्मरणादिकं सम्यग् विधाय श्रीद्वारकाधीशमन्दिरमवाप्य नितान्तहृष्टस्वान्ताः यथानियमं यथोपचारसमाहृतसम्भारोपकरणसामग्री-समलङ्कृत-सौगन्ध्यसुवासितगन्ध-कुंकुमकेसरकर्पूरैला-लवङ्गताम्बूल - पूगीफल-पुष्प-धूपदीपनैवेद्य-वस्त्राऽऽभरणमाल्यादियथालब्धोपाहृतोपचारैः श्रीद्वारकाधीश्वरं सपरिकरमष्टपट्ट-राज्ञीपरिराजितं सम्पूज्य-महाराजोपचारैः समर्चन-स्तवन-नमनादिकं विधाय महाऽऽरार्तिकं कर्पूरार्तिकं शतवर्त्तिकारार्तिकञ्च समवतारयामासुः।

तथैव मन्दिरवहिर्भागे विशालप्राङ्गणे समायोजिते सर्वविधाऽऽसन-सिंहासन-शुभाऽऽस्यन्दिका सहस्रशोभितान्तराले मध्ये सुविशालोन्नत-रजतगिरिशिखरायितोच्चपीठे परितो नवपल्लव मालिकामण्डिते विविधपुष्पमालाऽलङ्कृते ललितकदलीस्तम्भशतविलसिते महापटमण्डपे-समाकार्यसमाऽऽसादनाय - भगवदर्चनाविधानविनिवृत्ताः श्रीरामानन्दाचार्याः सभामण्डपं समाजयामासुः। समुपस्थितैस्तत्रत्यैः समागतैर्वा सुदूर-दूरात् दर्शकपटलैः तत्रसमावाहिताः श्रीरामानन्दाचार्याः शास्त्रोक्तरीत्या गुर्वर्चन-परम्परया च क्रमश एकैकक्रमेण-सिंहासनासीनाः प्रणतिपुरःसरं यथाविधिगन्ध-माल्य-वासोभिः ससम्मानं सश्रद्धं समक्त्युद्रेकं सोल्लासं समार्च्यन्त यथा ह्यमरपरिवृढऽऽचार्यो विविधविबुधवृन्दैः।

ततः श्रीरामानन्दाचार्याः सर्वान् भगवदीयान् वैष्णवतल्लजान् निजाशीः-परम्पराभिः समभिनन्द्य, सम्बोध्य चाशेषान्, निजप्रवचनपीयूष-प्रस्रवणपूरपूरिताऽन्तः-स्स्वान्तान् विदध्युः। प्रासरच्च तदानीमलौकिकी वाक् सुरनिम्नगा।

अयि, परमभगवदीयाः, सुलभकारुण्यतारुण्योल्लास - विलासभूमयो भगवतः! श्रद्धासमृद्धानन्दसौभाग्यशालिनः! भगवच्चरणारविन्दमकरन्द - मिलिन्दायमानाः! सारल्य-सौशील्य-सौजन्य-धन्याः!

विदाङ्कुर्वन्त्वत्रभवतो भवन्तः यदस्याः पूजनीयायाः परमपावनाया भूमेः ह्यगण्यपुण्य-धन्येषु रजःकणेषु समवेताः वयं कियन्तोऽपूर्वपुण्यवन्तः सौभाग्यशालिनः स्मः, यदत्र भगवतः सप्तपुरीष्वेकतमां सर्वतः श्रेष्ठां :—श्रीद्वारकापुरीं सकलधरणी-मण्डलमण्डनीभूतां परमपूता प्रकाशितविश्वकर्मवास्तुकलाप्रभूतां—"श्रीश्रीकृष्णस्याङ्ग-सम्भूतां" दर्शं दर्शमात्मनः सौभाग्यातिशयं मन्वानाः लब्धमानवजीवनसाफल्याः सपदिकरतलीकृतकैवल्या इव संवृत्ताः । माहात्म्यञ्चाऽस्य शास्त्रेषु वर्णितमस्ति—

(श्रीगर्गसंहितायाम् :— ) "द्वारकां नगरीं दृष्ट्वा नरो नारायणो भवेत् ।" इति

(यत्र च गोमतीतीर्थमस्ति :—) "गोमतीतीरजं पुण्यं रजो यो धारयेन्नरः ।
शतजन्मकृतान्यापान् मुच्यते नात्र संशयः ।।

किञ्च—"तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ।"

वेदेऽपि :—"तीर्थैस्तरन्ति प्रवतोमहीरिति ।"

( महीरिति" ) महाभा तेऽपि :—"प्रभावाददद्भुताद्भूमेः सलिलस्य च तेजसा ।
परिग्रहान् मुनीनाञ्च तीर्थानां पुण्यता स्मृता ।।"

किञ्च—"यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।" (स्कन्दपुराणे)
तथा पृथिव्यामुद्देशाः केचित्पुण्यतमाः स्मृताः ।।"

अतो वयमिह धन्याः धन्यतमाः सञ्जाता येहि पवित्रतमेऽस्मिन्भगवद्धाम्नि समागताः । यावन्तो हि मानवदेहधारिणः पुण्यात्मानो जनाः, येहि सर्वदा नित्य-नैमित्तिककर्माऽनुष्ठान-विधानपावितात्मानः, येचाऽपूर्वफलप्रेप्सवः, ये वा भगवच्चरणा-रविन्दमकरन्दजुषो भगवदनुग्रहाऽऽनन्दपुषो दिव्यवपुषः सन्ति, तैः सर्वदा तीर्थनिषेवणं करणीयमेव कल्याणाकांक्षिभिः ।

परन्तु तत्राऽपि विशिष्यते श्रद्धा । योहि यादृश्या श्रद्धया तीर्थं निषेवते, तत् तदर्थं तथैवाऽपूर्वसाधकं भवति । यथा हि वयं प्रभाते स्नानावसरे यत्रकुत्रापि सामान्ये तडागे ( सरोवरे ) नद्यां महानद्यां कूपे वाप्याम् किं बहुना गृहे स्थितामेव कुड्यां मृत्तिका-काष्ठ-लोह-ताम्र-पित्तलादि-निर्मितवृहत्पात्रे सम्भृतजले वा स्नानार्थमुद्यता भवेम, तदा गङ्गास्नानसदृशपावनत्वकामनया भगवतीं भागीरथीं दूरदूरतरतोऽपि नाममात्रेणैव स्मरामस्तर्हि सपद्यस्मत्स्मृतिपथमुपगतात्रिपथगा जाह्नवी समागत्य तद्वारिसकलं स्वकीयसलिलमिव परिकल्पयति-तथाविधमेव पावनपूर्वं वितरति, तथैव तीर्थान्यपि ।

यथा हि :—'गङ्गागङ्गेति यो ब्रूयाद् योजनानां शतैरपि ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।।" एवमेव हि:—

"पुष्कराद्यानि तीर्थानि. गङ्गाद्याः सरितस्तथा, आगच्छन्तु पवित्राणि—"
"स्नान काले", 'ध्यानकाले', सन्ध्याकाले' दानकाले' सर्वकाले' सदा ममे' ति,

यस्मिन् यस्मिन् समये स्मरति जनस्तदैव तत्क्षणं वितनुते तदमीप्सितमिति । परञ्चै-तत् सर्वं श्रद्धाऽनुरूपमेव, न केवलं वाचा कथनमात्रेणैवाऽपूर्वसिद्धिर्भवति - अपितु तज्जनितवासना - वासितान्तःकरणवृत्तित्वस्यावश्यकता भवति । तद्वासनया तथा श्रद्धया समाहूता भगवती भागीरथी स्वदृष्टस्वरूपेणाऽलौकिककारिभिस्तत्पात्रं तज्जलं च तथा पावितं कुरुते येन तदेव गाङ्गं वरिभूत्वा स्नातं नरं पावयति । एवमेव तीर्थान्यपि तथा श्रद्धाविशषैः सेवितानि पावयन्ति जनं तथेति ।

शास्त्रेषु हि तीर्थान्यपि त्रिविधानि सम्मतानि—"स्थावराणि, जङ्गमानि, मानसानि, च त्रिविधान्येतानि परस्परं सहायान्येव भवन्ति । जङ्गमानि-(साधु-महात्म-विद्वत्स्वरूपाणि निजोपदेश-सत्सङ्गत्यादिभिः) श्रोत्तृणां सुसेविनां मनःशुद्धिं कुर्वन्ति, अतो मानसानां तीर्थानां शुद्धौ सत्याम् स्थावराणां शुद्धिर्भवति ।

उक्तञ्च जङ्गमतीर्थानिः } "साधवो जङ्गमं तीर्थम् निर्मलं सार्वकामिकम् । ( सार्वकालिम् ) येषां वाक्योदकेनैव शुद्धयन्ति मलिना जनाः ॥" तथा च—

"चित्तमन्तर्गतं दुष्टं तीर्थस्नानान्न शुद्धयति । शतशोऽथजलैर्धौतं सुराभाण्डमिवा-शुचि ।" गङ्गादिषु स्नानेन देहशुद्धिस्तु भवत्येव परन्त्वन्तर्गतस्य दुष्टस्य मनसः शुद्धिर्न भवति । विनामनसः शुद्धया नापूर्वं साध्नोतुं ( साधयितुं ) वा शक्नोति जनः । अतो मनसः शुद्धिर्नितान्तमावश्यकी सा च-सतां महतां विदुषां महात्मनां सत्सङ्गेनैव भवितुमर्हति नान्यनेति अतः साधूनां महात्मनां शरणीभूय तेषां निषेवणमेव सर्वदा करणीयम् ।

अत एवोक्तम्—"गङ्गादिसर्वतीर्थेषु यो नरः स्नाति सर्वदा ।
यः करोति सतां सङ्गं, तयोः सत्सङ्गमो वरः ॥" इति निश्चयः

अतः कलौ तु जङ्गमभूतानामेव तीर्थानां माहात्म्यं सर्वतो विशिष्टम् किञ्च—अन्यतीर्थानि स्वस्थाने एव स्थितानि मिलन्ति, यदा शुद्धिकामो जनो यथाऽवसरं प्राप्य यदा तत्र गमिष्यति, तथा शुद्धिं लप्स्यते, नान्यथाकालान्तरेऽपि । किन्तु साधवो महात्मानो जङ्गमाश्चलन्तो भ्रमन्त एव तीर्थरूपा गृहे स्थितस्यापि जनस्य सामीप्य-मेत्य स्वयमुपस्थाय, दुर्विनीतस्याऽपि निराकांक्षस्यापि जनस्य सान्निध्यमवाप्य तदन्तः-करणशुद्धिं विधाय निर्मलहृदयं तं सत्सङ्गमोपयुक्तं भगवत्कृपापात्रीकर्तुं प्रभवन्ति । अतो जङ्गमभूताः परिपूताङ्घ्रिरेणुपावितसकलजनगेहाः सदेहाऽच्युतरूपाः, भगवत्स्वरूपाः संसारान्धकूपादुद्धारकाः समस्तदुरितसंहारकाः भवसागरतारका भवन्ति अतः सर्व-तीर्थेभ्यो वरिष्ठाः सन्ति । तथा च मानसतीर्थानिः—

मानसतीर्थानि
'सत्यं तीर्थं क्षमातीर्थं तीर्थमिन्द्रियनिग्रहः। सर्वभूतदयातीर्थं तीर्थमार्जवमेव च ॥'
'दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते। ब्रह्मचर्यं परं तीर्थं तीर्थञ्च प्रियवादिता।'
'ज्ञानं तीर्थं धृतिस्तीर्थं तपस्तीर्थमुदाहृतम्।'

'एतानि मानसतीर्थानि सन्ति। एषा मेव शुद्धिर्भगवदीयानां तीर्थभूतानां महात्मनां संसेवनयैव भवति नान्यथा। यावदेषां समेषां तीर्थानां विकासो न भवति न तावत्फलप्राप्तिः। विकासश्चैषां महात्मनां सत्सङ्गत्या तदुक्तवचनाऽनुसारं पुनः पुनर्विमर्शने न तथाकथिताचरणैः तदुपदिष्टमार्गोपरि सश्रद्धं प्रवर्तनेनैव भवति। उक्तञ्च पद्मपुराणेपि :—

'यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
'विद्यातपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥' (इति पद्मपुराणे)
'स स्नातो यो दमस्नातः शुचिः शुद्धमनोमलः।'
न जलाप्लुतदेहस्य स्नानमित्यभिधीयते ॥' ( इति महाभारते )

यस्य च चेतसि मालिन्यमेव तिष्ठति न तस्य गङ्गाम्भसि शतवारं स्नानेनाऽपि शुद्धिः। उक्तञ्चः—"यो लुब्धः पिशुनः क्रूरो दाम्भिको विषयात्मकः।
सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः ॥

'नहि सङ्गादयोऽपि तथाविधः लुब्धं, निन्दकं, कर्णेजपं, क्रूरं दम्भिनं विषयासक्तं जनं पावयितुं शक्ताः। अतः सर्वात्मना तस्यैव शुद्धिर्भवति, यः समस्तं मानसिकं मलं त्यक्त्वा विशुद्धोभवति। यतो हि :—'मानसे तु मले त्यक्ते भवत्यन्तः सुनिर्मलः।'
स्थावराणि तीर्थानि तुः—यथा अयोध्या जनकपुर प्रयाग मथुरा वृन्दावन पुष्कर काशी हरिद्वार, उज्जैन, द्वारका, पुरी, रामेश्वरं श्रीरङ्गं नासिकं—बदरिकाश्रम-काञ्ची प्रभृतीनि स्थावराणि तीर्थानि लसन्ति।
(श्रीस्कन्दपुराणे अगस्त्यवचनम्) 'तस्माद् भौमेषु तीर्थेषु मानसेषु च नित्यशः।
उभयेष्वपि च यः स्नाति स याति परमां गतिम् ॥'
किञ्चः— "तीर्थं हि भगवन्मार्गः साधनं परमं मतम्।
देशकालविभूतीनां ज्ञापकं बुद्धिवर्द्धकम् ॥"
"धर्मस्य च दयायाश्च ज्ञानं वास्तविकं भवेत्।
विश्वप्रेम तथाविश्वबन्धुत्वं जायते ध्रुवम् ॥"
"स्वाऽभीप्सितं च तीर्थसेवनतः फलम्।
सांसारिकेभ्यो बन्धेभ्यः वासनाभ्यश्च लभ्यते ॥"

'भक्तिः सर्वात्मभावेन साधुतीर्थनिषेवणात् ।'

किञ्च- 'अस्तित्वञ्चैव माहात्म्यम्' तीर्थानां विद्यतेऽनिशम् ।
सेवकानां सुखप्राप्तिः स्वात्मज्ञानप्रकाशनम् ।
कर्तव्यपालनज्ञानं साफल्यं लब्धजन्मनः ।
मायामोहनिरासश्च तीर्थसेवनसत्फलम् ।।

येहि तीर्थानि निषेवन्ते तेषां बुद्धिर्विशुद्धा प्रवुद्धाऽलौकिकज्ञानवोधिका भवति न तेषु सांसारिकमिथ्या - कपट - पाषण्डकर्मप्रवृत्ता भवन्ति तेषां मानसिकी वृत्तिरपि 'वसुधैव कुटुम्वकं' नाहं द्वेषी न मे द्वेष्यो न दोषो दोषदृङ् न मे । सर्वं मित्रं जगन्-मित्रं सर्वस्याहं, यतः प्रभोः । समुत्पन्नं, कथं भिन्नं मत्तः स्यादिति मे मतिः ।।'

यदि च तीर्थसेवनेऽपि न मतिः शुद्धा भवेत् तर्हि व्यर्थमेव तत् तस्य । तत्र-स्थित्वाऽपि यदि मिथ्यावादिता पाषण्डप्रवृत्तिः, असद्भाषणम्, प्रमाद आलस्यं वा पुनः पुनः पापकल्पना च जागरिता भवति तर्हि न किमपि फलम् प्रत्युतपापदार्ढ्य-मेव । उक्तञ्च—'अन्यक्षेत्रे कृतं पापं तीर्थक्षेत्रे विनश्यति । तीर्थक्षेत्रे कृतं पापं वज्रलेपो भविष्यति ।' अतः तीर्थं सेवमानो जनः, सत्यं वदेत् धर्मं चरेत्, न पाषण्डं कुर्यात् न दम्भं भजेत् नाऽऽलस्यं धारयेत्, न प्रतारणं विदध्यात् । सर्वदा भगवत्स्मरणं कुर्वन् सकलहितरतः मनोवाक्कायकर्मभिर्निष्पापः सन् साधूनां महात्मनां सेवां चरन् सकलप्राणिनां कल्याणाय सर्वदा प्रयतेत । स्वात्मनि दासानुदासत्वभावनयैव तीर्थं निषेवेत । अयमेव परमोधर्मं इदमेव जीवनसाफल्यं, अयमेव भगवत्प्राप्त्युपायः, एषैव—तीर्थसमुपासना-इयमेव भक्तानां कृते भगवत्प्राप्तेः निःश्रेणी । तीर्थानि जलपूर्णानि-भवन्त्येव-तत्रजलं हि सोमस्य स्थूलतमं रूपं सोमप्रधानमेव । सोमश्च सर्वप्राणिषु जीवनाधायकं तत्वम् । सोमेनैव प्राणाः पुष्टाः भवन्ति यतोहि 'अग्नीषोमात्मकं जगत्' इति वैदिकः सिद्धान्तः । सोमोहि—अन्नं, सोमोघृतम्, दुग्धञ्च सोम एव समस्त वनवनस्पतिष्वपि सोम एव व्याप्तः अतः सर्वा औषधयोऽपि हरिताः भरिताः फलिताः पुष्पिताश्च तिष्ठन्ति सर्वे तरवो लता गुल्माः क्षुपादयः सर्वे सोमरसेनैव स्थितिमन्तः । तादृशश्च सोमः प्राधान्येन तीर्थादिषु विशेषतः समुपलभ्यते, जलरूपेण तु प्रत्यक्षमेव, तथैव वृक्षवहुलत्वात् तरुन्नततिष्वपि सोमो राजते । सोमोप्रधानाः हि तीर्थादयः, सोमश्च सकलप्राणिजीवनम् अतो जीवनाऽऽधारभूतानि तीर्थानि भवन्ति, अतस्तेषां सर्वात्मना रक्षणं नितान्तमावश्यकम् । प्रायोहि ऋषयो महर्षयश्च अतएव तीर्थेष्वपि निवसन्ति । यत्र च ते निवसन्ति तत्स्थानमपि तीर्थभूतमेव भवति-तेषां क्रियाकलापा अपि सोमप्रवर्द्धकाः यज्ञयागादिकर्मविधानाधिक्यात् । आश्रयणीयानि भवन्ति तीर्थानि ।

किन्तु साम्प्रतम् भारते भूयांस आसुरा दुष्कर्मकारिणो दानवायिता मानवाऽधमाः प्रविष्टाः समभूवन् येहि नित्यमास्माकीनानि तीर्थानि - दूषयन्ति, देवमन्दिराणि दारयन्ति, देवप्रतिमाः खण्डयन्ति धर्मशास्त्राणि ध्वंसयन्ति,—आक्रामन्ति च पवित्रस्थलानि, भ्रंशयन्ति चास्माकं सकलाः धार्मिकीः क्रियाः, यज्ञयागादि साधनानि च, अत आक्रान्तमिदं सम्प्रति समस्तं, सनातनधर्मावलम्बि-हिन्दूपदवाच्यः सिन्धुवास्तव्यो धार्मिकोजनोऽपि भूरिपरित्रस्तस्तेषां दुराचारैराक्रमणव्यापारैश्च, अतो नाधुना प्रतीक्षाकालः परिपालनीयः, पालनीयश्च सत्वरं सोत्साहं दुर्दान्तदुष्टदमनपुरःसरं तात्कालिकः प्रतीकारप्रकारः। अतः सर्वैरेव पारस्परिकं वैरभावं भ्राष्ट्रे सम्मर्ज्य नैजं शौर्यं तेजो बलञ्चैकीकृत्य स्कन्धेषु स्कन्धं संसज्य (संयोज्य) वैदेशिकजनाक्रमणस्य मुखमर्दनपूर्वकं पद्भ्यां सम्मर्दनं-निर्दलनं धूलिसात्करणमेव विधातव्यम्। अत· सर्वे भारतीयाः क्षत्रियाः सैनिका धर्मप्राणाः सोत्साहा नवयुवानः सम्प्रत्यशेषविधिना सर्वोपकरणसुसज्जिताः भवन्तस्तत्रभवन्तोभवन्तः प्रतिष्ठागौरवरक्षणप्रेप्सवः पूजका याजकाः श्रोत्रियाः कर्मठाः सन्तोमहान्तश्च-सर्व एव नैजं परमावश्यकमेव कर्तव्यं मत्वा—अस्मद् धर्मविध्वंसकानां विध्वसनायैव बद्धपरिकराः सन्तः सर्वान् विरोधिनो विहिंसन्तु। न हि हिंसकानां हिंसा निन्द्या भवति—उक्तञ्च भागवतेऽपि हिरण्यकशिपुवधप्रसङ्गे प्रह्लादस्तुतौ—'तद्यच्छमन्युरसुरश्च हतस्त्वयाद्य मोदेत साधुरपि वृश्चिकसर्पहत्या' अतः हिंसकान् हिंसन्तु धार्मिकस्थानानि रक्षन्तु, धर्मञ्च पालयन्तु" इत्युक्त्वा श्री रामानन्दाचार्याः विरेमुः। ततः सर्वैः सम्पूजिताः सभां विससर्जुः।

---

# अष्टात्रिंशत्तमः परिच्छेदः

यदा श्रीरामानन्दाचार्याः श्रीद्वारकाधीशं साष्टाङ्गं प्रणम्य तपोमूर्तेः श्री कर्दममहर्षेराश्रमं प्रति प्रस्थातुकामाः समभूवन् तदा सौराष्ट्रदेशीयैः भक्तवरैः श्रेष्ठिभि-र्नागरिकैर्यथास्वरूपं यथाकुलं धनरत्नाद्युपहारैः समर्चिताः सम्मानिताः सर्वांस्तान् भक्तवरान् स्वीयशुभाशीर्वादैरभिनन्द्यसंन्यासिनां कृते धनरत्नादीनां स्पर्शोऽपि शास्त्र-निषिद्धः किमुत तद्ग्रहणमिति प्रवदन्तः समस्तं धनरत्नराशिं समागतेभ्यो द्विजमुख्ये-भ्यो भगवत्पूजकेभ्यः श्रोत्रियेभ्यो याजकेभ्यश्च विभज्य वितेरुः।

ततः श्रीद्वारकापुरीं मन्दिरं तत्रत्यां भूमिञ्च सश्रद्धं पुनः पुनः प्रणम्य प्रातिष्ठन्। पद्भ्यामेव शनैः शनैः प्रचलन्तः क्रमेण वनाद्वनं, अटवीतोऽटवीं पारयित्वा श्रीडाकोरनाथस्थानं श्रीरणछोड़रायमन्दिरमवाप्य भगवतः श्रीरणछोड़स्वरूपस्य दर्शनं वन्दनम् समर्हणञ्च यथानियमं विधाय वारं वारं विविधस्तोत्रमन्त्रैः स्तुत्वा तत्रैकां रात्रिमुषित्वा, यथानियमं समागतान् वैष्णववरान् समुपदेशैः भक्तिभाव-प्रवर्द्धनैर्वचनामृतैः सन्तोष्य भगवतः 'श्रीरणछोड़' इति नाम कथं सञ्जातमिति भगवल्ली-लामाहात्म्यं सविस्तरं वर्णयित्वा सर्वेषां शङ्कानिवारणपूर्वकं मनस्तोषं कलयामासुः।

ततः प्रस्थाय पुनर्वन्यमार्गमनुसृत्य प्रस्थिताः श्रीमदाचार्यवर्याः यदा 'साबरमत्याः' सान्निध्यमुपगतास्तदा सर्वेषामेव 'श्रीमतो महाभारतस्थ-विशिष्ट-दानवीरस्य महाराजस्य अङ्गदेशाधीश्वरस्य नाम्ना प्रसिद्धां तद्वारैव निवासितां नगरीं कर्णयशोवर्द्धिनीं प्रत्यक्षमक्षिविषयीकर्तुं दिदृक्षा जागरिता समभूत्। 'कर्णावती नगरी' याहि—साबरमत्याः दक्षिणे तटे सुविशाला विविधमहाशालाराजिराजित-प्रासादा, सुविभक्त-महापथ-राजपथ-चत्वर-वीथिका-सुविस्तारा, समन्ततो महाप्राकार-परिवृता सुविशालगोपुरालङ्कृता - बहुविधविस्तीर्ण - मणिगणादिवस्तुनिचयशोभिताऽऽ-पणबहुला। यत्र च—

क्वचित् नानाविध - किरणजालस्फुरणचाकचक्यचकितचक्षुः पटलकान्तयोऽ-लङ्काराः शातकुम्भकल्पित-कटक-कुण्डल, किरीट, हार, तरललोलकैकावली पारितथ्या

ललाटिका, कर्णिका, ग्रैवेयथका, ललन्तिका, प्रालम्बिका-प्रभृति-प्रतप्तचामीकरचश्चच्चित्रितानेकपतत्रिकुलाऽऽकृतिललितभूषणादि - क्रय्यवस्तुपटलमण्डित-पण्यमहापण्याऽगण्य-विस्तारा, क्वचिच्च राजत ( रौप्यादि ) निर्मित पाटकपटनूपुर-रणञ्झणञ्झणनिकाऽऽभरण मेखला रशना पादाङ्गुलिमुद्रिकाक्षुद्रघण्टिकाशतसमन्वितकाञ्चीकलापाऽऽकल्पादयो सुविस्तृता आसन् ।

एकतश्च विविधमुक्ताफल-परिकल्पित महाहारादयः समवलम्बमानाः भान्न्ते स्म । क्वाचिन्नागदन्तेऽवलग्ना मुक्तावली, शतयष्टिका, गुच्छार्द्धगुच्छगोस्तनाऽर्द्धहाराः माणवक नक्षत्रमालादयो स्फटिकनिर्मित-मञ्जूषादिषूल्लसत्कान्तयो दृश्यन्ते स्म । अपरत्र च हीरकहारावली स्वकान्ति प्रस्फुरितचतुर्गुण चाकचक्योल्लासा हासायतेस्म कैलासाधीश्वरहरमहाट्टहासम् । कुत्रचन महापद्मराग-रागमयकान्तिविस्तार-विलसित-महापण्य-वीथिका विस्तारयत्यकाण्डसन्ध्याकालिकारुणाऽभ्रभ्रान्ति दर्शकानाम् । एकत्र च महानीलारत्ननिचय-निर्मितताऽलंकृतितिपटलप्रसृतप्रदीप्तप्रतीतानिशिभ्रमभ्रान्तिर्दिवाऽपि कुरुते जनाश्चर्यम् । अपरत्र च गारुत्मतसहस्रपरिकल्पितमहाऽऽभरण विच्छुरितकान्ति-सङ्क्रान्ति संस्कृत-मुक्ताफलनिगुम्फितमहाहारादयोऽपि स्फुरितहरितकान्तिजुषो जनयन्ति स्फटिकमञ्जूषान्तर्गता अपि हरिन्मणिमयपेटिकागर्भगताहरितमणिहारभ्रमम् । अन्यत्र च पुष्परागमणिपटलमपि सायंकालेऽपि पूर्वाह्णिकालिकीं मृदुलस्वर्णिम - सूर्यकान्ति-भ्रममुत्पादयति । क्वचिच्च प्रवालपुञ्जं प्रसारित पाटलां द्युतिं, कुत्रचन गोमेद-वैदूर्य माणिक्याराशिः पुञ्जीभूतनिजनिजाभाभासितां विपणिं भासयति विक्षिप्तदर्शनीयदृश्येषु ।

एकतो विपणिवीथिकायां - विविध कार्पासज चित्रविचित्रवर्णविलसित-स्थूलसूक्ष्म चीनांशुक वसनादयो राजन्ते पुरुषोपयोगिनस्त्वन्यत्र महिलामण्डलमण्डनोपयुक्ताऽऽ कल्पादयः-शाटी, चण्डातकोपयुक्तानि वासांसि । क्वचित्-सिद्धवस्त्राण्यपि-धौतन्दुकूल-चालेशाङ्गरक्षिका-सुकोटादि सदुष्णीषादीनि, स्त्रीणां कृतेऽपि महाराज-ततन्तुनिर्मिताच्छपुष्पगुच्छपरिमण्डित-सुवर्णसूत्रनिर्मितलवल-रसालफलाकृति - स्थापक-स्वस्तिकादिरञ्जितप्रावृतिपरिराजितमहाशाटिका-कूर्पासक-संव्यान-वृहतिका चण्डातक-ह्यर्द्धोरुकस्ततावरणचोलिका प्रभृतीनि सीव्यितानि वासांसि विक्रीयन्ते सिद्धानि ।

क्वचिच्च—वाल्कनानि, क्षौमादीनि, फालानि-कार्पासानिर्वदराणि कौशेय-प्रभृतीनि राङ्कवानि, निष्प्रवाणि, महार्घानि ( बहुमूलानि ) कदलीभिण्डिका-शाणजानि, विक्रीणते विक्रेतारः । क्वचिश्च स्थूलशाटकः—प्रच्छदपटः--,रल्लकः-, संव्यान प्रावार वीशार मृदुलतूलसम्भृतास्तरणन्सनादयो विक्रमणाय विलसन्ति । क्वचन वितान-प्रतिसीरा-दूष्याद्याः पृथुऽऽस्तरणीविविधचित्र विचित्र सुवर्ण-राजत-

चीनांशुकसूत्रनिर्मित – "मखमल्ला"मिधराजोचिताऽऽस्तरणनिचयो विक्रयणाय नियोजितो राजते स्म कुत्रचिच्च-सुगन्धिद्रव्याणि-काश्मीरज-कर्पूर-चन्द्रसंज्ञक-मृगमदादीनि क्वचिच्च, निःष्यन्द-निर्यास-नानाविधकुसुमसमुत्पादित-कमल-कदम्ब केसर-केतक-करवन्दिका - केतकी - सुरङ्गी - पाटला - शतपत्री सहस्रदल-कुसुम-वकुल-चम्पक-जाति-मल्लिका-यूथिका-मलयजादीनां, निर्यासः पारस्परिकसम्मिश्रणजन्यानि वहुविधानि च सुरभिद्रव्याणि मञ्जूषाभ्यन्तर - सुरक्षितान्यपि प्रस्फुरद्बहिर्व्याप्त-सुरभीणि क्रय्याण्येव शोभन्ते सन्तर्पयन्ति-च समागतदर्शकजनघ्राणेन्द्रियाणि। अपरत्र च नानाविधवस्तुनिर्मितसुरभितधूपविशेषाः "यक्षकर्दमः, सर्जटस, वृकधूम-तुरुष्क-धूपवर्तिका भान्ति। अन्यत्र च लवङ्ग-त्रिपुटी-एला-प्रभृतयः। क्वचन नानाविध-वेसवारसमुच्चयः, क्वचन - भर्जितभ्राष्ट्रनिष्कासितविविधान्नगन्धः प्रसरन्निवा-लक्ष्यत। क्वचिन्नानाविधशाकपत्रमूलकन्दफलानां त्रिपण्यो लसन्ति।

क्वचिच्च—वहुविध फलानि-नानाविधसुरभिसुस्वादुमधुराणि रसालफलानि नानानामानि, काश्मीरजानि-सेवफलानि, दृढवीजकानि, कदली फलानि सीताफलानि रामफलानि, कर्कटिका तिन्दुकफला नारङ्गकानि दाडिमानि, जम्वू - जम्वीर-चीकू - ऐरण्ड-कर्कटिका, खर्वूजक, नखरप्रभृति वहुविधनामरूपाणि सुसज्जितानि विक्रीणते विक्रेतारः।

क्वचन शृङ्गारप्रसाधनानि महिलानां-कुङ्कुम-पटवास - मुखसुरभितचूर्णक-भालविन्दु-केशप्रसाधन-सुरभिततैलादि कङ्कतिका-कङ्कण - चूडिकानिचय-केशपाश-कल्पितवेणिगुच्छक-मुकुर-कज्जलसिन्दूर हिङ्गुलुप्रभृतीनि शोभन्ते। भूयांसि च नानाविधवस्तुपटलमुपकरण-गार्हस्थ्यजनोपयोगि-पात्रादि-स्थाली-कंस-कंसिका-कमण्डलु-रन्धनपात्राणि-पान-भक्ष्यवस्तु-रक्षणपात्राणि सुसज्जितानि क्रय्याणि लसन्ति। इत्थं सर्वगुणसम्पन्ना अङ्गराजस्य महाराज श्रीकर्णराजमहादानवीरस्य दिव्ययशश्चन्द्रचन्द्रिकाऽवदातीकृतविग्रहा सुविग्रहा-यशोमूर्तिरिव सर्वभुवनक्षतिपूर्तिभूता राजते सर्ववर्णाश्रमनिष्णातस्वस्वकर्मरतविश्रुतगुणवर्णा कर्णावती नामनगरी—

सैव कालान्तरेव दुष्टदुर्वृत्तदुराग्रहिभिर्धनलोलुपैर्लुण्टाकैरनेकवारं लुण्ठिता, निरन्तरमाक्रान्तृभिर्निभृतमाक्रान्ता, विध्वंसिभिर्विध्वस्ता पुनः कुटिलकुचक्रचालक-यवनहतकेन केनाऽपि अहम्मदाविष्टेन-'अहम्मदनामकेनाधिकृता' स्वनाम्नैव पुनर्निवासितेति तन्नाम्नैव प्रसिद्धा 'अहम्मदावाद' नाम्ना व्यवहृता-क्रमेण समयानुसारं 'कर्णावती, राजनगर, अहमदावाद' इति साम्प्रतं प्रसिद्धाऽऽस्ति।

तत्रैव परमपावनपेयायाः सरससुभगशीतलसलिलललितगति-विलासविलसितानि कलयन्त्याः समस्ततपःसारवत्याः सावरमत्याः समुत्तरेतटे भगवतः परंमतपो-

मूर्तेर्मरीचेः महर्षेराश्रमो विभातिस्म - यत्र - महारण्यप्रदेशे ललितैकदेशे विविधतपोमूर्तयोमहामहापादपाः, वट-पिप्पल-निम्ब - कदम्ब-वकुलसिसप-शाल्मली-शमीकण्टककलिताङ्ग निविड़वृक्षसङ्घसङ्कुलितमहारण्यान्तराले मञ्जुल वञ्जुल-रसाल-निम्बूकजम्बूजम्बीर-पेरुकाम्रातकधारकी-कपित्थ-पिचुमन्द- कोविदार -बिल्वभल्लातकहरीतकी इङ्गुदी चिञ्चाऽक्षोटकराजादन वाताद-क्रमुकनारिकेल खर्जूर बीजपूरक मधूकरसाल तालतमाल प्रियाल हिङ्गु गुग्गुलु-रसन अर्जुन, अरिष्टप्लक्ष-उदुम्बर किंशुकचन्दनपलाश-सुरदारु - प्रभृतयो नानाविधाः सन्ततसुरभितकुसुमसमृद्धिवृद्धाः सिद्धास्तपस्विन इव शीतवाताऽऽतपक्लेशविशेषं सहमाना अनवरतवारिधारासम्पातसुस्नातविशददलाः तदाश्रमनिवासिनो वनवासिन इव विराजन्ते ।

यत्र च नानाविधाः लघुपादपाः (क्षुपाः) सुगन्धिवहुलगन्धवन्धुराः चम्पकनागकेसर-हेमपुष्पक-शेफालिका गिरिमल्लिका-गणिका-हेमाऽम्वष्ठा-कुन्द-कुटज-कुरवककुरण्ठक पुण्ड्रक, मदतवृन्दा शिवलिङ्गी प्रभृतयः, विविधवेणीभूतग्रथित-समाश्लेषविशेषसौख्यानुभूतिमनुभवन्त्यः प्रियसख्य इव तपोवननिषेवणापूर्वतपोवललब्धय इव घृतावतारा विहितविविधविस्ताराः ललितलवङ्गैला, तथुटि, चन्द्रवाला, धातुपुष्पिका, तालपर्णी, तोयपिप्पली, पिप्पली-श्यामा, मुद्गपर्णी विष्णुक्रान्ताः गन्धनाकुली सालपर्णी, वला, नागवला, नादेयी काकनासिका, नागवल्ली, शतमूली, पचम्पचा, मधुरसा, पापचेली, मूषकपर्णी, हल्लिका अङ्गारवल्ली, श्रीहस्तिनी, मागधी, सोमवल्ली, पूर्वा, चारुकेसरा, मालती, मल्लिका, हरीतकी प्रभृतयो नानागुणगणसुरभि-समुद्रेकसमलङ्कृताः सहस्रशो भ्राजन्ते स्म ।

यत्र च नानाविधः कन्दसमूहोऽपि महर्षिगणसेवाहेवाक इव सर्वदाऽतिथिगणसत्काराय तपस्विनामाहारवृत्तिसम्पादनाय प्रतिपलं जागरूकप्रहरीव परित आश्रममासेवतेस्म - तेषु विशेषतः शर्करकन्दः आलूककन्द - रक्तालूककन्द - अरविकाकन्दसूरणकन्द-मधुरोदनकन्दादि सुभोज्योपयोगी सर्वदोपलब्धिभाक् विभातिस्म-अन्येऽपि समासन् भूयांसः कन्दविशेषाः विदारीकन्द-कोलकन्दादयः । तत्रैव च नानौषधयोऽपि महर्षिपटलनिषेवणाय जनिताः—जीवन्तिका, जया निदिग्धिका, कपिवल्ली श्रीफली शृङ्गी चविका वनशृङ्गाट हैमवती इक्षुगन्धा अश्वगन्धा चित्रतण्डुला चित्रका मुसली विषाणी पटोलिका शंखपुष्पी, अजमोदा प्रभृतयः सर्वविधाः सर्वरोगोपशमन्यो निजपञ्चाङ्गसमर्पका लसन्ति स्म ।

तत्रैवास्ते मरीचेः तपःपुञ्जप्रभापटलाऽऽकृष्यमाणसुरनिम्नगापावनपयः - पूरपूरितमिव सुधास्पर्द्धिमाधुर्यशैत्यसौभाग्यसमृद्धम्, पुरन्दरपुरपुरन्ध्रीगणाभिनन्द्यमानस-

लिललीलोपयुक्तसुखदशीतलसलिलम्, समन्ततोविकासित - भगवन्मरीचिमालिमयूख-सहस्रकरलालित - ललित - नलिननिचयप्रसृतपरागपीतायितसुरभितमधुरम्, अहरहः सप्तर्षिमण्डलपाणिपल्लवसमुल्लासिकुसुमावचयनजनितलब्धसौभाग्यम् प्राभातिकमन्द-मन्दमारुताऽऽन्दोलितशिक्षित - नवनवलास्योल्लासनसमाकृष्ट - प्रकृष्टाऽपूर्वनर्तनानन्ददि-दृक्षुजनविमोहितनयनपटलम्, सन्तत निःष्यन्दिताऽमन्दमकरन्दपानलोलुपमधुपकुलाऽऽकलिताऽनवरतझङ्कृतिसमुद्गीतगुणगाथम् । तत्रच सपदि मधुपानातिरेकमदोन्मादमन्थर-गतिकैकत्रनिभृत शयनायितसारसगर्मनिह्नुतनिजकान्तं परितोऽन्विष्यमाणा मधुकरी कमलवनमभितो भ्रमन्ती समुन्मत्तेव प्रतिभाति स्म । कुत्रचन कांचन काञ्चनकमल-केसरान्तरालप्रच्छन्नां निजप्रणयिनीं सन्ततमनुवर्तमानश्चञ्चरीकश्चतुरविटो वितनुते नयननिमीलनोल्लासिनीं काञ्चनलीलाम् । क्वचनैकत्र कमलगर्भोदरे निर्भयं स्थितिजुषौ मधुकरदम्पती निभृतमेकस्मिन्नेव पद्मपात्रे पिबतः प्रीत्युद्रेकरसासक्तमानसौ मकरन्दरसम् ।

यस्मिंश्च शफरीनिचयविवर्तनविलासाऽऽलोकनसञ्जातकौतूहलाऽऽकृष्टमानस-सिस्नासुजनो विदधाति मनोविनोदम् । विलसन्ति च निर्मल-सरसिजनिचयविलासिनि-सुभगसलिले, नानाविधाः जलकुक्कुट-दात्यूह-कोयष्टि - वकबलाकपङ्क्तयो विहरन्ति, नलिनीदलेषुस्तब्धा निभृतनिश्चलाङ्गा हंसकुलकामिनी निजं शोणितचञ्चुं स्वपक्षति-पुटान्तर्हितं विधाय निर्भयं स्वपिति । यत्र च हिमकरकरगौरं मृदुलमृणालखण्ड निज-चञ्चूत्पाटितं मुधरातिमधुरं जुषमाणोर्द्धभुक्तमेव निजप्रणयोद्रेकवशंवदो मरालः स्वामप्रेष्ठां वरटां भोजयति सबहुमानं स्वेकतरं पक्षं विस्तार्य तदुपरि समाच्छादयति वारयतीवाऽऽतपं सहस्ररश्मेः । एकतश्च चक्राङ्गः स्वां भामिनीं शतदलदलान्तर्हितां निश्चलनिरुद्धनिःश्वासामपश्यनुच्चैश्चुक्रोश । अपरत्र सरसः सारसोऽपि रसिक इव स्वकीयप्रियतमां दूरैकदेशे सघनशष्पसमूहोपरिस्थितां लक्ष्मणां मानवतीमिव मुकुलि-तार्द्धनयनामनुनयन्निव निजचञ्चुना चञ्चति तस्याः पक्षतिलघुमृदुलपक्ष्ममालाम् ।

तस्यैव सरसः शुभैकदेशे, अनतिदूरे, सघनतरुतति सुशीतलच्छायायां, यूथशो हरिणा मण्डलीकृतस्थितिजुषो सानन्दं रोमन्थं कुर्वन्तः परस्पराऽनुरागसमासक्तमानसा परस्परविस्तारितनिजग्रीवाऽभिरामरमणीयपृष्ठभागाः राजन्तेस्म शुभैकतन्तुप्रोतमाला-यमानाः । एकतश्चाऽल्पपल्वलेषु मुस्ताक्षतिं विदधतो वराहा विहरन्ति क्रोडोत्पाटित-भूमिभागाः । क्वचन - निविडवनविहरणविनोदामोदामहिषगवयरुरु - गोपुच्छशाला-वृकमर्कटशशश्रृगाललोपाकचमूरु - वातप्रमीशल्ली शरभकृष्णसारादयः क्रीडन्तो राजन्ते स्म ।

तत्रैवाश्रमपादपेषु शाखारूढाः केलिं कुर्वाणा - मधुरमधुरं कलकलं कलयन्तः कलविङ्क-कर्करेटु-पारावत खञ्जरीट-भारद्वाज किकीदिवि कपोत शिखावल सारङ्गपर-भृतप्रभृतयः शाखातः शाखामारोहन्तो नृत्यन्ति कूजन्ति विहरन्ति च यावद्दिनम् ।

अत्रैवाश्रमे बहवो महर्षिकुमाराः बटवोऽभिनवविहितोपनीताः धृतकौपीना-दण्डकमण्डलुमण्डितहस्ताः प्रशस्ताम्बरदुकूलधारिणः कुशसमिधाहरणरताः शोभन्ते लघुलघुतनवः । क्वचिच्चैकदेशे विरचयन्तः सन्ध्यावन्दनविधिं मौञ्जी - मेखलाऽजिन-लसितकटिभागा दण्डिनः सूर्योपस्थानमाकलयन्तः शोभन्ते ।

एकतश्च - समाराधितहव्यवाहाः विविधयवव्रीहितिलाज्यशर्कराद्राक्षादिभिः समन्त्रपूतं तत् तद्देवाकं पृथक् पृथक् नामनिर्देशपुरःसरं जुह्वतः स्वाहाकारोत्सारित-सकलदुरिताः—यज्ञधूमस्तोमपरिपावितनिखिलप्रदेशाः सनक - सनन्दन-सनातन - सनत्-कुमारादि शतसमूहायितास्ते नवनवब्रह्मचारिवटवः स्वकर्मपटवः परितः समाचरन्त्य-ग्निहोत्रविधिं प्रातः सायमग्निकार्मिणीं समुपासनाम् ।

अपरत्र च नानाशाखीया ब्राह्मणाः नानाविध-मन्त्र-संहितापाठं विदधतोऽने-कशाखाक्रमेण स्वस्वशिष्यान् पाठयन्तः वैदिकाः श्रोत्रियाः साक्षादेव शब्दब्रह्मोपासनां कलयन्तः प्रत्यक्षमिवाक्षिलक्ष्यीकुर्वन्तः स्वस्वशाखीयान् मन्त्रान् सरहस्यान् सनिगूढमाहा-त्म्यान् - निजकण्ठगतस्वर - पदवर्णोच्चारण - ह्रस्व - दीर्घप्लुत-उदात्तोऽनुदात्त-स्वरित प्रचेयादिक्रमस्फुटं प्रशान्तगम्भीरया मुद्रया कण्ठस्वरेणैव प्रकाशयन्तः, यथा तैत्तिरीय-शाखाध्यायिनः ऋग्वेदीयशाकल्यादिशाखिनः, पाठयन्ति स्वान्तेवासिनः । क्वचिच्च-सामवेदीय - राणायनी - कौथुमीप्रभृतिविभिन्नशाखामन्त्राणां गानं कलयन्ति शिक्ष-यन्ति च निजशाखिनः । क्वचिच्च हस्तस्वरोत्तोलनमात्रावर्णाक्षर ब्रह्मोपासनारताः माध्यन्दिनीशाखासमुपासका वैदिकाः हस्ताङ्गुल्यादिस्पन्दन - विधूननकृताभ्यासा अभ्यासयन्ति स्म अभ्यस्यानां मन्त्राणां - पुनः पुनः पाठनक्रमेण स्वान्तेवासिनः । कुत्रचन कर्मकाण्डविधानशिक्षका महर्षयः, विविधविधयज्ञकुण्डमण्डपविधिं वितन्वानाः तत्रतत्र सकलयज्ञीयोपकरण - सम्भार - सज्जित-बहुविधहवनीयद्रव्यसमलङ्कृतपरिकराः स्वस्वान्तेवासिभिः सह समुपासते यज्ञनारायणोपासनाम्, कलयन्ति च साक्षात्कारं भगवतो यज्ञनारायणस्येति । यत्र च बृहस्पतिप्रतिमूर्तयः सर्वविधविद्यानिष्णाताः तत्राऽऽश्रमवासिनो ब्राह्मणा अपि ब्रह्मवेत्तारो ब्रह्मवर्चस्विनो वटुकानध्यापयन्तो भासन्ते स्म साक्षाद् ब्रह्मप्रतिमूर्तयो भूमावतरिताः स्वमानससृष्टसनत्कुमारनारदादिसहिताः साक्षाद्ब्रह्मबोधयितुमेव प्रकटिता इव दीव्यन्ति स्म ।

तस्मिन्नेवाश्रमे सुरम्यललित लतावितान-परिमण्डित-समुन्नतप्रदेशे-नानाविध-तरुततिस्तोमोल्लसित - परस्परशाखप्रशाखाऽऽश्लेषविशेषसघनच्छाये राजते तमःस्थली

निरन्तरनिकुसुमसमूहवर्षणप्रकाशितनिजसेवार्चनभावनापरवशा इव निजनिजतरुतनु-समाश्लिष्टकामिनीकुलायमाना नानाविधाऽनेकवर्णसुमनः समृद्धिसमलङ्कृतिमण्डिता व्रततिततयो निजश्रद्धाभक्त्युद्रेकसमुद्भूतहर्षप्रकर्षप्रवृत्तपुष्पवर्षणविधिनास मर्चयन्तिस्म तामहरहः तपःस्थलीं भगवतो महर्षेः स्वतेजो विशेषविजितसहस्रमरीचेर्मरीचेराद्यर्षेः।

तत्रस्थिताः सर्वे प्राणिनः जन्मजातं पारस्परिकं विद्वेषं विहाय सहोदरा भ्रातर इव निवसन्ति पारस्परिकसहानुभूतिपुरःसरं मैत्रीं प्रकटयन्तः। यथा हि ग्रीष्मर्तौ प्रतप्तचण्डमार्तण्डोग्रकिरणसन्तापमसहमानाः पन्नगाः सघनतरुच्छायाश्रितस्यमयूर-पटलस्य पक्षाऽभ्यन्तरच्छायायां ससुखं मध्याह्ने विश्राम्यति यथा बालाः स्वस्वज्येष्ठा-नामङ्कमाश्रयन्ते। एकतश्च - विशालतरुमूले निषण्णस्य सटाच्छटाविस्फुरणभयानक-ग्रीवस्य विषमतीक्ष्णदंष्ट्राकठोरदशनस्य ललज्जिह्वस्य भीषणकायस्य मृगादनस्यैव स्थितो मृगपोतकः शनैः शनैर्लघूत्थितस्य स्वविषाणस्याग्रभागेन कण्डूति-कण्डूयनमिवातनुते, सिंहोऽपि तन्मृगशावकीं तथाविधां चेष्टामप्यानन्दोन्मादिनीमेव मनुते मन्दाक्षः सन् सानन्दं सहते न किमप्यपकृतिकर्म विदधाति। किम्बहुना लतामूले सुप्तास्य विडालस्य शारीरिकाणि लोमानि तत्रैकविलैकदेशे वसन्नाखुराजः कृन्तत्येव, विडालोऽपि सुप्त इव मृत इव विस्फारितनयनो निरीक्षते किन्तु नापकुरुते किमपि तस्य। किञ्च—श्येनः कपोतश्चैतावप्येकशाखीयां विदधाते स्थितिम्। न तत्र कोऽपि कमप्याक्रमते, न वा हिंसति, द्वेष्टि, न पश्यत्यन्यथादृशा।

इत्थं महर्षेर्भगवतो मरीचेस्तपःप्रभावोऽद्यापि दृश्यते समन्तादिह महारण्यप्रदेशे यत्र भयानकेऽप्यस्मिन् सिंहव्याघ्रा - भल्लूकादिहिंस्रकजीवबहुलेऽपि कुरङ्गशशशाव-कादयो निर्भया विचरन्ति, एकस्मिन्नेव तीरे पिबन्ति च मधुरं सुशीतलं साबरमत्याः सलिलम्। इति विलोकयन्तः श्रीरामान्दाचार्याः सकल परिकरं सम्बोध्य तत्रैव निवा-सार्थं यावन्निशं विश्रामार्थं तस्मिन्नेवाश्रमस्थले सर्वानाज्ञापयामासुः। तत्र च सर्वविधं कन्दमूलफलादीनां सौकर्य्यम्, समायातानां प्राघुणिकानां स्वागतार्थम्, स्वयमनुग्रहं कुर्वतामतिथीनां सत्कारार्थञ्च महर्षेस्तपःस्थल्यां प्ररूढाः प्रतिनिधिभूता महर्षय इव पादपाः स्वयमेव फलपुष्पोपहारैः, तत्रत्या व्रतितततयश्च विविधसुरभितकुसुमैः वनस्पतयश्च स्वयं प्रकाशितनिजस्वरूपाः नानाविधकन्दमूलादिसुस्वादुमधुरभक्ष्यैश्च श्रीरामानन्दाचार्याणां सत्कारं विरचयामासुः।

श्रीरामानन्दाचार्याणामाज्ञामवाप्य ततः कन्दमूलफलाहरणादिकं कलयन्तः साधवो महात्मानः सकलाश्रमवासितरुलवलीक्षुपाणां सम्मानं कुर्वन्तस्तत्कृतोपायनी-भूतानि कन्दमूलफलपुष्पाणि स्वीचक्रुः।

तत्र श्रीसावरमत्यास्तटे स्नानं ध्यानं सन्ध्यावन्दनादिकं विधाय तदुत्तरे तटे विराजमानमहर्षिमरीचितपःप्रभावातिशयसमुल्लासिनि शुभाऽऽश्रमे सर्वर्तुसमुद्भवनीय-फलपुष्पोद्गमसमृद्धि सहसैवोपगतामालोक्यातिविस्मिताः महात्मानः श्रीरामानन्दाचार्यानुवर्णितं तपःप्रभावं श्रोतुकामाः सपदि संहताः प्रार्थयामासुः।

श्रीरामानन्दाचार्याश्च धीर - प्रशान्तमधुरस्वरेण यथाश्रुतं शास्त्रान्तरवर्णितं श्रीमरीचेस्तपोभूमिविषयकमाख्यानकं महामहिमामाहात्म्यञ्च प्रकटयन्तः श्रावयामासु :— यदाहि सुरपतिः महर्षेर्दधीचेः तपोमयमस्थिपुञ्जमादाय-तेनैव विश्वकर्मविनिर्मितमहास्त्रं "वज्र" नाम समादाय तदानीमुपस्थितं महामहाबलशालिनं त्वाष्ट्रयज्ञसमुद्भूतं महाकायं महापौरुषं वृत्रासुरं तेनैव वज्रेण संहत्य विज्वरोऽभवत् तदा वृत्रासुरवधोद्भूता महाब्रह्महत्या महेद्रं व्याकुलीचकार, तदा सर्वत्राऽलब्धशरणो महाहत्याहतप्रभो देवाधिपतिः सर्वत्रैव तद्धत्या तमनुधावन्ती विरूपकरिणी न मुमोचेन्द्राऽनुसरण तदा सर्वथाऽशरणः सुरेन्द्रः परिधावन्निमामेवमरीचेस्तपोभूमिं शरणीकृतवान्। अत्रागत्य-सावरमत्या समुत्तरे तीरे मरीचेराश्रमस्थसरोवरसमुद्भूतमहामहापद्मनालाऽभ्यन्तर्हितः स्वयं ऋतम्भरया प्रज्ञया परंब्रह्म जपन् तन्महाहत्यापातकाद्विमुक्तो बभूव। ततः प्रभृति महाहत्यादिपातकनाशकस्यास्याश्रमस्य महामाहिनमाहात्म्यं प्रसृतमभूदशेष-भुवनतलपावनम्।

अतएवाहं सर्वान् भवतोऽत्र-विशेषतः साग्रहमेकरात्रविश्रामार्थं अग्रिमप्रस्थानात्, अरुणधम्। किमधिकमतःपर वर्णयेयं माहात्म्यमिति। ततः सर्वे महात्मानः तस्याः मरीचितपोभूमेः प्रभावमाकर्ण्य नितान्तं विस्मिता वारं वारं तां भूमिं प्रणम्य श्रीरामानन्दाचार्यं निजागमन-निवासाकलनसूचकं किमपि चिह्नं स्थापयितुं, श्रीपादुकास्थापनार्थञ्च स्व-स्व-भावं प्रकटयामासुः। साग्रहञ्च निवेदयामासुर्यदत्र श्रीमतामागमसमागम-सत्सङ्गसमालापादि बोधकमत्रकिमपि धामपूतं स्मारकमवश्यमेव भवितव्यमेवेति।

ततः समेषामीदृशीं भावनामयीमाग्रहपरम्परामाकर्ण्य क्षण विचारनिमग्नाः श्रीरामानन्दाचार्याः समभूवन्। न किमपि सद्यः प्रोचुः।

क्षणानन्तरं पुनः सोल्लासं सहर्षं तान् सर्वान् सम्बोध्य स्वकीयां भविष्यवाणी-माश्रावयामासुः। अहो महात्मानः साधवः सत्यमेव भवन्तः साधव एव ( सुतरामेव साध्नुवन्ति परकार्याणीति ) भवन्तोऽपि अविज्ञातदीर्घदर्शिनो राजन्ते। सत्यमुक्तं भवद्भिः। यदत्र कश्चन स्मारकं भवितव्यमेवेति। परञ्च किमेतेन स्वल्पतमेन पादुका-मात्रस्थापनकर्मणा, तात्कालिकस्मृत्यतिरिक्तं नाऽस्ति किमपि विशेषफलमस्यापि-पादुकास्थापनस्य। सम्प्रति महारण्यमेतद् सिंहव्याघ्रादिभयाकुलमिति कृत्वा न कोऽप्यत्र तिष्ठति न स्थातुं मतिं विधत्स्यते। अतः कञ्चित्कालं प्रतीक्षताम्।

———

# अथैकोनचत्वारिंशत्तमः परिच्छेदः

इत्थम् मरीचेस्तपोभमेर्भूतभविष्यन्माहात्म्यं प्रकटीकृत्य सकलविद्वन्मण्डल-मण्डिता श्रीमद्रामानन्दाचार्याः "सिद्धपुरम्" गन्तुं ततः प्रस्थाय भगवन्तः सांख्याचार्यमौलिमणिभूताः श्रीकपिलदेवाभिधा यत्र प्रादुरभवन्,-परमपुण्यपेया साक्षात्सुरसरस्वतीवाविच्छिन्नप्रवाहा प्रवहतिस्म निर्मलनीरगभीरा तटिनी सरस्वतीति यत्र राजते सरस्वत्या परिप्लुतं पुण्यं शिवमथममृतमयसलिलम्, सर्वर्तुफलपुष्पसमृद्धि-समृद्धवनराजिपरिराजितम् मत्तशकुन्तगणगीतगाथम्, प्रमत्तबर्हिकुलविहितनर्तनसमुल्ल-सितम् रसालमञ्जुमञ्जरीरसपानप्रमत्तपिककुलकूजितपुण्यश्लोकम्, विकसितसरसिजप्रसृत-परिमलानन्दित-मन्दसञ्चरणललितगतिमन्मारुतान्दोलित-सलिलनिवहम् सद्योविकसितार-विन्दमधुर - मकरन्दपानोन्मत्तमधुपकुलगुञ्जितगुणगणम्, चम्पकाऽशोककरवकुलनीप-कुन्दमन्दार कुटज कुरवकालङ्कृत-स्व-स्वसमुद्भूत्त सुमनःसमूहविहितार्चन-सुरभिततटम्, हंस प्लव-कारण्डवजलकुक्कुटसारस - चक्रवाक - चकोर-चातक-चटक - पारावतादिपत-त्रिकुलजलस्थलनभश्चर विहगावलिकलकलमधुरकलानन्दितसमागतपान्थजनश्रुतियुगलम्, सुभगसलिलसम्भृतम् "सरः"। यत्र भगवतो नेत्राद् स्वयमश्रुबिन्दवो निपतिता आसन् ततः प्रभृति तन्नाम "बिन्दुसरः" इति प्रसिद्धिमुपगतमिति। समन्ततो वनप्रदेशोऽश्वा-विद् गवय-हरिण-शशजम्बूक-शलली-वराह-गोपुच्छ-वृकमर्कटनकुल नामभिः सुशोभितो भ्राजते।

तत्र भयङ्करेणापि मनोहरेण, वन्यप्रदेशेन, ललितललितेन बिन्दुसरोवरेण-पार्श्व-भाग एव प्रवहन्त्या भगवत्या स्वर्गङ्गासहोदर्य्या सरस्वत्याच नद्या समलङ्कृते; श्रीकर्द-ममहामुनेस्तपःसिद्धिसमुद्भावितापूर्वमाहात्म्ये, नवनवाद्भुतविमानायिते सदानन्दसमु-ल्लासिनि महर्षेराश्रमे-त्रिविध-सुभगसुन्दरश्रृङ्गार-शान्त-भयानकेति सुरसत्रिपुटीत्रिवेणी-समागमाऽनुस्मारिणि सकललोककल्मषघ्नि, सौभाग्यसमुद्रैकैकलभ्येपुण्यपावनतमाऽमा-नवीतसम्पत्समृद्धे तपोगुणवृद्धिसिद्धे तपोयोगंसाधयितुमिव सर्वे सोत्साहा अजङ्घभिषुः।

तत्र सिद्धपुरे श्रीसरस्वत्यां नद्यां स्नात्वा बिन्दुसरोवरे समवेता विश्रामं चक्रुः सर्वामाह्निकीं दर्शनादिकीं वा क्रियां सम्पाद्य सायं सत्संगसभकार्यमारब्ध मभूत्। सहस्रशः श्रोतारो दर्शकाश्च सुदूरदूरादेकत्रसमवेताः सञ्जाताः तदा श्रीमन्तः श्रीरामानन्दाचार्याः स्वाधिश्रितस्याऽस्य सिद्धपुरस्य माहात्म्यवर्णनमकार्षुः ।

तदेतद् सिद्धपुरं नाम यत्र भगवान् श्रीकर्दमः तपः तपति स्म। तत्र ब्रह्मा स्वयमागत्य गार्हस्थ्य धर्ममनुवर्तयितुं भगवन्तं श्रीकर्दमं चोदयामास। सच प्रत्युदतरत् यन नाहं कञ्चन कन्यादानाय याचिष्ये, तदा भगवान् विश्वयोनिः प्रावोचत्-यत् स्वयमेव महाराजो मनु स्वराज्ञा शतरूपया सहैव स्वकीयां कन्यामुपायनीकर्तुं भवत आश्रमे एवागमिष्यति अतो महाराजं मनुं नैव हताशं प्रत्यवर्तयेः, एतदर्थमेवाहमुपस्थितो भवन्तं बोधयितुमिति-निर्दिश्य स्वधाम गतवान् वेधाः। तदनुसारं महाराजो राज्ञ्या शतरूपया सह तां कन्यामुपादाय महर्षये समर्प्य गतवान् सा कन्या देवहूतिरपि तथैव सर्वात्मनाऽतन्द्रितचेतसा तं महर्षि समुपास्ते स्म। समुपासनायामप्यनेकानि वर्षाणि विगतानि, साऽपि तं सेवमाना देवहूतिर्वार्धक्यमवाप। एकदा भगवान् श्रीकर्दमः, तथाविधां तपःकृशां सेवानिरतां स्वभामिनीमालोक्य प्रसन्नः सन् तां सौभाग्यसुखमनुभावयितुमद्भुततमं निजाश्रममयं विमानं रचयामास। यत्र महेन्द्रादिदुर्लभा तपःसिद्धाऽपूर्वा सम्पद् विलसति स्म। दिव्यं च सरः यत्र स्वर्णपद्मानां किञ्जल्कपटलैः स्वर्णिमं सुरभितं सर्वं सलिलं मनोहरतिस्म दिव्यतपःप्रभावैः। शतसहस्रशश्च रमण्यो महामहास्वरूपसम्पत्या विनिर्जितसुरसुन्दरीसौन्दर्यसाराः करकमलविधृतविविधशृङ्गारसज्जोपहाराः निजदीप्तिदलित - देवदयितादर्पोद्रेकाः श्रीदेवहूतिसमाराधनाय समुपस्थिता ह्यभूवन्। निवासभवनमपि स्ववैभवविलासविजृम्भितोपकरणसौभाग्यसमुल्लासाऽवमानित - पुरन्दरपुरप्रासादम्, रत्नखचितचामीकरविनिर्मितानेकरुक्मपरिच्छद-मृदुलमखमल्लतूलगर्भितस्वच्छपयः - फेनसदृशावदातदान्तोपस्तरणप्रावरणललितशय्याशतसमलङ्कृतम्, विविधमणिगणकुट्टिमाऽङ्गणप्रतिबिम्बित - सुन्दरीवृन्दबिम्बोल्लसितानन्तनागकन्योपस्थितिशङ्कोद्भावनम्, नाना पद्मराग हरिण्मणि पुष्पराग नीलाश्मसार वज्रप्रेङ्खित -शतस्तम्भोल्लसित - हर्म्यसञ्चरणशीलवास्तव्य -.मनुजप्रतिबिम्बव्याजेनोपस्थित-विविध भूलोक - स्वर्लोकनागलोकगन्धर्वादिलोकविलासिजनसहस्रसेव्यमानम्, सर्वर्तुकुसुमसमृद्धिसमुल्लासिताऽगणितदेवद्रुमपरिशोभितोपवनारामाऽभिरामम्, सर्वदाकुसुमाकर समुपसेव्यमान-सुमनः समृद्धिमण्डितम् - सर्वदैवाव्याहतगतिकम्, अपूर्वम् देवरमणीविलासौपर.ह्यमानमाहात्म्यमालक्ष्याऽश्रुतापूर्वदर्शनीयतमसौकर्य्यसौन्दर्य्यतिसयाऽऽकृष्टत्रिदशरमणीकुलमानसम्, स्वात्मानञ्च जीर्णकलेवरविशीर्णपलितकेशसम्भारावलिशतसमाकुलितगात्रं विलोक्य निजपरि-

षेवणोपस्थितालौकिकसौन्दर्याकररमणीसहस्रपरिचरण-प्रकाराऽऽलोकनोपजातव्रीडाग्ल-पितानना ऽधोमुखी न किमपि चेष्टयामास देवहूतिः ।

भगवान् श्रीकर्दमोऽपि विज्ञाताऽन्तः स्वान्तो म्लानवदनद्युतिं श्रीदेवहूतिमाज्ञापयामास—देवि ! किं विलोकसे ? कथमस्नातेव विभासि एताः सर्वास्ते सेवनार्थमुपस्थितादेवरमण्यो राजन्ते ते चरणकिङ्कर्य्यः । यथेच्छमाज्ञपयैताः स्वामिनीवैतासाम् । सम्प्रति स्वच्छसलिलेऽस्मिन्नतिगभीरे नीरे विलसितपद्मगन्धिनि सुस्नाहि, स्नपयिष्यन्त्येतास्त्वां-मण्डयिष्यन्ति मण्डनोत्तमैः, विरजस्कवासोभिश्च परिकल्पयिष्यन्ति तवाऽऽकल्पसज्जाम् । तदाज्ञानुसारं सा सुदतीदेवहूतिस्तस्मिन् विन्दूसरसि यथैव निमज्योन्मज्जिता समभवत् तथैव सा स्वात्मानं साक्षात्सौन्दर्य्यमहालक्ष्मीप्रतिमूर्तिमिवाऽपश्यत् । तदेवैतद् बिन्दुसरः श्रीकर्दममहर्षे तपःप्रभावप्रतिभु । सैवेयं साक्षाद् ब्रह्ममुखात्समुद्भूता सुरसरस्वतीव विराजते सरस्वतीतरङ्गिणी सम्प्रति तरङ्गरङ्गसमुल्लासिनी ।

अयमेवापूर्वप्रभावः प्रकटितश्रीकर्दमतपोबलाऽनन्तशक्तिकः—सिद्धगन्धर्वपरिषेविताहर्निशरजःपटलः शुभाश्रमः । यत्र भगवान् स्वयमेव भूतले विस्तारयितुमेव निजसांख्य-योगमाहात्म्यं-सकलसिद्धसाध्यगन्धर्वगणैः संस्तुतकीर्तिकः सांख्याचार्यैरभिष्टुतः निजाऽध्यात्मिकीमान्वीक्षिकीं वा विद्यां विस्तारयितुं, स्वमातरं लक्ष्यीकृत्य प्रकटिताऽनन्तभवसागरतरणतरणिं महामह्याऽघशमनीं सांख्य-योगविद्यां प्रकाशयितुं श्रीकार्दमं वीर्य्यमापन्नोदेवहूतिजठरविलसनलीलां वितन्वन् भगवान् कपिलाचार्यः प्रादुर्बभूव । यत्र सदेहा देवीदेवहूतिः स्वयमाध्यात्मिकीं गतिं गता न सस्मार स्वकीयं समपगतप्राणं पाञ्चभौतिकं गतं शरीरम् ।

सैषा पुण्यस्थली राजते भवतां परमभाग्यवतां सम्मुखे श्रीकर्दमाश्रमसमलङ्कृता श्रीभगवतः कपिलाचार्यस्य प्रकटनपुण्य–पाविनीपरमसिद्धिदा सिद्धा भूमिः ।

यत्र च भगवान् श्रीकपिलः स्वमातरं देवहूतिं समुपदिशन् समस्तसांसारिकप्राणिमात्रं मृत्युभयपाशाद् विमोचयितुं स्वसिद्धान्तमयीं सांख्य-योगमहाविद्यां विस्तारयामास । प्रायः समस्तभयानामपि भयं विद्यते मानवानां कृते मृत्युभयमेव । न कोऽपि कामयते कष्टात्कष्टतरमपि महाकष्टमनुभवन् जनो वर्तमानजीवनादात्मनो मृत्युम्, यद्यपि सः परितोऽसहायः पतितोऽपि मृत्युमुखे, यततेऽहरहो ह्यमरत्वं लब्धुम् । कथमेतस्माद्भयान्मुक्तिः सम्पत्स्यत इति न कोऽपि विचिन्तयति संसारपतितो जीवः । प्रायः संसारचक्रमेवैतादृशं 'जायस्व, म्रियस्वे' ति । एतस्मान्मुक्तिः ( जन्म-मरण-

क्लेशविमोकः ) परमावश्यकी। मानवानां जनन-मरण - कारणीभूता भवन्ति कर्मफल-वासनाः। वासनापरवश एव जीवो लभते स्वकर्मोपार्जितां तनुम्।

उक्तञ्च गीतायाम् :—'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
(८।६) तं तमेवैति कौन्तेय सदा तद्भावभावितः।।'

(बृदारण्यकेऽपि) 'यच्चित्तस्तेनैव प्राणमायाति, प्राणस्तेजसा युक्तो महान्मना यथा सङ्कल्पितं लोकं नयति।'

इत्यादिभिः प्रमाणैर्निर्णीयते यज्जन्मग्रहणकारणीभूता वासनैव भवति। सा च द्विविधा—'मलिना, शुद्धे'ति। या हि 'अज्ञानाऽऽकृता-अहङ्कारसंवलिता भवति वासना, सा 'मलिना' यथाहि 'अज्ञानसुघनाऽऽकाराघनाऽहङ्कारशालिनी।' 'पुनर्जन्मकरी प्रोक्ता मलिना वासनाबुधैः' इति। या च पुनः—

'पुनर्जन्माऽङ्कुरं त्यक्त्वा स्थितं सम्भ्रष्टवीजवत्।
देहार्थं ध्रियते ज्ञानज्ञेयाशुद्धेति चोच्यते।।'

'भ्राष्ट्रसम्भ्रष्टवीजवत् अङ्कुरोत्पादनशक्तिरहिता, (जन्माङ्कुरनाशकभगवत्तत्त्वज्ञानपूर्णा) केवलदेहाऽस्तित्व-संरक्षिणी या वासना सा शुद्धा भवति।

तादृशी भगवत्तत्त्वज्ञानवती जन्ममरणादिचक्रभ्रमणनाशकरी तात्कालिकभगवत्सेवोपयुक्तदेहरक्षणसक्षणाभावनापदवाच्या सा वासना जीवैरभीप्सिता भवति। सैव शुद्धा काम्या च सर्वैः।

किञ्च पुनर्मलिना जन्मग्राहिणी या वासना भवति सा त्रिविधा भवति— यथा 'देहवासना। २ लोकवासना। ३ शास्त्रवासने' ति। तत्र देहवासना नामस्वकीयं देहमेव ममात्मा इत्यभिमानपुरः-सरं देहस्यैव लालन-पालनप्रीणनेषु संसक्ता या वासना सैव देहवासना। याच पुनः 'कीर्ति र्मानम्. धनम्, सुखम्, साम्राज्यम् ( सर्वस्वाधिकाराः ) वैभवम्, स्त्री-पुत्र-गेह-रत्नादिस्पृहारूपा या वासना सा लोकवासना। किञ्च शास्त्रीयज्ञानविज्ञान लब्ध्यै पुनः पुनर्जन्मग्रहण-कारिणी या, सा शास्त्रवासनेति त्रिविधा।

त्रिविधास्वासु शास्त्रवासना न तथा हानिकरी यथा ते द्वे। यतोहि तया ( शास्त्रवासनया ) भगवत्तत्त्वज्ञानसङ्ग्रहो या काम्येत क्रियेत वा तदातु साऽपिश्रेयस्करी। किन्तु तां प्राप्यापि (ज्ञानविज्ञानसम्पन्नोऽपि भगवत्तत्त्वान्वेषणं विहाय लौकिकपदार्थसङ्ग्रहसंसक्ता—यदा सा भवति तर्हि साऽपि हेया, जन्मग्राहिण्येव। सर्वथैव त्याज्या।

तथा च वासनानामाधारभुतन्तु मनसोमालिन्यमेव भवति। यदि मनोमालिन्यं व्याहन्येत वासनानां स्वयमेव समाप्तिर्भवति। मनोमालिन्यस्योत्सर्जनोपायस्त्वेष एव यत्त सर्वात्मना भगवत्येव मनोयोजनं भवेत्—( मनसो मलिनात्मिकाऽपि प्रवृत्तिर्भगवत्येव कुर्यात् तामसानां कंसशिशुपालादीनामासीत् ) तदाऽपि जीवस्य मुक्तिरेव—उक्तञ्च भगवता—

(गीतायाम् 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्यैवमात्मानं मत्परायणः॥' (९-३४)

'तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पित मनो बुद्धिर्मामिवैष्यस्यसंशयम्॥' किञ्च

मामुपेत्य पुनर्जन्मदुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥' (८-७ ८-१५)

एतेन सिद्धं भवति यन्मनोमालिन्यापसारणमन्तरेण न वासनानामन्तो (नाशो) भवति। विनावासनानाशेन न जन्मग्रहणादिवन्धनमुक्तिः। यतो हि यावज्जन्म तावन्न-वन्धन मुक्तिः, किञ्च जन्मना सहैव मृत्युरपि ( जीवनसहवर्तिनी मृत्युरपि ) शरीरे प्रविशति जायते वा। अतो न मृत्युभयाद्विमुक्तो भवति जन्मधारी। अतः तत्सकलमूलकारणभूता मनोवृत्तिः सर्वात्मना परमात्मनि नियोज्या, इदमेवाऽमोघमस्त्रम् मनोमालिन्यापसारणस्य-जन्ममृत्युवन्धननिर्मुक्तेश्चेति। अर्थात् तावन्त्यो हि-सुखैषणा, वित्तैषणा, दारैषणा, लोकैषणा, पुत्रैषणा, सर्वविधा वा सांसारिक्योऽपेक्षिताः मन्वते वा जनाः स्वहिताय, ताः निःशेषाः भगवति नित्यानन्तऽऽनन्दघनाघने घनद्युतौ श्रीरामे श्यामे वा नियोज्य तत एवाऽऽनन्दाऽनुभूतिं कलयन् जीवः सर्वदाऽऽनन्दमय एव तिष्ठेत् न तत्र जन्म न जरा न मृत्युर्न शोको न मोहः। यथा ह्येकरसे समुद्रे समन्ततः परिभ्रमणेनाऽप्येकरसतैव समुपलभ्यते नान्यथा तथैव नित्य-अगणिताऽऽनन्दस्वरूपे श्रीजानकीजानौ श्रीराधिकाप्रिये वा यत्रयास्मिन् स्वरूपे श्रद्धासमृद्धोत्कृष्टाविशिष्टा भक्तिः मनोभावना वा सुस्थिरा स्यात् तथा प्रयतितव्यमेवेति। तथैवाऽऽचरितव्यम्, तथैव भवितव्यञ्चेति। "नाऽन्योऽतोऽस्ति शिवः पन्थाः, भूतानां भूतिहेतवे।" अतः स्वस्वाऽऽत्मानं अपारकरुणासागरे - निसर्गदयापारावारे भक्तवत्सले लोकाऽभिरामे श्रीरामे अक्षय्यनिधिरक्षणमिवनिक्षेपं विधाय निर्द्वन्द्वः सन् मृत्युभय तरेत्।" इत्युक्त्वा श्रीरामानन्दाचार्याः प्रोचुः, अस्ति कस्यचन मनसि काचन शङ्का, तर्हि निःशङ्कं सः स्वां पिपृच्छां पूरयेत्। इति।

कश्चन :—ततः कश्चन जिज्ञासुः श्रीमदाचार्यान् निवेदयामास, अहो महाराजचरणाः।
कथंकारं मानवः पापकर्मणि प्रवृत्तो भवति जानन्नपीति किं रहस्यमिति ?

श्रीरामानन्दाचार्याः—परमहृष्टाः प्रकृष्टप्रश्नमुत्तरितुं प्रवृत्ताः अवीभवन्।—

भगवन् ! उक्तमेवैतद् यत्पापकर्मणि प्रवृत्तौ मानवानां विषयेष्वासक्तिरेव हेतुः। विषयासक्तेराधारभूतञ्च मन एव "उक्तञ्च :—" मन एव मनुष्याणां कारणं बन्धमोक्षयो इति। तद्धि ( मनश्च ) नितान्तं चञ्चलमेव सद्यः प्रवृत्तिकरञ्च ( प्रवृत्ति-प्रियञ्चेति ) तथाहि गीतायाम् :—"चञ्चलं हि मनः कृष्ण प्रमाथि वलवद्दृढम्।" इति। अतो नपुंसकमपि मनोमहदुत्पातकरम्। तच्च निजाऽवलम्वनं समीहते-यथा प्रकाशाऽभावे स्वयमेवान्धकारः प्रसृतो भवति तद्वदेव मनसोऽपि प्रवृत्तिर्भवति। अतः तस्य तथाविधां प्रसरणशीलां प्रवृत्तिं भगवत्सेवायां भगवद्भक्तौ भगवन्नामस्मरणे कीर्तने वा नियोजयेद् - येन न तन्निरालम्वितं तिष्ठेत्, तत्प्रवृत्तिर्हि सर्वात्मना सर्वतोमुखी भगवद्व्यापार एव प्रसृता भवेत् - चेष्टेत वा तदनुरूपां भगवत्सेवोपयिकीं सामग्रीं समाहृतामेव कलयेद्वा न ततोऽन्यत्र कुत्रचन दुष्कर्मणि प्रवृत्तं स्यात् सन्मनः। असक्तञ्च भगवद्भक्तौ तन्मनः स्वसहायकेन्द्रियगणपरिवृतं तत्तदिन्द्रियेप्सितविषयेषु संसक्तं भवति तदानर्थमपि कलयति। एषैव मनसो दुर्बलता, यदि च भगवद्भक्तौ न युक्तं भवति तर्हि दुर्वृत्तस्याऽस्य निग्रहेप्सुर्जनः स्वां वाचं, चक्षुः, श्रोत्रं, पाणिपादौ च न प्रवर्तयेत् यदि च "वाक्-चक्षुः श्रोत्रपाणिपादाः" इति पञ्चैव नियन्त्रिताः स्युः तर्हि मनः कीदृशमपि चञ्चलं दुर्वृत्तं अस्थिरं भवेन्न किमपि कर्तुं तत्समर्थं भवति हठात् परितो बम्भ्रम्यमाणमपि विवशं भूत्वा सुतरामेकत्राऽऽयास्यति। अतः निर्दिष्टपञ्चेन्द्रियमात्रं किंवा "वाक् पाणिपादानामपि स्थिरीकरणे न तत् किमपि कर्तुं शक्तो भवति। अयमेव मनसो वशीकरणोपायः। अन्यथा तु मनसा चिन्तितेषु विषयेषु प्रवृत्तिमयानि भवन्ति चेदिन्द्रियाणि तदा मनः स्वेन्द्रियाश्वान् प्रेरयत् तं प्रवृत्तिकरं जनं महामहान्धविषयगर्ते निपातयत् "बन्धनकरं सिद्धयति।" तदेव च भगवदासक्तं भवति तर्हि मोक्षप्रदमपि भवति। उक्तञ्च—

"मन एव मनुष्याणां कारणं बन्ध-मोक्षयोः" इति। बन्धकारणत्वन्तु तस्य स्पष्टमेव—"ध्यायतो विषयान् पुंसः, सङ्गस्तेषूपजायते"—

( इति गीताः २। ६२। ६३ ) इत्यादिना सिद्धयति, यद् विषयचिन्तने मनसः प्रवृत्तिरेव,सर्वतः प्रथमं भवति ततो वासना जागर्तिः तत्रकामः, क्रोधः सम्मोहः स्मृतिविभ्रमस्ततो बुद्धिनाशः, तस्मात् नाश एव दुष्परिणामः। बन्धनं नरकपातः, पुनर्जन्म-मरणवन्धननिगडनम्। इदमेव जीवन्मृतत्वं जीवस्येति।

श्रुतिरपि :—"अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचिद्।
यद्यद्धि कुरुते जन्तुस्तत् तत्कामस्य चेष्टितम् ॥"

किन्तु भगवान् सर्वेभ्य एव ज्ञानशक्तिमपि प्रायच्छत् यया जनो हिताऽहितमात्मनः स्वयमेव विचिन्तयेत्। तच्चिन्तनेन मानवो विवेकशीलः स्वयमपि शास्त्रीयादि साधनानि पुरस्कृत्य - दुष्पथात्स्वयं दूरीभूय सन्मार्गाऽवलम्बनं विदध्यात्। इदमेव भगवतोऽवतारप्रयोजनम्-यद् दुष्पथप्रवृत्तं भक्तं, दैवं वा जीवं सर्वविधकर्मणि संसक्तमपि स्वानुग्रहबलेन, प्रमेयबलेन स्वरूपसम्पत्त्या च समुद्धरेत्। सुदृढासक्तश्चापि समुद्बोधयति भगवान् स्वभक्तम्।

स्वानुगृहीतं वा जनम्—"त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।"
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥"

जिज्ञासु :—भगवन्-अस्ति किमु जीवे तथाविधा शक्तिः ? यः कामादींस्त्यजेत् ?

श्रीरामानन्दाचार्याः —कथं न, नो चेत् भगवान् कथमुपदिशेत् ? स्वयं समुद्दिधीर्षुर्भगवान्तस्मै तथाविधां ततोऽप्यधिकां वा प्रयच्छति।

पुर्नजिज्ञासु :—प्रभो ! श्रूयते हि प्रारब्धकर्माऽधीन एव जनोऽवशः सन् शुभेऽशुभे वा कर्मणि प्रवृत्तो भवति अतो न स दोषभाक् ?

उक्तश्च—"सुखस्य दुःखस्य च न कोऽपि दाता, स्वकर्मसूत्रग्रथितोहि लोकः।" प्रवर्तते।' स हि बलान्नियोजित इव प्रवृत्तो भवति जानन्नपि हिताऽहितम्। यथा-कश्चन - आमवात - रोगी = अम्लवस्तु निषेवते, यथा चौरः पुनःपुनर्दण्डभागपि तथा प्रवर्तते, हिंसको दस्युस्तथा विहिंसति लुण्ठति च पान्थान्। यथा-राजमहिष्यामासक्तः स्वमृत्युं जानन्नपि तत्कर्मसंरतो भवतीति सर्वं बलान्नियोजित एव - कर्म कुरुते तत्तद् दुष्फलानि भुनक्ति च। अतो जनः प्रारब्धकर्मवशगः एव तथाचरति, न ततो निवर्तनशक्तिस्तस्मिन् न वा भगवत्यपि। कथं न भगवान् तं तस्मादुत्पथान्निवर्तयते ?

श्रीरामानन्दाचार्या :—बन्धवः ! विविच्यताम्—'प्रारब्ध' शब्दस्य कोऽर्थः प्रारब्धं हि मनुष्यद्वारा प्रकर्षेण आरब्धम्-मनुष्यश्च तदेव कर्म आरभते येन सुखप्राप्तिः स्यात् नतु कदाचित् दुःखदे कर्मणि प्रवृत्तिर्जायते। अतः सर्वाऽऽरम्भे सर्वप्रथमं मानवस्य प्रवृत्तिः कथं जाता, इदं कर्म सुखदं इदञ्च दुःखदं इति वा ज्ञानमेव कथमभूत् कथं वा तस्मिन् प्रवृत्तिः ? इति तत्र प्रवृत्तिविधायकोऽपि कोऽप्यस्त्येव यो हि प्रवर्तकः स एवास्माकं प्रभुरीश्वर अतः सिद्ध्यति प्रारब्धकर्मणां करणेऽपि कश्चन प्रवर्तको नियामको वा अस्ति, अतः न प्रारब्धेऽपि कर्मणि स्वयं प्रवर्तकानि ( जनं स्वकीयोत्पादने प्रवर्तयितुं शक्नुवन्ति ) पुनस्तर्हि कथं तानि तत् तत्कर्मफलभोगार्थं हेतुभूतानि भवितुमर्हन्ति।

इत्थं प्रारब्धकर्मणि न साक्षात् कर्मकरणें प्रेरकाणि भवन्ति न वा साक्षात्फलदाने हेतुभूतानि वा। कर्मंकारयितुं प्रवर्तकः फलदानेऽपि नियामको भगवानेव। इदमवश्यं भगवता निर्धारितं यद् प्रारब्धकर्मणां सतां वाऽसतां क्षयो तद् तत्फलभोगेनैव भवति नाऽन्यथा। तेषां समुपार्जने फलभोगदानेऽपि भगवानेव हेतुः—तत्र श्रुतिरप्येषा—

"तमेव साधुकर्म कारयति यमेभ्यो लोकेभ्य ऊर्ध्वमुन्निनीषाति तमेवाऽसाधु कर्म कारयति यमेभ्यो लोकेभ्योऽधो निनीषति।"

अतो भगवदिच्छैव तथाविधं कर्म कारयितुं प्रवृत्तिहेतुकी। तथैव फलदानेऽपि भगवदिच्छैव नियामिका।

तत्र भगवत ऊर्द्ध्वमुन्निनीषा, अधो वा निनीषा, कांश्चन-ऊर्द्ध्वम् कांश्चनाधो निनीषा कथं भवति? इत्यत्र तथैव मन्तव्यम् यथा कस्यचन पितुः पञ्चपुत्राः सन्ति तेष्वेकं महामहाविद्वांसं सर्वदेशीयज्ञानसम्पन्नं विधाय त्रिकालदर्शकं कुरुते, अन्यञ्च नीतिविद्याविशारदं कृत्वा न्यायाधीशपदासीनं द्रष्टुं कामयते, अपरञ्च व्यापारकुशलं निर्माय महामहाधनकुबेरं विलोकयितुं समीहते, कश्चन विविधशस्त्राऽस्त्रनिर्माण-कोविदं तक्षकर्मणि दक्षं कर्तुं वाञ्छति, ततोऽवशिष्टं देशोद्धारकर्तारं सकलनेतारं निर्मातु-कामो भवति - पिता - परन्तु न सः तत्तद् कर्मसु न्यूनाधिकत्वं पश्यति न कस्मिन्नपि समविषमभावनैव। स तु स्वपुत्रान् सर्वविधकार्यकुशलान् समस्तलौकिकोन्नतिहेतुभूत-व्यापारविषयक्रियाकलाकलापकोविदान् सर्वत्र सर्वविधक्षेत्रेषु संरतान् सर्वविधलौकिक-कार्यसञ्चालनसम्भारप्रवृत्तिकं नैजमेव गृहं समीक्षितुं चेष्टते, न कुत्रापि पराधीनत्वं कस्मैचन कार्यायाभिलषति। इति।

एवमेव भगवानपि स्वांशान् जीवान् तथा कर्म कारयितुं प्रवर्तयति। न हि प्रारब्धानि कर्माणि प्रवर्तयन्ति कञ्चन। न वा जनः दुःखदानि कर्माणि करोति याव-ज्ज्ञानम् स तु सुखदेष्वेव प्रवर्तते। किन्त्वेषु दुःखदातृषु तु भगवानेव तं प्रवर्तयति। प्रेरयति बुद्धिमेव तदनुरूपां परिवर्तयति नान्यथा। तदपि तथाकरोति यथा माता स्वं सुतं शिक्षायै तं तथाऽनुभावयितुं हिताऽहितज्ञानाय। अस्मिन् कर्मणीदं दुःखमनु-भूयते, अस्मिंश्च सुखमित्थमिति ज्ञापनाय) किंवा महत्तरमपि दुःखं स्वल्पेनैव फलेन मुक्तं भविष्यत्येवम्। इति बुद्धया वा तस्मिन् कष्टफलदे प्रवर्तयति, न माता समुपाल-म्भनीया भवति-किंवा नास्ति काचनाऽम्बा, या हि स्वसुतं विषं भक्षयितुं कथयेदिति परञ्च विषभक्षणोपशमनीयं रोगं पुत्रशरीरव्याप्तं ज्ञात्वा तस्माद्रोगान् निवृत्तये तं तथा बलात् साग्रहं प्रेरयति यथा कथमपि तं भक्षयत्येव विषम्। नतत्र मातुर्विषदाने प्रवृत्ति-रपितु तद्रोगोपशमने एव। एवमेव भगवतः स्वजीवस्य हितसाधन एव प्रवृत्तिः।

इत्थं भगवानेव स्वान् जीवान् तथा कर्तुं प्रेरयिति न तत्र प्रारब्धानि वा कर्माणि तं तथा कारयन्ति। प्रारब्धकर्मणां प्रेरकत्वे तु सकलविधिवाक्यानां व्याकोपो भवति मनुष्याणामपि प्रवृत्तिस्वाच्छन्द्यं निर्भयत्वं, यथेच्छाऽऽचारत्वञ्च प्रसरति। सर्वदा सार्वभाविकमीश्वरकर्तत्वप्रतिपादनमपि व्यर्थं भवति। पापकर्मपरायणानां दुःखं दारिद्र्यं अयशः स्त्रीपुत्रादिनाशो भवतीति -न तत्र प्रवर्तितव्यमित्याद्याकारकनिषेधवाक्यानां महत्त्वमपि व्याहन्येत। अतः स्वयं जड़भूतानि प्रारब्धकर्माणि कथं तं प्रेरयितुं प्रवर्तितानि भवितुमर्हन्ति चैतन्यवदिति। अतो मानवानां विषयेष्वासक्तिर्लोलुपतैव पापकारणम् न हि प्रारब्धानि। गीतायामपि—"अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः" इति प्रश्ने स्वयमेव भगवानाज्ञापयति :—"काम एष क्रोध एष रजोगुणसमुद्भवः" इत्यादिभिः सुविस्तृतमेव वर्णितं भगवता-अतो "विषयासक्तिरेव हेतुः।" पापाचरणे,-चौर्य्यादौ, व्यभिचारादौ सर्वत्रैव आसक्तिरेव कारणम्।

आसक्तिरपि द्विविधा शुभा ह्यशुभा चेति। परञ्चैषा नाऽस्त्यपरिवर्तनीया, शुभाऽऽसक्तिर्यथा सत्सङ्गभगवत्कथालापभगवद् दर्शनादिभिः प्रवर्द्धते बहुफला च भवति तथैव-ह्यशुभाऽपि दुःसङ्गाऽभिरुचौ तथा वर्द्धते अतोऽशुभां सत्सङ्गाद्यैश्छिन्द्यात् शुभाञ्च प्रवर्द्धयेत्। भगवदभिरुचिः पुण्यफलवृद्धिकारिणीत्वात्। अतः सर्वदैव स्वाध्यायसत्सङ्गादावेव प्रवृत्तिर्विधातव्या, न क्षणमात्रकालोऽपि व्यर्थं ह्रापनीयः। उक्तञ्च—

"सत्सङ्गलवेनाऽपि न स्वर्गं नापुनर्भवम्" इति ॐ॥

तदानीं सर्वैः प्रार्थिताः श्रीरामानन्दाचार्याः समब्रुवन्-यदत्रापि न किमपि भवदभिलषितम् पादुकादिप्रतिष्ठापनमावश्यकम्। इह तु स्वयमेव भगवान् लक्ष्मीनारायणः-स्वमठं महामन्दिरं प्रकल्पितवान् - भवत्सम्प्रदायप्रचारप्रसाराय च महाविद्यालयवेदान्तविद्यापीठेऽपि स्थापनमपि निर्णीतमेव, परन्त्वधुना कालसापेक्षं भविष्यद्गर्भेव स्थितमिति। तत्कर्माऽपि स्वशिष्यपरम्पराऽऽयातः कश्चित्प्रसिद्धो विद्वान् स्वयं विधास्यति। इति।

तदेव स्थानम्—"श्रीलक्ष्मीनारायण मन्दिरम्" इति व्याहृतं भविष्यति, तत्रैव च स भारतप्रसिद्धो विपश्चित्तल्लजो "वेदान्तविद्यापीठं" कल्पयिष्यति परञ्च न सः प्रफुल्लितं स्वं कल्पद्रुमं प्रोक्षितुं प्रभुर्भविष्यतीति।

भविष्यति च कालान्तरे मठत्रयाणां—( शृङ्गि ( सींगड़ा ) ) मठ-कोसलेन्द्रमठ-अत्रत्यवेदान्तमठे ) ति त्रयाणामेकाधिपत्यमेवेति मे भविष्यद्वाक्।"

---

# चत्वारिंशत्तमः परिच्छेदः

ततः प्रस्थाय मार्गे मार्गे नगरे नगरे ग्रामे ग्रामे च यत्र यत्र विश्राममकार्षु-स्तत्रैव सुचिरवैधर्मिकसत्तासाम्राज्यविमर्दनचक्रचञ्चूर्यमाण पारस्परिक - धार्मिक-संस्कार-समुद्गत-सदाचारपरम्परा-प्रसारितधार्मिकभावनायाः जनतायाः दुष्टदुर्यवन-प्रतिसवनसंसर्गजनित - प्रत्यवायबहुलाऽऽच्छन्नाया विलुप्तप्रायाया धार्मिक्याः प्रवृत्त्याः माहात्म्यज्ञापनपुरःसरप्रसृतिं प्रवाहयन्तः विधर्मपाषण्डपथाऽवलम्बिजनसङ्घर्ष - प्रकर्ष-परिश्रान्त - विक्लान्त - चेतसां सनातनधर्मावलम्बिनां प्रसुप्तां प्रमादालस्यमोहस्थगित-भगवद्भक्तिसमुद्भावितोत्सवसमुज्जृम्भिताऽऽनन्दोल्लासानवरत क्रियाकलापाम्, अहरहो-यज्ञनारायणसमुपासना - जनितविविधधार्मिकाऽनुष्ठान-यजन - यागादि - विधिविहित-विलुप्तप्रायां वैदिकीं परस्परां, प्रसुप्तप्रायां सनातनीं श्रद्धासन्ततिमपि पुनर्जागरिता-न्तरायरहितां प्रवर्तयन्तः शनैः शनैः सकलजनताचेतांसि समुल्लासयन्तः, भगवद्भक्ति-भ प्रसक्ति-प्रवलयन्तः सनातनधर्मपरम्परां प्रसारयन्तः, प्रबलपाषण्डपथप्रवृत्तिं निवारयन्तः सन्ततं भगवद्भजनस्मरण - कीर्तनार्चनाभिवन्दन - दर्शनाऽऽराधनादिनिजकर्म-प्रवृत्त्यनिवार्य्यत्वं प्रकटयन्तः, यवनादिसंसर्ग-विदूषितां दुष्पथानुसरण-विहरण-विलासा-वाससुलभसुखावाप्तिबहुलभ्रान्तिमयीं महामोहमदिरोन्मादिनीं विधर्मपक्षसंवादिनीं तात्कालिकविधर्मराज्यसत्तासमुद्भासित - मृगमरीचिकाचाकचक्य चक्रचञ्चुरित-चीवराऽऽभरणभव्यां रमणीगणरमणरामणीयाऽऽभासां सुखाशाशतप्रदर्शितवैभवां वैधर्मिकभावनोद्भवां मोहम्मदीयमहामोहपाशशृङ्खलां विघटयन्तः, सुलभसुन्दर-सहज - साध्यसौख्यसम्भाराऽऽसारसर्जितसुकृतसरणीं सपदि सङ्घट्टयन्तः पर्य्यटन्तः श्रीरामानन्दाचार्या देवगिरिं प्रति अर्बुदाऽचलं ( आबू ) प्रस्थापयामासुः स्वकीयां सर्वंजनीनां सन्मार्गप्रवर्तिनीं सनातनधर्माऽनुवर्तिनी कामनाम् ।

स्थान स्थाने च मध्ये मार्गमापतितेषु स्थानेषु, सत्सङ्गप्रसङ्गेषु च निजधार्मिकप्रवचनावसरेषु समवेतानां धार्मिकजनानां मानसेषु सुदृढां भागवत-धर्माऽनुसारिणीं जागर्ति भगवद्भक्तिं वितन्वन्तः श्रीरामानन्दाचार्याः अर्बुदाचलं

प्रति प्रवर्द्धमानपादा आसन् तदानीमेव कश्चनैको जैनभिक्षुः पर्य्यटन्नेव समागतः। स च तथाविधं भगवच्चिह्नैश्चिह्नितं विशालत्रिपुण्ड्रमण्डितभालपट्टं विविधरूपाकृति बहुलजनपटलं श्रीरामोच्चारणापसारितसकलभुवनगतकलिकल्मषं, श्वेत - काषायादि वसनावृतपवित्रदेहं दर्शं दर्शं निजकुटिलकुतर्ककलुषितान्तःस्वान्तो मन्दं मन्दं प्रहसन् निज सार्थं वहि-जनोन्मुखं किमप्यननुमतमालोचयन्निव प्रजल्पन्. किञ्चिदन्तरालमेव सहैव प्रचलन् क्रूरचेताः कलयामास कुतर्ककौतुकं निजभावनामयम्।

यदा श्रीरामानन्दाचार्याः सभायां श्रीवैष्णवान् विविधसनातनधर्मावलम्बिनः स्ववचनामृतपानसन्तृप्तान् कुर्वते स्म तदा सोऽधिसभं निजवाचाटत्वं प्रकटयन् विनिन्दयंश्च वेदादीन् विजल्पति स्म यत्—

"किमतः परमाश्चर्यं भवितुमर्हति - यद् भवादृशा विद्वांसो महात्मानोऽपि वेदादिषु श्रद्धालवः प्रामाण्येन प्रयुञ्जते तद्वचांसि, वाक्यानि च।

एतदपि नाऽविदितचरम्, यद्—'त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः' इति अतो वेदादीन् प्रामाण्येन प्रयुञ्जानाः श्रद्धालुसमाजे भ्रान्तिमेवोद्भावयन्ति, स्फीतसत्पथाद् प्रच्यावयन्ति, मोहयन्ति च मुग्धान् प्रवचनचातुर्य्येण, नयन्ति च महान्धगर्तम्— "अन्धा यथाऽन्धैरिव नीयमानाः" स्वयं वा भ्रान्त्या घनान्धतमसि निमग्नाः स्वाऽनुयायिनोऽपि तथैव नयन्तीती महदाश्चर्यम्? तर्हि किमर्थं व्यर्थमेतद् दण्डादिधारणपुरःसरमित्थं काषायाऽम्बरधारणम्। अतः "सर्वमेतत्परित्यज्य ह्यर्हन्तं समुपासताम्' अर्हन्नेव सदा सर्वैः शरणीकरणीयताम्।' सर्वं वेदादिकं शास्त्रं, भ्रान्तिमूलं विहीयताम्।' इति—

जैनभिक्षोरज्ञानविजृम्भितं सापराधमेतद्वचनमाकर्ण्य निखिलसाधुमण्डलमध्यगाः सन्तोमहान्तः सहसा क्षुब्धाः क्रुद्धाः समभूवन्। समस्तास्ते धिग् धिगिति तं गर्हयाञ्चक्रुः। सपदि ग्रहाऽऽतङ्कपङ्किलमानसाः इव विचेतनाः, महोपरागान्धकारसमावृतधरणितला इव क्रोधान्धधूसरितविज्ञानाः संवृत्ताः। समन्तत आक्रोशावेशाविहतविवेका इव प्ररूढ़विमतमतखण्डनप्रचण्डमार्तण्डायमानोद्भटवचनमयूखशरशतप्रहार-प्रकटितवीरभटभावाः, महाऽनुभावा अपि सम्भावितकलहरङ्गस्थलीकुतूहलिनोऽद्भुतनटा इव त्यक्तपटान् समाक्रान्तुमुद्युक्ताः, यदा प्रवर्द्धमानकोपपूराः, सञ्जातास्तदा, श्रीरामानन्दाचार्यास्तान् मधुरस्निग्धया वाचा सान्त्वयामासुः। ततो जैनभिक्षुं सम्बोध्य प्रबोधयाञ्चक्रुः—

श्रीरामानन्दाचार्याः—भगवन्! निगदितमेतन्निखिलभणित-मज्ञान-महामोहविकुण्ठितधिषणावधीरितसद्विवेकबहुलमिति सर्वथाऽशोभनमखिलशास्त्रोपेक्षितमविद्व-

द्वचनरचनाप्रवञ्चनचातुरीचणमेव प्रतिभाति परिहासास्पदमात्मनोऽनभिज्ञत्व-प्रकाशनकुशलकलम्। अतः स्वाभाविकतयैव स्वगुणगरिमा समुत्पादितविवेकेषु प्रशान्तधीरललितमानसेष्वपि जनयति कुतर्ककौटिल्योल्लसितव्यापारविलासम्—प्रतिभोल्लासश्चेति। नात्रभवतां मन्ये कश्चनदोषविशेषम्। स्वाभाविकोऽयं प्राकृतिको नियमो यदुलूको न पश्यति विद्यमानेऽपि प्रकाशप्रसारणपटीयसि भगवति मरीचिमालिनि किमपि वस्तुजातमिति। निजमनोऽनुकूलाज्ञानान्धतमस्तोमसाम्राज्यसौख्यानुभूतिवैभवविकासिनि चर्मचक्षुषि कुतो वेदभास्करालोकालोकन-कौतूहलकल्पनेति। यतो हि पाषण्ड-प्रसाराऽऽसारप्रवाहितनिजनिखिलविज्ञानाऽऽचारादि तत्त्वसारा अपाराऽऽवर्त-निमज्जनोन्मज्जनादिकर्मचक्रविभ्रान्तमतयः प्रवलतमतरलकर्मकीलाललोल-कल्लोलचपेटाऽऽघातचञ्चूर्यमाणकपोलफलकाभवन्मतिः स्मरति न मनागपि सुलभसन्तरणप्रकारम्। समवरुद्धगतिका पदमपि चलितुमक्षमा, कलयति न कामपि सन्मार्गगमनकेलिम्। निजप्रसारितपाषण्डताण्डवविमोहितमनो-व्यापारा मननक्रियाऽपि भजति विक्रियां, निकृन्तितसत्यैकपादा खञ्जायितेयं भवतां दुर्मतिः। यथा भवतां मतिः कुण्ठिताऽभूत् तथैव तत्त्वचिन्तनशक्तिरपि लुप्तक्रियाकलापा संवृत्ता। अतएव न भवान् वेद किमपि सत्यसनातनधर्म-रहस्यम्। न वाऽस्मद्देशभूषा-तिलकदण्डधारणादिमाहात्म्यञ्चेति। न ह्यज्ञानो-ष्मविलुप्तदर्शनशक्तिकाऽऽदर्शतल इव नीहारावृतलोक इव किमपि वीक्षितुं प्रभवति। न पारयति किमपि विज्ञानविषयीकर्तुम्। अतएव ज्ञानोपलब्धि-पराङ्मुखा भवन्मतिस्तथैव लोपकायते यथा सुदूरमुच्चैः संलग्नानि दुर्लभ्यानि द्राक्षाफलानि नितान्तमाम्लानि सन्तीति नाऽऽस्वाद्यानीति मत्वा सा विरमति। तादृश्येव साम्प्रतिकी भवतां स्थितिरज्ञानविजृम्भितेति।

जैनभिक्षुरपि 'भोगीव मन्त्रौषधिरुद्धवीर्यः' सन् मधुरतर-समुत्तरविलुप्तगर्वभारः किमपि प्रत्युत्तरमुपस्थापयितुमशक्तमात्मनमाज्ञाय केवलं कुतर्कमेव शरणीकृत्य व्यजल्पत्—भगवन्! वेदोहि 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ०' इति मन्त्रे स्पष्टमेव विष्णुं सपत्नीकमेव स्तौति, तर्हि स्त्रीपराधीनः कथं सृष्टिरचयिता भवितुमर्हति? यतो हि स्त्री, साक्षान्माया-तामाश्रित्य तयापहृतविज्ञानः स्त्रैणः सन् कथं विश्वनियन्त्रणं कर्तुं प्रभुर्भवति? कथञ्च स विश्वनियन्ता, कर्ता निगद्यते?

श्रुत्वैतत् प्रजल्पितमस्य, मन्दस्मितवदनः श्रीरामानन्दः समुदतरत्-अज्ञानोल्लसिताऽविकसितमहामते! मनःकल्पितमीदृशं नास्माकं मायाचक्रपरिवृत्तं ब्रह्म-ईश्वरो वा जगन्नियन्ता भगवान् भवद्बुद्धिस्थस्तादृशः। न हि स कदाचन मायाया

दासो भवति, न क्वचन मायाधीनता वा भवति तस्य स तु साक्षान्मायेशः मायाजानिः, मायैव तस्य दासी, दासायते सर्वदा तमेव सततं निषेवते स्वयमेव मायैव नर्तकीव तदिङ्गितानुकूलमेव नृत्यति ।

माया हि भगवतः शक्तिः, 'शक्ति-शक्तिमतोरभेदः' न हि शक्तिः क्वचन शक्तिमन्तं विहाय प्रातिस्विकरूपेण स्वात्मानं समुपस्थापयितुं प्रभुर्भवतीति श्रुतम् ? अतः शक्तिमति विद्यमाना शक्तिरेव सर्वं कर्तुं सम्पादयितुं वा सकलं प्रभवति । शक्तिरेव सर्वत्र प्रसृता व्याप्ता च लोके न हि तदतिरिक्तं किमपि कथमपि स्वसत्तां स्थापयितुं शक्नोति वस्तुजातम् चराचरञ्चेति । यथा भवच्छरीरमपि शक्तिसम्पन्नमेव किमपि कर्तुं चलितुं वदितुं पातुं भक्षितुं, हसितुं, पारयति नान्यथा, शक्त्यैव भवतां स्थितिः । अतः शक्तिप्रधानमेव सकलम् । परञ्च प्राणिशरीरं, जीवनशक्तिमयं शक्त्यधीनमेव सर्वात्मना भवति न तथा भगवान्, भगवाँस्तु शक्त्यधीशः स्वयं शक्त्याधारभूतो न हि शक्त्यधीन इत्येव जीवेश्वरयोर्विभेदः । शक्तिर्हि जीवं शास्ति, किन्तु भगवता च सा स्वयमेव शासिता, तां शास्ति स भगवान् । 'ईश्वरः शक्तिशासकः' इति । एवमेव सस्त्रीकं (सशक्तिकं) भगवन्तं विहाय नान्यः कश्चन जगच्छासको जगन्नियामको वा भवितुमर्हति । यतो हि एक एव भगवान् सर्वशक्तिमान् नान्यः कश्चन । सर्वे हि भगवदतिरिक्ता जीवा एव, ईश्वरस्त्वेक एव । स एव सर्वशक्तिः सर्वज्ञः अन्तर्यामी कर्तुमकर्तुमन्यथा वा कर्तुं प्रभुः, तद्भिन्नः अल्पज्ञः अल्पशक्तिः परिगणितानन्दः तिरोहितानन्दो वा, जीवः । न हि सः कदाचिदपीश्वरो भवितुमर्हति ।

किञ्च जैनसिद्धान्ते या हि धारणा जागर्ति, यज्जीवः तथाविधोच्चकर्मकरणादीश्वरो भवितुं शक्नोतीति निर्मूला निराधारेव । न ह्यल्पज्ञो जीवः कीदृशान्यप्युच्चतमानि कर्माणि कुर्वन्नपि भगवान् भवितुमर्हति, शक्नोति च भगवन्तमवाप्तुम् । कर्माणि ह भगवत्प्राप्तिकराणि भवन्ति न हि भगवद्भवनसामर्थ्यानि । कर्मसु भगवद्भवनसामर्थ्यं भगवत्प्राप्तिसाधनत्वं तु विद्यते किन्तु भगवत्करणं (ईश्वरीकरणशक्तित्वं) नास्ति ।

जैनशास्त्रेष्वपि—कर्म द्विविधम् 'घातिकर्म, अघातिकर्मे'ति । उभयोर्मध्ये नैकस्मिन्नपि तादृशी शक्तिः या हि जीवे सर्वज्ञतासञ्चारणं कुर्यात् । उभयविधकर्मसाधकः सिद्धो वा सर्वज्ञत्वं प्राप्नुयादिति न कुत्राप्युट्टङ्कितम् ।

इत्थं जैनभिक्षोः प्रश्नोत्तरानन्तरमनन्तयुक्तिसंगतालापान् विधाय जैनभिक्षोः समाधानं मनस्तोषञ्च कृत्वा तत्प्रार्थनया सदुपदेशैस्तमपि पूरिताभीप्सितं विधायाग्रे 'अर्बुदाचलामुपसेवितुं प्रस्थानमकार्षुः ।

क्रमेण मार्गस्थां दर्शकमण्डलीं भक्तिभावमहितां दर्शनसमालाप-प्रवचन-प्रश्नोत्तरादि-समुपदेशैः परितोषयन्तः, सनातनधर्मावलम्बिनीं सदाचारपरम्परामुद्बोधयन्तो, भगवदीयेषु भगवच्चरणारविन्दानुरक्तिं पोषयन्तः, कुटिलकलिकालकलुषितकलेवरां काञ्चनकुजनकुकर्मकुसङ्गजनितां भगवद्विमुखताऽऽपादिनीं कामिजनसम्पर्कसमुपजातसन्तापसमुत्सादिसद्भावनां, भगवद्भजनविघातिनीं शातिनीं शुभकर्मणां कुप्रवृत्तिं शोषयन्तो मोषयन्तश्च महामहान्धकारमयमहागर्तनिपातनोन्मुखीं मनोवृत्तिम्, वनाद्वनं प्रविशन्तः, पारयन्तश्च सुदूरमध्वानम्, विलोकयन्तो गिरिणदीनदसुषमाम्। चाक्षुषीकुर्वन्तश्च कमनीयां कामपि काननीं नन्दनवनोपमेयां गेयाञ्च गुणिगणैर्ध्येयामविरतध्यानधारणारतैराश्रमवासिसमुपासकपटलैः, सर्वदाफलपुष्पोद्गममञ्जुलैः पादपपुञ्जैः परिशोभितां, नानाविध-विहङ्गमविलासविलसिताम् मधुर-मधुकरमालामञ्जुलझङ्कृतिगुञ्जिताम् शकुन्तकुलकलकूजितस्तुतगुणगाथाम्, नृत्यन्मयूरवृन्दप्रदर्शितलास्यकलाम् काननकुञ्जकलितावासोन्मादविस्तारितकेकिकुलकेकाशतनादिताम्, विविधवन्यपशुकुलशश-मृगशललीरुरु-गवय-वृक-शृगाल-कोलकुलसङ्कुलाम्, सुभगसलिल-सम्भृतसरसीरुहसमलङ्कृत - शुचिसरोवरवन्धुराम् प्रसृतपरागपटलपिञ्जरितपीतपटपरिलसितपयःपूरानन्दितदर्शकलोचनामृतपयस्विनीवहुलाम्, निःष्यन्दिताऽमन्दमकरन्दामोदाऽऽमोदितमन्दमारुतोल्लासितपथिकनिवहाम्, दर्शं दर्शमध्वनीनां काञ्चनशोभाम् लोभाऽऽक्रष्टमतिमन्तः सन्तः प्राकृतं वैभवं विलोकयन्तो भगवतः शनैः शनैः प्रयान्तो महान्तः श्रीरामानन्दाचार्याः सपरिकरा अर्वुदाऽचलसान्निध्यमवापुः।

समासाद्य चार्वुदाचलम्, तदुपरि परितो विराजमान-महर्षिजनाऽऽश्रमाऽऽलोकनोपजातपरितोषाः समन्ततः समुन्नतगगनचुम्बिदेवायतनान्यालोकयन्तो गिरिगह्वरान्तः – स्थितनिभृतनिश्चलसमाधिसमासादितसन्ततब्रह्मसम्पन्नतानन्दनिमग्नस्वान्तानेकान्तप्रियाननेकान् महर्षिकल्पान् प्रत्यक्षमक्षिलक्ष्यीकृत्य भृशं प्रमुदिताः कञ्चित्कालं यावत् तत्रैव स्थातुकामाः श्रीरामानन्दाचार्याः श्रीवशिष्ठाश्रमात् किञ्चिद्दूरं मञ्जुलकुसुमाकरच्छविभरं 'नक्खी'—सरोवरं समवाप्य तत्रैव निवासं कलयामासुः।

आसीद् तदानीं प्रसिद्धगुणधामा 'श्रीमिलिन्दसूनु'-नामा कश्चन महात्मा तपश्चरणशीलोऽद्भुतलीलः। स च परमात्मनः समुपासनानिरतस्य सन्ततरामचन्द्रचरणारविन्दसुधासेवनानन्दमयस्वान्तस्य श्रीसौकल्यमहर्षेः शिष्यो बभूव।

श्री सौकल्यमहर्षिर्हि भगवतो महापुरुषस्य श्रीकौसल्याहृदयनन्दनश्रीरामचन्द्रस्य परमभागवतोऽनन्यभक्त आसीद्—यस्य विशुद्धान्तःकरणभावं विज्ञाय भक्तवत्सलः करुणावरुणालयः श्रीदशरथराजकुमारो निजचरणारविन्दमकरन्दमिलिन्द-

मनन्यशरणं भक्तराजं सपदि सफलमनोरथं विधातुकामः स्वयं प्रकटीभूय साक्षाद् दर्शन-सुखभोगभाग्यवन्तश्चकार ।

सफलमनोरथः सौकल्यमहर्षिः कृतकृत्यः सन् श्रीसीतासनाथ निजनयनपथगत-मालोक्य भगवतो भक्तवात्सल्यं भक्तपराधीनत्वभावनां स्तोतुकामोऽपि स्नेहप्रसर-पराहृतवाग्वैभवो गद्गदाक्षरविस्खलितपदां वाचमाचारयन् नयनानन्दवाष्पपरिप्लुत-पक्ष्मलो नाशकदधिकां पदावलिं प्रसारयितुम्। केवलं नमनमेव प्रह्वीभावपुरःसरं निजमस्तकमङ्घ्रियुगलपङ्कजपरागरञ्जितं व्यदधात्। परमानन्दसिन्धुनिमग्नं चरणपतित-मेव निजजनमालक्ष्य भगवान् स्वयमेव तं समुत्थाप्य हृदयेनालिङ्ग्य तन्मस्तकन्यस्तहस्तः प्रियभक्तं वृद्धतनुं जराजीर्णकलेवरं धमनिशतस्फुरणप्रकटितान्त्यवयस्कं वरदकरवरेण-वरेण तमभिनन्दयायास।

भक्तवरः सौकल्यमुनिराजोऽपि सर्वदैव तत्रस्थित एव तथाविधस्वरूपस्य भगवतो दर्शनप्रेप्सुः—तादृशस्वरूपेणैव श्रीदशरथराजकुमारचरणः तत्र तस्य कुटीरे सर्वदा विराजमानास्तमनुगृह्णीयुरिति वरेणाच्छन्दयामास। भक्तवत्सलो भगवानपि श्रीसर्वेश्वरः श्रीरामः 'तथास्त्वि'ति तमनुरञ्जयन् तत्रैव स्वविग्रहस्वरूपेणैव तत्रस्थितिं कल्पयामास। यावज्जीवनञ्च स महामुनिः सौकल्यः श्रीकौशल्यानन्दनं संसेव्य वयसोऽन्ते भगवत्सायुज्यमवाप। ततस्तच्छिष्यः श्रीमिलिन्दसूनुर्मिलिन्दसूनुरिव सन्ततं श्रीसर्वे-श्वरश्रीरामचन्द्रचरणपङ्कजप्रसृतमकरन्दलिप्सुः सर्वात्मना तत्स्वरूपोपासनामेव-वितनुते स्म।

यत्र-तदेव श्रीकौसल्याहृदयनन्दनस्वरूपं श्रीसर्वेश्वर - श्रीरघुनाथनाम्ना प्रसिद्ध-मद्यापि भक्तप्रवरश्रीसौकल्यमहर्षितपःफलस्वरूपं तच्छिष्य-श्रीमिलिन्दसूनुभक्तिभाव-प्रतीकभूतं तदुपास्यदेवविग्रहभूतम् भक्तजनमनोरथान् पूरयितुमेव विराजमानं विराजते-ऽर्बुदाचलपृष्ठे (आबू)।

तत्राऽऽगत्य श्रीरामानन्दाचार्याः श्रीमद्रघुनाथस्य भक्तवरश्रीसौकल्यमहर्षि-विनिर्मित-स्वल्पकायपर्णकुटीरसंस्थितस्य भक्तपारवश्यत्वप्रदर्शनायैव स्वस्वरूपाननुरूप-स्थले विशदप्रासादाविलसितललितानि प्रदर्शयतः सानन्दकलाऽऽकुलेक्षणाः दर्शन-मकार्षुः।

तदानीमेव श्रीमद्रघुनाथदर्शनसमनन्तरमेव स्वभावनाविभाविताऽन्तःकरणाः श्रीमद्रामानन्दाचार्याः सपदि देवायितविग्रहान् सविग्रहानेव सर्वसाधनसम्पन्नान् भगव-दर्थमेव समुपार्जितसकलधनान् परमभगवदीयान् प्रेरयन्तो भगवतो विशालकायमन्दिर-निर्माणार्थं स्वाभिलाषमयीमाज्ञां प्रसारयामासुः। तत्क्षणमेव कार्यारम्भः समभवत्।

तदिच्छानुसारं शीघ्रमेव भगवन्मन्दिरं निर्मितमभूत् । तत्र तस्मिन् नवनिर्मितमन्दिरे यथाविधि भगवतःश्रीरघुनाथस्य स्थापना कारिता । तदेव मन्दिरमद्यापि विद्यतेऽर्बुदाचले । ततः प्रभृति तस्मिन्नेव स्थले विद्यमानस्य भगवतः सर्वेश्वरस्य श्रीरघुनाथस्य मन्दिरे-सेवाप्रकारः प्रचलित एवास्ते । इति श्रूयते, समये समये च तत्तत्कालानुकूलपरिस्थितिवशात् सञ्जात-परिवर्तन-परिवर्द्धनह्रासादयोऽपि व्यवहृता अभूवन् । किन्तु तदानीं श्रीमदाचार्यप्रेरणया सकललोकोपकाराय भक्तिसुरवरतरङ्गिण्याः प्रवाहः प्रसारितः सञ्जातः । सर्वसाधारणजनकृतेऽपि सुलभः सत्सङ्गावसरलाभः समजनि ।

एकदा सत्सङ्गसमारोहे विद्यमानेषु महर्षिकल्पे समस्तभक्तवरेषु साधुपरिकरमूर्द्धन्येषु शिष्यप्रवरेषु तन्मध्ये समुन्नतसुसज्जितसिंहासने विराजमानेषु श्रीमदाचार्यचरणेषु सत्सु—कतिचन जिज्ञासवो महात्मनः प्रश्नकुतूहलिन इव प्रस्फुरितरदनच्छदा अपि, आचार्यवदनप्रभापुञ्जहतस्विष इव वक्तुमप्रभवः केवलं निर्निमेषचक्षुर्व्यापारमेव कलयन्त इवावातिष्ठन्, तदा स्वयमेव श्रीमदाचार्यास्तेषां हार्दभावं विज्ञाय श्रीसुरसुरानन्दनामानं सुयोग्यं शिष्यं सम्बोध्य प्रोचुः—वत्स ! सुरसुरानन्द ! किमेवं मनस्येव स्वकीयजिज्ञासां निगूहमान इवास्ते ? अन्येऽपि महात्मानः श्रोतुकामास्तवमुखावलोकनमात्रकलितनयनव्यापाराः शुश्रूषव एव राजन्ते । अतो यदभिलषितश्चेत्तत् निःशङ्कं पृच्छेति ।

इत्याज्ञप्तः श्रीसुरसुरानन्दः सविनयं प्रणतिपुरःसरं पप्रच्छ । भगवन्तः श्रीचरणाः ! सर्व एवैते समुपस्थितवैष्णवोत्तंसाः परमहंसा महात्मनश्च श्रीमद्वदनारविन्दनिःनिष्यन्दितमधुरवचनसुधाभ्ज़रीमास्वादयितुमनसः सतृष्णमानसाः प्रार्थयन्ते यत् कृपां विधाय श्रीवैष्णवसम्प्रदायसिद्धान्तमधिकृत्याद्य सुविस्तरं समुपदेशान् प्रसारयेयुरिति ।

तत्र जिज्ञास्यमानाः प्रश्नाः सन्ति दश :—

(१) 'किमस्ति तत्त्वं संसारे ? (२) 'श्री वैष्णवाः कं मन्त्रं जपेयुः । (३) कं वा ध्यायेरन् ? (४) 'किमस्ति मुक्तेः श्रेष्ठतमं साधनम् । (५) सर्वश्रेष्ठो धर्मश्च कः ? (६) 'कतिविधाश्च भवन्ति वैष्णवाः' ? (७) किमस्ति लक्षणं वैष्णवानाम् ? (८) तैः कुत्र निवासः करणीयः । (९) कथञ्च कालक्षेपो विधातव्यः ? (१०) 'मोक्षार्थंश्च कीदृशं साधनमनुष्ठेयम् ?' इति ।

इत्थं प्रियशिष्यसुरसुरानन्दद्वारा शुश्रूषूणां जिज्ञासूनां महात्मनां मार्मिकान् श्रीवैष्णवानां कृते नितान्तं ज्ञातव्यान् प्रश्नानाकर्ण्य परमप्रमुदिताः श्रीमदाचार्याः

सर्वान् धन्यवादैरभिनन्द्य क्रमेण सकलप्रश्नान् सम्यग्विवेचनपुरःसरं समुदतरन् :-. तथाहि :—

अयि जिज्ञासवो भगवदीयाः? सर्वतः प्रथमन्त्विदमेव जिज्ञास्यं वर्वर्ति-यद्वयं वैष्णवाः स्मः तर्ह्यस्माकं कः साम्प्रदायिकः-सिद्धान्तः? केन नाम्ना व्यवहृ-तश्चास्माकीनः सम्प्रदाय इति।

सम्प्रदायोऽयं "विशिष्टाऽद्वैतः तत्र किं तद् विशिष्टाद्वैतम्? इति ज्ञातव्ये व्युत्पत्तिरस्य--"विशिष्टम्, विशिष्टम् चेति विशिष्टे; विशिष्टयोरद्वैतम्-इति विशिष्टा-द्वैतम्-अर्थात् कारणब्रह्मणः कार्यब्रह्मणश्च द्वयोरैक्यम्। तत्र कारणं ब्रह्म तु-सूक्ष्म चि-द्विशिष्टः सूक्ष्मचिद्रूपो जीवः। सूक्ष्मा=चिद्रूपा प्रकृतिः इत्युभयोर्विशिष्टं अर्थात् सूक्ष्म-चिदचिद्विशिष्टम् ब्रह्मैव=कारणंब्रह्म। एवमेव :—

स्थूलचिद्रूपो जीवः स्थूला=चिद्रूपा प्रकृतिः, इत्युभयविशिष्टं, (स्थूलचिदचि-द्विशिष्टं ब्रह्मैव) कार्यंब्रह्मेति।

विशिष्टं नाम = विशेषणयुक्तं तत्त्वम्। तादृश विशेषणरूपं तत्वंहि विशेष्या-ऽऽधारं भवति। विना विशेष्यं न भवति विशेषणस्थितिः। यथा स्वीयाधारभूतं वृक्षं विहाय न फलानां विना वृक्षेण स्वान्तन्त्र्येण क्वचित् स्थितिर्विलोक्यते लोके तथैव चित्तत्त्वम् जीवः, अचित्तत्वरूपा प्रकृतिरित्युभयमेव विना निजाधारं ब्रह्म क्वचन पार्थक्येन स्वतन्त्रतया वा स्थातुं न शक्यते = अतः अपृथक् सिद्धं विशेषणम् स्वाऽऽधारं विशेष्यमेव शरणीकरोति=इत्थम् चिद् = जीवः, अचित् = प्रकृतिः, इति द्वयविशिष्टमेकं ब्रह्मैव। अतः विशिष्टाद्वैतनाम्ना वर्ण्यतेऽयं सिद्धान्तः। अर्थात्— ब्रह्मणश्चिदचिद्विशिष्टत्वात्, चिदचितोरद्वैतत्वात् = (एकत्रब्रह्मणि स्थितत्वात्) विशिष्टाऽद्वैतम्।

एवञ्च = कारण-कार्यभेदेन ब्रह्म-द्विविधमेव। एषा द्विविधता, कालिकी= कालभेदेन=द्विविधताप्रतीतिर्भवति-, यथा प्रलयकालः सृष्टिकालश्चेति=। तत्र प्रलयकाले-सूक्ष्मचिद्रूपो जीवः, सूक्ष्माऽचिद्रूपा प्रकृतिः इत्युभयं चिदचित्सूक्ष्मं (सूक्ष्मंचिदचित्तत्त्वम्) ब्रह्मणि निलीनं (स्थितं वा) भवति तदा तदेव ब्रह्म= कारणब्रह्मेति व्यवहृतं भवति। सूक्ष्मचिदचिद्विशिष्टं ब्रह्म वा व्यवहारः क्रियते)

सृष्टिकाले यदा तदेव=स्थूलं चिद्रूपं तत्त्वं जीवः, स्थूला अचिद्रूपा प्रकृतिः इत्युभय-स्थूलचिदचिद्विशिष्टं तत्त्वं ब्रह्मणि स्थितं भवति तदा कार्यब्रह्मेति संज्ञा-वद्भवति ब्रह्म।

( अर्थात् स्थूलचिदचिद्विशिष्टं ब्रह्मैव = "कार्यंब्रह्म" कथ्यते. व्यवह्रियते )

अत्र-ईदृशविवेचने शङ्का समुपतिष्ठति यत् किम् ब्रह्मद्वयमस्ति ? इति नात्र शङ्कनीयम्—ब्रह्म तु चिदचिद्विशिष्टमेकमेव ब्रह्मास्ति न द्वितीयम् । किन्तु तस्यैव, एकस्य-ब्रह्मणः कालभेदेन भेद इव प्रतीयते=तदेकमेव ब्रह्म नान्यत्-तत्र चिदचिद्विशिष्टं तत्त्वं ( जीव-प्रकृतिरूपम् ) प्रलयकाले सूक्ष्मरूपेण ब्रह्मणि लीनं सत् तिष्ठति अतः सूक्ष्मचिदचिद्विशिष्टं ब्रह्म प्रोच्यते । यथा वटवृक्षः स्ववीजरूपे निलीनः सूक्ष्मरूपेण स्थितो भवति, पुनः स एव=स्वानुकूल=खादपूरं जलञ्च भूमिमुर्वराञ्च प्राप्य वीजरूपतोऽङ्कुरतां प्राप्य क्रमेण वृक्षो भवति=सूक्ष्मरूपात् स्थूलरूपे प्रकटितो भवति-एवमेव सृष्टिकाले सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव कारणभूतं स्थूलरूपंण सृष्टिकाले वहिः स्थूलचिदचिद्विशिष्टरूपेण कार्यब्रह्मनाम्ना व्यवहृतं भवति अत एवमेव चिदचिद्विशिष्टं ब्रह्म प्रलये सूक्ष्मरूपत्वं सृष्टौ स्थूलरूपत्वं भजते । अतः कारणकार्यनाम्ना प्रसिद्धं भवति, अन्यथा त्वेकमेव ब्रह्म । यथा एक एव पुरुष :—यदा राजस्थाने वसति तदा सः राजस्थानीयः कथयिष्यते । पुनः स एव = उत्तराखण्डे स्थितिं जुषते तदा स उत्तराखण्डवास्तव्यो व्यवहरिष्यते । पुरुषस्त्वेक एव किन्तु देशभेदाद्भिन्न इव विभाति । एवमेव ब्रह्मेति ।

गणनायां यथा राजस्थानी - उत्तराखण्डीति व्यवहारस्तथैव कारणब्रह्म कार्यब्रह्मेति ।

( कालभेदेनैव ( प्रलय-सृष्टिरूपेण ) ब्रह्मणि=कारणं ब्रह्म (प्रलये) कार्यं ब्रह्म (सृष्टौ)

३ इत्थम्=कालभेदमादाय=भिन्नत्वेन प्रतीयमानं ब्रह्म वस्तुत अभिन्नमेव कारण-कार्यं ब्रह्मणोः-अद्वैतम्=एकीभावः [ सूक्ष्मचिदचिद्विशिष्टकारणब्रह्म स्थूलचिदचिद्विशिष्टकार्यब्रह्म—इत्युभयोरद्वैतमेव विशिष्टाद्वैतम् । एवमेव="कारण-कार्यब्रह्माद्वैतम् "सूक्ष्म-स्थूल-चिदचिद्विशिष्ट ब्रह्माद्वैतम्" किंवा "विशिष्टाद्वैतम्" इति नामत्रयमेकमेव । एकस्यैव सिद्धान्तस्य नामानि ।

## अत्र विशिष्टाद्वैत-सिद्धान्ते तत्त्वानि

विशिष्टाद्वैत-सिद्धान्ते त्रीणि तत्त्वानि सन्ति :—"चिद्, अचिद् ईश्वरः" इति । एतान्येव त्रीणि तत्त्वानि ( चिद्, अचिद्, ईश्वर-रूपाण्येव ) सृष्टौ प्रधानानि ।

(१) तत्र चित् - तत्त्वम् :—चित्=चेतनम्; चेतनत्वाज्-ज्ञानाश्रयत्वात् चेतनशब्देन जीवः कथ्यते । जीवस्वरूपञ्च - नित्यम् ( जीवोनित्यः ) चेतनः । अजन्मा, आदिमध्याऽवसानरहितः, प्रतिशरीरं भिन्नो, वद्धो मुक्तो नित्यः सूक्षादप्यतिसूक्ष्मः,

ईश्वराऽपेक्षया अल्पज्ञः, अस्वतन्त्रः, ( भगवदधीनः ) कर्ता-भोक्तास्मीति-"अहन्ताऽभिमानी" ।

(२) अचित् तत्त्वम् :—अचित्=प्रकृतिः [भगवतोमाया=भगवतः मायाहि शक्तिरूपा=( इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपा भवति ) किन्तु - सा ततोभिन्ना, स्वभावतः अचेतना (जडभूता) अतो न ज्ञानाश्रया अत एव अचिद् शब्द वाच्या । एषैव प्रकृतिः सांख्यसिद्धान्तमान्या="अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः" लोहितशुक्लादिभेदेन विविधवर्णा "( सत्त्व-रजस्तमोगुणविशिष्टा") अव्यक्ता, स्वातन्त्र्येण व्यापारशून्या, भगवदधीना (ईश्वराधीना) सृष्टिकारणभूता=महद् तत्त्वाद्युत्पादयित्री" अहन्तत्वादि कारणरूपा सर्वात्मना भगवतो माया इच्छा-ज्ञान-क्रियाशक्तिरूपाया अधीना परतन्त्रेति ।

(३) ईश्वरतत्वम् (ब्रह्म) :—ईश्वरो हि एकः प्रत्यनीक प्राकृतगुणैर्हीनः (निर्गुण इति) देश-कालाद्यपरिच्छिन्नः (देश-काल-मर्यादाऽऽवरणादिरहितः) सर्वतन्त्रः स्वतन्त्रः, स्वयं प्रकाशात्मकः आनन्दस्वरूपो ज्ञानस्वरूपश्चेति । सकलकल्याणकारिगुणगणात्मकः सगुणः । जगतः सृष्टि-पालन-संहारकर्ता, परमकारुणिको भक्तवत्सलः सर्वेषामाधारभूतः, चतुर्वर्गफलप्रदाता ( अर्थ-काम-मोक्ष-दाता ) नित्यो नित्यः चेतनश्चेतनानाम् । विरजो ( अजरः ) विमृत्युः ( अमरः ) निष्पापः, सर्वत्रस्थः, सर्वान्तर्यामी सकलचराचरनियन्ता, समेषां लोकानामसम्भेदाय स्वयं मर्यादारूपेण स्थितः सर्वव्यापी सर्वान्तरात्मा श्रीजानकीजानिः श्रीराम एव । अयमेव सर्वदा-सर्वेषां कृते स्वकीयं परमकारुण्यं भिन्नभिन्नरूपेण वितरति यथा अज्ञानिभ्यो ज्ञानम्, अशक्तेभ्यः शक्तिम्, सापराधेभ्यः क्षमां दुःखिभ्यो दयां ( कारुण्यम् ) मन्देभ्यः शीलम्, कुटिलेभ्यः सारल्यम्, दुष्टेभ्यः सौहार्दम् भयभीतेभ्यो निर्भयत्वम्, दर्शनाभिलाषिभ्यो योगिभ्यः स्वदर्शनमिति ।

यथा :—परः, विभवः, व्यूहात्मकः, अन्तर्यामी अर्चावतार इत्येति । उक्तञ्चः—"ईश्वरतत्त्वं पञ्चविधम्-परव्यूहविभवाऽन्तर्याम्यर्चा भेदात् ।" इति ।

(१) तत्र-परस्वरूपं हिं :—"अणोरणीयान् महतो महीयान्, "अपाणिपादोजवनो ग्रहीता" न तत्समश्चाप्यधिकश्च दृश्यते, यस्मान्नाणीयो न ज्यायोस्ति कश्चन । किञ्च "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" द्विभुजं सुन्दरं दिव्यं, वनमालाविभूषितम्, "चतुर्भुजं शङ्खगदायुधायुधम्" इत्यादि श्रुति-स्मृति-पुराण-प्रतिपाद्यम् विरुद्धधर्माश्रयस्वरूपम्, कोटिकन्दर्पलावण्यम् परमानन्दविग्रहम्, कोटिसूर्यप्रतीकाशम्-कोटिचन्द्रसुशीतलम् । दिव्याऽनन्तगुणैर्युक्तम् दिव्यमङ्गलविग्रहम् ।

ईदृशं दिव्यगुणविशिष्टम्, नित्यजीवैः परिवेष्टितम्, निकामधामसुन्दरम्, समस्ताऽणिमादिविभूतिरूपाश्रितम्, षडैश्वर्यसम्पन्नम्, श्रीजनकनन्दिनीसमलङ्कृतदक्षिणेतरभागां नित्यश्रीनित्यमङ्गलमयश्रीनित्यसाकेतधाम्निविलसत् भगवतः श्रीविग्रहमेव परस्वरूपम्, । प्रमाणमपि :—

( सनत्कुमार संहितायाम् :—) "रामः सत्यं परं ब्रह्म रामात्किञ्चिन्न विद्यते ।"
( श्रीरामतापनी श्रुति :—) "यो वै श्रीरामचन्द्रः स भगवान् यत्परं ब्रह्म-भूर्भुवः स्वस्तम् वै नमो नमः ।"

किञ्च :—[ स्थूलमष्टभुज प्रोक्तं सूक्ष्म चैकचतुर्भुजम् । द्विभुजं तु परं प्रोक्तं रूपमाद्यमिदं हरेः । ] इति ।

(२)=व्यूहस्वरूपम् :—व्यूहस्वरूपञ्च-सृष्टौ-जगतः उत्पत्ति-स्थिति-प्रलयार्थम् तथाभूमेर्भारावतारणार्थम्, निजचरणाविन्दमकरन्दलिप्सूनां मनोरथपूर्त्यै,

( तथा च गीतायाम् :— ) [ परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।। ]

इत्थं प्रतियुगं-"संकर्षण व.सुदेव प्रद्युम्नानिरुद्धेति चतुर्व्यूह रूपेण द्वापरे" एवं श्रीरामलक्ष्मणभरतशत्रुघ्नरूपेण च त्रेतायाम् चतुर्व्यूहरूपेणैव प्रकटितो भवति भगवान् भक्ताऽभीष्टसिद्धये सकलजनसमुद्धारार्थञ्चेति ।

लक्तञ्च—[ "चतुर्विधः स भगवान् मुमुक्षूणां हिताय वै । किञ्च :—

[ "षण्णां युगपदुन्मेषाद् गुणानां स्वप्रपञ्चोदितान् ।
अनन्त एव भगवान् वासुदेवः सनातनः ।।" ]

क्रमेण च भगवति श्रीवासुदेवे षण्णामेव गुणानां-विलसनमस्ति । किन्तु शेषेषु त्रिषु गुणन्यूनता तथाहि श्रीकृष्णे तु ऐश्वर्यस्य, श्रियः, यशसः, वीर्य्यस्य, ज्ञानस्य वैराग्यस्य चेति षण्णामेवाऽक्षुण्णा संस्थितिः सार्वकालिकी । किन्तु-श्रीसंकर्षणे वैराग्यरहिता ज्ञान वीर्यादीनाम् । प्रद्युम्ने - ऐश्वर्य्यादयो ज्ञानवैराग्यवर्ज्याः । अनिरुद्धे च यशो ज्ञान-वैराग्यरहिताऽवशेषगुणाः प्रत्यभासन्त । यत्र च भगशब्दवाच्या गुणाः 'ज्ञानं, बलं ( चयनसामर्थ्यम्, ) ऐश्वर्य्यं, वीर्य, तेजः शक्तिः, इत्याद्याः षड्गुणाः परिगणितास्तत्र भगवति वासुदेवे तु सर्व एव गुणाः । किन्तु—संकर्षणे ज्ञान-बलयोः, प्रद्युम्ने ऐश्वर्यवीर्ययोः, अनिरुद्धे तेजः शक्त्योरेव स्थितिः, न सर्वेषां गुणानाम् स्थितिः एवमेव श्रीरामावतार कालेऽपिभगवति श्रीरामे षण्णामेव स्थितिः — सुमित्रानन्दनेत्वैश्वर्यादौ न्यूनत्वम् एवमेव भरते शत्रुघ्नेऽपि ।

किन्त्वयं सिद्धान्तो न सार्वदेशिकः। यतो हि-श्रीमदाचार्यास्तु भगवन्तं श्रीरामम्-श्रीकृष्णञ्च-परस्वरूपमेव मन्वते-न व्यूहात्मकम् परस्वरूपस्थितौ-व्यूहात्मकत्वं त्रिष्वेवाऽवतिष्ठते, त्रेतायां श्रीलक्ष्मणादौ द्वापरे संकर्षणादावेव। परञ्च स्वावतारदशायां व्यूहात्मतायां चतुर्थसंख्या पूर्तिमपि स्वीयलीलासु स्थाने स्थाने प्रदर्शितवान् भगवान् श्रीरामः श्रीकृष्णश्चेति निजलोकाऽनुरञ्जनावसरे प्राणेश्वरी परित्यागावसरे वा। यतोहि परात्परप्रभुः स्वयमपि युगावतारप्रयोजनमपि सम्पादयति अतो न चतुर्व्यूहात्मत्वहानिः। न वा चतुर्व्यूहात्मकत्वे परात्परत्वहानिरपि।

(३) विभव-स्वरूपः—"प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" यदा यदा हि धर्मस्य···तदात्मानं सृजाम्यहम्। किञ्च—"सम्भवामि युगे युगे" इत्यादि (गीतायां ४-६-८) स्वप्रतिज्ञानुसार समये समये युगे युगेऽवतरति तद् "अवतरणमेव विभवस्वरूपम्।" विभवः अवतारः स्वरूपाण्यनन्तान्येव तेष्वपि मुख्य-गौणभेदेन द्विविधत्वम्। योहि साक्षादवतारः सः मुख्यः। यश्च पुनः आवेशावतारः स गौण एव यथा श्री परशुरामो जामदग्न्यः। यावदावेशः तावदलौकिकगुणत्वम्, अलौकिककार्यत्वम् [यथा सहस्रार्जुनेन सह युद्धं, तद्धननञ्चेति] एवं मुख्यो विभवावतारोऽपि त्रिविधः मुख्यो मुख्यतरो मुख्यतमश्चेति। तेषु=श्रीवामनावतारादयो मुख्याः। श्रीनृसिंहावतारादयश्च मुख्यतराः। एवं श्रीरामः श्रीकृष्णादयो हि युगे युगेऽवतारधारिणो मुख्यतमाः। पूर्णतया मानवविग्रहा अदैन्याऽक्लिष्टकर्माणः। यद्यपि वामनावतारोऽपि पूर्णतया मानवविग्रहः किन्तु तत्र नादैन्यत्वं नवाऽक्लिष्टकर्मत्वम्। अतो भेदः। यश्च-सारस्वतकल्पेऽवतरितो भगवान्, श्रीकृष्णः किंवा आद्ययुगेऽवरितः श्रीरामः परब्रह्मैव-स्वयं प्रकटितो बभूव इत्थं स्वयं प्रादुर्भूतौ श्रीकृष्णश्रीरामौ परात्परब्रह्मरूपौ; तौ एव युगावताराणामपि कार्यं सम्पादयन्तौ स्वकीयां परमानन्दमयीं लीलां दर्शयन्तौ भक्तजनानानन्दानुभवं कारयामासतुः। युगावतारि भगवत्कार्यस्यापि करणीयस्य सम्पादनाद् केचन विद्वांसोऽपि परात्परत्वकल्पने भ्रान्ता भवन्ति=अतः युगेयुगे स्वस्वकाले प्रादुर्भूतौ युगावतारिणावेव श्रीराम-कृष्णौ अतस्तौ मुख्यतमविभवस्वरूपौ यश्च यदा कदाचन दैवीभक्तजनेभ्यः स्वस्वरूपानन्ददानाय सारस्वतादि कल्पेषु केवलानन्दविग्रहरूपेण भक्तमनस्तोषायैव स्वरूपं धारयन् आनन्दविहारमेव महारासादि प्रदर्शनं करोति स एव पूर्णः पुरुषोत्तमः परिपूर्णः परात्पर एव प्रादुर्भवति। न स युद्धादिकं कुरुते न वा स संयोगवियोगादिक्लेशविशेषमेवानुभावयति। न तत्र दुःखशोकादिलेशतोऽपि तत्र तु केवलं परमानन्ददानमेव दैविजनेभ्यो वितरति स एव परिपूर्णः

तमः प्रादुर्भूतः तदानींतनं युगावतारिमहापुरुषावतारकार्यमपि स एव सम्पादयति तदा स केवलं युगावतारिरूपः श्रीरामः श्रीकृष्णोः राक्षसवधादिकं युद्धादिकं धर्मसंस्थापनं, साधुपरित्राणादि सर्वमेव विदधाति। यावत्कालं परिपूर्णतमत्वं, बाल-किशोर-पौगण्डाद्यवस्थां प्रदर्शयन्नेवानन्ददानम् विदधाति-न तावत् क्लिष्ट-कर्मकरत्वम्। केवलमानन्दमयविग्रहमानन्दघनत्वमेव। यदि च प्रसङ्गतो-राक्षसादिवधकार्यमपि करणीयं भवति चेत् तदपि तानप्यासुरजीवान् स्वीया-नन्ददानाय स्वविग्रहेणैव विना शस्त्रादिग्रहणेन तेषां वधः स्वात्मनि निलीन-त्वायैव क्रियते-यथा मुहूर्तमात्रेण सपादघटिकाद्वयपरिमितेनैव कालेन चतुर्दश-सहस्रसंख्यकराक्षसानां वधः श्रीरामद्वारा, किञ्च-"ताडका" दिमोक्षः। एवमेव श्रीकृष्णावतारे पूतना (दिभ्यः) मपि पयः पानव्याजेन मातृगतिदानम्। अघासुरतृणावर्तबकासुरधेनुकासुरप्रलम्ब - शलतोषलचाणूरादिसहित - कंसवध-पर्य्यन्तं सकलासुरसंहारोऽप्यक्लिष्टकर्मत्वं विनैव शस्त्रादिग्रहणेन श्रीहस्ताभ्या-मेवेति परब्रह्म पूर्णपुरुषोत्तमस्वरूपकार्यं तदनन्तरञ्च सकलं श्रीरामावतारे रावणा-दिवधपर्य्यन्त श्रीकृष्णावतारे च जरासन्धेन सह युद्धारम्भात् अग्रिमतमं सकलमेव कार्यं युगावतारकलितमेव न हि पूर्णपुरुषोत्तमकलितम्। पूर्णपुरुषोत्तमकलितन्तु ललित महारासादिकमेव तदन्तरालेऽप्यासुरजीवोद्धारणमपि। इत्थं सुस्पष्टतमो-विवेकः पर-विभव-स्वरूपयोरिति।

एवमेव—आवेशावतारेष्वपि- स्वरूपाऽऽवेशः, शक्त्यावेश इति द्वौ भेदौ। स्वरूपावेशः परशुरामादौ, शक्त्यावेशश्च पृथुप्रभृतिषु किंवा शिव-ब्रह्मादिषु।

(४)=अन्तर्यामिस्वरूपः—'यथा—वेदसूक्ते-['अन्तः प्रविष्टः शास्ता जनानाम्'] किंवा ['पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः, पुरः स पक्षी भूत्वा पुरः पुरुषमाविशत्'] [यः पृथिव्यामन्तरः—यमयति सः] इति श्रुतिप्रतिपाद्यः सकलचराचरान्तर्यामी-सकलनियन्ता सर्वरूपः—प्रतिशरीरं जीवेन सह प्रविष्टः साक्षी नियामकः प्रेरकः सकलहृदयस्थः-सुखदुःखादि कर्मफलनियन्ता, स्वसुहृदो जीवात्मनः समये परिरक्षकः समुद्बोधकः समुद्धारकश्चेति। समस्तजनमानसविहरणशीलः ["ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति"] गीता०।

(५) = "अर्चाऽवार":—अर्चाऽवतारस्वरूपस्तु भक्तजनमनोभावनानुरूपं, तच्छ्रद्धानुकूलम्—"सुवर्ण - रजत–ताम्रादिधातु विग्रहम् किंवा पाषाणादि-निर्मितं-अथवा मृदा विनिर्मितमध्रुवं तात्कालिकम् देशकालानुरूपम् - यथाधिकारि भक्तजनमनोऽभिलषितम्-चित्रमयं, पटमयं वा भगवतः स्वरूपम् परिकल्प्य, भक्ता यथा यस्मिन् स्वरूपे स्वीयां भावनाम् स्फोटयेयुः, स्वां भक्तिं प्रवर्तयेयुः, तथैव

भक्तपरवशः तथाविधमेव रूपं धृत्वा तदीयां सेवामर्चनां वा गृह्णाति, भगवान् ! भक्तपराधीनः सन् । उक्तम् स्वयमेव भगवता दुर्वाससं प्रति:—["अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ।। नाहमात्मानमाशसे, मद्भक्तैः साधुभिर्विना"] इति भक्ताधीनो भगवान् स्वयंसर्वसमर्थोऽपि = भक्तजन-मुखापेक्षी = तदुपाहृतमेव सर्वं स्वीकुरुते । मनुज इव मानवीयां सकलं-भोजना-सनशयन वस्त्रालङ्करणधारणादिकं सर्वं भक्तमनोरञ्जनाय-हिन्दोला-पल्यङ्क - सिंहासना-सीनत्वादिकीं सर्वविधांसेवामङ्गीकुर्वन् तत्तद्भावनाऽनुकूलमेव महामहोत्सवोल्ला-सादिकं-अन्नकूटषट्पञ्चाशन्महाभोगादिकं सर्वं भुंक्ते, स्वपिति जागर्ति-स्नाति क्रीडत्यपि कन्दुकादिभिरक्षैः सारिकादिभिर्वा - कुत्रचनैकाकी कुत्रचन प्रियतमासनाथः कुत्रचन सीताराम नाम्ना कुतश्चन राधाकृष्णस्वरूपेण—। किं बहुना-भक्तभावनाद्योतत्वेन-नृसिंह - वाराहमयीमपि तनुं दधानः पूरयति भक्तमनोरथान् । स्वीकुरुते तद्विहितां सर्वविधां सेवामर्चनामिति स्वरूपमर्चावतारस्येति ।

अर्चास्वरूपस्यापि भवन्ति चत्वारो भेदाः । (१) स्वयं समुद्भूतः (स्वयम्भूः) (२) देवैः संस्थापितः । (३) ऋषिभिः प्रादुर्भावितः (४) मनुष्यैः प्रतिष्ठापितश्चेति । उक्तञ्च—["स्वयं व्यक्तश्च दैवश्च सैद्धो मानुष एव च ।"]

शौनकवचनमस्ति :—"सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् ।
कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः ।।

["तामर्चयेत् तां प्रणमेत्, तां पूजयेत्, तां विचिन्तयेत् । विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ।]

विष्वक्सेनसंहितायामपि—["अर्चावतारविषये मयाप्युद्देशतस्तथा ।
उक्ता गुणा न शक्यन्ते वक्तुं वर्षशतैरपि ।।"]

इत्थम्—"अर्चावतारगुणा अनन्ताः सन्ति स्वयं प्रभुरपि शतवर्षेष्वपि न गणयितुं प्रभुर्भवति । अत अर्चावताराऽभ्यर्चनेन-शुभरुचेः प्रकटनम् । शुभाश्रय-प्रदानम् भवति गुणागुणत्वविवेकविहीनः सन् भक्तः शरणागतं परिरक्षेत् । भक्तांश्चापि भगवान् स्वयमपि स्वान् विषयेष्वासक्तान् समुद्धरति । श्रद्धालुर्भक्तः स्वकीयं सेव्यस्वरूपमेव साक्षात्समुपस्थितमिव भगवन्तमनुभवति संकटादौ च तदाश्रितः सन् सद्यो विमुक्तो भवति दृढाऽऽसक्तिमान् । यथा श्रीप्रह्लादः ।

वर्णयति च स्वयं प्रह्लादः-["रामनाम जपतां कुतोभयं विश्वतापशमनैकभेषजम् ।] स्वजनकं कथयतिः—[पश्य तात ! मम गात्रसन्निधौ पावकोऽपि सलिलायतेऽधुना ।।] एवमेव "अर्चावतारस्वरूपो भगवान् स्वयं सकलाऽऽपद्भ्यो निस्तारयति सेवकम् ।

इत्थम् चित्-अचित्-ईश्वर=ब्रह्मे ति स्वरूपं सम्यग् विज्ञाय तेषां पारस्परिकः शरीर-शरीरी, शेषशेषी, नियाम्य-नियामकः-भोग्यभोक्तृ-भावोऽप्यक्षुण्णोऽपृथक् सम्बन्धः (अपृथक्-धर्मशीलः] इत्यपि न विस्मरणीयः। प्रमाणञ्च – श्वेताश्वतरोपनिषदि :— ["भोक्ता भोग्यं प्रेरयितारञ्च मत्वा सर्वं प्रोक्तं, त्रिविधं ब्रह्मं वैतत्।"] इति

अयमेव विशिष्टाऽद्वैतसिद्धान्तः—[भोक्ता जीवः, भोग्या प्रकृतिः प्रेरयिता च साक्षादन्तर्यामी-स्वयमीश्वरः] इति त्रिविधं ब्रह्मं वेति। एतान्येव विशिष्टाद्वैते त्रीणि तत्त्वानि। इति (संसारे किमस्ति तत्त्वम्) इत्यस्योत्तरम्।

श्रीवैष्णवानां कृते सर्वदा सर्वात्मना जाप्यो मन्त्रः-स्मृत्युक्त एव-स्मृतिश्च श्रुत्यनुसारिणी भवति। तत्र मनुः—[सप्तकोटि महामन्त्राश्चित्तविभ्रमकारकाः।]

(मनुस्मृतिः—):— [एक एव परो मन्त्रो राम इत्यक्षरद्वयम्।]

[वाल्मीकिसंहितायाम् :—] "महापातक नाशोऽपि मानवानां क्षणेन च।

[जपमाहात्म्यम्— ] जपतां राममन्त्रन्तु भवतीह न संशयः॥

एवं श्रीरामनामस्वरूपं हि-"रामः" इति अक्षरद्वयात्मको मन्त्रो जगद्गुरुः जगति सर्वतः श्रेष्ठो गरीयांश्च। अथ "राम" इति मन्त्रप्रणवस्य (ॐ) कारस्यापि कारणम् (प्रणवोत्पादकम्) अतः संन्यासिभिरपि सर्वदा जाप्यमेव।

उक्तञ्च—"सुश्रुति-संहितायां] [कारणं प्रणवस्यापि रामनाम जगद्गुरु।

स्वयं भगता श्रीशिवेन— तस्माद् ध्येयं सदा चैतद् यतिभिः शुद्धचेतसा॥]

["रकाराज्जायते ब्रह्मा 'र काराज्जायते हरिः।]

['र' काराज्जायते शम्भू 'र' कारात्सर्वशक्तयः॥] इति पुलत्स्यसंहितायाम्:—

[बीजे यथास्थितो वृक्षः शाखापल्लव संयुतः। तथैव सर्ववेदाहि 'र' कारे सुव्यवस्थिताः॥

[अपरः श्रीराममन्त्रः तारक-मन्त्रः, षडक्षरात्मकः :—स हि महतो जगद्भयात् सर्वान् जनान् तारयति तस्मात् तारक इति संज्ञा। जन्ममरणादि भयात्तारयति।

श्रीरामतापनीयोपनिषदि :—["गर्भ-,जन्म-,जरा-,मरण-,संसार-महद् भयात् तारयति- इति तस्यादुच्यते षडक्षरं तारकमिति।)

"[य एतद् तारकं नित्यमधीते स पाप्मानं तरति]" इति श्रुतिः।

हारीतस्मृतावपि :—[श्रीरामाय नमो ह्येतद् तारकं ब्रह्म नामकम्।

नाम्नां विष्णोः सहस्राणां तुल्य एष महामनुः॥ इति

महामनुः=महान् सुगोप्यः। इति। अन्यत्रापि=शिवोक्तिः—प्रसिद्धा :— ["राम रामेति रामेति, रमे, रामे मनोरमे सहस्रनाम तत्तुल्य रामनाम वरानने॥"]

श्रीतारकमन्त्रः — यथा स्वस्वगुरुभिर्दत्तः — तथाविध एव जाप्यः। केचन उपदिशन्ति :—"श्रीरामाय नमः" इति। अन्ये महात्मानः—"रां रामाय नमः" इति। उभयविधोऽप्येक एव मन्त्रः समानफलकः समानरूपः तारकश्चेति। केवलं बीजाक्षरस्य भेदः स हि उपासनापरकः। ये हि केवलं बालभावमेव श्रीरामं समुपासते ते विरक्ताः; ते "रां" बीज सहितं जपन्ति। ये च लौकिकाः श्रीयुगलस्वरूपोपासकाः श्रियायुक्तं श्रीसीतासनाथं रघुनाथं समुपासते ते युगलस्वरूपश्रद्धावन्तः प्रायः "श्री" बीजाक्षरयुतं "श्रीरामायनमः।" इति जपन्ति। तत्र श्री हारीतमहर्षेरयमेवाऽभिप्रायः। केचन "वर्णव्यवस्थानुसारीक्रमोऽयमिति वदन्ति - द्विजेभ्यो द्विजेतरेभ्यश्च दातव्यमिति। परश्च भेदभावनोद्भावकत्वाद्विचिन्त्यः। इति। श्री तारकब्रह्मवाची षडक्षरात्मको मन्त्रः सर्वदा जाप्यः।

अत्र तारकमन्त्रातिरिक्तमप्यस्ति 'मन्त्ररत्नम्' पञ्चविंशत्यक्षरात्मकं 'पदषट्कसमन्वितम्' विभिन्न वाक्यद्वयोल्लसितम् छन्दोवद्धमिति।

(१) ॐ श्रीमद्रा[१]मचन्द्रचरणौ श[२]रणं प्रप[३]द्ये (२) 'श्री[४]मते राम[५]चन्द्राय नमः'

उक्तञ्च हारीतस्मृतौ :—'पञ्चविंशाक्षरोमन्त्रः पदैः षड्भिः समन्वितः।
वाक्यं द्वयं परं मन्त्रं ज्ञेयं रत्नमनुत्तमम्।।'

तदर्थश्लोकाः—'श्रीरामचन्द्रचरणौ मनसा स्मरामि, श्रीरामचन्द्रचरणौ वचसा गृणामि।
श्रीरामचन्द्रचरणौ हृदि चिन्तयामि श्रीरामचन्द्रचरणौ शरणं प्रपद्ये।।'
'श्रीरामचन्द्रचरणौ सततं भजामि श्रीरामचन्द्रचरणावनिशं नमामि।
श्रीरामचन्द्रचरणौ हृदि भावयामि श्रीरामचन्द्रचरणौ शरणीकरोमि।।२।।

द्वितीयश्च श्लोकमन्त्रः—'श्रीमते रामचन्द्राय नामः' परविभूतये।
श्रीमते रामचन्द्रायनमः कारणमूर्तये।।३।।
"श्रीमते रामचन्द्राय नमो भक्तसुरद्रवे श्रीमते रामचन्द्राय नम आनन्दसिन्धवे।।'४।

अतः परं स्तुतिरपिः—'रामद्वयः परोमन्त्रो मन्त्ररत्नं निगद्यते।
जपाद्भक्तिः प्रपत्तिश्च, प्रीतिर्भगवतीर्यते।।

अपरश्चरमोमन्त्रः—'स[१]कृदे[२]व प्रपन्ना[३]य त[४]वास्मि[५]ति[६] च[७] या[८]चते।
[९]अभयं सर्वभूते[१०]भ्यो ददा[११]म्येत[१२]द्व्रतं[१३] मम[१४]।।

प्रपत्तिबोधकोऽयं चरमो मन्त्रश्चतुर्दशपदात्मको द्वाविंशत्यक्षरात्मकपूर्वोत्तरार्द्धयुक्तो भगवता श्रीरामेण स्वमेव प्रपन्नाय भक्ताय यस्मै कस्मैचन प्राणिने वा सर्वदाऽभयत्वदानबोधकः सर्वदैवोपास्यः श्रीवैष्णवैः।

एतेन च भक्तवरस्य स्वात्मनि श्रद्धा-भक्तिर्विश्वासदार्ढ्यं च सम्पद्यते निर्भयत्वन्तु सुतरां सिद्धमेव भगवद्दत्ताम् । अन्ते भगवत्प्रपन्नो भगवत्प्रपन्न एव भगवद्धाम्नि मोदते । 'रां रामायनमः (श्रीरामाय नमः)' अयं तारकमन्त्रः चरमश्च 'सकृदेवप्रपन्नायेति मन्त्र उभावेव तारकौ, सद्यः साक्षाद्भगवत्प्राप्तिकरौ । 'रामद्वयमन्त्रश्चेति तृतीयः— यथा 'श्रीमद् रामचन्द्रचरणौ शरण प्रपद्ये, श्रीमते रामचन्द्राय नमः' इति रामद्वयमन्त्रः इत्थम् त्रय एव मन्त्राः । उभौतारकमन्त्रौ-रामद्वयमन्त्रश्चेति । सदैव निजगुरुमुखात्प्राप्य सर्वदा जप्तव्यः श्रीवैष्णवोत्तमैः ।

तृतीयः प्रश्नः—"कस्य ध्यानं कर्तव्यम्" इति—

'तैलधारासमं नित्यं निरवच्छिन्नभावतः ।
चित्तप्राणमनोबुद्धिः सुस्थिरः सयतेन्द्रियः ॥१॥
इन्दीवरदलश्यामं पीतकौशेयवाससम् ।
प्रसन्नचारुसर्वाङ्गं मन्दस्मिति - शुभाननम् ॥२॥
कोटिकन्दर्पलावण्यं कोटिचन्द्रसुशीतलम् ।
भास्वत्कोटिसमं भासा भास्वन्तं द्विभुजं विभुम् ॥३॥
धनुर्बाणधरं दिव्यं दिव्याऽऽभरणभूषितम् ।
विद्युल्लतावृताऽम्भोदसदृक्षं सीतयाऽञ्चितम् ॥४॥
रत्नप्रेङ्खित - सन्तप्तकार्तस्वरमहाघने—
स्वर्णाद्रिशिखरोत्तुङ्गदिव्यसिंहासने स्थितम् ॥५॥
स्वीयाऽऽननेन्दु - संसक्त - चकोरायितलोचनाम् ।
वामोत्सङ्गार्पितां वामां मादयन्तं विदेहजाम् ॥६॥
सीताऽऽननाब्जभृङ्गाभसतृष्णनयनाम्बुज ।
सीतयाऽऽश्लिष्टवामाङ्गाऽन्योन्यसम्पृक्तवाहुकम् ॥७॥
पार्श्वस्थरूपकलया सेवितं चारुशीलया—
पादसवाहनोल्लासैर्लालितं नित्यकेलिषु ॥८॥
चामरव्यजनव्रात बर्हिचन्द्रकगुच्छकैः ।
वीजितं; भरतश्रेष्ठ – भ्रातृशत्रुघ्नलक्ष्मणैः ॥९॥
मुनिमानसकासारे राजहंस - विहारिणम् ।
भक्तार्तिहारिणं देवं शरण्यं भक्तवत्सलम् ॥१०॥
अपार - करुणाऽऽगारमार्तत्राणपरायणम् ।
श्रीरामं सर्वदा ध्यायेद् ध्यानगम्यं जगद्गुरुम् ॥११॥
एव ध्यातः सदाभक्त्या श्रीरामः करुणाऽर्णवः ।
प्रयच्छति निजां भक्तिं भुक्तिमुक्तिप्रदां प्रभुः ॥१२॥

चतुर्थः प्रश्नः—"मुक्तेः श्रेष्ठतमं साधनम्—

अयमेव श्रेष्ठतमो मुक्तेः प्रकारः साधनं वा, यद् मुमुक्षुः सकलेन्द्रियनिग्रहपूर्वकं पञ्चसंस्कारैः संस्कृतः सन् भक्तो भगवच्छरणागतो नवधाभक्त्या सर्वदा सर्वभावेन-सर्वात्मना भगवतः समुपासनां विदध्यात् । शास्त्रोक्तविधिना सम्प्रदायप्रवृत्त्यनुरूपं सकलं व्रतोपवासादिकञ्च चरेत् ।

तत्र संस्काराः पूर्वोक्ता एव पञ्चविधाः (१) भुजयोर्मुद्रादिधारणम् । (२) ऊर्द्ध्वपुण्ड्रतिलकधारणम् । (३) भगवद्दास्यभावबोधकं नामसरक्षणम् । (४) मंत्र-दीक्षाग्रहणम् । (५) गले तुलसीमाला (कण्ठिका) धारणम् । इति । तथैव च व्रतोप-वासादयो यथा —प्रतिपक्षमेकादशीव्रतम्, वामनद्वादशीव्रतम् नृसिंहचतुर्दशीव्रतम्, हनुमज्जयन्ती कार्तिककृष्णा १४ (रूपचतुर्दशी) विशेपतश्च श्रीजन्माष्टमीव्रतम् श्रीरामनवमीव्रतम्, श्रीजानकीनवमीव्रतम् । इति सर्वं विशेषोत्सवसमारोहप्रदर्शनपुरः-सरं भगवतो हिन्दोलादि—स्यन्दोलिकाऽऽदिसहिंडोला, (पलना) प्रभृति समुत्सवसमा-राधनम् कर्तव्यमेव । येन अहरहोभगवच्चिन्तनेन भगवतदात्मतया स्वत एव भगवत्सा-युज्यमादधाति । इत्येव मुक्तिसाधनम् ।

पञ्चमो नाम सर्वश्रेष्ठतमो धर्मः—

धर्मेषु सर्वतः प्रथमः 'अहिंसापरमोधर्मः' 'सर्वशास्त्रेषु सम्मतः ।'

उक्तञ्च— 'नाऽहिंसा सदृशं दानं, नाऽहिंसा सदृशं तपः ।
नाऽहिंसा सदृशं तीर्थं, पुण्यभूषणशोभनम्' ॥

किञ्च— 'यथावक्रगता नद्यः सिन्धावेव विशन्ति हि ।
संश्रयन्ति तथा धर्मा 'हिंसाहीनेषु साधुषु ॥'

अतः सर्वश्रेष्ठो धर्मोऽहिंसेति । अहिंसा हि न केवलं शास्त्रादिना प्राणघातन-मेव, अपितु वाचा कर्मणा वा मनसि खेदः चिन्ता-क्लेशादिसमुत्पादनेन परेषां (स्वेतर-जनानां) चित्ते दुःखोत्पादनमपि हिंसा । स्वलेखिन्या, वाण्या, स्वकीयाऽऽदेशेन च व्यर्थ-मेव दण्डादिविधानन्, निरपराधेषु दोषारोपणम्, निरर्थकं द्वेषोद्भावनम्, मुधैव निन्दाप्रसारणम्, येन च कर्मणा मनसि समाघातो भवेत् तदेव कर्म हिंसा तत्परित्यागो हि अहिंसाधर्मः स एव सर्वश्रेष्ठो लोकक्षेमकरः सर्वमनस्तोषकरो-धर्मः प्रथमः ।

ततो यत् किमपि कर्म कुर्यात्, तत्सर्वं भगवते समर्पयेत् । भगवदर्थमेव विदध्यात् न केवलमात्मकृते । ततो भगवतः प्रसादरूपेणैव भगवत्समर्पितस्य वस्तुनः स्वात्मो-

पयोगं कुर्यात् । प्रतिदिनं यथाऽवसरं वा भगवतो विम्बस्य, स्वरूपस्य, (मूर्तेः) चित्रस्य येन केनापि रूपेण समुपासनां क्रियेत, तस्यैव यथालब्धोपचारैः षोडशोपचारैः राजोपचारैः वित्तशाठ्यविवर्जितः सन् भगवतोऽर्चनम् स्तवनम् वन्दनम् महोत्सवादिः-प्रकल्पनम् प्रवर्तनम्, भगवत्कथादिश्रवणम्, इति सर्वविधो भगवत्प्राप्तिकरः श्रेष्ठतमो-धर्मः ।

षष्ठः प्रश्नो वैष्णवानां प्रकारः—

सामान्येन वैष्णवास्त्रिपिधा भवन्ति—[मुमुक्षुः, बुभुक्षवः, प्रपन्नाश्चेति । ]

(क) तत्र मुमुक्षवो हि—अविद्योपहित-मायिककर्मनिरपेक्षाः सन्तः, कर्मफलाऽसङ्गिनो लौकिकसौख्यभोगवासनाविरहिता भगवद्ध्यानपराः केवलं भगवदनुग्रहैकमात्र-कामाः सकामा अपि निष्कामाः केवलं भगवत्कामा । अत्राप्यस्ति द्वैविध्यम्-एके शास्त्रोक्तविधिनाभगवदाराधनतत्पराः, सेवायां, समाराधनायां (उपासनायां) पुरश्चरणादौ मन्त्रसिद्धा बद्धभावाः । अपरे-केवलं भगवन्नाम-कीर्तन-स्मरण-वन्दनादिमात्रनिष्ठाः । इति

(ख) 'बुभुक्षवश्च'—सांसारिकभोगविलासादिवैभवोपलब्धिप्रेप्सवः सन्तोभगव-द्भक्तिरताः ।

(ग) 'प्रपन्नाश्च'—अशेषलौकिकविषयोपभोगविमुखाः अशरणशरण्यं भवानन्तमेव सर्वस्वं कल्याणकरं मन्वाना केवलं भगवन्निष्ठा भगवति सुदृढबद्धभावाः सन्तः स्वमाचार्यं (गुरुं) अपि भगवत्प्रतिबिम्वं तन्निर्दिष्टपथा भगवतः स्वगुरोश्च सेवनरताः सुस्थिराः सन्ति त एव प्रपन्नाः। तेऽपि दृप्ताः, आर्तश्चेति द्विविधाः। तत्र दृप्ता हि— स्व-स्वकर्माऽनुसारं समापतितदुःखसुखादिकं स्वशरीरेणैव, संसारे भुक्त्वा श्रद्धया विश्वासेन च मोक्षसिद्ध्यै प्रयतन्ते । एवमेव—'आर्तश्चः'—ये हि संसारात्मकंवड़वानलं स्वात्मनः कृते क्षणमात्रमपि सोढुं सर्वथाऽसह्यं मन्यन्ते, भगवतः साक्षात्कारार्थं भगवद्दर्शनार्थमत्यन्त-विरहादिवेदनामनुभवन्ति ।

एके विशुद्धा भक्ता भवन्ति ये च भुक्तिं मुक्तिं वा किमपि सौख्यादिकमपि न कामयन्ते केवलं भगवद्भजनमेव परमं धनं मन्वते वाञ्छन्ति च यथा वृत्रासुरः—

'ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः । [श्रीमद्भागवत
त्वन्माययाऽऽत्माऽऽत्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ ६।११।२७

'अहं हरे ! तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेतासुपतेर्गुणांस्ते गृणीतवाक्कर्म करोतु कायः ।' इति ।

सप्तमवैष्णवानां लक्षणम्:—

'वैष्णवानां लक्षणम् स्वरूपन्त्विदमेव यो सर्वदानिर्विकारः पारस्परिकद्वेषभावनाऽस्पृष्टमना, दीक्षावसरे विधृतपञ्चसंस्कारचिह्नैः सर्वदासमलङ्कृतदेहः भगवद्भगवदीयजनसेवनैकव्यसनः प्रतिक्षणं भगवत्स्मरणकीर्तनविधूताऽसुरभावः प्रसन्नचेताः यथालब्धं भगवत्प्रसादं मत्वानह्वन् यदृच्छालाभसन्तुष्टमनाः मनसा वाचा कर्मणा सर्वदैकरसः शुचिकर्मालोकाऽनुद्वेजकः सन्ततभगवदासक्तो निःस्पृहोऽनासक्तमनाः सर्वत्रभगवद्भावभावितः भगवन्तमेव सर्वेषु पश्यन् व्यहरन् स्थिरप्रज्ञः सर्वं भगवदर्थमेव समाचरति स एव—वैष्णवो वैष्णवाग्रगण्यो वन्यो मान्यश्चेति। एतादृश एव वैष्णवो लोकहितसाधकः 'तीर्थीकरोति तीर्थानि, सुकर्मा कुरुते कर्म, रचयति शास्त्राणि-सच्छास्त्री'।

किञ्चः— स्वदर्शनाऽऽलापसमागमैर्ये हरन्ति दुःखानि सुदुःखितानाम्।
शान्ति प्रयच्छन्त्यचिरेण, भक्तिं ह्युद्भावयन्तो भगवत्परास्ते॥

[वेषभूषा च तेषाम्]— कौपीनं कटिसूत्रञ्च वस्त्रयुग्मन्तु धारयेत्।
[भारतद्वाजसंहितायाम्]- 'धारयेदूर्ध्वपुण्ड्रांस्तु सच्छिद्रानेव देशिकः॥

अष्टमः प्रश्नः—वैष्णवानां निवासः—

निवासस्तु पवित्रतमस्थलेषु तीर्थेषु भगवद्धाम्नि वा यत्र सानन्दं भगवतः स्मरणं समाराधनं, दर्शन-सत्सङ्गादिसाधनसुलभं स्थलम् स्यात्—यथा:—हरिहरक्षेत्रम् (हरिद्वारम्) प्रयागः, काशी अयोध्या वृन्दावनम् चित्रकूटम् नैमिषारण्यम् प्रभासः द्वारिका, वदरिकाश्रमः, उज्जयिनी, जगन्नाथपुरी वेङ्कटाचलम्, काञ्ची, गंगासागरसङ्गमः पण्ढरपुरमित्यादि। पवित्रतमानि स्थलानि गङ्गा - यमुना - सरयूनर्मदा-कावेरी-गोमती - गोदावरी - अलकनन्दामन्दाकिनीप्रभृतीनां पुलिनेषु मधुवनकाम्यवनादौ वा।

नवमः कालक्षेपः—

शास्त्रोक्तनिर्दिष्टपथा श्रौतस्मार्तदिकर्माणि कुर्वन्नपि न नत्फललिप्सां भजन् भगवत्प्रीतय एव सम्पादयन् अहरहः शास्त्रपुराणप्रवचनश्रवणमनननिदिध्यासनसर्वविधचित्तशुद्धिसम्पादककर्मणि सन्ध्यावन्दनादीनि कलयन् लौकिकदेहगेहादिष्वनासक्तः सर्वदा शुचिः भगवद्दासानुदासत्वमेव स्वात्मनि भावयन् स्वगुरुदत्तमन्त्रादिकं जपन् भगवतः सेवां विदधदेव तिष्ठेदिति। कालक्षेपं कुर्यात्।

दशमः प्रश्नो मोक्षसाधनानि :--

तत्र मुक्ति (र्मोक्षो) नाम प्राप्य-प्राप्तिरेव । प्राप्यो हि सकलवेदवेदान्तप्रतिपाद्यः परंब्रह्म-पूर्णपुरुषोत्तमः श्रीसनाथः श्रीनाथः श्रीजानकीजानिः श्रीराम एव । स एव परमकारुणिको भगतवत्सलोऽशरणशरण्यो भक्तकल्पद्रुमः सर्वदेवमयः सर्वशक्तिमान् योगिध्येयः सत्यो नित्यानन्दविग्रहः श्रीराम एव प्राप्यः । तत्प्राप्तिसाधनं सर्वात्मना सर्वभावनया सर्वतोधिकस्नेहरूपाऽनन्यासक्तिव्यसनरूपाभक्तिरेव । 'भक्त्यालभ्यस्त्वनन्यया' भक्त्याऽहमेकया ग्राह्यः इति गीतावाक्यात् इति भक्तिग्राह्यमेव श्रीरामं हृदि धारयन् सर्वदा वर्तमानो मोक्षम्-लभते । इदमेव ज्ञानज्योतिः प्रकाशं तिमिरततिहर्ति कर्ममार्गप्रवृत्तिं--दिव्याद्दिव्यं परेशं जगदुदयलयप्रीणनोल्लासभाजम् ब्रह्माण्डाऽऽधारभूतं ह्यशरणंशरणं वत्सलं भक्तवश्यं सद्यः सन्दर्शयन्तु गुरुवरचरणं स्वाश्रयेन्मुक्तिहेतोः । तन्निर्दिष्टपथा यथा विधिचरन् श्रद्धां भरन् स्वात्मनि प्राणायाम-यमादिभिः सह मनोवृत्या निरुद्धेन्द्रियः एकीकृत्य सुषुम्नयेन्दुतरणी, रुन्धन्निडांपिङ्गलां ध्यानयोजितरामरूपनिरतोमुक्तः स्वतो बन्धनात् ।

इन्दु = चन्द्रः तरणिः सूर्यः=वाम-दक्षिण = स्वरो = इडां पिङ्गलां एकीकृत्य सुषुम्नया सह संयोज्य ध्यानेयुक्तः ।

——

# अथैकचत्वारिंशत्तमः परिच्छेदः

इत्थं श्रीरामानन्दाचार्याः सन्ततं जिज्ञासूनां श्रीसुरसुरानन्दादि-समस्तशिष्याणां निजसाधुसमाजमौलिमण्डनायितानां सतां महताञ्च सकलशास्त्रसंस्थित-वेदोपनिषत्स्मृति-सम्मत-सम्प्रदायसिद्धान्ततत्त्वसम्भृतभक्तिरसामृतसुरतरङ्गिणीतरङ्गरङ्गविलसितः भगवदीयजनाऽभीप्सिताऽऽराध्याऽऽराधकोपासनादिविवेकसमलङ्कृतप्रवचनाऽमृतसंवर्षणेन मनस्तोषं विधाय - भक्तवरविहितां पादार्चनां, सम्मानमानादिकभावनाविजृम्भितां सेवामङ्गीकृत्य तस्मान्नखीतटात् - समुत्थाय प्रस्थिताः समस्तसाधुमण्डलमण्डिताः सशिष्याः श्रीगुरुशिखरादीनिस्थानानि विलोकयन्तोऽर्वुदाचलात् "पुष्कररराजं तीर्थराजवरं द्रष्टुकामाः क्रमेण गिरिशिखराद् गिरिशिखरं, विविधाऽटवीतोऽटवीं समुल्लंघ्य नानागिरिणदीः समुत्तीर्य, मध्येमार्गं स्थाने स्थाने वैष्णववृन्दजनितां सेवासमाराधनां गृह्णन्तोऽनुगृह्णन्तः स्वप्रवचनसुधाऽऽसारैः सकलनिगमागमसारैः समन्ततोभक्तिरसनिर्झरिणीं प्रवाहयन्तः सन्ततमखण्डभगवन्नामसङ्कीर्तनोल्लासनं - भगवदीयजनोपयुक्तदिनचर्याविकासनं भक्तिमार्गप्रकाशनं ज्ञानविज्ञानविभासनं - प्रवचनविलासं विरचयन्तः सर्वत्र-सुकृतयुगमिव कलियुगकलेवरं कलयन्तः कलिमलकलुषितदुरितचरितादिदानवीयांभावनां दलयन्तो भगवच्चरणारविन्दभक्तिमतीं सुमतिं प्रबलयन्तः समन्ततः प्रसृतपापण्ड ताण्डवप्रसारितच्छलच्छिद्र-दुश्छद्मवादादींश्छलयन्तः सपदि भक्तजनमानसे विज्ञानज्ञान-ज्योतिः प्रदीपान् प्रज्वालयन्तः, सनातनधर्मानुसारिणीं परम्पराऽऽगतां धर्ममर्य्यादां परिपालयन्तो ब्रह्मणस्तपस्थलीं, विश्वसर्जनक्रियाकलापोल्लासिनीं, सृष्टिकलाविकासिनीं, सकलनिगमागमोद्भासिनीं साक्षाद् ब्रह्मणो यज्ञस्थलीं - सावित्र्याः शृङ्गारसज्जाकलन-विलम्बोद्भावित समयोल्लङ्घनादिभय - विधायकनारदविहित-दम्पती-प्रणयविच्छेदक-मानोन्मादकचरितजनिताऽऽपातविरचितकुशमयगायत्रीसमुद्भूतिवैभव - विधायकयज्ञारम्भवेलास्मृतिविधायिनीं वर्तमानां त्रिपुष्करनाम्नीं त्रिकुण्डमयीं ( पुष्कर-ज्येष्ठ-पुष्कर·वृद्धपुष्करेति- ) तीर्थप्रधानां पुण्यतमवारिपूर्णां परमपाविनीं पुष्करक्षेत्रस्थलीमवापुः ।

तत्र सकलतीर्थराज - मौलिमण्डनभूते त्रिपुष्करक्षेत्रे प्रविश्य सशिष्यपरिकराः श्रीस्वामिरामानन्दाचार्याः तदानीन्तने श्रीपुष्करे, साम्प्रतिके ज्येष्ठपुष्करे स्नानध्यान-तर्पणादिकं विधायैकत्र पूर्वनिर्धारिते भगवदीयजनपरिकल्पिते सभामण्डपे संस्थिता सर्वेषां प्रवचनसुधापानलोलुपानां भक्तवृन्दाऽलिकदम्बानां सुचिरसमीहितज्ञानपिपासा-ऽनिवृत्तये बहुसंख्यायां समुपस्थितानां भगवज्जनानां परितोषाय सरसमधुरवचनविन्यासैः प्रवचनसुधावर्षणमकार्षुः।

तत्र सर्वप्रथमं पुष्करतीर्थराजमाहात्म्यं वर्णयामासुः। यत्र च भगवान् प्रजापतिः सर्वलोकपितामहोऽपि सुयज्ञमहोत्सवं वितेने। यस्मिंश्च सुस्थले यज्ञमाकलयामास तदेवैतत् सम्प्रति ज्येष्ठपुष्कराभिधं ब्रह्मणो यज्ञकुण्डम्। अस्यैव महायज्ञस्य सर्वदास्मारिका भगवत्याः श्रीगायत्र्याः देव्याः समुद्भूतिः, भगवतो ब्रह्मणश्च सह धर्मपत्न्याः श्रीसावित्र्याः प्रकोपावेशप्रभूतिः ब्रह्मसुतस्य देवर्षेः श्रीनारदस्य निजगुणसाफल्यानुभूतिः, तत्र स्नोनध्यानतर्पण-जपतपौ होमदानादीनामनन्तगुणफलप्रसूतिः, सकललोकशोकविमोचिनी ह्यद्यापि जरीजृम्भते श्रीब्रह्मणो मन्दिरस्य दक्षिणःपश्चिमदिग्भागे समुन्नताऽर्बुदावलि-गिरिशृङ्गे ब्रह्मणो रुष्टायाः श्रीसावित्र्याः ( मूर्तेः ) प्रतिष्ठिता प्रतिमा। अस्त्यस्याः मनोरमैका गाथा :—

यदा हि प्रजापतिना सकललोकशोकापनोदनाय परमेष्ठिना समनुष्ठिते यज्ञमहोत्सवे,-समुपस्थिते च समस्तब्रह्मर्षिदेवर्षिराजर्षिमण्डले, समाहूते च परिपूते महर्षिपटले, समुपस्थिते देवेन्द्रादि निखिलसुरवरनिकरे, चतुर्भागावशिष्टायाञ्च समारम्भवेलायां अनुपस्थितायाञ्च यजमान्यां, भगवान् प्रजापतिः स्वसुतं नारदमेव सत्वरं समानेतुं-श्रीसावित्रीं यजमानीं प्रेषयामास। तदर्थं ततः प्रस्थितस्य श्रीनारदस्य मनसि समजनि कुतूहलकौतुककलनाकौटिल्यम्। व्यचिन्तयच्च सः यत्र भगवतो ब्रह्मणः ( स्वपितुः ) सावित्र्यां दृढानुरागः, सावित्र्याश्च पितरि सर्वोत्कृष्टारतिः, तया सहैव यज्ञे यजमानः सपत्नीको मे जनको भविष्यति अतः तयोः परस्परं यथास्नेहविच्छेदो भवेत्तथा मया यतनीयमिति निश्चित्य पितुराज्ञया तां सावित्रीं सत्वरं पितृचरणाः समाह्वयन्तीति मुहूर्तवेला ह्यतिक्रामतीति क्षिप्रं गमनोद्यता भवेति। सद्यः शृङ्गारसज्जां विधायैव चलितव्यं भवत्या, नैवेत्थमसज्जितयेति च सन्दिश्य ब्रह्मणः सविधे गत्वाऽब्रवीत्साऽधुना शृङ्गारप्रसाधनानि कलयतीति। यज्ञारम्भमुहूर्त - वेलातिक्रमणभिया द्वित्रिवारं प्रेषितोऽपि सन्देशहरो नारदः नाधुनाऽपि प्रसाधनानि सम्पन्नान्यभूवन्निति व्यर्थमेव याप्यते कालो भवतेति निवेद्य विमनस्क इव संवृत्तः। ततो ब्रह्मा मुहूर्तवेलाऽतिक्रमणमालक्ष्य कुशमयीं सावित्रीप्रतिमां [ गायत्री त्वमसी– ] सावित्रीति

प्राणप्रतिष्ठापुरःसरं तां स्ववामार्द्धाङ्गिनीं निर्णीय=यजमान्याः स्थाने स्वीयपार्श्वे प्रतिष्ठाप्य यज्ञारम्भमाततान ।

प्रवर्तिते च यज्ञे=वृतेषु च क्रमेण होतृ - ह्युद्गातृ - तथाऽध्वर्यु=ऋत्विक् पटलेषु, प्रवर्तमाने च ऋग्यजुःसामगाने वृते च सकलयज्ञ - कर्मनिरीक्षणसाक्षिभूते सकल वेदविदि ब्रह्मणि, समर्चिते चाचार्यवर्ये नियोजितेषु च प्रतिवेदं [ऋग्वेदपाठके होतरि, यजुः पठनरतेऽध्वर्यौ, सामगानतत्परे च समुद्गातरि=स्वतन्त्राथर्ववेदपाठकातिरिक्त-समस्तवेदत्रयीविज्ञे ब्रह्मणि सकलसाक्षिणि स्व-स्वकर्मणिसन्नद्धे सति सर्वेषां सहयोग-सौकर्य्यार्थं प्रतिवेदप्रधानपुरुषाऽऽश्रीतान् त्रि-त्रिसंख्याकान् ऋत्विजः परिकल्प्य संहृत्य षोडशसंख्यकान् सर्वान् ऋत्विजो विधाय - समर्चिते च यजमानपीठे सपत्नीके गायत्री-समलङ्कृतपार्श्वभागे परमेष्ठिनि यज्ञारम्भः समभवत्-तदा शृङ्गारसज्जां परिसमाप्य समागता श्रीसावित्री स्वस्थाने विराजमानां गायत्रीं विलोक्य ब्रह्माणञ्च तया विनैवान्यां यजमानीं प्रकल्प्य कार्यसलग्नं निरीक्ष्य कोपोद्रेकविवशा सा सद्यस्ततो वहिः [ यज्ञ-शालातः ] परावृत्त्य कोपकलुषितान्तःकरणाः तां यज्ञभूमिं परित्यज्य सुदूरं गिरिशिखरे निवासं व्यधात् । इति तद्गाथास्मारकमद्यापि वर्वति सावित्र्याः मन्दिरं पुष्करक्षेत्रे गिरिखण्डशिखरे ।

सैषा यज्ञस्थली साक्षाद्ब्रह्मणा विरचिता राजते भूतले सकलप्राणिमात्रस्य पापापहारिणी पुष्करक्षेत्रनाम्नी परमपाविनीति भूरि भूरि भाग्योपचयलभ्या भव्या धरणिमण्डना सौभाग्यभूमिः, राजस्थान-भागे ।

त्रिरात्रमत्र निवासे विहिते मानवानां भवति सप्तजन्मावधिकृताघनिष्कृतिः । सिद्ध्यति च सद्यो गायत्रीपुरश्चरणविधिर्विधिना समाकलितश्चेत् ।

इत्थम् त्रिरात्रं निवासं विधाय श्रीपुष्करक्षेत्रमाहात्म्यं तदानींतनीं गाथां संश्राव्य सश्रद्धं भक्त्या तीर्थेश्वरं प्रणम्य-"आम्बेर" राजधानीं प्रति प्रस्थापयामासुः सकलसाधु-मण्डलमण्डिताः श्रीरामानन्दाचार्याः । यतो हि :—

प्रायः सर्वैरेव तात्कालिकनरेशैः शतशोमानवैः सहस्रधावर्णितं श्रीरामानन्दा-चार्यमाहात्म्यं समाकर्ण्य-धर्म-कर्म-ज्ञान-भक्तिमार्गोपदेशशुश्रूषुभिः—साक्षात् परम्परया-च निवेदिताः स्वराजधानीं तदीयचरणपङ्कजरेणुभिः पावयितुं प्रार्थिताः सर्वतः प्रथमं निजमार्गान्तराले समापतितामामेरराजधानीमेव स्वपदसंरक्षणेन सकलाऽभीप्सितां विधातुं "आमेर" राजधानीमेव समलञ्चक्रुः । तात्कालिकतत्रत्यनरेशावतंसेन सबहुमानसम्मुखमागत्य महता समारोहेण-निज राजकीयचिह्नैः सम्मानिताः छत्र-

चामर व्यजनादिभिर्मण्डिताः पण्डितमण्डलीसमलङ्कृताः सादरं सोल्लासं सश्रद्धं जय-जयध्वनिध्वानितेन राजमार्गेण प्रवेशिताः निजराजकीयातिथिभवनेऽतिथिरूपेण संस्थाप्य सुसेविताः समर्चिताः ।

आसीच्च तदानीं सतां महतां महात्मनां कृते सुविधिविधानबहुला सर्वसुलभ-साधनौघसम्पन्ना महती सुविशालाऽतिथिशाला - नगरप्रान्ते सुरम्योद्याने भ्राजन्ते स्म-यत्र विविध - फलपुष्पसमृद्धिसिद्धाः सुवृद्धाः सघनच्छायाबहुलविटपावलीपरिराजित-विटपिततयः । तदीयशाखोपशाखाविहारिणः सकलमनोहारिणः कलकलितकूजनव्याजेन समागताऽपूर्वगुणगणतपोदीपिततेजसां महात्मनां यशोगानमिवाकलयन्तो राजन्तेस्म पतत्रिणो दीर्घसत्रिणः । अहर्निशश्च गिरिनिर्झर-विस्फुरच्छीकरपटल-सुशीतलोसुखद-समीरणः सुखयति स्म समभ्यागतानातिथीन् । मन्दमन्दाऽनिलाऽऽन्दोलिततलवकीसमूहो-द्भूतसुमनोगुच्छविच्छुरितपीतपरागपरिरञ्जित - पटवासकानुकारि मृदुलवालुकाऽऽस्तृत सुपथसंशोभित-विवधपद्धति - विभूषितः सुविशालः प्रासादो महाशालः । तत्रैवैकतः सुभगशीतलसलिल-सम्भृतोऽगाधवारिधिरिव समुच्छलित - तरलतरङ्गरङ्गलीलाललितो, विविधविकसितारविन्दमकरन्दगन्धप्रलुब्धपुष्पन्धयसमेधितमञ्जुगुञ्जनसमारब्धसङ्गीतरङ्गः अनङ्गरङ्गसङ्गियुवकयुवतिसमाचरितजलकेलिकमनीयोऽपि नमनीयोत्तमाऽद्भुत-चरिता-ऽसङ्गिमहामहिमामाहात्म्यपटलीपरिपावितपुण्यतीर्थीकृतावतरणो, दर्शकजनमनोहरणो विलसति स्म सर्वर्तुमनोहरः समाकर्षितत्रिदशविलासिनीनिकरः सरोवरः ।

तत्र स्थिताः श्रीरामानन्दाचार्याः, आम्बेरनरेन्द्रातिथिभूताः, यथासमयं समा-सादितसन्ध्यावन्दनादिनित्यक्रियाकलापाः, समालापोल्लसितभक्तवरपटलीमानसोत्तंसाः, परमहंसाः, श्रीमदाम्बेरेश्वरप्रशंसाऽऽशंसिनः, समायातशुश्रूषुजनमनोमोदाय, प्रमोदाय च कच्छवाहकुलेश्वरस्य सपत्नीकस्य, समुपस्थितनागरिकभक्तवृन्दस्य, सपदि प्रावाहयन् प्रवचनसुधासरिद्वराम् ।

"श्रीराम जयराम जयजयराम" इति भगवन्नामध्वनिपुरःसरं - समुपस्थित-सभासभाजितसाधु - सिद्धजनसुधीजनादिकं सम्बोध्य, समारभन्त—अयि भव्याः सभ्याः ! स्वाभाविकोऽयं नियमः —"यथा राजा तथा प्रजाः ।" इत्याभाणकं लक्ष्यी-कृत्यानुभवामि, यत्—"यद् यदाचरति श्रेष्ठः, तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनु वर्तते ।" इति गीतोक्तदिशा, यत्रयादृशो धर्मात्मा सदाचारप्रचारो नरपति-र्यथा भवति तथैव तदनुसारिणी तदीया प्रजाऽपि तथैवाचरति-सद्धर्ममधर्मं वेति ।

श्रीमन्त आम्बेराधिपतयो महाराजा हि सूर्यवंशावतंसाः श्रीरघुनाथनाथाः श्रीराघवेन्द्रान्वयविभूतयः सन्तीति किमत्र तादृग्गुणगणाकरत्वम्, स्वाभाविका हि

जन्मसिद्धाः गुणास्तु परम्परागताः स्वत एव समुपासतेऽत्रकुलसमुद्भूतमहामहिमपुरुषानिति नाधिकमाश्चर्य्यम्। परन्त्वत्र नैतावतैव सन्तोषो विधेयः। न केवलं राज्यभारसंवहनमेव राज्ञां धर्मो न वा केवलं स्वप्रजामनोऽनुरञ्जनमेव, अपितु-सार्वजनीनं स्वस्वधर्मपरिपालनपद्धतिसंरक्षणमपि प्रतिक्षणं निरीक्षणीयं भवति। यद्यप्यत्रत्या जनतास्तु-स्वस्वामिनमेवाऽनुकुर्वते स्वधर्मपरिपालने, किन्तु-समस्तेऽस्मिन् सर्वात्मना यवनहतकैः स्वायत्तीकृते परित्राणपराङ्मुखे परकीयशासक-शासनानुसरणशरणे, शिथिल-सकलधर्मदार्ढ्यबन्धने, परानुकरणकौशलप्रदर्शनमात्रसमासादनैकलक्ष्ये विषयवासनापिशाचीपरिकल्पितसुकृतिसदाचरणहरणादिव्यापारविषविदूषितसमाश्रितदुश्चरितपूतिपरिभूतकुचक्र-चर्विताऽऽचरणभक्ष्ये, साम्प्रतिके भारते परिवर्तितपरम्परायातमहामहाकर्मठ-मठाधीशमनोभावे, निजनिज धर्मसम्प्रदायाचार्यपरम्परापरिपालनाऽलसे च विद्वत्कुले, कामिनीकुचकलशकलधौतमुद्राऽवाप्ति - समुपयोगदग्धविवेकविकलवैदुष्यवैदग्ध्ये, द्विजन्मजनसमुदाये, कामिनीकेलिकलालोलुपे, दुश्चरितदुरालापदुर्वृत्तदानवायितप्रवृत्तिके च शासककुले, परनारीरतानुरक्ति-परद्रव्यापहरणविहरणरसिके च संवृत्ते धनिकजननिचये, कामक्रोधलोभमोहमदाविष्टे च विशिष्टेऽपि शिष्टे राजन्यपटले, सर्वदैव स्वार्थऽऽर्थसाधनसमाराधननिपुणेऽखिलमनुजनिवहे, अहरहो निजोदरदरीपरिपूरणैकलक्ष्याऽविचारितभक्ष्याऽभक्ष्ये, सर्वदाऽऽमोदप्रमोदोन्मादपरिपीतमधुरमोहमाध्वीकविस्मृतनिखिलहिताऽहितविवेके, सन्धारिताऽहन्ताममतानिगडिताविच्छिन्नव्यवहृतिक्रियाकलापाऽऽलापविस्तारितक्लेशविशेषे, प्रसारितपारस्परिकद्वेषदोषे, दूषिताऽन्तःकरण - कौटिल्याकलित-विलुलितललित-ज्ञातेयबन्धुबान्धवाऽन्धव्यवहारे प्रवर्तमाने चाऽहङ्कारमहामदौद्धत्ये, स्वपरभेदभावनाविजृम्भितमहोत्कर्षप्रकर्षाऽसहिष्णुतानिशाचरीकवलितसद्भावनोत्पादितमिथः स्नेहोत्कर्षे, क्षुद्रभावनाऽभिभूतरागद्वेषोद्भावितनिरर्थक - महासाम्परायिकज्वलनज्वालाऽऽहुतीकृतसकलवैभवपौरुषे, कालचक्रे निपतिताऽशेषभारतीयज्ञानप्रधानेऽपि, मानवकुले, सञ्जाते, परमावश्यकता प्रतीयते कस्यचनैतादृशस्य महामानवस्य, यो हि सर्वात्मना निजस्वार्थं सर्वथा दूरीकृत्य केवललोककल्याणाय निजजननीजन्मभूम्योः निष्कामभावनया सेवनार्थं मोहमहागर्ते निपतितानां जिज्ञासूनां निजसमुद्धारोपायप्रकारम्, चिचीपताञ्च विच्छुरितपारस्परिकस्नेहसद्भावम्, विविदिषताञ्च सन्ततस्नेहसद्भावोल्लासितशान्तसुखद - दैवीजनोचितव्यवहृतिविभूतिभूषित - सहवाससुरभिसुलभामोदमुदितनिवाससौलभ्योपायम् समुद्धारकः, सन्मार्गदर्शकः सहृदयः सुहृत्कल्पः कोऽप्यपूर्वोऽलौकिकदैवीगुणगणमण्डितः पण्डितः पाषण्डताण्डवविखण्डने सुशीलः सदाचारसमुदाचार-प्रचारनिष्णातो लोकप्रियोऽप्युदारचेताः सुनेता सम्भवेत्।

यतो हि साम्प्रतिकी भारतीया जनता, पथभ्रष्टा, विस्मृतनिजस्वरूपा, निजपरम्परागतसंस्कृति-सदाचार-विभवगौरवपराङ्मुखी, सत्त्वविहीना दीना, सर्वदोत्तरोत्तरक्षीणा, प्रक्षीणा च शस्त्रोत्तोलनविलसने, सर्वात्मना वैदेशिक - वैधर्मिक-विलासभावनाप्रवीणा, सदादर्शहीना, संवृत्तेति महद्दुःखाकरमेतत्। किं वहुना प्रतिवोधिताऽपि नेयं स्वात्मजनीनं ह्यनवधानतया प्रहापितं नैजं लक्ष्यं पुनः प्राप्तुमपि प्रमत्तेव प्रयतते, पङ्गुरिव न पदमपि चलितुं प्रभुः। न कुरुते मतिं पौरुषे। न रतिं विदधाति सत्पथे। नाऽनुकरोति महात्मनां चारिताचरणम्। न मनुते शास्त्रप्रवचनाऽनुसरणम्। नाङ्गीकुरुते सन्मार्गप्रवर्तनम् नहि परिहरति दुर्जनदुःसङ्गम्। न विमुञ्चति वैदेशिकविलासिनी-विहरणम्।

अतएव पदे पदे मानापमानभाजनतां याति। दुःस्थितिं गता प्रतिपलं मनसि खेदं वहति। दुर्दशाग्रस्ता नानाविधानि देशकालजन्यानि दुःखान्यनुभवति-पारस्परिकवैमनस्यविषदग्धप्राणाः-परस्परं निरर्थकमेव युध्यते, असहयोगाग्नि-ज्वालामालावलीढहृदया निष्प्राणेव न समाचारति सङ्कटकाले परम्परसहयोगं-मिथः संरक्षणञ्चेति, निःसहायामेनां विलोक्य विवशां कामिनीमिव कलुषितान्तःकरणाः लुण्टाका वैदेशिकदस्यवः सपदि समाक्रम्य यथेच्छं समुपभुञ्जन्तः समाक्रान्तां परवशां दारायितां विधाय स्वामिन इव शासनं कलयन्ति। इदमेव कारणं यदधुना यवनैराक्रान्ता दुष्टदुःशासनापहृत - सकललज्जाभरणा विवसना द्रौपदीव विषीदन्ती विक्रोशति स्वरक्षितारं जगन्नियन्तारं विश्वभर्तारं. यद् भक्तवत्सलः सः कमपि स्वप्रतिनिधिभूतं =क्षतात् त्रायमाणं क्षत्रियकुलावतंसं सन्त्रस्तजनतासंरक्षणाय प्रादुर्भावयेज्जननेतारं, जेतारञ्चविघातकसपत्नकुलस्य, त्रातारञ्चदुष्टदुर्जन - दुःशासन-यवनकुलकदनात्। अत एवायं सम्प्रति मामकीनः समुपदेशः सामयिकः परमावश्यकः परिपालनीयश्च—"उत्थातव्यं, जागृतव्यम्,—योक्तव्यम् भूतिकर्मसु।", किञ्च= "शत्रुमुन्मूलयेत्प्राज्ञः संहत्यैव परस्परम्।" "संरक्षणञ्च धर्मस्य, कुर्यात् प्राणैर्धनैरपि।" (१) संरक्षणञ्च नारीणां सतीत्वस्य विशेषतः।" "वर्णसङ्करता येन नोद्भवेद्धर्मनाशनम्।" (२) संस्कृतिं भारतीयाञ्च विश्ववर्मविवर्द्धिनीम्" संरक्षयेन्न-दूष्या स्यात् "ऐहिकाऽऽमुष्मिकाऽर्थदा"(३) "स्कन्धं स्कन्धेन संयोज्य-हृदयं हृदयेनच," स्नेहसौहार्दभावेन निश्छलव्यवहारतः॥ (४) एकीभवन्तु धर्मस्य, कुलस्त्रीणां विशेषतः शीलस्य, निजमानस्य, मर्यादायाश्च संस्कृतेः॥ (५) रक्षणार्थं स्वशास्त्राणाम् धर्मग्रन्थनिधेः स्वयम्। सन्नद्धा वद्धसम्वन्धाः स्कन्धावारविहारिणः। (६) भवन्तु विजयोत्कर्षप्रहर्षोल्लासभाजिनः। दुर्जनग्राह - संग्रस्तां त्रस्तां त्रासनकर्मभिः॥

(७) मातृभूमिं स्वजननीं त्रायतां महतोभयात्। पालनं निजधर्मस्य कर्त्तव्यं सर्व-यत्नतः ॥ (८) यतो हि-धर्म एव हतोहन्ति धर्मो रक्षति रक्षितः। धारणाद्धर्ममित्याहुः धर्मो धारयते जगत्। किञ्च—[ पशुभ्यो मानवा भिन्ना धर्मधारणतो हि ते। अन्यथा पशुसाम्यन्तु वर्तते सर्वकर्मसु। ] (९) उक्तञ्च—आहारनिद्राभयमैथुनञ्च सामान्य-मेतत्पशुभिर्नराणाम्। धर्मो हितेषामधिको विशेषोःधर्मेणहीनाः पशुभिः समानाः॥ इति। तथा च—"धर्म एव वलं धत्ते स ह ओजो ददाति च। मानं प्रतिष्ठा सत् ख्यातिं, स्वात्मशान्तिं प्रयच्छति।" (१०) धर्मः संरक्षितो नृणां वर्द्धितोगौरवर्द्धिमान् सर्वदा रक्षति स्वीयमाधारं धर्मधारकम्। (११) वीर्यं, गाम्भीर्य्य-धैर्य्यं च, सोत्साहां नुविवेकिताम्। अहिंसां सत्यमस्तेयं तपः शौचं दयां क्षमाम्॥ (१२) ब्रह्मचर्य्या-दिसाद्गुण्यं प्रादुर्भावयति क्षणात्। सश्रद्धं धारितोधर्मः सर्वदा सर्वकामधुक्॥(१३) इति। शास्त्रेषूक्तम्:—"धर्मो हि विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति।

धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितम्।" तस्माद्

धर्मं परमं वदन्ति।" इति। "धर्मेणैव जगत् सुरक्षितमिदं धर्मो धराधारकः। धर्मा-द्वस्तु न किञ्चिदस्तिभुवने धर्माय तस्मै नमः॥ इति। नमनमेव धर्माय।

एवमेव वैशेषिकदर्शनेऽप्युक्तम्— "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।" किञ्च—"उन्नतिं निखिला जीवाः धर्मेणैव क्रमादिह। विदधानाः सावधाना लभन्तेऽन्ते परंपदम्।" 'धर्मादर्थः प्रभवति, सुखंधर्मात्प्रजायते। धर्मेण लभते सर्वं धर्मसारमिदं जगत्।" (महाभारतम्)। (गीतायामपि) "मातृवत्परदारेषु परद्रव्येषु लोष्ठवत्। आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः॥ धर्मनाम्नीह भगवतोऽमोघाशक्तिः, याहि चराचरं जगद्धारयति। आकाशे हि-स्व-स्वमर्यादायां स्थितौ = सूर्याचन्द्रमसौ, सकला ग्रहनक्षत्रादयोपि यथाक्रमं परिचङ्क्रमन्ति सुस्थिरं ध्रुवम् स्वधर्मंध्रुवम्। धर्ममर्यादयैव सुस्थिरा धरित्री, मर्यादिताश्च धर्मेणैव वारांनिधयो न परित्यजन्ति स्वां वेलां धर्मनिवद्धाः, नात्याक्रामन्ति-स्वधर्ममर्यादाम्। किं बहुना पञ्चमहाभूतान्यपि स्व-स्व-धर्मंनिवद्धानि विदधति भगवदाज्ञाऽनुपालनं, पालनञ्च जगति प्राणिनाम्। धर्म एव प्राणिनामैहिकाऽऽमुष्मिक - लोक - प्राप्तिकरः। स एव हि सन्मार्गदर्शको दुःखाऽपहारकः समुद्धारकश्च संसारसागरतः, कारकश्चाशेषसम्पदाम्। धर्म एव प्राणिनो दुःखाऽब्धेः समुद्धृत्यानन्तसौख्यकल्पद्रुमच्छायां वितरति। प्रकाशयते च विज्ञानज्ञान - ज्योतिरज्ञानान्धघनावृतान्तः स्वान्ते। आसीच्च कदाचनैतादृशोऽपि समयो यदा--"न वै राज्यं न राजाऽऽसीन्न दण्डो न च दाण्डिकः। धर्मेणैव प्रजाः सर्वाः रक्षन्ति स्मं परस्परम्।" आसीदेषाऽपि कदाचन भारते तादृशी व्यवस्था। अर्थात्

धर्म एव सत्पथप्रदर्शकः सत्यः सहचरः। स एव दुःखार्णवान् पारयति, तारयति च स्वसम्बद्धान्-किन्तु साम्प्रतिकेऽस्मिन् भारतवर्षे-राजत्सु च तथाविधेष्वपि राजकुलेषु नालोक्यते क्वचन भारते सुखदं श्रेयः साम्राज्यम्। नाऽनुभूयते कुत्रचिच्छान्तिः। न श्रूयते क्वचिन्मङ्गलमयालापः। न दृश्यते कुत्रापि सरससुभगो मानसोल्लासः। नेक्ष्यते केषुचन हर्षप्रकर्षः। दृश्येताऽपि कथम्? सकलसुलभ सौख्यसाधनभूतो भगवद्भक्तिपरिपूतः सुभगसदाचाराचरण सम्भूतः समस्त शर्म-भर्मसम्भृतसत्कर्मजनित सुधर्म एव सुकृतिमूलं निर्मूल इवाऽऽभाति तर्हि कुतः सौख्यशान्त्योः स्थितिः।

यद्यप्यत्र केचनाऽज्ञानिनो भ्रातरो भ्रान्ताः, भ्रान्तान्वपरम्पराऽनुयायिनो भूताऽऽवेशनिविष्टा इव प्रजल्पन्ति यत् साम्प्रतिके संसारे धर्म एव सकलक्लेशकारणम् पारस्परिकवैर-भेदभावनोद्भावको नाधुनिकसमयोपयुक्त अतः सर्वात्मना परित्याज्यः। यावदयं निर्मूलो न भविष्यति न तावदुद्धारः। न वा स्नेह - सद्भावप्रचारः, न वा परस्परैक्य - भावनाव्यवहारः प्रचलिष्यतीति। परञ्च नैते मुग्धाः नानाविधदूषित-भावनाभावितान्तःकरणाः शास्त्रज्ञानपराङ्मुखप्रवृत्तयः सर्वथाऽविवेकविजृम्भित-वाग्व्यापारा एव तथाकथनरता भवन्ति, न जानन्ति धर्मतत्त्वम्। न वा विचिन्तयन्ति च स्वाऽभिलषितवस्तुतत्त्वकरणानि नान्विष्यन्ति पारस्परिकस्नेहसद्भावोद्भावितै-क्यभावना प्रसारणेबाधकबीजानि। यदि क्षणं स्वमनोभावनां स्थिरीकृत्य निष्पक्ष-विवेचिनीं प्रतिभां पुरस्कृत्य विचिन्तयेयुस्ते तदा ज्ञास्यन्ति तथाविधे कर्मणि बाधक-तत्त्वानि कानि सन्तीति।

भावनाभावितान्तःकरणाः जानन्तु यत् नहि धर्मः कस्यचन बाधको भवति। भवदनुरूपभावनाबाधकास्तु सन्त्येव परस्परिकद्वेषभावना, मिथ्याऽहङ्कारः शास्त्रानभिज्ञता, परोत्कर्षाऽसहिष्णुता सर्वदा स्वार्थैकसाधनसमाराधनपद्धतिः, कामलिप्साद्याश्चेति। एभिरेव कारणैः सर्वदा परस्परं युद्धं समाक्रमणम्-व्यर्थमेव भूमौ रक्तप्रवाहाश्च संवृत्ताः। साक्षीभूतश्चास्येतिहासः।

व्यर्थमेव कलुषीक्रियते धर्मनामेति। सभ्याः महानुभावाः, सर्वतः प्रथमं धर्मस्य स्वरूपं तल्लक्षणञ्च विचिन्तयन्तु। तदनन्तरं धर्मं लाञ्छितीकुरुत।

तल्लक्षणमिदम्— "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षण",-मिति॥

तथाहि, १ धैर्यम्, २ क्षमा, ३ दमः ( मनसश्चाञ्चल्यावरोधनम् ) ४ पवित्रता, ५ चक्षुरादिसकलेन्द्रियाणां निग्रहः ( निरोधः ) ६ धीः ( बुद्धिपुरःसरंकार्यकरणम् )

७ विद्या (ज्ञानप्राप्तिः) ८ सत्यभाषणम्, ९ क्रोधावरोधः १० अस्तेयम्-चौर्यादि कर्मराहित्यम्। इति दशविधं धर्मस्य लक्षणम्। एतेषु नास्ति कश्चन गुणः, यो हि समुन्नतेः मानवजातेः शान्तेर्वा बाधकः सिध्येत्। प्रत्युत निर्दिष्टदशविध - लक्षणानुसरणशीलाय मानवाय समस्तामेदिनी स्वदेशो भवितुमर्हति-सर्वदेशस्था-जना एव भ्रातरश्चेति- ("भ्रातरो मनुजाः सर्वे स्वदेशो भुवनत्रयम्")।

केषाञ्च मानवानामस्ति मान्यता यदेकत्र नानाविधानां धर्माणाम् स्थितिरेव पारस्परिक - द्वेषभावनां प्रवर्तयति पोषयति द्वेषमूलं संघर्षमिति। परन्त्वयमपि तेषां केवलं भ्रम एव; नानाविधा धर्माः भवितुमर्हन्ति। "धर्मस्त्वेक एव" सर्वेषां प्रचलित-सम्प्रदायानां यत्र नानाविधत्वं प्रतीयते तन्नाममात्रेणैव विवादभूतम् न वस्तुतो भेदः। यतो हि सर्वेषां मतानां सम्प्रदायानाञ्च प्राप्तव्यं वस्तु परमतत्त्वं, गन्तव्य-स्थानम् परमपुरुषार्थन्त्वेकमेव । किन्तु तत् प्राप्तिकारको मार्गः प्रकारश्च भिन्न इव प्रतिभाति। न वस्तुतो नानात्वम् यथा वैष्णवः शैवः शाक्तो बौद्धो जैनः कोऽप्यन्योऽपि वा केवलं नामभेदादेव पृथक् प्रतीयते, लक्ष्यस्त्वेकमेव समेषाम्। तत्र विवादतो परस्पराक्षेपादयश्च सर्वे पारस्परिक - वाग्वैदुष्य - विवेचनार्थकाः तर्कशक्तिं परिवर्धन्त एव।

प्रतिपादितश्च धर्मस्वरूपः—"धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत्।
(महाभारते—) अविरोधी तु यो धर्मः स धर्मो मुनिपुङ्गव॥"

अतः सिद्धयति यद् धर्मान्न केषाञ्चन हानिर्भवति न वा क्लेशकारणम् धर्मो न भेदभावोद्दीपनं कुरुते न शिक्षयति च कञ्चन कस्याऽप्युपर्याक्रमणकरीं नीतिम्। प्रत्युतेमामेव धारणां द्रढ़यति—"न" कञ्चनोद्वेजयेत्, "नाऽश्राव्ये श्रावयेत्", "मा गृधः कस्यस्विद्धनम्" किञ्च "सत्यं ब्रूयात्प्रिय ब्रूयात्, न ब्रूयात् सत्यमप्रियम्। तथैव— 'मातृवत्परदारेषु परद्रव्येषु लोष्ठवत्। आत्मवत्सर्वभूतेषु पश्येद् ब्रह्मात्मकं जगत्।" इति समुपदिशति धर्मः।

प्रत्युत धर्मत्यागेनैव भवति सर्वत्रोपप्लवः। धर्मत्यागेनैव प्रवर्द्धते दुर्भावना, दुराचारप्रवृत्तिः कर्तव्यपराङ्मुखत्वम्। परस्पराक्रमणं, परकीय - धनदारापहरणादि-सर्वविधक्रियाकलापश्च प्रवर्तते वर्द्धते च।

एवमेव कतिचन वैदेशिकविरुद्धाचरणानुसरणरसिकः, सर्वथा-परित्यक्तपरम्परायात : सनातनधर्ममर्यादाः स्वच्छन्दाचारविहाराहारोपहाराः भारायमाणा भुवनतले विहरन्ति यथेच्छम्। कलयन्ति कलुषितां सितांशुशुभ्रां परम्परागतां स्व - स्वकुल-

मर्यादाम् । यातुधानायमाना जातु न लज्जन्ते कुर्वाणाः कुकृत्यकल्पनाम् । प्रजल्पन्ति च निर्लज्जं यत् :—

"नानुजा तनुजा क्वापि न स्वसा न स्नुषा क्वचित् ।
नाऽगोत्र - गोत्रजा श्यालभामा वा श्यालभद्रिका ॥
कामिन्यो हि समास्ताः कामकेलि - प्रसाधिकाः ।
यथा पाशवदेशेषु प्रवर्तन्ते जनाः पुरा ॥
तथा भारतवर्षेऽस्मिन् वाञ्छन्ति पशुवृत्तयः ।"
मन्यन्ते शास्त्रमर्यादां नैव स्वीयपरम्पराद् ॥
न धर्मबन्धनं नैजां व्याहृतिं च कुलक्रमाम् ।
साम्प्रतं दानवायन्ते मानवा मानवाऽर्दनाः ॥
अतो जनार्दनस्तेषामशेषां शोधयेन्मतिम् ।
ततः संस्कृतिरक्षा स्याद् भारते भव्यभारते । इति ।

इत्थं दुर्विनीतां विगीतां धारणां धारयन्तः सन्ति साम्प्रतिकेऽनन्ता धनान्धाः, राजलक्ष्मीमदोन्मत्ता वा विलासिनः शासकाः कलयन्ति यथाचारां कामकेलिम्, न गणयन्ति गुरुगणोद्गीरितां गुणिगणोपयुक्तां सुप्रयुक्तां गुणगभीरां धीरां गिरमपीति । न मानयन्ति महत्कुलसमुद्भूतां-मानमर्यादाम् । नावगच्छन्ति ते मूढधियो निजां भारतीयां वैदिकीं विज्ञान-पद्धतिम् । न चिन्तयन्ति च दुष्फलं स्वेच्छाचारव्यभिचारप्रसारस्येति-न जानन्ति ते शास्त्रीयं विधानम् ! नेमे विविदिषन्ति विज्ञानबहुलां सामाजिकीं व्यवस्थाम् सुस्थाम् । पश्यन्तोऽपि न पश्यन्ति दुष्परिणामं प्रचारित - व्यभिचारस्य । प्रवृत्तेऽस्मिन् दुष्कर्मणि सकलपरिजने, सर्वतः प्रथमं प्रभवन्ति दूषिताः कुलस्त्रियः । दुष्टासु ( दूषितासु च ) तासु भवति सकलमेव कुलं दूषितम् । उक्तञ्च गीतायाम्—

"स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ।
सङ्करो नरकायैव, कुलघ्नानां कुलस्य च ॥

ततो दूषिते च कुले, तत्कुलस्था पूर्वजना पितरोऽपि-नरके पतन्ति । तैर्दूषितैः कुलोद्भूतैः पुत्रपौत्रादिभिः प्रदत्तम्-तर्पण-जलादिकं पिण्डप्रदानादिकं सुलभन्ते तत्पितरः । यतोहि-पिण्डदाता तत्कुले जातो वर्णसङ्करो न तदंशभूतः, सतु अन्यस्यांशः अतः तद्दत्तं पिडं तिलाम्बु वा न तत्पितॄणां सविधे - सोम-सूर्याऽग्निभिर्नीयमानमपि अन्यांशदत्तत्वान् हृयत्वाश्च लभन्ते तत्पितरः । यस्य च सः पिण्डदाता "अंशः", तन्नाम निर्देशं विना लब्धुं शक्ष्यति । अतः तद्दत्तं सर्वं निष्फलं भविष्यति, न तत्पितरो लप्स्यन्ते न वा कुलघातकस्य पितरः । अतः उभय कुलस्यवोच्छेदो भविष्यति ।

यदि व्यभिचारात्—वर्णसङ्करहस्तदत्तं जलं पिण्डादिकं कथं न गृह्णन्ति ते पितरः; अस्य किं कारणमिति चेत्—शृण्वन्तु—

"स्वर्गस्थाः अस्माकं पितरः न सन्त्यल्पज्ञाः सामान्या वा जीवाः, अस्मत्स्वभावा वा,ये हि यस्य कस्यापि नाम्ना दत्तं-यस्य कस्यापि वांऽशेन समुद्भूतेन जनेन प्रदत्तं ग्रहीष्यन्तीति। यतोहि न तत्र दातरि तेषां स्वल्पतमोऽप्यंशः। यस्मिन् जने पितृणां भवत्यंशः, तस्यैव हस्तेन दत्तं, स्वनामनिर्देशपूर्वकं वा दत्तं यत् किमपि तिलाम्बुपिण्डादिकं वा तदेव गृह्णन्ति ते,नाऽन्यहस्तादिति। अतः सर्वप्रथमं 'अंशक्रमस्य ज्ञानमावश्यकमिति निर्दिशामः—

अयमस्ति नियमः यदा हि पुरुषो जन्म लभते तदा सः स्वीयैः पूर्वजन्मानुशयैः सहैव निजशुक्रे (वीर्ये) ८४ चतुरशीतिसंख्यकैरंशैः सह जन्म लभते। तेषु च २८ अष्टविंशतिसंख्यकान् अंशांस्तु सः स्वकीयानेवानयति, शेषेषु-षट्पञ्चाशत्सु एकविंशतिमिता २१ अंशाः स्वपितुर्भवन्ति, ततः पञ्चदश १५ संख्यकाः पितामहस्य, तथैव दश १० संख्यकाः प्रपितामहस्य एवं षट् ६ संख्यकाः वृद्धप्रपितामहस्य त्रयश्च ३ वृद्धप्रपितामहस्य तथैकश्च १ वृद्धतमप्रपितामहस्यांशो भवति। इत्थं स्वकीये वीर्ये स्वात्मना सहैव पूर्वजानां षण्णां सप्तमस्य च स्वात्मनः एवं सप्तपुरुषाणां अंशसमूहात्मकस्य स्वकीयशुक्रस्य स्वकीयायामेव भार्यायामुपयोगः करणीयो नान्यस्यां कस्याञ्चनापि। अतः सः स्वात्मना सहैव सप्तपुरुषाणां अंशमयं शुक्रम् अन्यत्र यस्यां कस्याञ्चनयोनौ न पातयेत्। तेषां पातनं, नरकभोगभाजनत्वं वा तेषु प्रसरेत्। स्वर्गगताः पितरो न पुनर्नरकभाजो भवेयुः। इत्थमेव अग्रिमास्वपि जनिष्यमाणासु सन्ततिषु स्वपुत्रे एकविंशति २१ संख्यकाः अंशास्तद्वीर्ये स्थास्यन्ति, ततः पौत्रे पञ्चदशमिता १५ एव प्रपौत्रे दश १० संख्यकांशाः तत्पुत्रे च ६ षट् संख्यकाः तत्पुत्रे त्रयोंशाः तत्पुत्रेत्वेक एवांशः स्थास्यति। इति। इत्थं सप्तपूर्वेषु सप्ताऽवरेषु च भवति पुरुषस्य शुक्रसम्बन्धः। अतो यस्मिन् यस्यांशस्य सम्बन्धो भवति तद्दत्तमेव तत्पितृ-पितामहादीनां सविधे सूर्यः अग्निः सोमो वायु-प्रभृतयः सद्यो नयन्ति प्रयच्छन्ति तत्तन्नामनिर्देशपूर्वकं दत्तं समस्तं तिलतोय-पिण्डादिकं तच्छ्राद्धे प्रयुक्तमन्नादिकञ्चेति-पितरोऽपि स्वस्वस्थानस्थिता एव गृह्णन्ति, प्रीणन्ति, शुभाशीभिरभिनन्दन्ति स्वसन्ततिं, नन्दन्ति चाहर्निशमिति।

यदि चास्मिन् वीर्यांशक्रमे कथञ्चन भवति व्युत्क्रमस्तदा समस्तं चतुर्दशपुरुषव्याप्तं शुक्रसम्बन्धचक्रं अस्तव्यस्तं विच्छिन्नं वा भवति प्रभवति तेषामादानप्रदान-क्रमव्याघातः। अतएव लुप्तपिण्डोदकक्रियः सर्वे पूर्व-पुरुषाः भाविनोवा पौत्रादयो लुप्तधर्माः स्वस्वपरम्परागतमर्यादाविच्छिन्नाः भविष्यन्त्येव, न तेषां पुनः

क्वचन पूर्वेषां परेषां वा सम्बन्धः स्थास्यति स्थैर्य्यम् एवमेव क्रममुद्दिश्य वेदे कथितम्—("सपिण्ड्यं साप्तपौरुषम् ।")

अतएव निजशुक्रांशस्य सप्तपुरुषपर्य्यन्तं सम्बन्धादेव-जन्माऽऽशौच-मरणाऽऽशौचादयः प्रवर्तन्ते तदनन्तरं सम्बन्धाभावात् नाऽऽशौचः ।

एवमेव क्रमं लक्ष्यीकृत्य विवेचने कृते ज्ञायते यद् वयं स्वकीये वीर्ये न केवलमस्माकमेवाऽधिकारः अपितु पूर्वपुरुषाणामपि सम्पत् अस्मिन्नेव निहिता । अतएव तत्संस्कारानुशययुक्त एव बालकः प्रादुर्भवति स च तथैव स्वपूर्वपुरुषाणामेवानुकरणं विदधाति निजपूर्वपुरुषाणामेव गुणाः स्वत एव तस्मिन् बालके प्रादुर्भवन्ति, अतः संस्कारी चाऽयं बालः इति कथ्यते जनैः । अतः मानवैः स्ववीर्यस्य यत्र कुत्रापि-असत्स्थले नोपयोगो दुरुपयोगो वा विधातव्यः । इति विवेकशून्या-एव नरास्तथाविधं दुष्कर्म कर्तुं प्रवृत्ता भवन्ति, स्वयन्त्वन्धकूपे पतन्त्येव किन्तु स्वकीय-पूर्वपुरुषानप्यन्धकूपे पातयन्ति पातकिनः । अतोऽस्माकं भारतीयानामेव भारतीया संस्कृतिः, सर्वांशेन ज्ञान-विज्ञान-सम्भृता न क्वचन प्रमादतो मौढ्याद्वा परित्याज्या । न वा कदाचन विज्ञानशून्यानां प्रमादिनां स्वेच्छाचाराणां सम्पर्को विधातव्यः । तेषां पद्धतेरपि न कदापि विलोकनमनुकरणं च करणीयम् । भारतीयास्तदैव भारतीया वयमिति कथितुं शक्ष्यन्ते यदा ते भारतीयामेव संस्कृतिमनुसरिष्यन्ति ।

अतोऽहमधुना तानेव वस्तुतो भारतीयान् धर्मप्राणान् विशुद्धभारतीयवंशसमुत्पन्नानेव पुनः पुनः सम्बोध्य कथयामि—यद् येषां मस्तकोपरि मातृभूमेः भारतस्य, भारतीयायाः संस्कृतेश्च संरक्षणात्मको भारः परम्परातो निभृतं विधृतः समागतः, ये च साम्प्रतिकमायामोहमये समये समयप्रभावे निपतिताः, तन्द्राप्रमादालसाः, सविलासाः, संवृत्ताः तेषां कृते ममैतद्धर्मधुरन्धराणां, श्रेयसे प्रतिबोधनमेव, यत् ते सम्प्रति जागरूकाः-भवन्तोत्रभवन्तः सर्वे क्षत्रियवंशावतंसाः पारस्परिकं यथाकथञ्चन कदाचित्समागतमपि मनसि वैमनस्यं वैषम्यं वा भवेत् भावुकभावनामयोऽसहयोगो वा भवेत्, तं निष्काश्य सस्नेहमेकलक्ष्यसूत्रे निबद्धा इव भवन्तः सम्प्रति वैदेशिकविरुद्धधर्मायलम्बिजनसमाक्रान्तां समुद्भ्रान्तां त्रस्तां सङ्ग्रस्तां भारतीयां निजजन्मभूमिं दुष्टदुःशासन - हस्तगतामपि समाच्छिद्य स्वतन्त्रां विधाय भारतीयां संस्कृतिञ्च संरक्षेयुः । इत्थं प्रवचनमाकर्ण्य सर्वैः समर्चा कृता तेषामिति ।

———

# द्विचत्वारिंशत्तमः परिच्छेदः

इत्थम् श्रीरामानन्दाचार्याः सबहुमानमाम्बेराधीश्वरेण सम्मानिताः मेदपाटधरामण्डलैस्तदानीन्तनै "महाराणा" पदसमलङ्कृतैः सप्रश्रयं साग्रहं सम्प्रार्थितास्तत्रत्यभावुकजनमनोऽभिलाषपूर्तये निजवचनामृतपानभृङ्गायितान् वैष्णवतल्लजान् सम्पूरिताऽभीप्सितान् विधातुं मेदपाटमौलिमण्डनायितं वीरतावधूटीसौभाग्यसिन्दूरपूरायितमेव महामहिम शौर्योद्रेकविजृम्भिताशेष-शेषवदनविलसितद्विसहस्ररसनाऽविगीतगीत - गुणगम्भीरं धीरं, वीरताधरिणिधौरेयं धराधामवन्यमगण्यवीरव्रतवैभवविलासोल्लासिनीविलासिनीप्रदर्शिताऽपूर्वजीविताग्निप्रवेशाद्यनेकवीरकर्मक्षेत्रोत्तंसम् विशुद्ध - भास्वदन्ववायान्तर्गतशिशोदियाराजवंशाधिष्ठितप्रतिष्ठित चित्तौड़दुर्गाभिधं प्रति प्रतस्थिरे ।

मार्गे मार्गे च प्रतिनगरं प्रतिग्रामञ्च निजधर्मोपदेश-धारावाहिनीं प्रवाहयन्तः प्रसङ्गोपात्तमेव भगवतो वाक्यमनुस्मारयन्तः—

"यदायदा हि धर्मस्य ग्लानिर्भवति भारत ।" ( इति गीता ) इत्यादिकम् सर्वदैव लक्ष्यीकृत्य भारतभूमेः संरक्षणाय, तक्षणाय च दुर्वृत्ताचारनीरसहृदयकाष्ठानां, पराकाष्ठानामत्याचार - धनदारापहरणादीनां सलमुन्मूलनाय, प्रयतमानाः प्रसुप्तभारतीयवीरक्षत्रियावतंसानात्मीयभावनामानस - राजहंसान् धर्मप्राणान् प्रतिबोधयन्तः, शोधयन्तश्च सदाचारपरम्पराऽऽयातधार्मिकपरिपालनपद्धतिम्, समुत्तेजयन्तश्च शिथिलितधर्मदार्ढ्यमतीन् सालसान् नवयुवकान्, वैदेशिकचारुचाकचक्यमृगमरीचिकाव्यामुग्धहृदयान्, सकलमेदपाट - महीमण्डलमण्डनीभूतपरिपूत - प्रभूतचरिते, निखिलभारतीयभावनोद्भटभावभरिते, विजृम्भित - धैर्यशौर्यगुणकूटे चित्रकूटेचित्तौड़नाम्नि पुण्यतमधाम्नि—श्रीमेदपाटमिहिर - महाराणासमायोजितसभामण्डपे विराजमानाः परिकलितराजमानाः क्षत्रियवीरवरान् सम्बोध्य तद्वंशपरम्परागत-

धर्मधराधामधनाऽभिजनमानमर्यादासंरक्षणव्रतवैशिष्ट्यं स्मारयन्तः प्रावोचन् श्रीरामानन्दाचार्याः—

अयि नवयुवक - साहसिकभारतीयभावनाभावितान्तःकरणाः विलोकयन्तु-निजातीतचरितानि, यदेषा वीरवरप्रसविनी मेदपाटीयाऽवनिः सर्वदैव निजमानमर्यादासंरक्षणाय स्वदेशकल्याणाय, जननीजन्मभूमेर्गौरवगरिमाणं प्रकटयितुमेव द्विज-धेनु-धर्म-कर्माऽबलामानमर्यादाकृते सततं निजगात्रशोणिततरङ्गिणीं प्रवाहयन्ती ह्यनुपममादर्शमुदाहरणमुपस्थापयन्त्यास्ते ।

यदा यदा हि सङ्कटापन्नमालोकितवन्तो धर्मं तदातदाहि नरसिंहायमानाः क्षत्रियवीरभटाः स्वप्राणपणेन सनातनधर्मरक्षणं सदैव व्यदधुः । पुनरप्यधुनाऽपि स एव समागतः समयः । कुटिलकरालकालचक्रचर्वितचारुचरिताः सचेतना अपि निश्चेतना इव संवृत्ताः सकलधर्मप्राणाः भारतीया जनाः । प्रत्यहश्च समापतन्ति च समन्ततो म्लेच्छानामाक्रमणानि । लुण्टाकैर्बलाल्लुण्ठयते सन्ततं सुकृतसमृद्ध - प्रवृद्धा-सुसिद्धा समृद्धिः । कुण्ठयन्ते सकलप्रयत्नाः भारतीयानाम् । प्रणक्ष्यन्ते प्रशस्ताः परम्पराः । धक्ष्यन्ते धर्ममूलानि नः शास्त्राणि । उक्ष्यन्ते च चारुचरिताचाराः । कण्डयन्ते च भावुकभविकानि मानसानि । पण्डयन्ते च पापिष्ठैः परमपावनानि प्रार्थनास्थानानि । सम्प्रति नाधुना तादृशं भारतम् यत्र सानन्दं नन्दनन्दनस्तवनं प्रस्तूयते स्म प्रतिसद्म, स्वाहा स्वधावषट्कारोच्चारणं न प्रसार्य्यतेस्म यज्ञनारायणोपासना, बलिवैश्वदेवादिविधानेन च वैश्वानरोपासनेति । साम्प्रतन्तु म्लेच्छाक्रान्ता वसुन्धरा सञ्जाता, सकला च भारतीया हिन्दूपदाऽभिधा जनता संवृत्ता ह्यस्तव्यस्ता परित्रस्ता । सर्वात्मना निर्बला निरीहा निष्प्राणा प्रजा पेष्यते परितः पापाचार-प्रचार - चातुर्य्यचञ्चुरचणैः । निपात्यते च कथञ्चिज्जागरिताऽपि जाज्वल्यमान-मनोमालिन्यमहागर्ते ।

अतः सर्वं पारस्परिकं मनोमालिन्यमपहाय विहाय च वैरभावनां, संयोज्य च स्कन्धैः स्कन्धान् विधाय च वीरभटवेषान् देश-धर्म - धनधामादि - संरक्षणार्थं सार्थवाहिनो भूत्वा सह हुङ्कारेण विकम्पयन्तु कुटिलकुन्तलान् यवनहतकान् अवरुन्धन्तु भूरिविलासभावनोद्भटेन्द्रियलोलुपताऽतितरलतरङ्गावलिभीषणां, चञ्चच्चाकचक्यचामीकर - सवर्णवर्णवरवर्णिनीविहाररसिकत्व महावर्त्ताम्, गर्तनिपतोन्मुखीकरण-कुसुमाऽऽभरणभूषिताऽमरवधूटी सदृक्षकल्प-वृक्षायित-परिपूरितमनोरथशतमन्मथोन्माद-मुदितहास्य - समाकृष्टकाभिजनमानसमरालाम्, नानाऽभिनय - कलित - ललित-भयदानवप्रसारित - महामाया - जटिल - [जालजञ्जालनिगडित - भारतीयजनता

मनोविहङ्गमसहस्रपरिराजितशाखाप्रशाखाप्रसारमण्डितपादपावलीविभूषिताशेषतटाम्—परितःप्रसरणोद्भूटां विकटां स्वेच्छाचारकाननकेलिकुतूहलान्दोलितलोलविवेकतरङ्ग-मालाऽऽकुलितनीरामतिगम्भीरां मानवीयां दानवायितां दुर्वृत्तवृत्ततरङ्गिणीम्। सद्यः समानयन्तु सुदूरगतं सदाचार-सज्जनतासम्भार-भासुरभूसुरनिकरोपदिष्ट-विशिष्ट-शिष्टाचारप्रचारम्। धारयन्तु धर्ममर्यादाम्। पालयन्तु परम्परागतां पूर्वजानां परिपाटीम्। सारयन्तु सनातनीं रीतिम्। कारयन्तु कल्याणकरीं कुलजानुसारिणीं धार्मिकीं प्रक्रियाम्। इति-भगवानपि वितरिष्यति सर्वदा सद्बुद्धविजयं बलं वैभवञ्चेति भवद्भ्यः। इत्येव मे समुपदेशः।

---

# त्रिचत्वारिंशत्तमः परिच्छेदः

सकल-लोक-वन्दनीया त्रिभुवन शेखरीभूता सकलचराचरजगदुद्भव - स्थिति-संहारकारणस्य भगवतो महाकालस्य प्रेष्ठा श्रेष्ठा स्वाधिष्ठानमूला समपहृतविश्वव्याप्ताऽधिव्याधिमहाशूला भक्तजनभावनाऽनुकूला विविधवनोपवनपरिवृता, साक्षाद्भगवता श्रीशङ्करेणैव निजकिङ्कराभीप्सितपूरणार्थमेव त्रिशूलोपरि धृता, विराजते समुज्जयिनी नाम्न्युज्जयिनी पुण्यतमा नगरी यत्र जगदघशमनकक्षिप्रा, क्षिप्राभीष्टसाधन-साधनमहातटाऽञ्चितोच्चविविधमन्दिरविराजिततीराऽनतिगभीराधीराऽम्बुमञ्जुलतरङ्ग रङ्गनटीवसुतटी, नानाजटी - मुण्डिजनसेविताऽनल्पजला, महासुफला, सुरवरतरङ्गिणीव शिवाऽऽराधनमङ्गला, जगन्मङ्गलाऽऽधारा प्रशान्ताकारा परितः प्रसारा क्षिप्रानाम्नी प्रवहति क्षिप्रफलदा तरङ्गिणी ।

तामेवाऽवन्तिदेशललामभूतां परिपूतां सप्तपुरीष्वन्यतमां विश्वप्रसिद्धां सिद्धां सिद्ध - साध्यगन्धर्वगणैरुपसेवितां सेवितुमेव प्रयाताः श्रीरामानन्दाचार्या मार्गे मार्गे समुपदिशन्तो भक्तजनमनोरथान् पूरयन्तः श्रीक्षिप्रानद्याः परमरमणीये सुभगगभीरे नीरे तीरे "अङ्कपात" नाम्नि स्थले विश्राममकार्षुः ।

परेद्युः प्रभाते शिप्रानद्यां स्नानध्यानादिदैनन्दिनीं प्रक्रियां सम्पाद्य तटोपरि-भगवन्मन्दिरेषु भगवतोऽर्चनावन्दनादिकं विधाय यथासमयं तत्रापि निजवचनामृतप्रवाहिनीं प्रवाहयितुमेव सभामण्डपमासेदिवन्तः—सकलजनाऽभिवन्दिताः सुपूजिताः जिज्ञासुजनातृप्ततृषां तर्पयितुं प्रवचनमारभन्त ।

तत्र प्रथमं सप्तपूर्षु प्रधानां प्रातःस्मरणीयामुज्जयिनीं प्रशंसयामासुः । उज्जयिन्याः श्रीक्षिप्रानद्याश्च माहात्म्यन्तु स्कन्दपुराणे स्वयं भगवता शङ्करेणैव वर्णितमिदम् :—

"महाकालवनञ्चास्ति त्रिषु लोकेषु विश्रुतम् [ विद्यते ] ।
ज्ञानतोऽज्ञानतोवापि दृष्ट्वा मोक्षमवाप्नुयात् ।।

ब्रह्महत्यादि पापानि क्षयरोगादिकान्यपि ।
सर्वाणि विलयं यान्ति दृष्ट्वा क्षिप्रां वरानने" ॥ इति ।

यद्यप्येषा सकलतीर्थमय्येव भूमिः, तथाप्यत्र वैशिष्ट्यमिदमस्ति, यदत्र भगवतो महाकालस्य कालहरस्य हरस्य प्रतिपलं दर्शनमनर्थोपशमं शमप्रधानं, भगवत्याः हरसिद्धयाः, महायोगेश्वर्याः सुलभसिद्धिदं दर्शनम् । तत्राप्यष्टाविंशति २८ संख्यकानां तीर्थानां पावनमालोकनम् । अत्रैव, पुरुषोत्तमसागर, विष्णुसागर, रुद्रसागरादि सप्त सागराणां परमपावनं-दर्शनानि, परमपावनानि भुक्ति-मुक्ति-प्रदानानि दर्शनीयतमानि प्रशान्तानि वन्दनीयानि स्थलान्यपि राजन्ते भूरीणि । किं बहुना त्रिरात्रमेकरात्रं वा निवासेनैव यात्रिणां सकलपापप्रणाशो भगवद्धाम-प्राप्तिश्च सुलभेति ।

आसीदेषैव वीरविक्रमादित्यस्य परमप्रसिद्धा राजधानी । तदेवैतत्स्थलम्-यत्र भगवान् देवकीनन्दनो मथुरातः समागत्य महर्षेः सान्दीपनगुरोः सकाशात् सकलां विद्यां, सर्वामस्त्र-शस्त्र - विद्याश्चाध्यगीष्ट । विद्याऽध्ययनकाल एव दीनातिदीनेन सुदाम्ना नाम्ना ब्राह्मणेन सह मैत्रीं कल्पयित्वा, ह्यपूर्वतमेन लोकातिगेन व्यापारेणैव निर्वाहयामास मैत्रीम् । तन्मैत्रीफलस्वरूपमद्यापि जरीजृम्भते सुदामपुरीति नाम्ना प्रसिद्धं भगवद्दत्तवैभवविलास - भोगभाजनं "पोरबन्दर" नाम्ना सम्प्रति प्रसिद्धं सिद्धं नगरम् ।

किम्बहुना प्रत्यहं श्रीमहाकालेश्वराऽधिकृतनिवासभूतायाः परमपावनपरागसमलङ्कृतप्रदेशायाः सविशेषाया अवन्तिकापुर्या अस्त्येकं महद्वैशिष्ट्यं यदत्र प्रति द्वादशवर्षानन्तरं महत्पुण्यं पर्व समापतति, सिंहस्थे सुराचार्ये, मेषाऽर्के (उच्चराशिस्थिते भगवति मरीचिमालिनि ) वैशाख मासे शुक्ले पक्षे स्वातिनक्षत्र - परिराजिते द्विजराजे ( चन्द्रमसि ) पूर्णिमायां तिथौ चन्द्रवासरे, व्यतिपातयोगे च समागतोऽत्रजनः सुरसरित्सदृक्षायां क्षिप्राऽभिधायां क्षिप्राऽघौघप्रशमिन्यां परमपावनेऽम्भसि स्नाति,-समभ्यर्चति देवादींस्तर्पयति च देवर्षिपितॄन्, सः पदे पदे प्रतिस्नपनविधि शतशतसुमेरुसदृक्षस्वर्णकोटिदानसमं फलं लभते—उक्तञ्च :—

"सिंहस्थेगुरौ :—"वैशाखे, विशदे दले, हिमकरे, सस्वाति पूर्णा-तिथौ,
योगे वा व्यतिपातकेऽथ, वणिजे चन्द्रे, रवौ मेषगे ।
सिंहस्थे वृहतां पतौ, यदि जनः क्षिप्राम्बुनि स्नाति, सः
स्वर्णाद्रेः शतदानकल्पितफलं प्राप्नोत्यवन्त्यां पुरि ॥

अस्मिन् पर्वणि कुम्भनाम्नि महतो दूरात् प्रदेशाज्जनाः
प्रच्छन्ना मुनयो महर्षय इहाऽऽयान्ति द्विजाः सप्रजाः ।
आचार्या धनिनो गृहस्थितिजुषः सन्तोमहान्तश्च ते
क्षिप्रास्नानमुपेत्य पुण्यचरिता धन्यं जनुः स्तन्वते ॥२॥

समागत्य च श्रद्धालवः सद्भक्ताः सद्गृहस्थाः स्नानदान - जप-पाठभगवद्दर्शन-भगवदीयसत्सङ्गसमागमाऽऽलाप - कथोपदेशविशेष - श्रवण - मनन - ध्यानोपासनाद्यैः, प्रतिसवन - यजनाराधनाऽतिथिगण-संसेवनादि-विविधविध - भगवत्परितोषिणीः समासाद्य सत्कर्मप्रक्रियाः, नानाविध पुण्यक्षेत्राटनाद्यनेकतीर्थभूतस्थलविलोकनसमुपलब्ध-सौभाग्यसत्फलाः, सम्पाद्याऽलौकिकीं सिद्धिं, सार्थिकीकुर्वन्ति निजनिजजनन-सौभाग्य-सुलभावसरम् ।

उक्तञ्च—"अद्याऽपि प्रथितं प्रसारितमिदं माहात्म्यमत्यद्भुतं
व्याप्तेयं परितः प्रथा प्रतिमहाकुम्भं महामेलकम् ।
साधूनां गृहिणां सताञ्च महतां श्रद्धाऽन्वितप्राणिनां
स्नानं द्वादशवार्षिकं भवति तद्गांगेऽत्रशिप्राऽम्भसि ॥

परञ्च — श्रद्धादृग्रहितो न पश्यति जगत्यालोकभास्वद्गुणे
भक्तिज्ञान - विहीन - योगकलनासक्तो यथा योगिराट् ।
ब्रह्मानन्द बहिर्मुखोऽपि लभते सौख्यं न गार्हस्थ्यजं
तद्वन्मानव आश्रमादिभगवत्तीर्थेषु तादृग् गुणम् ॥
दुग्धे सर्पिरिवाद्भुतं रसमयं तीर्थेषु दिव्यं महः
प्रच्छन्नं, गुरु वेद ( देव ) शास्त्रपटले पित्रोः पदाऽभ्यर्चने ।
श्रद्धावान् सुकृती तथाऽनुकृतिमान् यादृक् समभ्यासिनः
स्वाचार्यैर्विधिना तनोत्यपचितिं प्राप्नोति तादृक्फलम् ॥

धर्मार्थकाम मोक्षाणां प्राप्तये हेतुरुत्तमः ।
श्रद्धाभक्तिस्तथाऽऽसक्तिर्गुरूपसरणं मतम् ॥
न विना श्रद्धयायुक्तः प्राप्नोति पुरुषः क्वचित्
स्वयं भगवता प्रोक्तं श्रीकृष्णेन महात्मना ॥
श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥"

किञ्च—"श्रद्धामयोऽयंपुरुषः यो यच्छ्रद्धः स एव सः ।"
इत्यादि गीतायामुक्तम् ।

"मन्त्रे तीर्थे द्विजे देवे, दैवज्ञे भेषजे गुरौ ।
यस्य यादृग्विधा श्रद्धा सिद्धिर्भवति तादृशी ॥"

प्रायः श्रद्धाविरहितस्तु निन्दैव श्रूयते, स च न कुत्राऽप्यवतिष्ठते ।

उक्तञ्चगीतायाम् :—"अज्ञश्चाऽश्रद्धधानश्च संशयात्मा विनश्यति ॥"

श्रद्धामाश्रित्य ( भील ) भिल्लकुमारः श्रीद्रोणाचार्यशरणमुपगतोऽपि शिष्यं विधातुं शर-धनुःसन्धातुं सन्धापयितुञ्च निषिद्धोऽप्येकलव्यनामा स्वकीयश्रद्धाऽतिरेकादपूर्वो धनुर्धारी समभूत्-तमेव श्रीद्रोणाचार्यं गुरुं कृत्वा तत्प्रतिमां मृण्मयीमुपकल्प्य तदग्रे धनुर्बाणान् सरक्ष्य गुरुं सम्पूज्य तन्मृण्मय्याः मूर्तेः सम्मुख एव धनुर्विद्याऽभ्यासमाततान । किञ्च–श्रद्धां समृद्धां हृदिनिधाय भक्तवरं श्रीदितिजराजकुमारः सुकुमारः श्रीप्रह्लादः परमाऽऽह्लादमवाप, यत्कृते स्वयं साक्षात् प्रभुरेव नृसिंहरूपां तनुं स्वात्मनः प्रकटयामास स्तम्भात् । एवमेव हि :—पञ्चहायनो बालकः श्रीध्रुवोऽपि "मातुः सपत्न्याः सुरुच्याः" वाग्बाणैराहतमर्मा तीव्रतमं तपस्तप्त्वा दुर्लभामभूतपूर्वां सिद्धिं सर्वतो वरिष्ठां सर्वश्रेष्ठां ज्येष्ठां स्थितिं भगवदनुग्रहपूर्णं सकलोच्चतमं ह्यक्षय्यं ध्रुवपदमवाप्य ध्रुवसंज्ञामलभत । यस्य समन्तात् समस्तं ज्योतिश्चक्रं परितस्तं प्रत्यहं प्रदक्षिणीकुरुते । सकलमिदं श्रद्धाया हृदि प्रवृद्धाया एवैतत् फलम् । ये च श्रद्धाविहीना आसन् दुर्योधनादयः शिशुपालादयस्तेषां का स्थितिर्जातेति शास्त्रेषु पुराणेषु च सुविस्तृतं वर्णितमेव । अतः स्वात्मनः क्षेमं शारीरिकं वा कल्याणं ये कामयन्ते जीवात्मनश्चोद्धृतिः काम्यते चेत् तदा सर्वात्मना श्रद्धा समादरणीयैव ।

उक्तञ्च :—"सद्भक्ताः सद्गृहस्थाः स्नपनरचनया दान - मानादिधर्मं,
व्यापारानाश्रयन्तो नियम-जप-तपः सञ्चरन्तो महान्तः ।
विद्वांसो वैष्णवाऽग्रचा हरिगुणगृणनं श्रद्धयाऽऽराधयन्त-
स्ते नित्यं साधयन्तो जगदुपकृतितां, तोषयन्त्यम्बुजाक्षम् ॥"

अतः श्रद्धयैव सर्वं सिद्ध्यति । श्रद्धां विना विहितं सकलं यत् किमपि कर्म दानं मानं, जपो, होमः, भगवदर्चनमतिथिसत्कारः लौकिको वा व्यवहारः, धार्मिको वा प्रसारः. परोपकारः सर्वं एव समस्तमस्तव्यस्तमिव निरस्तमेव न प्रशस्तं, ध्वस्तप्रायमिवेति - पद्मपुराणेष्वपि :—

"नाऽस्ति श्रद्धासमं पुण्यं नास्ति श्रद्धासमं सुखम् ।
नास्ति श्रद्धासमं तीर्थं संसारे प्राणिनां नृप ! ॥ इत्युक्तम् ।

अत्रान्तरे कश्चन जिज्ञासुः पप्रच्छ श्रीस्वामिचरणान्, किमत्र भगवन् ! अनन्य-भक्तेन जनेन स्वेष्टदेवं विहाय नाऽन्यः कस्यचनेष्टदेवो भक्त्या परमया श्रद्धया वा प्रणम्यः सम्माननीयो भजनीयो वेति किमत्रयुक्तम् ?

भक्तजनजिज्ञास्यं प्रश्नमाकर्ण्य सस्मितमूचुः श्रीमदाचार्याः—भगवदीयाः श्रद्धालवः सर्वं एव शृण्वन्तु—यद्यपि सतीव योषिदिव भगवद्भक्तस्यापि सम्बन्धो नित्यो भगवता सहेति नान्यत्र विमतिः। यथा सतीसीमन्तिनी स्वस्वामिनमेव सर्वात्मना सेवते सर्वं-भावेनेति-किन्तु न सा स्वस्वामिनो मित्राण्यवहेलयति, न वा कात्कुरुते। न हि समयोपरि क्वचन तान् भोजयितुं जलपानादिभिर्वा सम्मानयितुं पराङ्मुखी भवति। प्रत्युत सा सन्ततं समायातानतिथीन् सरसमधुरवचनैः सुस्निग्धपदार्थैरपि यथावसरं सत्करोत्येव न तेन तस्याः सतीत्वं व्याहन्यते प्रत्युत सदा प्रवर्द्धत एव तस्यास्तत्। एवमेव भगवदनन्यभक्तस्यापि स्थितिः स एव सर्वात्मना याथार्थ्येन भक्तो भवति यो हि स्वसमाराध्यदेव समुपास्य - तद्वदेव तत्स्वरूपमेव अर्थात् स्वाराध्यदेवस्यैव नानारूपत्वेन स्थितिं मत्वा तद्रूपेणैवाधुनायमुपस्थितो मे स्वामीति सुदृढं निश्चीयतद्रूपेणैव तमप्युपासीत। न ततो भिन्नं कमप्यन्यं मत्वा कात्करणीयः सः प्रणमनीयः सम्माननीयः समर्चनीय एव। यतो हि भगवतः सर्वरूपत्वात् सर्वनामधारित्वाच्च। "नामरूपे व्याकरवाणीति" सच्च त्यच्चाऽभवत् "स सर्वः सर्वरसः" इत्यादि।

अत एव अनन्यभगवदीया वैष्णवाः सर्वत्रैव स्वकीयमाराध्यदेवमेव पश्यन्ति सर्वेषु भगवत्स्वरूपेषु ( भगवन्मूर्तिषु वा ) स्वाराध्यदेवमेवावलोकन्ते किम्बहुना भगवन्निर्मितेऽप्यस्मिन् जगति समस्तं वस्तुजातं भगवद्रूपं केवलं नाम - रूप - विभेदेन व्यवहारसिद्ध्यै सर्वत्र सर्वरूपेण विद्यमानं विद्यते, अतो भगवन्तं स्वसेव्यमेव विज्ञाय तथैव नमनादिकं तद्वदेव विधेयम्। तदैव तस्य तथा तदनन्यभक्तत्वं सिद्ध्यति नान्यथा। भेदबुद्ध्या विज्ञाते तु 'असद'भिनिवेशात् असत्त्वमेव सेत्स्यति, सोऽपि स्वकीयसिद्धान्ताद्विचलितो भवति। किञ्च सः स्वकीयं समुपास्यदेवमेव स न तथाविधं तादृगनन्तशक्तिसम्पन्नं साक्षात् परब्रह्मस्वरूपं वा मन्यते। एकस्वरूपेणैव ध्यायमानो देवः सः तद्रूप एव, नान्यरूपो भूयस्त्वसामर्थ्यविहीनश्च, ( बहुभवनसामर्थ्यविहीनः ) अतः स अंशभूत एव एकस्मिन्नेव स्वरूपे परिच्छिन्नः सीमितः, जीवात्मसमानकोटिको विशिष्टमात्र जीवो वा। न सः साक्षात् पूर्णपुरुषोत्तमः परात्परतरब्रह्मभूतः अगणितपरमानन्दनिरवधिसच्चिदानन्दस्वरूपो वा। अतः पूर्णपुरुषोत्तमोपासकानां वैष्णवानान्तु सर्वत्रैव सर्वैक्यरूपा भावनैव तिष्ठति।

उक्तं च "समं पश्यति सर्वत्र सर्वञ्च मयि पश्यति" इति-समस्त जड़जङ्गमादिषु व्याप्तं भगवन्तं स्वकीयमाराध्य-देवं किञ्च सकलमशेषं विश्वं च स्वेष्टदेवे भगवति च यः पश्यति, प्रणमति, अर्चति ध्यायति मानयति, स एव श्रेष्ठः श्रेष्ठतरो वैष्णवः।

यश्च यत्र क्वचन व्यवहारदोषदूषितान्तःकरणोऽप्यन्यतादृग्जनद्वारासमुद्वेजितः खिन्नो दुष्टसंसर्गात्समाविष्टदूषितप्रतिक्रियाजनितदुर्भावभावितान्तरात्मा गुरुवरः यदाकदा प्रवाहपतितः सन् तथाविधमुपदेशं स्वशिष्याय प्रयच्छेद् यदन्यस्य स्वेतरेष्टदेवाऽऽराधकस्य स्वसम्प्रदायविरुद्धभावनायुक्तस्य जनस्य विरोधिनः समुपास्यं देवं न प्रणमेत् न तत्र गच्छेत् "यथा हस्तिना ताड्यमानोऽपि न गच्छेज्जैनमन्दिरम्" इत्यादि घोरघोरतर-विरोधिजन-कलुषित-भावनाद्योतकमेव न समीचीनम् किन्तु तत्सम्पर्कात् स्वकीयमपि सुविनिश्चितं दृढतरभावमपि दूषयेत् कदाचन तदनुवर्तनमत एव "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इत्येव हेतुकम्। यतो हि मनुष्यमात्रस्य स्वभावः क्षणपरिवर्तन-शीलः कदाचन स्वकीयपरम्परां प्रति स्वेष्टदेवं प्रत्यपि क्वचन श्रद्धाहानिः सम्भवेत्। अल्पज्ञत्वात् परव्यामोहकवाक्यचक्रनिपतनाद्दूषितसंसर्गजनितदुर्भावनापिशाचिनी-ग्रस्तत्वात् अस्थिर-दार्ढ्यविहीनमतिमत्वाद्वा।

अत एव समयचक्रानुसारमेव तादृग्विधगुरूणामपि तथाविधोपदेशप्रवृत्तिकत्वात् समुत्पद्यते तथाविधा भावना। परन्तु वस्तुतस्तु पूर्वतन एव सिद्धान्तः सिद्धान्तितो यत् सर्वत्र स्वेष्टदेवमेव विराजमानं मत्वा भगवतस्तथाविधलीलामयविग्रहधारणात् स्वभक्ता-नुरञ्जनाय तस्य तथाविधश्रद्धादार्ढ्याय तथाविधस्वरूपेणैव - भगवतोऽपि स्थितिः ["यो-यो यां-यां तनुं भक्तः श्रद्धयार्चितुमर्हति" तस्य तस्याऽचलां श्रद्धां ता मेव विदधाम्य-हम्। स तया श्रद्धया युक्तस्तस्याऽऽराधनमीहते। लभते च ततः कामान्" [इत्युक्त अग्रि-मपदे स्वयमेव स्वकृतत्वं प्रकटयति यत् "मयैव विहितान् हि तान्" इति अतः प्रभुः स्वभक्तजन-परिजन-परिरञ्जनायैव स्वात्मनोऽपि स्वभक्तभावनानुरूपं स्वरूपधारणं दर्शनादिदानञ्च कुरुते। यतो हि सर्वरूपत्वाद्भगवतः। अतः अपक्वकषायबुद्धीनां जनानां कृते तथाविधः प्रयोगः प्रचारितः सामयिकः। यतो हि चर्षणीसंज्ञका जीवा एव तादृक् स्वभावा भवन्ति, जारिणी - पुंश्चली कामिनीव एकं विहायान्यं श्रयते न क्वचन तस्या एकत्र कस्मिन्नापि मानवेऽनुरागः, तद्वत्तेऽपि नैकत्र देवे स्थिराऽनुरक्तिम-न्तास्तिष्ठन्ति, अतस्तादृशानां कृते तथाविधोपदेशस्यैवाऽप्यावश्यकता भवति येन तेषां नियमनेन बुद्धेर्दार्ढ्यं एकस्मिन्नेव समुपास्यदेवे सुदृढः स्नेहः प्रवर्द्धेत।

इत्थं सारगर्भितं सर्वसम्प्रदायसिद्धान्तनिर्णीतत्वमयसमुत्तरमाकर्ण्य सकल-सम्प्रदायानुयायिनस्तुष्टा हृष्टाः प्रकृष्टानन्दनिलीना इव संवृत्ताः। सर्वैः सद्भावना-भावितान्तःकरणैरभ्यर्चिताः सश्रद्धं श्रीमदाचार्याः।

इत्थमुज्जयिनीं प्रणम्य ततः प्रस्थिताः श्रीरामानन्दाचार्याः श्रीमद्यशोदोत्स-ङ्गलालित-नन्दनन्दन - सवदानन्दकन्दश्रीव्रजराजकुमारो यत्र सर्वदैव स्वकीयां नित्या-नन्दविलासमयीं लीलां वितन्वन्नृत्यन् गायन् विहरति प्रतिक्षणं तामनन्यां भगवद्रूपां गोलोकमयीं चतुरशीतिक्रोशममितां गोलोकविहारिणो विहारिणो व्रजभूमिं साक्षान्नय-नपथपथिकीकर्तुकामा उज्जयिनीतोः नागदा - कोटानगरमपि स्वचरणरजःपूतमाक-लय्य साक्षाद्भगवल्लीलास्थलीं व्रजभूमिं प्रविविशुः। तत्र सकललोकललामभूतां साक्षाच्छ्रीनन्दनन्दन-श्रीगोपिकाजनमनोरञ्जन-व्रजयुवतिकुलनयनाऽञ्जन-सच्चिदानन्दकन्द-श्रीकृष्णचन्द्र-चरणारविन्दरजःपरिपूतां ब्रह्मसृष्टितः पराऽद्भुताऽलौकिकीसृष्टिरूपां श्री मधुपुरीं ( मथुरां ) श्रीकलिन्दकन्यकया समलङ्कृतप्राक्तम - पूर्वभागां दर्शं दर्श-मतीवाऽऽनन्दसंप्लुताः प्रस्रवत्प्रेमाश्रुपरिरञ्जित - मुखमण्डला भूतलाचार्याऽऽखण्डलाः समभूवन्।

---

# चतुश्चत्वारिंशत्तमः परिच्छेदः

क्रमेण च परिचङ्क्रमन्तः श्रीमदाचार्याः श्रीगोकुलम् श्रीवृन्दावनम्, मधुवनम्, श्रीगोवर्धनाचलम् श्रीकाम्यवनम् श्रीनन्दिग्रामम्, बरसानाऽभिधेयां श्रीराधिकाजन्म-स्थलीं, दर्शं दर्शं नितान्तं मोदमानाः प्रमोदवनमुपेत्य प्रमोदमुद्वहन्तः समन्तात् विराज-मानानि नानाविधतीर्थान्यालोकयन्तः स्थाने स्थाने भगवत् सङ्कीर्तनं, भगवच्चरित्र-माहात्म्यप्रकाशनम्, भगवल्लीलावर्णनम् कलयन्तः ।

श्री 'कलिन्दगिरिनन्दिनी स्नपनसान्ध्यसेवाविधिं,
प्रभात कलिताऽऽसनश्वसनरोधयोगक्रियाम् ।
समाधिरत - भाविताऽवनिसुताप्रियप्रीणनं
प्रतिक्षण विलक्षण प्रवचनानि चक्रुः स्वयम् ॥

"वृन्दावनं प्रियतमं यदुनन्दनस्य-श्रीराधिकाप्रणयकेलिनिकुञ्जरम्यम् ।
रासेश्वरः श्रयति रास-विलासहासान् प्रेष्ठाऽऽलिपुञ्जपरिरञ्जितमञ्जुकुञ्जे ॥"
सेवानिकुञ्जमधिगुञ्जनमात्मनीनं वीणाऽनुकारिकलकण्ठसमुत्थगानम् ।
मानं प्रिया-विरचितं व्रजवल्लवीनामानन्ददं रतिसुधाऽधरमञ्जुपानम् ॥
वीणा-मृदङ्ग पणवाऽऽनक-वेणुनादोमध्ये प्रिया-प्रियतमप्रणयप्रवादः ।
कादम्बकीर-कलविङ्क(हंस)पिकाऽलिनादव्याजेन नृत्यललिताऽऽचरिताऽनुभावः ॥
साक्षादिवाऽनुभवमेति विभोर्विभुत्वं लीलारसाऽश्चिततनुर्यदिभक्तराजः (मल्लः)
अद्याप्यलौकिकरसां भगवत्स्वरूपां केलिं विलोकयतु तत्करुणाऽरुणाक्षः ॥
सौदामिनी शतसहस्रसमावृताङ्गो मन्ये नवाऽम्बुदधरो नवनीलमेघः ।
लीलारसप्रणयनिर्भरमुल्लसन् स्वं यो वल्लवीनिचयमञ्चति मञ्जुलीलः ॥
वृन्दावनं त्रिभुवनोत्तमकीर्तिरम्य-प्रोत्तुङ्गविस्फुरदजस्रसुरुक्पताकम् ।
यत्र प्रियाप्रणयिनोर्व्रजवल्लवीभिः साकं सुनन्दवृषभानुजयोर्विहारः ॥
दीव्यन्ति कुञ्जमधिमाधवकीर्तिजन्योर्नित्याऽऽन्तरङ्गरतिरङ्ग - विलासहासाः ।
(षड्राग-रागिणिगणतुंगणप्रमोदाः, लीलाः, कलाः सकलदेहधराः लसन्ति) ॥

'षड्रामषड्गुणितरागिणि-षट्स्वृतूनां लीलाश्चतुर्गुणितषोडशसत्कलानाम् ।
ये योगिनः सततसङ्गमरङ्गबन्धाः स्कन्धाऽऽश्रयां प्रणयिनो यदुनन्दनस्य ॥
ते चाक्षुषं प्रियतमां भुजबन्धमध्यामाश्लिष्य संरमयतः कलयन्ति साक्षात् ।
भावाऽनुरक्तमनसो वचसोऽप्यगम्यं गम्यं न योगकृतिभिर्धृतिभिः प्रणम्यम् ॥
स्वानुग्रहेण सुलभं, सुलभामहे नः प्रेमास्पदं प्रियतमं प्रणयेक्षणेन ।
भावाऽनुभावपरिशोधितमानसाऽन्तः-संस्थापिताऽमितरसान्वितरंङ्गितान्ताः ।
आनन्दकन्दयदुनन्दनवन्दनाद् यच्चेतोऽलिरश्चति मुदं दधतीक्षणेन (ईक्षणेन) ॥

इत्थं स्वयमेवाऽऽनन्दसिन्धुनिमग्नभग्नभौतिकप्रपञ्चबन्धनाः, भगवत्प्रणयबन्धनानन्ततरलतमतरङ्गरङ्गसङ्गमाऽञ्चितभावबन्धनाः, विस्मृतसकलेहाऽमुत्रसाधनसमाराधनक्रियाकलापाः, कल्पनाऽतीतपरमानन्दलाभमहामोदप्रमोदपारावारपरपारङ्गताः, पुनः सङ्गता इव सपदि सुषुप्ति-समवस्थातः प्रतिनिवृत्ताः ब्रह्मानन्दसम्पन्नाः स्वकीयजाग्रदवस्थायामेव समायाता इव भक्त-भावुकसमाजमध्यङ्गताः स्वकीयभावनाभक्ति-भगवल्लीलाऽऽनन्दवर्णनप्रसारितप्रवचनसुधापगा भगवद्गुणाऽनुसन्धानमिवाऽऽकलयन्तो भावुकभक्तवरान् सम्बोध्य भक्तिरसाऽमृतं पाययामासुः ।

अथैकदा तपनतनूजातटनिकट-नितान्तैकान्तविविधलताप्रतान - वितानितगुल्मनिकुञ्जनिवासि-श्रीकृष्णविरहीति यथानामतथागुणो निर्गुणब्रह्मानन्दानुभूतिपरिपूतमानसः सकलमानसराजहंसायितः परमहंसः विश्रुतभुवनविततप्रशस्तगुणगणश्रीरामानन्दाचार्यानातिथ्येन सम्मानयितुमेव समामन्त्रयामास । महामहिम्नां परमहंसानां पावनतमकुटीरमुपसेवितुकामा एव रामानन्दाचार्याः सातिशयप्रणयप्रदर्शनपुरःसरमेव तेषां निमन्त्रणं ससम्मानमुररीचक्रुः । इत्थमुभयोरेव परमहंसपरिव्राजकयोः परस्परं सङ्गमोऽप्यन्यून एवासीद् गङ्गायमुनयोः सप्रेमातिशयोल्लसितपारस्परिकभक्तिरसाऽन्योन्यसम्मिश्रणैक्याऽऽनन्दनिर्झरिण्योः कश्चनाऽपूर्व एवाननुभूत-भाविसुसङ्गमः।

आसीत् तदानीमेकादशीदिवसम् । यथानियमं समभवत् फलाऽऽहारव्यवस्था । मध्याह्नोत्तरं यदा सन्ध्यावन्दनाऽऽराधनसमासादनादि - नित्यनियमकृत्यनिवृत्ताह्निकव्यापाराः फलाहारार्थमुपयुक्तपरिकल्पितासनासीना यथा ह्यभूवन् सर्वे सन्तोमहान्तः, तदानीमेव परमसौभाग्यतः समायोजितः स्वत एवाद्भुततमस्तथाविधमहात्मनोः परहंसयोरेकत्रसमागमः सञ्जात इति कर्णाकर्णिकया समन्ततप्रसृतममुदन्तजातमाकर्ण्य शातकर्मसमाराधनाय समवेताः शतशो नागरिका ग्राम्या दिदृक्षवो भिक्षवो याचका महात्मनश्च सत्सङ्गसमागममहोत्सवं चाक्षुषीकर्तुं महात्मनोस्तथाविधां प्रवचनसुधामाचामितुमेव यूथशः समुपस्थिताः संवृत्ताः । परं न ते जानन्ति स्म

तदानीमेव ते सम्मान्या आचार्यवर्य्या नाधुनावधि फलाहाराशनकर्मनिवृत्ता इति, अत -स्ते सर्वे परस्परालापमारचयन्तो नातिदूरमेव सघनवृक्षच्छायास्वेव स्थिताः समभूवन्। तदानीमेव श्रीरामानन्दाचार्या भोजनवेलायामेव समुपस्थितान् दिदृक्षून् भक्तवरानालोक्य स्वयमेव तेषां समीपमागत्य सकलांस्तान् विहिताऽऽहारानपि भगवतः प्रसादमास्वादयितुमेव प्रेरयन्तः पङ्क्तिबद्धान् भवितुं तानादिदिशुः। महात्मनामपूर्वानवलोकिततपःप्रभानां दर्शनं विधाय मधुरतमवचनविन्यासपूर्वकादेशमाकर्ण्य सश्रद्धं सविनयं सातिशयप्रणयरसनिमग्ना इव रसानन्दसंल्लुताः सन्ताः यथादेशं पंक्तिबद्धाः सञ्जाताः। भ्रूविजृम्भणमात्रत एव तत्रत्य कुटीस्थितमहात्मभिः समदि पत्रावलीद्रोण-पुटक-वितरणव्यवस्था सम्पादिता। तत्रैव स्थिताः निजकरकमलविधृत-फलाहारपात्रत एव सर्वविधं कन्दमूल-फलादिविनिर्मित- सर्वविधफलाहाराशनसामग्रीपरिवेषणं स्वहस्तेनैव कलयामासुः श्रीरामानन्दाचार्याः। परिवेषणानन्तरसमकालमेवाज्ञापयामासुस्तान् भोजनार्थं यथारुचं ग्रहीतुं च फलाशनसामग्रीं, यथेच्छं यावत्क्षुधनिःसङ्कोचमातृप्तेः समासेवितुं भगवत्प्रसादम्। तथैव च सर्वैः परमश्रद्धया भगवद्दर्शनमिव साक्षादनुभवद्भिः सम्मुखमुपस्थितं भगवन्तमेव परिवेषणतत्परं धृतफलाशन-भोज्यसामग्रीसम्भृत-पात्रमालक्ष्यानितान्तं विस्मितैस्तैरेवाविस्मितमुखाऽम्भोजनिःसृतमधुरमधुमय-वचनामृतानन्दानन्दितश्रुतिविवरैः, भगवत्करकमलपरिवेषितापूर्वरससंसिक्तः मधु-क्षीरद्राक्षासिताशतविधमधुररसोल्लासित- पदार्थजातमास्वाद्याऽलौकिकाऽऽनन्दसंविदानैः सह समालपन्तः पुनरिह भक्तजनपरिरक्षणसक्षणाः निजसहचरणमिव मन्यमानाः समुपस्थितव्रजबालकवयस्यवृन्दमिव सर्वांस्तर्पयन्तः साक्षादानन्दाकारा अपारानन्द-संमग्नान् कलयितुकामा एव रामानन्दाः स्वयं कृष्णानन्दाऽनुभावमेवादधानाः अस्मन्नयनगोचरीभूताः सम्प्रत्यहोभाग्यमास्माकीनमिति मन्यमानैः प्रत्यक्षमक्षिविषयीकृताऽद्भुता चमत्कृतिः। अन्यैरपि समुपस्थितसकलसज्जनैरालोकि यत् करस्थितलघुपात्र-मात्रसम्भृता फलाहार सामग्री, केवलमेकमानवमात्रभोजनोपयुक्तैवासीत् तयैवाऽल्पया फलाशनसामग्र्या समेषां शताधिकसमागतदर्शकानां यथेच्छं भोजनतृप्तिः कारिता, येषु कतिचनमहात्मानोऽपि कृतैकादशीव्रता अभुक्तफलाहारा आसन् तेषामपि समेषां यथेष्टं ससुखमपूर्वसामग्री- समुपभोगसौभाग्यलाभः समजनि। इति महादाश्चर्यकरी चमत्कृति-रालोकिता। इति विस्मयावहमुदन्तजातं कर्णाकर्णिकया सर्वत्र प्रसृतमभूत्। तदाऽन्यस्मिन् दिने दर्शनार्थं सुदूरदूरादपि दिदृक्षवः श्रद्धालवो भावुका व्रजभक्ता नागरिका ग्राम्या वनवासिनोऽपि समागत्य प्रत्यक्षदर्शनं विधाय परमाह्लादनिर्वृतास्तृप्ताः समभूवन्। इत्थं कतिचनदिनानि व्रजेऽपि भगवद्दर्शनानन्दमवापुः श्रीमदाचार्याः।

———

# पञ्चचत्वारिंशत्तमः परिच्छेदः

ततो भगवतः श्रीनन्दनन्दनस्य चरणपङ्कजपराग- परिमलसुरभिताद् व्रजमण्डलाद् प्रस्थातुकामाः श्रीरामानन्दाचार्याः सपरिकरनिकराः सश्रद्धं सप्रश्रयं चतुरशीतिलक्षमितजन्तुयोनि- समागमनाऽगमनश्रमविमुक्तिकरं परमभुक्तिभरं मुक्तिप्रसरं व्रजधाम निकामसुन्दरं भक्तिप्रह्वेन चेतसा प्रणम्य परमानन्दसन्दोहनिमग्ना ह्यवशिष्टां चित्रकूटाद्रिविशिष्टां यात्रां पारयितुं प्रस्थातुमुपचक्रिरे। तदानी विन्ध्येलाद्रिनिकटस्थतदुपत्यकान्तर्गत - विन्ध्येलाखण्डमण्डलस्थै (बुन्देलखण्डेति-व्यवहारभाषायाम्) भूपतिभिर्भूयोभूयोऽधिकाऽधिकाऽऽग्रहिलैः प्रार्थिताः विन्ध्येलाखण्डाऽऽखण्डलान् सन्तोषयितुकामाः सर्वत्र तत्तन्मनस्तोषं विधाय तत्तद्राज्यसीमानमलङ्कृत्य तत्कृतां सेवामङ्गीकृत्य तत्तद्राज्ये क्रमेणैकाहिकं द्व्याहिकं निवासं विधाय भगवच्चरणाऽनुरागं प्रवर्द्धय स्वकीयभगवद्भक्तिविषयकैः प्रवचनैः सर्वत्र भक्तिरसतरङ्गिणीं प्रसारयन्तः पावयन्तश्च सकलप्रदेशान् स्वाऽभिलषित-श्रीमद्दशरथराजकुमार-श्रीमिथिलेशकुमारी-श्रीसुमित्रानन्दन-चरणारविन्दपरागरागरञ्जितं, विचित्रचरित्रचित्र - चित्रित-प्रदेशं विशेषप्रवेशाकर्षकं चित्रकूटं परमरम्यं प्रणम्यं प्राप्य चातुर्मास्यमहाव्रतसमाराधनाय मासचतुष्टयमेव तत्र निवासमाकलयितुं व्यवस्थां सुस्थामकार्षुः।

चित्रं चित्र-विचित्रकूटपटलं श्रीचित्रकूटाऽभिधं
श्रीमद्रामपदारविन्दमकरन्दानन्दसन्दोहदम्।
यत्र श्रीजनकात्मजा ह्यहरहो वासं विधाय स्वयं
साक्षाच्छ्रीरिव यस्य कीर्तिममलां तीर्थोत्तमेष्वातनोद्॥

अत एवाऽत्र चातुर्मास्यं भगवदर्चन-समाराधनं विधेयमिति।

सम्प्रति विलोकयन्तु निर्गुणमिदमाकाशं समन्तात् सगुणमिवाऽभवद् अधुनाऽद्भुता वारिवाहानां नवीनैव सृष्टिः प्रसृता सर्वत्राकाशे। अद्भुतं, गन्धर्वनगरं प्रतिवसदिव मनोहरति दर्शकानाम्। परितः प्रसरणशीला वारिवाहाः नानाऽऽकारा

निराकारा अपि नवनवशैलूषभूमिकां समर्पयन्ति गगने। क्वचन मत्तमातङ्गघटामिवाऽऽद्भुतच्छटां वितन्वन्ति। क्वचिद्वक्राऽऽकारा नक्रायन्ते नाकपृष्ठेऽम्भोधराः। कदाचिद्रविकरनिकरसम्पृक्तप्रकाशितशातकुम्भगिरिकूटायितोत्तुङ्गशिखराः स्वर्णाद्रिसहोदरा इव प्रतिभासन्ते नवाम्बुदाः। निजदयिततमसुचिरविरहविधुरा कामिनीव समुपलब्धस्वप्रियवरदर्शनोल्लाससमुद्भूतहर्षोत्फुल्लरोमाञ्चेव नवनवशष्पाङ्कुरोद्भूतिविभासितानन्दनिमग्नेव विधृतहरिताऽम्बरेव सञ्जातासकलामेदिनी। तत्रत्यः कामदाऽऽचलोऽपि सकलकामद इव संवृत्तः। सोऽपि विविधतरुवरव्रततिततिसमलङ्कृतः सकलकुसुम-कन्द-मूलफलसमृद्धिवृद्धः सिद्ध इव सेवार्थमुपस्थितः शोभाशतसमावृतः प्रतिभाति स्म।। तत्रत्यास्तपःसमाधिनिरता विरताः समस्तलौकिकभोगविलासेभ्योऽपि श्रीरामानन्दाचार्याणां चातुर्मास्यसमाराधिनीं सुस्थितिमाकर्ण्य नितान्तप्रमुदितमानसाः मानसोल्लासिपरमहंससत्सङ्गसमासादनाय, प्रच्छन्ना अपि प्रकाशमुपेत्य सुहृत्संकाशाः समवेताः समभूवन्। सुदूरदूरादपिप्रदेशात् सत्सङ्गरङ्गरसिकाः परमभागवता नागरिकाः सन्तोमहान्तश्च तत्रैकत्रिताः बभूवुः। परितश्चित्रकूटोपत्यकां नवकुटीरनिकरपरिरचना सञ्जाता। सुरुचिरनगरस्थलीव चिरनिवसिता काननस्थली संवृत्ता। तदानीं चित्रकूटमपि सतां महतां साधूनामभिनवनगरमिव राजते स्म। तन्मध्ये समुन्नतप्रदेशे श्रीरामानन्दाचार्याणां कृते परिकल्पिता परमहंसोचिता सकलोपासनासाधनोपचिता, सञ्चिताऽशेषाघहारिणी मनोहारिणी सुविशाला पर्णशाला। पार्श्वोपसेविनीव सत्सङ्गिजननिषेविणीव भगवद्रङ्गस्थलीव सत्सङ्गस्थली शोभते स्म। यत्र प्रतिदिनं समागत्य भावुका भगवद्भक्ता अपूर्वं सत्सङ्गानन्दमनुभवन्ति स्म।

अथैकदा प्रसङ्गत ईश्वरवाद-विषयः अवतारविषयश्च प्रवचनीयविषयः सञ्जातः। तदा श्रीरामानन्दाचार्यैरुक्तम् :—विषयोपरि पूर्वमेव मया बहूक्तम्। सम्यक् प्रतिपादितश्च विषयः पूर्वतन परिच्छेदेषु, तथापि संक्षेपेणैतदेव कथनम् पर्य्याप्तं भविष्यति यत्-"समस्तमेव कार्यंजातं कर्तृजन्यमेव भवति।" न किमपि विना कर्त्रा किञ्चिदपि कार्यं समुत्पन्नं भवति। सर्वत्र कर्त्रपेक्षैव भवति साधारणेऽपि कार्ये। तर्हि नानाविधं, अनन्तं-अवितर्कितं-अचिन्त्यं-अद्भुतं-जल-स्थल-नभश्चरादिरूपं, जड़चेतनात्मकं, अपरिमितम्, भूतलमयं,-जलमयं; तेजोमयं, वायुमयं, आकाशरूपं, नानाऽऽकारं नानानाम-रूपसम्पन्नं, वाङ्मनोऽतीतं निःशेषं जगत्-न स्वतः समुद्भूतं, न वा न्यूनाधिकरूपेण तथाविधं भवितुं स्थातुं वा शक्नोति, अतोऽस्य रचयिता कोऽपि भवितव्य एव। यश्चास्य कर्ता न स सामान्यः कश्चन भवितुमर्हति विचित्रतमस्यानन्तगुणस्य। अतस्तथाविधानन्तशक्तिमान् कर्तुमकर्तुमन्यथाकर्तुं

सर्वसमर्थः सर्वज्ञो यः कश्चन कर्ता स एवाऽस्माकमीश्वरः । स एव कर्ता स एव भर्ता स एव विधारकः संस्थापकश्चेति । स एव चास्य लयस्थानमप्यन्ते । तत्र प्रमाण-मत्र भूयस्यः श्रुतयः—तथाहि—"सदेव सौम्येदमग्र आसीत् । "असदेवाग्र आसीत् । "स एकाकी न रमते," "स द्वितीयमैच्छत् ।" "सोऽन्वैक्षत." नाऽन्यदात्मनोऽपश्यत्, "एकोऽहं वहु स्याम्—प्रजायेय, सच्च त्यच्चाऽभवत् ।" ततः "पतिश्च पत्नीचा-भवताम्, "सह एतावान् आस ।" इत्यदिभिः श्रुतिभिर्भगवानेव सकलोपादान-कारणम् ।

एवमेव निमित्तकारणमपि भगवानेव-तदर्थप्रतिपादिकाश्रुतिरपि—तथाहि—

"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति,
यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व तद्ब्रह्मेति ।"

इत्यादि-ब्रह्मसूत्रेष्वपि "जन्माद्यस्य यतः शास्त्रयोनित्वात्" एवमेव यत्र क्रमिकसृष्टिः तत्रापि-"तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या औषधयः—ओषधीभ्योऽन्नम्, अन्नाद्भूतानि ।" इति किञ्च गीतायामपि स्वयं भगवान् दर्शयति—'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" किञ्च परमभक्ताय अर्जुनाय स्वविराड्रूपे सर्वं जगत् दर्शयति-"इहैकस्थं जगत् सर्वं पश्याद्य सचराचरम्" इति । भगवान् श्रीराम एव सकलचराचरकर्ता नियन्ता संस्थापकः । शास्त्रेषु—

उक्तञ्च—"पृथिव्यां यस्तिष्ठन् यमयति स पृथ्वीं तदधिगो-
य एवान्तर्यामी ह्यमृतवपुरात्मेत्याखिल-पः
स रामो विश्वात्मा चिदचिद्भिरूपस्त्रिजगतां
विधाता सन्त्राता निखिलविनियोक्ता नियमनः ॥
"परं ब्रह्मेत्युक्तः श्रुतिततिभिरेषः प्रतिपदं
विबोध्यः प्राणानां भजति परमाधारपदवीम् ।
प्रधानात्मा सैषः क्षरममृतमेवाऽक्षरमथोऽ
व्ययः सैवैकोऽभूत् स हि चिदचिदीशाऽऽख्यतनुभृत् ॥

अतः स एव भगवान्, श्रीरामः सर्वेश्वरः सर्वनियामकः सर्वचराचरभूतः सर्वत्र सर्वः सर्वविधः सर्वरूपः सन् क्रीडति लीलानन्दविग्रहो ह्यगणितसच्चिदा-नन्दस्वरूपः । सकलो हि-लोको, ज्योतिर्लोकः कालचक्रश्च-यथानियमं तन्निर्धारित-क्रमेण स्वयमेव प्रवर्तते । अहरहः स्व-स्वकाले न क्षणमात्रमपि नियमव्याहति-

भवति। प्रतिदिनं यथासमयं सूर्यः समुदेति सायं चन्द्रोऽपि स्वज्योत्स्नां प्रसार्य प्रक्षालयति नैशं तमः। वायुः सर्वदा वहत्येव, अग्निरपि सकलजठरगः पचति प्राणिभक्षितमन्नादिकम्। पृथिवी सर्वदैव धारयति विश्वं पालयति चाऽन्नादिसमृद्धं समुत्पाद्य। समुद्रपर्वतादयोऽपि मर्यादापरिरक्षणं विदधते। किम्बहुना यथाकालं "ऋतवोऽपि समये समये प्रतिवर्षमव्याहतगतयः क्रमेण वसन्तः, ग्रीष्मः, वर्षा, शरद्, हेमन्तः शिशिरश्च सर्वदा सेवन्ते सचराचरं जगत् निजनिजकर्मक्रियाकलापैः स्व-स्वव्यापारैश्च।

अयमपि भगवद्भावितो धर्मः सर्वेषां कृते, सकल जगत्स्थितिसमाराधकः प्रवर्तितः। तदनुसारमेव स्व-स्व धर्मं पालयन्ति सर्वे।

तन्त्रशास्त्रेष्वपि वचनम्—"धत्ते सर्वं जगद् भूतिरीश्वरेच्छा ह्यलौकिकी।
सैव धर्मो हि सुभगे! नेह कश्चन संशयः॥"

किञ्चः— प्राप्नुवन्ति यतः स्वर्गमोक्षौ धर्मपरायणाः।
मानवाः मुनिभिर्नूनं स धर्म इति कथ्यते॥ इति।

धर्मस्य व्याख्याऽपि—पूर्वपरिच्छेदेषु प्रकरणोपात्ततया कृतैव। तथापि-सूच्यते पुनः—"धारणाद् धर्ममित्याहुः" धरति विश्वम्, धारयति वा चराचरम्, ध्रियते वा जनैः, इति धर्मः। इति व्याख्यया सिद्धमस्ति यद् विना धर्मेण न कस्यापि पदार्थस्य स्थितिः सुस्थिरा भवितुमर्हति। धर्म एव स्थितिस्थापकः प्रवर्तको व्यवहारमूलं सर्वविधव्यापारस्य। सर्वाऽऽधारतया धर्म एव मर्यादारक्षकः स्वरूप-प्रतिपादकः संस्थापकश्चेति। यथा सर्वदागमनं वायोः धर्मः सर्वदा वाति इति वायुः। औष्ण्यं तेजोधारणं तेजसो धर्मः, अग्नेर्ज्वलनादिकम्। इति जलस्याऽऽप्या-यनमेव अतः ईश्वरोद्भावितोऽयमीश्वरप्रियः प्रियतमो वा धर्मः सकलसन्धा-रणत्वात्। धर्मो हि भगवद्धर्म एव भगवत्स्वरूपो भगवदभिन्नो भगवद्रूप एव सृष्टि-प्रवर्तकः। अस्यैव रक्षणभारोऽपि भगवता स्वात्मन्येव निहितः। धर्मस्य सर्वव्याप-कत्वात् यतोहि सर्वव्यापको यो भवेत् स एव तथाविधस्य तस्य रक्षकोऽपि भवितु-मर्हति। एतदर्थमेव धर्मरक्षार्थमेव भगवतः प्रादुर्भावो भवति। धर्मो हि यदा कथमपि सङ्कटापन्नो नाशोन्मुखो वा भवति, क्रियते कार्यते वा प्रबलतमैः धर्मध्वंसिभिः दैत्यदानवादिभिर्मर्यादाविघातिभिस्तदा भगवान् स्वयं प्रादुर्भूय सर्वात्मना धर्मसंरक्षणं दुष्टविध्वंसक - शक्त्युन्मूलनादिकं धर्मरक्षकरक्षणञ्च विदधाति स्वात्मशक्त्या। उक्तञ्च गीतायामपि—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ इति ।

पुनश्च परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

इदमेव भगवतोऽप्यवतार - प्रयोजनम् । धर्मसंरक्षणम्, धर्मध्वंसिजनसंहरणम्, धर्मरक्षकरक्षणम् । मर्यादाया यथावस्थितपालनञ्चेति ।

परञ्चैतदपि प्रयोजनं बाह्यदृष्ट्यैव मार्यादिकं धर्मद्रुहां ध्वसनम् धर्मपरिरक्षणञ्चेति— वस्तुतस्तु भगवान् परमकारुणिको भक्तवत्सलश्च । भक्तानामभिलषितपूर्तये स्वजनकामनानुरूपस्वात्मदर्शनाय सर्वात्मना स्वकीयानन्दप्रदानाय, सर्वदानन्दमयीं स्वलीलावलोकनसौख्यसमृद्धि दातुमेव तैः सह स्वात्मनश्चापि मनोविनोदाय निजदैवीसृष्टि - वैशिष्ट्यविभावनाय दैवीजनानन्ददानपुरःसरं सर्वविध भक्तजनमनस्तोषायैव प्रादुर्भावः । तथाहि भक्ता ह्यनेकविधा गुणप्रकृत्यनुरूपाः । सात्त्विकाः राजसास्तामसाश्चेति । स्वगुणानुरूपोपासनां च विदधते । सात्त्विकाः सत्त्वगुणधर्मैः सेवन्ते । राजसा राजसगुणोल्लासितप्रक्रियाभिः, तामसास्तु स्वस्वभावप्रकृतिप्रवृत्त्यनुरूपं रागद्वेषभावनामयं - कामक्रोधलोभमोहमद - मात्सर्याद्रिकसंवलित द्वेषविशेषपरिरञ्जितमेव भजनं कुर्वते । तामसानामिदं भजनं - सर्वात्मनाऽनन्यभावेन तादात्म्यसमृद्धिफलदं यथा भवति न तथा सात्त्विकानां न वा राजसानां तथाविधं भजनमनन्यभावनामयम् । तामसास्तु सर्वात्मना द्वेषं कलयन्तोऽहर्निशं भगवतासह विरोधोद्रेकं वहन्त; प्रतिक्षणं सम्मुखमिवावलोकयन्तः—

"तन्मनस्कास्तदालापास्तद्विचेष्टास्तदाश्रयाः ।
"तत्कर्माण्येव शोचन्त प्रत्यक्षमुपयन्ति हि ॥"

यथाऽनन्यभक्ताः श्रीगोपीजनप्रभृतयः कामोपासनापरास्तथैवेमे द्वेषोपासनारता भवन्ति । यथा भगवद्भक्ता असुराः दैत्या दानवा विद्वेषिणो भवन्ति सर्वदाऽनन्यभावेन शत्रुरूपेण भजन्ति, न तथा देवादयो विशुद्धानन्यभावनाश्रयन्ते भवन्तमिति । अतएव तेषां भगवद्द्वेष्टिणां विरोधिनां तामसभक्तानां राक्षसानां समुद्धाराय साक्षात्स्वरूपेण समवतीर्य समुद्धारं कुरुते भक्तवत्सलः । तन्मुखेनैव धर्मरक्षणं भक्तरक्षणं स्वत एव भवत्येव विरोधितत्त्वोन्मूलनात् ।

किञ्च भगवान् सृष्टिक्रमं सर्वदैव प्रवर्तमानं स्वतो वर्द्धनशीलं सम्पादयितुमेव जीवानां तथाविधां प्रवृत्तिं मनोभावनां कर्माऽऽसक्तिं, बाह्यवृत्तिञ्च प्रसारितवान्

प्रवर्तितवांश्चेति। तेन हि जीवाः संसारसंसरणव्यापार-व्यापृता एव तिष्ठेयुर्येन सृष्टिक्रमोऽव्याहतगतिकः प्रचलेत्। अत एव प्राणिनां कृते पराङ्मुखप्रवृत्तिमयानीन्द्रियाणि सृष्ट्वा प्रायच्छन् 'तथाहि —["पराञ्चिखानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्"] अतः संसारे तथाविधकर्मासक्तो जीवः स्वयं सुखदुःखसाधनानि कर्माणि कुर्वन्नेवानिशं जन्ममरणादिकं समनुभवन् सततमक्षुण्णां सर्गकलनां प्रवर्तयेत्। न सः क्वचन स्वात्मकल्याणाय प्रवृत्तिं विदध्यात्।

परन्तु परमकारुणिकः प्रभुः स्वयमेव दयार्द्रहृदयः सन् तन्मुक्तये सहजोपाय-मपि सरलया प्रदर्शितवान्="कर्म–ज्ञान–भक्त्यु" पासनामयम्। तत्प्रतिपादकानि नानाविधशास्त्राण्यपि रचयामास। पराङ्मुखानामिन्द्रियादीनामपि कथमन्तर्मुखी-प्रवृत्तिर्भवेदेतदर्थमपि सरलतमोपायः प्रदर्शितः। येन मानवः स्वयमेव तथाविध चक्रपतितोऽपि स्वात्मोद्धरणं कर्म कलयेत्। अत एव बन्ध-मोक्षहेतुकं प्रेमबन्धनमेव सृष्टवान् भगवान्। प्रेम्णैव जनो बन्धनं लभते प्रेम्णैव च मुक्तिमपि।

तत्कारणञ्च मनः सर्वेन्द्रियाध्यक्षम्। तदैव मनः परमात्मनः साक्षादव्यय-पुरुषस्य-पञ्चकलासु मध्यमकलारूपम्–यथा "अव्ययपुरुषस्य पञ्चकला, आनन्द-कला, विज्ञानकला, मनःकला, प्राणकला, वाक्कला," इति, अत्र मनः शब्दो न लौकिक प्रसिद्ध मनोवाचकः। तन्मनस्तु-बहुपश्चात् समुत्पन्नं देहाद्युत्पत्तिकाले। इदं मनस्तु-अव्ययपुरुषस्य तृतीयाकला सर्वेषां तत्त्वानामादिभूताऽत्यन्त सूक्ष्माकला-सूक्ष्माऽवस्थारूपा "श्वोवसीयस" नाम-रूपा वेदे प्रसिद्धा "बृहदारण्यकोपनिषदि— "तन्मनोऽकुरुत" इत्यादिभिः प्रतिपादितं मूलतत्त्वात्मनः प्रादुर्भूतं यत् "तन्मन" एव। तथैव-ऋग्वेदसंहितायामपि :—("कामस्तदग्रे समवर्तताधि मनसोरेतः प्रथमं-त्तदासीत्।") अत्रापि सर्वप्रथमं स्वेच्छा प्रवृत्तिसहितस्य मनस एव समुद्भूतिः प्रदर्शिता। अतो 'मनः' एव मोक्षसाधनं, बन्धनहेतुकमपि। उक्तञ्च गीतायामपि :— ("मन एव मनुष्याणां कारणं बन्धमोक्षयोः।") अत एव अव्ययपुरुषस्य पञ्चक-लासु मध्यमस्थाकला "मनः" एव। यतो हि उभयकर्मसाधिका कला। यदा हि मनो नीचैः प्रवृत्तिकं भवति–तदा स्वपश्चात् विद्यमानयोः प्राणकला-वाक्कलयोः सम्मिलति-यदा मानवस्य सृष्टिक्रमाऽभिमुखीप्रवृत्तिर्भवति। तदा सः सर्गक्रमगतः संसारचक्रपतितो जीवः कर्मबन्धनगतस्तथाचरति तथैव च कर्मबद्धो भवति। इति बन्धकारणं भवति मनः।

यदा च मनसः प्रवृत्तिः स्वपूर्वस्थितयोर्विज्ञानकला-आनन्दकलयोः सम्मिलितं भवति मनः, तदा जीवोविज्ञानादानन्दकलानिलीनः साक्षाद्भगवतोरूपमनुप्राप्तः

सम्पन्नो भवति तदा स मुक्त एव। अतो मोक्षसाधकमपि मनः। अतएव भगवान् समुद्दिधीर्षुः स्वकरुणावरुणालयत्वं प्रकटयति जीवानुद्धर्तुं मनसस्तथाविधां प्रवृत्तिं वितनुते - ततः स्वयमनुगृह्णाति स्वयमेव वृणुते। उक्तञ्च—"यमेवैष वृणुते, तेन लभ्यः" इति श्रुतिः।

यद्यपि सृष्टिपरम्परा परिचालयितुमेव पराङ्मुखानीन्द्रियाणि रचयामास, किन्तु यदा जीवो ततः खिन्नोभवेत् स्वमुक्तिमपि कामयेत तदा तदर्थं प्रवृत्ति-निवृत्ति-बोधकानि शास्त्राण्यपि विरचयामास। तदनुसारं प्रवर्त्तमानो जीवो यथारुचं प्रवृत्तिमयमुपायं स्वीकुर्यात् किं वा निवृत्तिमयोपायञ्चेति सर्वविधसाधनानि च फलानि शास्त्रेषु वर्णितान्येव, यथा रोचेत तथा कुर्यात्। तत्रापि भगवत इच्छैव कारणं भवति—उक्तञ्चोपनिषत्सु "तमेव साधुकर्म कारयति यमेवोर्द्ध्वमुन्निनीषति। तमेवाऽसाधुकर्म कारयति यमेवाऽधो निनीषती" इति। तथापि भगवान् न जीवात्मनः स्वेच्छाविरुद्धं किमपि कारयति। स तु केवलं प्रवर्तकः समुपदेशकश्च किन्तु जीवात्मा स्व-स्वकर्मकरणे स्वतन्त्रः। स हि स्वपूर्वजन्माऽनुशयानुरूपमेवाऽऽचरति। यदा हि सः क्वचन श्रान्तः खिन्नो भवति कामयते च विशुद्धभावेन भगवतः शरणं स्वमुक्त्युपायभूतं, तथाविधदृढनिश्चयं तं ज्ञात्वा प्रभुस्तं तथा-प्रेरयति। तदनुसारं सर्वात्मना व्यवहरति तदा स भगवदभिमुखो भवति मुक्तश्चेति। अतो भगवन्निर्दिष्ट-कर्तव्या-ऽकर्तव्यं तत्तत्फलानुगुणं विज्ञाय जीवः प्रवर्त्तते चेत् तदा स मुक्तो भवत्येव—

उक्तञ्च— ("ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः।" (गीतायां ३।३१)

इदमेव मोक्षसाधनम्। किञ्च ये विरुद्धमाचरन्ति - ते बन्धननिगडिता एव भवन्ति।

"ये त्वेतदभ्यसूयन्तो नाऽनुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः॥" (गीता ३।३२)

इत्थम्-विपरीतप्रवृत्तिका जीवाः स्वच्छन्दाचारविहारिणो भवन्ति, ये हि सर्वदा यथेच्छमाचरन्तोऽनिशं पापाचरणरता एव तिष्ठन्ति, सर्वत्र सर्वदा पापसङ्ग्रहमेव कलयन्ति - धर्माचरणं सर्वथा परित्यजन्ति, धर्मत्यागादधर्मप्रवर्तनात् पृथिवी चापि भाराक्रान्ता यदा भवति, धर्माचारपरायणा जना सर्वथा संरुद्धगतयो भवन्ति महामहासङ्कटापन्नाः, धर्मस्थानानि - देवायतनादीनि, तीर्थानि, प्रभवन्ति दूषितानि पापिष्ठैः दूष्यन्ते च कुलस्त्रियः समुत्पाद्यन्ते च कुलदूषणानि कर्माणि, सन्ततयश्च, प्रसरति च सर्वत्र पापाचारः। जिघांस्यन्ते च गावः, समुत्सार्य्यन्ते शिष्टाचारादि-

सन्मार्गपरम्परा। सन्त्रास्यन्ते द्विजदेवादयः, समुच्छिद्यन्ते च भगवद्भक्तिसाधनानि। पीड्यन्ते च सज्जनाः साधवो धर्माधारभूताः प्राणिन, स्तदा समवतरति भक्तपरवशो-भक्तभावनो भगवान् पुनः—"धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" "परित्राणाय साधूनां" मित्यादि स्वप्रतिज्ञाऽनुसारम्। इदमेव-अवतारप्रयोजनम्।

(१) अत्र कश्चिदवतार विषये शङ्कामुत्थापयेत् यद् भगवान् कर्तुमकर्तुमन्यथाकर्तुं वा सर्वशक्तिमानस्ति तर्हि किमर्थं स भूमाववतरति स्वेच्छयैव तत्रस्थित एव किं न स्वाभिलपितं विदध्यात्? तदर्थं पूर्वमेव प्रकाशितं यद् भगवान् स्वात्मनोविनोदेन सहैव सर्वविध सात्विक-राजस-तामसभक्तानामुद्धारार्थं तेषामभिलपितानि पूरयितुं भक्तानामनुरञ्जनार्थमेव तथाविधे कर्मणि व्यापारे वा. भगवान् स्वयमवतरति। साक्षाद् दर्शनदानेन, तैः सह क्रीडनेन, समालापेन सहयोगेन, यथा यथा भक्ताः कामयन्ते यथा तथैव तत्तत्प्रकृति-प्रवृत्त्यनुसारमेव भगवान् तानपि भजति स्वप्रतिज्ञानुसारं। यथा गीतायाम् "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।"

ये हि वयस्यभावेन भगवता सह क्रीडितुं वाञ्छन्ति तैः सह भगवानपि तथैव वयस्यभावेनैव तानपि भजति। श्रीमद्भागवते दशमस्कन्धे बालक्रीडायां वाह्यवाहक क्रीडायां स्वयं भगवानपि "उवाह कृष्णोभगवान् श्रीदामानं पराजितः।" वयस्यवरं श्रीदामानामानं पराजितो भगवान् स्वपृष्ठोपरि तं स्थापयित्वा स्वयमश्वरूपेण तं तावद्दूरं 'यावत्सङ्केतस्थलं' प्रोवाह। इति भक्तानुरञ्जनार्थं भगवांस्तथाकरोति। याश्च गोपिकाः स्ववल्लभं मत्वा भजन्तिस्म भगवानपि तथैव ताः समभजत् ये च कंसाद्याः शत्रुभावेन तं भजन्ति स्म भगवानपि तांस्तथैवाभजत्। यतोहि तामसा भक्तास्ते युद्धप्रिया आसन्, चाणूर मुष्टिक-शलतोशल-प्रलम्बाद्यादयो मल्ला मल्लयुद्धक्रीडाऽभिलिप्सवः सन्तः शत्रुभावेन भगवन्तं भजन्ते स्म अतो भगवानपि तांस्तथैव मल्लो भूत्वा मल्लक्रीडाऽभिरतस्तैः सह तथैव मल्लायितो युद्ध्वा तान् निहत्य स्वात्मसात्कृतवान् मुक्तिञ्च तेभ्यः प्रायच्छत्। अतोऽत्र सन्देहो न कार्यो यद् भगवान् किमर्थमवतरति। इति। भक्तानामनुरञ्जनाय तांस्तोषयितुमेवावतरति।

(२)—न वाऽवतार ग्रहणेन च भगवतो भगवत्त्वं शक्तिशालित्वं वा परिक्षीणं भवति-यथा लोके कश्चन सम्राट् सकलराजराजेश्वरो वा स्वकीयैः बालकैः सह स्वात्मनोमनोविनोदाय तेषां वा तोषाय यदि-तथैव वयस्यभावमास्थाय रमते-तेन किं तस्य साम्राज्यसंचालकत्वं राजराजेश्वरत्वं वा प्रणश्यति? न

कदाचन कस्यचन बालाऽनुरञ्जनेन महत्त्वं परिहृतं भवति प्रत्युत तस्य बालप्रियत्वं वत्सलत्वमेव सिद्धयति । एवमेव भगवतोऽपि तथैव भक्तवत्सलत्वमेव ।

अत्र भूमौ भगवान् यदा अवतरति तदा भगवतः प्रादुर्भाव-एव भवति न तथा सामान्य मनुजवत् गर्भवासादि-विधानकष्टमनुभूय कस्याश्चन मातुर्गर्भतो न समुत्पत्तिर्भवति अपितु तदानीं यथा तड़ागादौ सर्वत्र व्याप्तायां कुमोदिन्यां किं वा परितः प्रसृतेन शैवालेन जलदर्शनं विद्यमानेऽपि जले, यदा शैवालापसारणं भवति तदा जलमपि प्रकटितं दृश्यत एव एवमेव सर्वत्र विद्यमानेऽपि भगवति न तत्कृपां विना अज्ञानरूपशैवालापगमं विना न हि भगवतो दर्शनं भवति, किञ्च अवतरणं अवतार एव- भक्तजनाभिलषितरूपेण भगवतः प्रकटनम् । भगवतः सर्वदैव प्रादुर्भाव एव भवति न मानववत् जन्मधारणम्, यद्धि जन्मशब्देन यद् व्यवहारः स तु लोकव्यवहारदृष्ट्यैव सर्वभक्तजनमनोविनोदाय, महामहोत्सवसमाराधनाय यथा जन्माष्टमीरामनवमी, वामनद्वादशी नृसिंहचतुर्दशी । नैतेषु दिनेषु मनुष्यवद्भगवतो जन्म, अपितु सद्यः प्राकट्यमेव, जन्मशब्दः पर्य्यायत्वं भजते । उक्तञ्च भागवते दशमस्कन्धे "निशीथे तम उद्भूते जायमाने जनार्दने । देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद् यथाप्राच्यां दिशीन्दुरिव पुष्कलः" पुनः सैवमाता स्तौति= स्वरूपञ्च दृष्ट्वा भृशमाश्चर्यचकिता भवति, श्री वसुदेवः कथयतिभि—"त्वमस्य-लोकस्य विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर !" पुनः भयभीतो निवेदयति— "स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाऽधुनैवाऽभिसरत्युदायुधः" श्री देवकी अपि :— "उपसंहर विश्वात्ममदोरूपमलौकिकं शङ्खचक्रगदापद्म श्रियाजुष्टं चतुर्भुजम् ।" इति एवमेव श्रीकौसल्याऽपि श्रीरामस्वरूपमालोक्य प्रार्थयति—यद् भगवन् ! बालरूपं सामान्यमेव धृत्वा, मादृशान् भक्ताननुरञ्जय !" तदा प्रादुर्भूतो भगवान् मन्दस्मितं कृत्वा पितरौ कथयति यत् – "एतद् वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे, नान्यथामद्भवं ज्ञानं मर्त्यलिङ्गेन जायते । अतः सर्वत्रैव भगवतः प्राकट्यमेव, प्रादुर्भावमेव जन्मशब्देन व्यवहृतं भवति । यथा प्राच्यां दिशि इन्दोः आविर्भावो भवति"-तदा जनः कथयति – चन्द्रोदयः समजनि । एवं भगवतः प्रादुर्भावेऽपि व्यवहारः ।

यदा च माता सर्वात्मना भगवतो बाललीलादिदृक्षुः प्रार्थयते नैव तेरूपं सर्वदा योगिध्येयमीदृशं द्रष्टुं कामये, अहं बालरूपं त्वां लालयितुकामास्मि । इति, ततो भगवान् सद्य एव "बभूव प्राकृतः शिशुः, रुरोद च ततः सद्यः" इति स्पष्टं प्रतिपादितमस्ति शास्त्रेषु ।

(३) किञ्च जन्मग्रहेण-प्रादुर्भावेऽप्यस्ति महदन्तरमेव। यतोहि-प्रादुर्भावस्तु स्वतन्त्रः स्वेच्छाऽनुरूपः। जन्म तु कर्मबन्धनाऽधीनमेवेति महान् भेदः। प्रकटने प्रादुर्भवने न भगवतो जन्मादिबन्धनम्। स्वेच्छामयलीला-विग्रह-धारित्वात्।

(४) किञ्चात्रैतदपि न शङ्कनीयम् यथा निर्विकारात्मको जीवः शरीरधारणात् शारीरिकसम्बन्धात्-विकारी भवति। एवमेव भगवानपि मानवदेहधारणात् विकारी भवितव्यः। इति न। यतोहि भगवान् प्रकृतेः परः नहि प्राकृतिका गुणाः भगवन्तं स्प्रष्टुमपि शक्नुवन्ति न ह्यग्नौ तृणादयः पतिताः स्वप्रभावं पातयितुं शक्ता भवन्ति प्रत्युत त एव तस्मिन् स्वयं भस्मसाद्भवन्ति यतोहि भगवान् सर्वज्ञः सर्वशक्तिमान् सर्वसमर्थोऽतो न प्राकृता गुणाः तस्मिन् प्रभावशीला भवन्ति, भगवतो धर्मसमुद्भूतत्वादात्मनः। अर्थात् भगवतो नित्या धर्माः सच्चिदानन्दाः सन्ति तेभ्य एव माया हि स्वयमेव सृष्ट्यर्थं तान् गुणान् सत्त्व-रजस्तमोरूपान् न्यगृह्णात्। किन्तु जीवस्त्वल्पज्ञो न तथाविध शक्तिमान्, अतो मायिकागुणास्तं स्ववशीकुर्वन्ति। जीवः स्वयमेव प्रकृतिगुण बन्धने निपतति अतो विकारी भवति। न तथा सर्वज्ञ ईश्वरः।

( ५ ) किञ्चैषाऽपि शङ्काऽत्र नाश्रयणीया—यद् भगवांस्तु निराकारः सः कथं साकार-रूपेण प्रादुर्भवति, यदि साकारः स, तर्हि कथं निराकारो भवितुमर्हतीति। यतो हि भगवान् विरुद्धधर्माश्रयः, न स साधारणजनवत् एकरूप एव तिष्ठति। न वा प्राकृतं प्रकृतिजन्यमेकविधमेव सर्वथा अपरिवर्तनशीलं रूपं धत्ते स तु सर्वतन्त्रः स्वतन्त्रो विविधविधाऽऽकारवान्। अतोऽस्य नैकविधः कश्चन सुस्थिर आकारोऽस्ति येन सः तदाऽऽकार एव स्वीक्रियेत। यथा मनुजः मनुष्याकारः स पशुरूपस्तदाकारवान् न भवति पशुर्वा न मनुष्याकारेण स्वात्मानं कलयितुं प्रभवति, भगवांस्तु—'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।' कथं तर्हि तमेकमात्राकारं वर्णयितुं शक्नुयात्। तर्हि निराकार इति नाम कथं तदर्थस्तु—"निर्गता आकारा यस्मात्—अर्थात्—तस्मादेव भगवतः सर्वे यावन्त आकाराः प्रतीयन्ते ते सर्वे एव निःसृताः सः स्वयमेव सर्वाऽऽकारः सर्वरूपः समभवत्। श्रुतिरपिः -- [ "एकोऽहं बहुस्स्यां प्रजायेयम्" ] स एव "नानारूपः संबभूव" ' किञ्च—[रूपं रूपं प्रतिरूपो बभूव] स ह एतावानास।" "स सर्वः सर्वरूपः" इत्यादि। यस्य असंख्याः संख्यातीता आकारा भवेयुः सः किमाकारः केन आकारेण केन वा नाम्ना व्याहर्तव्यः अतो नैकाकारत्वात् सः निराकारः। अर्थात् यथा वयं प्राकृतगुणरूपः तथाभूताऽऽकारवन्तः स्मः

न तथा भगवान् स तु प्राकृतगुण-धर्माद्याकारादिभिन्नः प्राकृतधर्माऽनाश्रयः, अप्राकृतनिखिलधर्मरूपश्चेति अतः प्रकृताकारहीनो निराकारः, न सः प्राकृत-आकाररूपोऽतो निराकारः स तु मनुष्यः पशुः पक्षी, जलचरः स्थलचरो नभश्चरश्चेति नैकविधः तर्हि किमाकारः स भवितुमर्हति, अतः स निराकारः, तथा च सर्वाऽऽकारत्वात् सर्वरूपत्वाच्च साकारोऽपि स एव। अत एव विरुद्ध-धर्माश्रयः। स मनुष्यरूपोऽपि पशुरूपोऽपि यथा नृसिंहः। स मनुष्यरूपोऽपि मत्स्यरूपोऽपि मनुष्यः सन् वराहरूपोऽपि, अतः कीदृशः सः? न मनुष्यरूप एव न वा सिंहरूपोऽपि किन्तूभयरूपोऽपि सः। अत एव स लौकिकव्यवहारातीतः। नैकविधः। बहुरूपोऽरूपश्चेति।

(६) किञ्चात्र भगवति कथमेकरसत्वमवतारग्रहणेन स्थितमित्यपि न शङ्कनीयम्। यतो हि सः सर्वदैक-रसोऽपि समुद्र इव— नानारसगुणशालीचापि-यथैकविधं जलं जम्बीर - वृक्षेण पीतं जम्बीररसाकारत्वं भजति आम्रवृक्षेण पीतञ्च तत् आम्ररसत्वं श्रयते। द्राक्षालतया पीतं द्राक्षारसतां याति। इत्थमेवंविधोरसोऽपि नानारूपत्वं दधाति एवमेव भगवान्—नानारसरूपः गन्धादिरूपः श्रुतिश्चापि :—"स सर्वः सर्वरसः सर्वगन्धः सर्वरूपः सर्वमिदमभ्यात्तः।" इति। वर्णयति महिमानं भगवतः श्रुतिरपि।

(७) अत्रैवास्ति विप्रतिपत्तिः केषांञ्चन यद्धि भगवान् भूमाववतरति, तदा भगवतो निजं स्थानं गोलोकं नित्यसाकेतधाम, किं वा वैकुण्ठस्तु भगवता विरहित एव तिष्ठति यतो हि भगवांस्तु तं परित्यज्य धरायामवतरितोऽभूत्।

इति न शङ्कनीयम्, यतो हि भगवान् सर्वत्रव्यापकः सर्वदाविद्यमानः सदैव विराजमानः "सर्वरूपः सर्वगतः, सर्वमिदमभ्यात्तः" इति श्रुतिसिद्धः सर्वत्रैव स्थितिशीलः। भगवांस्तु अनन्तकोटि-ब्रह्माण्डनायकः सर्वजगन्नियन्ता, सः किं स्वल्पतमाय कार्याय सर्वं विहाय अनन्तशक्तिशालिप्रभुः साक्षादवतरति, न हि केनचिदनुचरेणैव सम्पादनीयाय कार्याय स्वयं स्वामी यत्र कुत्र गच्छति। किं वा सामान्यदैत्यदानवादि-विध्वंसनाय किं वा मर्यादायाः संरक्षणाय सर्वांशेन समवतरणाय नावश्यकता भवति, तत्तु स्वकीयेनैकांशेनैव कार्यं सम्पाद्यते, अतो न स्वयं युगे युगे साक्षात् प्रभुः प्रायोऽवतरति आविर्भवति चांशेनैवावतरति च उक्तञ्चापि गीतायाम्— "तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः। इति "परित्राणाय साधूनां विनाशाय च दुष्कृतां धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।" किञ्च—"तदात्मानं सृजाम्यहम्" इति।

किञ्च भगवांस्तु सर्वव्यापकः सर्वत्रैव स्थितः स्वेच्छयैव प्रकटस्तिरोहितश्च भवति, भक्तानुग्रहकातरो यदा भवति तदा स्वयं तावत्कालिकमावरणं दूरीकृत्य-तिष्ठति अतः सर्वदृग्गोचरो भवति। साक्षात्सकलमेव कार्यञ्च सम्पादयत्येव। अन्यथा सर्वत्रविद्यमानोऽपि न दृष्टिपथमुपयाति। तिरोभवनरूपावरणापसारणपूर्वक-प्रकटीभवनमेवावतरणम्, अवतारग्रहणम् वा कथ्यते जनैः। अन्यथा तु नित्यसिद्धानां भक्तानां श्रीगोपीजनानां, श्रीमद्धनुमदादीनां वा सर्वदैव साक्षात्कार एव भगवतो न तत्र तिरोभावः। इति रहस्यम्। तथा च सर्वत्र विद्यमानस्य तु न कुत्रापि दृश्यतेऽनुपलब्धिः आवश्यकतानुसारं भगवान् स्वांशेन पृथग्रूपेणापि यावदावश्यकत्वं तावत् भिन्नाऽऽकारेण रूपेण- लौकिक इव शरीरधारी च प्रकटितो भवति—सर्वांशेन पूर्णविग्रहेण नित्यसच्चिदानन्दस्वरूपेण तु सः नित्यसाकेतधामादौ गोलोक-वैकुण्ठादौ नित्यधाम्नि स्थितिरेव। अतो भगवत आविर्भाव-तिरोभावावेव—"अवतार-अनवतारशब्देन व्यवहृतौ भवतः। नात्र तथाविधाशङ्का परिकल्पनीया।

(८) एतेनैव क्रमेण सर्वदा सर्वत्रविद्यमानस्य भगवतः स्वेच्छयाऽऽविर्भाव-तिरोभावाभ्यां स्वात्मनः सकलजनसाधारणदृग्विषयकरणेन कर्मणा व्यवहृत "अवतार" नाम्नाऽपि न भगवतः प्राकृतदेहादिबन्धनकल्पनाया अप्यवसरः। अनन्तलीलाविग्रहस्य परमात्मनः तत्स्वरूपेण अप्राकृतेन प्रकटीभवनरूपावतारेण न देहादिसम्बन्धः। स्वस्वरूपणैव समुद्भूतत्वात्। प्राकृतदेहादिकल्पनाया आवश्यकतैव नास्तीति। यथा हि वन्दीगृहं-प्रविष्टः कारागृहस्थवन्दीजनैः सह समालापं विदधत् तत्रस्वल्पतमं कालं तिष्ठन् कश्चिन्महाराजो नृपतिः, तत्रत्यां व्यवस्थां किंवा वन्दीजनानामपराधान् विज्ञातुकामः तदानीं कारागृहं गतः किं वन्दीशब्देन व्यवहृतो भवति? किञ्च सः सापराधः सन् प्रविष्टः किमु? तर्हि किमर्थं कथङ्कारं वा कारागारमध्यगतोऽपि बन्धननिबद्धो भवितुमर्हति। स तु साक्षात् स्वयमेव वन्दीजनानां भाग्यविधाता बन्धन-मोक्षदायी, नियन्ता स कथं क्षणमात्र वन्दीगृहगतो वन्दीशब्दव्यवहृतो भवितुमर्हेत्। एवमेव सर्वतन्त्रस्वतन्त्रः प्रभुः क्षणमात्रमिव कालं, यावत्कार्यपर्य्यन्तं, देहं धृत्वा भक्तवत्सलत्वात् भक्तानुग्रहकातरः सन् तैः सह क्रीडार्थं स्वावतारप्रयोजनं वा सम्पादयितुं भूमेर्भारावतारणायैवाऽवतारितोभूत् स कथं सामान्यमनुजवत् देहबन्धनादिक-बन्धनगतो भवेत्। या च भगवतोऽपि देहधारणादिना देहादिसम्बन्धिनी कृतिर्विलोक्यते सा भगवतः स्वेच्छयैव विधृता ननु मानुषवत् स्वकर्मजन्या। प्राकृता वा भवितुमर्हति। सर्वतन्त्रस्वतन्त्रत्वात् कर्तुमकर्तुमन्यथा वा कर्तुं समर्थत्वान्निःस्पृह - निरीहत्वाद् वा।

(९) ये च भगवतोऽवतारविषये शङ्कालवः सन्तो निगदन्ति यद् भगवतोऽवतार एव न भवति-सैषाऽवतारवादकल्पना तु कपोलकल्पनैवेति। परञ्चैं ते समुपेक्षणीयाः क्षन्तव्याः परिहृतसत्सङ्गाः, अल्पज्ञाः, बहुज्ञंमन्याः ज्ञानलवदुर्विदग्धा दग्धाश्च लोकैषणादिव्यामोहदहनैः। शास्त्रचिन्तन - श्रवण - मननवञ्चिताः सञ्चितानि-कुटिलकुतर्ककुमतिवृत्तयो न शक्तास्ते भगवल्लीलारहस्यतत्त्वं वेदितुम्। भ्रान्तमति-त्वात्। तथापि - सन्तोषार्थं कतिपयवैदिकश्रुतिप्रमाणानि समुपस्थाप्यन्ते भगवतोऽवतारविषये :—

"रूपं रूपं प्रतिरूपो बभूव, तदस्य रूपं प्रतिचक्षणाय"—ऋग्वेद मण्डल ६, अ० ४–
"इन्द्रो मायाभिः पुरुरूप ईयते युक्तं ह्यस्यहरयः शतादश।" सूत्र० ४७ का मन्त्र १८

किञ्च—यजुः संहितायां ३२ अध्यायस्य ४ मन्त्र :—[ एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः सउ गर्भे अन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतो मुखः।" ] अर्थात्-स हि भगवान् सर्वत्र दिक्षु विदिक्षु व्याप्तोऽपि सर्वतः प्रथमं हिरण्यगर्भादिरूपेण समुद्भूतः। स हि सकलब्रह्माण्डे विराजमानः, स एव मनुष्य-तिर्यगादिरूपेण समये समये प्रादुर्भवन् भक्तवत्सलः स्वदर्शनेन भक्ताननुगृह्णाति, स्वात्मनश्च सर्वत्र स्वव्याप्तिं, सर्वरूपत्वम्, सार्वकालिकीं स्थितिं च प्रकटयितुं सर्वत्र सर्वरूपेण सर्वाकारेण अक्लिष्टकर्मणा, अन्यशास्त्रादिसाधननैरपेक्ष्येण निमिषमात्रे-णैव सर्वं सर्वविधं कार्यं सम्पादयितुं स्वात्मनः कृतित्वं द्योतयितुञ्च मत्स्य-कूर्म-वराह-नृसिंहादिरूपेण प्रादुर्भवन् भक्तान् पोषयति, दुष्टान् दमयति, वेदादीन् प्रवर्तयति-धर्मादींश्च स्थापयति। दयापारावारः सः भक्तेच्छापूरको दैवी जीवानानन्दयितुं, सर्वान् प्राणिनः प्रीणयितुम्, सकलोद्धारार्थं तत्तत्प्रवृत्त्यनुसार तान् तान् स्वाभिमुखीकृत्य "कामाद्, क्रोधाद् भयाल्लोभाद् द्वेषाद् वैरभावाद्वाऽपि भक्तजनमनोऽनुरूपं स्वात्मनो रूपं कलयन् राजस - तामस - सात्त्विकप्रवृत्तिपरिपुष्टमानसान् - तत्तद्भावनाऽनुसार-मेव स्वयं तथाविधः प्रकटयन् तथैवाऽऽचरन् - तत्तन्मनोऽनुकूलं चेष्टमान एव तैः सह व्यवहरन् - तन्मनस्तोषं तदुद्धारञ्च विदधाति। स्वकीयानामनुरञ्जनाय च भगवान् क्वचिद् दासत्वमपि विधत्ते। सखित्वं प्रकटयन् - सूतकर्मापि कुरुते यथाऽर्जुनस्य। भक्तपरवशश्च - वयस्यैः सह क्रीडारतः सन् "उवाह कृष्णो भगवान् श्रीदामान परा-जितः" ( भागवते दशमस्कन्धे ) इति भक्तमनोरञ्जनाय च सः यशोदानीनां बन्धन-गतोऽपि भवति स्वेच्छया—

"स्वमातुः स्विन्नगात्रायाः विस्रस्तकबरस्रजः। दृष्ट्वा परिश्रमं कृष्णः कृपयासी-त्स्वबन्धने इति (भागवते १०स्कं० ९ अ०१८ श्लो०) अत्र स्पष्टमेवाऽस्ति यद् भगवान्

स्वमातरं श्रान्तां खिन्नां विलोक्य स्वयमेव कृपया बन्धनगतोऽभूत्। परञ्च नहि परबन्धने ) "कृपयाऽऽसीत् स्वबन्धने" आत्मनाऽऽत्मन एव बन्धने स्थितः स्वातन्त्र्येण। तदर्थमेव शुकाचार्याः वर्णयन्ति - यत्—"नायं सुखापो भगवान् - देहिनां गोपिका-सुतः। ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह।" इति।

किं बहुना—सात्त्विक राजस तामसप्रकृतिकानां भक्तानां भावनानुसारमेव भगवान् स्वयमप्यनुभूतिविषयतामेति-यथा :—(भागवते १० स्कं० ४३ अ० १८ श्लो०).

"मल्लानामशनिर्नृणां नरवरः, स्त्रीणां स्मरो मूर्तिमान्,
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता, स्वपित्रोः शिशुः।
मृत्युर्भोजपतेर्विराडविदुषां, तत्त्वं परं योगिनां,
वृष्णीनां परदेवतेति विदितो रङ्गंगतः साग्रजः॥" इति।

तत्रैव च भगवतः श्रीरामचन्द्रस्य विषये ( सामवेदे उत्तरार्चिके अ० १५ खं० २ सूत्र १ मन्त्र ३ ) "भद्रो भद्रया सचमान आगात०"

अर्थात् कल्याणकारिण्या श्रीजनकनन्दिन्या सह कल्याणकारी भगवाञ्छ्रीरामो वनं जगाम। इति। एवमन्यावतारविषयेष्वपि—

"ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति" इति शतपथे।

इत्थमवतारवादे शतशः सन्ति शास्त्रेषु प्रमाणानि न तत्र शास्त्रव्यासङ्ग-वञ्चितैरल्पज्ञैः कुत्राप्यनर्थशङ्का करणीया। या च साम्प्रतमास्माकीने हृदये शङ्को-देति-तस्याः कारणमस्ति स्वाध्याय - शास्त्रमननाभावः। शास्त्रेष्वेव श्रद्धाऽभावो वा। अत एवोक्तं पूर्वाचार्यैः —यत् "स्वाध्यायोऽध्येतव्यः" स्नातकोत्तरोपदेशेऽपि— "पुनः पुनरुद्घोषितमाचार्यैः –"स्वाध्यायान्मा प्रमद।" अन्यत्रापि—"स्वाध्यायः परमं तपः" तपःस्वाध्यायनिरतम् – "इति वाल्मी०। ( गीतायामपि— ) "स्वाध्यायाऽभ्य-सनञ्चैव वाङ्मय तप उच्यते।" इति। अतः स्वाध्यायाऽभावे एव "कुतर्क-शङ्काः प्रविशन्ति मानसे" अतोऽहरहः शास्त्राऽऽलोडनम् सश्रद्धं सत्सङ्गश्च न क्वचन परिहार्यः।

इत्थमवतारवादविषये सम्यक् प्रतिपाद्य प्रवचनं समाप्तमकुर्वन्। सर्वे जनाः मन्त्रमुग्धाः सहसा जागरिता इवाभवन्, जय जय घोषपुरःसरं सत्सङ्गिनो यथास्थान प्रस्थिताः श्रद्धा-समृद्धाः समभूवन्।

अथैकदा श्रीमन्तो रामानन्दाचार्याः "कामद-गिरेः" परिक्रमां कर्तुं प्रस्थिताः। तैः सह सर्वे सन्तो महान्तो नागरिकाः समागत-चातुर्मास्यविधि-सम्पादकाः भक्त-

वराः प्रतस्थुः। शनैः शनैः प्रक्रामन्तः स्वामिमहानुभावाः तत्र समागता यत्र भगवन्तं श्रीरामं पुनः प्रत्यानेतुं सपरिकरो भरतः समायातः। तत्र श्रास्त्रोः परस्पराऽवलोकनेन सहसैव सुलभस्नेह स्रोतस्वती नयनमार्गतः प्रावहत् भगवतो रामस्य भरतस्य चेति। तदेव तात्कालिकं दृश्यं स्मारं स्मारं।

भक्त्युद्रेक वशंवदाश्च भगवद्भावानुषङ्गस्थिराः
स्वात्मन्येव निरन्तर स्मरणतस्ताद्रूप्यसम्पादनात्।
रामत्वानुभवादुपेत भरतं प्रोद्भाव्य साक्षात्स्थितिं
वृक्षं कञ्चनमालिलिङ्गुरिहतं मत्वाऽश्रुपूर्णाऽऽननाः॥

सर्वे मण्डलमारचय्य समवेतास्ते सहोल्लासिनः
स्तब्धाः भावविभावितांश्च सहसाऽऽलोक्य स्वनेतृंस्तथा।
आचार्या अपि तान् स्व-भाव-महितान् सम्बोध्य मेलापकीं
गाथां श्रावयितुं हि राम-भरतप्रेम्णः समावर्णयन्॥

अपि भगवद्भावविभावितान्तःकरणाः! सहृदयाः सुहृदः! तदेतदेव स्थलं यत्र परमभागवतोऽनन्यगुणचरितः श्रीभरतो भगवन्तं श्रीरामं पुनः श्रीअयोध्यां प्रत्यानेतुं प्रयत्नं कर्तुं तदनुरञ्जनं कुर्वन्नलौकिकीं निजदासभक्तिं वितन्वन् महामहाग्रहेण प्रार्थयामास। स्वमात्रा लब्धवरेण प्राप्तसाम्राज्योऽपि श्रीरामचरणारविन्दमकरन्दाऽऽस्वादनमेव वरं मन्यमानस्तथाविधं राज्यं विना रामेण तृणाय मन्यमानो विषमिव परित्यज्य श्रीरामचरणशरणमेव वरणं कृतवान्। यावद् भगवतः श्रीरामस्य दर्शनं न कृतवान् तावद् भावाविष्टो जनतासमक्षे तद्राज्याय स्वमातरं प्रत्यपि तथाकटुभावं प्रादर्शयत्—यत्—

[वाल्मी०रा०२०।७८।२२] ["हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीम्।
यदि मां धार्मिको रामो नासूयेन्मातृघातकम्।"]

इत्यत्र भगवान् वाल्मीकिः प्रत्येकपद सार्थकमेव निदधाति—"इमां पापां, कैकेयीं, दुष्टचारिणीम्" एतेन रामभक्तिविहीना रामद्वेषिणी, इदानीं संवृत्ता। रामं प्रतिदुर्भावभरितत्वात् दुष्टचारिणी। इमां इति सम्मुखे (मानसे वा) दृश्यमानां, तथाविधकुटिलभावभरितमानसाम्। यतो हि सा कैकयदेशोद्भवा - तथाविधदेशस्य-तत्रत्यराज्ञश्च सहवासात् तादृशभाववती संवृत्ता पुनश्च 'पापाम्' पतिमृत्युकारणभूताम् पापकर्मरताम्। यदा हि भगवतो विस्मृतिर्भवति, स्वहृदये भगवन्तं प्रतिदुर्भावः सञ्जायते, हृदयाद् भगवानपि दूरीभवति। तदैव चेतसस्तथा पापाऽऽचारे प्रवृत्तिर्भवति

मानवस्य। भगवद्भावविमुखीसञ्जाता। पतिवधसदृशपापभागिनीति-समभूदतः, नं सा मातृपदबोध्या सिध्यतीति। नामग्रहणपूर्वकमेव वचनम् न मातृशब्दप्रयोगः कृतः। पुनश्च —'धार्मिकः' स रामः इति पदेन च वस्तुतो धर्मतत्त्वज्ञानवांस्तु श्रीराम एव, स हि मां मातृघातकं मंस्यते अतो न मया मातृघातकेन सह संवदिष्यति-प्रत्युत असूययिष्यति। अतो भक्तस्य तु रामभक्तिरेव सर्वस्वं, सर्वात्मना जीवनोपायभूता च सा। न हि राज्यलाभः। स तु जञ्जाल एव। अतो भगवान् भरतोऽपि राज्यं तृणाय मत्वा रामचरणानुशरणमेव वरणीकृतवान्। एतदेव हि भगवद्भक्तकर्तव्यम्। भगवद्भक्तिविमुखः कोऽपि जनो-माता, पिता, भ्राता, बन्धुः सुहृत्, पुत्रः, पतिः पत्नी यः कश्चनापि भवेत् न स हि सकृत् न सम्भाष्यः न तस्य संसर्गः सम्पर्को वा क्वचन विधातव्यः। स तु परमः शत्रुरिव दूरत एव परित्याज्यः। इति परमभक्तस्यायं सुदृढतरो निश्चयस्त्वयमेवासांत्, यत्, "यावन्न रामं द्रक्ष्यामि लक्ष्मणं वा महाबलम्।

वैदेहीं वा महाभागां न मे शान्तिर्भविष्यति॥" वाल्मी. रा. २।९८।६

सर्वैरेव कौसल्यादिभिर्मातृभिः, वशिष्ठादिभिर्मुनिवरैः प्रतिबोधितोऽपि न स्वदृढनिश्चयाद् विचचाल श्रीभरतः।

पुनरत्र समागत्य साक्षाद् भगवन्तं श्रीरामं श्रीवैदेहीं श्रीलक्ष्मणञ्च तथाविधं "जटिलं चीरवाससं" पश्यति श्रीभरतः, सहसा भृशं रुरोद। अहो, धिङ्मां निर्लज्जम्—यत्कृते भगवतः सर्वदाऽऽनन्दस्वरूपस्य सुखोचितस्य ईदृशी स्थितिः कारिता-दर्शं दर्शमविरलगलदश्रुसम्पातः श्रीभरतो भगवतश्चरणयुगले स्वमस्तकं निधाय, त्यक्तधैर्यो मुक्तकण्ठं चुक्रोश। भगवान्रामोऽपि नाशकत् समागताश्रुप्रवाहं समवरोद्धुं - सोऽपि तथाविधं भक्तं दृष्ट्वा तस्यैवानुकरणमुररीकृतवान्, तयोस्तादृशीं स्थितिं विलोक्य लक्ष्मणोऽपि स्वभ्रातरमेवाऽनुचकार वैदेही तु सरल-सहज-मृदुलहृदया निजनयननिःसृतां नयनजलधारां स्वशाटिकाञ्चलेनावरोद्धुं प्रयतमाना नाशक्नोत् तेषां तीव्रतरप्रवाहवेगम् रोद्धुम् भरतेन सह समायाताः सर्वं एव रुरुदुः किं बहुना जड़ा अपि स्तब्धा रुद्धाः, चेतनाः पशवः पक्षिणोऽपि प्रस्तुतनयनजलाः सञ्जाताः। पुनः पुनश्च भगवतो भरतस्य मुखादियमेवोक्तिर्निःसृताः —

"मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः" (वा० रा० २।१००।३६।) दुरूहशोकाऽऽवेगाऽपसारणासमर्थः श्री भरतः "प्राञ्जलिः पतितः सन्-केवलम् आर्य !" इत्येवमात्र प्रकटितवाक् किमपि नाऽधिकं वक्तुं समर्थयितुञ्च प्राभवत्। शोकोद्रेकान्मूर्छितश्च सञ्जातः।

सहसा करुणावरुणालयो भक्तक्लेशलेशमप्यसहमानः श्रीरामः समुपसृत्य स्वाऽभिन्नानुजं-परमस्नेहमयं श्रीभरतं स्वहस्ताभ्यां समुत्थाप्य स्वहृदयेन संयोज्य

बाहुभ्यां सुदृढं समालिङ्गय सान्त्वयामास भ्रातृवत्सलो भगवान्। भगवान् रामोऽपि तदानीन्तु शोकाऽवेगेन विजितो नाशक्नोद् किमप्यधिकं वक्तुं समाधातुम् वा। तदानीन्तनं सर्वं दृश्यमेव करुणामयमभूद्। भक्तस्य - भगवतश्चोभयोः कोऽधिकतरः शोकसंविग्न इति न निर्णेतुं प्रभुर्भवति विरञ्चिरपि। अलोकसामान्यमासीद् तदानीन्तनं चित्रं, चरित्रञ्चेति।

इत्थं वर्णयन्तः श्रीरामानन्दाचार्याः स्वयमेव तन्मयाः समभूवन् नाधिकं किमपि वर्णयितुं प्रभवोऽभवन्। तत्कथा श्रवण - चिन्तन - मनन - निदिध्यासनासक्ता भक्ता अपि सकलाः सकलं वर्तमानमेव तदानीन्तनं तथाविधं दृश्यं प्रत्यक्षणमेवाद्राक्षुः। भावुकाः सर्वे तथाविधभावना - भावितान्तःकरणाः निःशेषमक्षिलक्ष्यीचक्रुः। स्वप्नोत्थिता इव सर्वे साश्चर्यं परस्परमालोकयन्तो विस्मिताः स्तब्धा इवाभवन्।

स्वामिमहानुभावा अपि समाधिविरताः सन्तः सर्वान् प्रबोधयन्तः पुनः प्रोचुः— ये हि वस्तुतो भगवद्भावुकाः परम भगवदीयाः भवन्ति ते साक्षादेव स्वभावनाभावितस्वान्ताः स्वकीयं प्रियतमं, प्रत्यक्षमेव प्रकटयन्ति प्रेष्ठम्। यथा श्रीगोपीजनः। "तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः।" इतिवद्।

इत्थं श्रीचित्रकूटे चातुर्मास्यमहोत्सवं सम्पाद्य प्रयागराजं प्रति प्रस्थापयामासुः।

—

# षट्चत्वारिंशत्तमः परिच्छेदः

श्री चित्रकूटात् प्रस्थाय श्रीरामानन्दाचार्याः सशिष्याः शनैः शनैः प्रचलन्तः मार्गे मार्गे भगच्चरित्रचित्रणं चिन्तनं विदधतः स्वशिष्यान् भावुकान् भक्तान् भक्त्युल्लासैः समुल्लासयन्तः प्रयागराजं तीर्थाधिराजं नवनवोल्लासमयं विधातुं स्वकीयां जननीं-जन्मभूमिञ्च पुनः स्वचाक्षुषीकर्तुमभिलषितशतानि कल्पयन्तः, परमपाविन्योः, भगवत्योर्गङ्गायमुनयोः पवित्रतमं सङ्गमं द्रष्टुं समायाताः। तदन्तर्गतां सरस्वतीं स्फुटं प्रकटयितुमिव स्वप्रवचनसुधापूरपूरितां वा त्रिवेणीं विधातुमेवात्र समागताः। पदार्पणात् प्रागेव स्वां जन्मभूमिं मुहुर्मुहुः प्रणम्य तद्रजःकणानादाय शिरसि निधाय भक्त्युद्रेकं प्रवर्तयामासुः। सर्वे सार्थवाहिनो भक्तप्रवरा अपि तथैवाऽत्रेनः। तत्रागत्य त्रिवेणीतट एव स्वनिवासं परिकल्पयामासुः। यथाकालं त्रिकालं भगवत्योः श्रीगङ्गायमुनयोः पवित्रतमे सुसङ्गमे सम्मिलितधारयोः स्नात्वा सर्वैः सह सन्ध्यावन्दनविधिं च कलयन्ति स्म। सुशीतलपावनतमे गभीरे नीरे स्नानं, पयः पानम् विधाय विश्राममकुर्वन्।

तदागमनसूचनाऽपि सद्यो विद्युत्सञ्चार इव प्रसारतामुपगता। गृहे गृहे च श्रीरामानन्द - समागमन - वृत्तान्त एव प्रासरत्। तदानीं वृद्धौ तौ दम्पती।

[ "सुचिरचिन्तनचिन्तितचेतसौ, निजसुताननपङ्कजषट्पदौ।"
चिरवियोग - वियोजितमानसौ परमहंसमुपासितुमुत्थितौ॥ ]

वार्धक्यातिरेकात् शिथिलित - सन्धिबन्धनावपि शनैः शनैः प्रेमोद्रेकोल्लसन्मानसौ - निजनयनज्योतिर्भूतैकतारकं सकलविरहव्याधिसंहारकं भवसागरसन्तारकम् जीवनाधारकम् सपदि परमाह्लादकारकं निजकुलोद्धारकं साक्षान्नयनपथपथिकीकर्तुमेवाग्रेऽग्रं प्रसारित-पादप्रक्षेपौ कथंचन तन्मनस्कौ तदालग्नौ स्थाने स्थाने शारीरिकशक्त्यभावेऽपि तिष्ठन्तौ त्रिवेण्यास्तटमुदीक्ष्य हर्षप्रकर्षोल्लासेन वात्सल्यभावसमुन्मेषोच्छलद्धृदयेन - सोत्साहं सोत्कण्ठं प्रचलन्तौ श्रीसुशीलापुण्यसदनौ तत्र समायातौ यत्र तयोर्नयनानन्दकरः सुचिरसन्तापसंहरो ह्यपरः श्रीकपिलदेवावतारः सुकरः

तदात्मजो विविधभक्तजनसंघमध्ये विराजमानो भ्राजमानो दिवाकर इव स्थित आसीत् ।

सुचिरतृषितचातकायितौ स्वातिनक्षत्रवारिदवारिबिन्दुपानलालसौ समातुरभावपूरपूरितस्वान्तौ नितान्तं विस्मृतान्यसकललोकव्यापारौ केवलं निजात्मजमुखचन्द्रचन्द्रिकापानपरवशचकोरयुगलायितौ सत्वरं जराजीर्णकलेवरं वहन्तौ स्वामिमुखमेव समायान्तौ निजजननीजनकौ दूरतो विलोक्यैव परमहंसायिता अपि श्रीरामानन्दाचार्या अतिवेगेन समुत्थाय तदभिमुखं धावन्त इव प्रात आरभ्य यावत्सायं पुनर्गवागमनकालपर्य्यन्तं प्रतीक्षमाणः क्षुधितोवत्सतरः समागतां स्वां जननीं गृष्टिमिव (सकृत्प्रसूतां गामिव) विसृज्यधैर्या इव प्रसस्रुः ।

सोत्कण्ठं साऽभिलाषं धावमानमिवाऽऽयान्तं स्वसुतं समीक्ष्य वृद्धौ तौ दम्पती ( श्रीसुशीलादेवी-श्रीपुण्यसदनश्चेति ) जननीजनकौ सहसा प्रेमप्रवृद्ध-द्विगुणचतुर्गुणवेगेन प्रवाहितानां नयनजलधाराणामविकलवर्षणेन स्वसुतशिरोऽभिषेकं कलयन्तौ निरुद्धकण्ठौ केवलं प्रणतकन्धरं श्रीरामानन्दाचार्यं स्वहृदयेन संयोजयामासतुः । अतृप्ततृषा चिरविरहसन्तप्ता जननी श्रीसुशीलादेवी, विमुक्तधैर्या, सर्वतोऽग्रेधावमाना, निजनयनानन्दकरं सुचिरं गाढं हृदयेन संयोज्य, परमानन्दानिर्वृता, सुषुप्तिकालिकब्रह्मानन्दसंलीना, विलीनाशेषपातका, सुचिरहृदयस्थितविरह - वियोगसन्तापं - वारिधाराव्याजेनैव बहिर्निःसारयन्ती, निरवच्छिन्नाश्रुप्रवाहा, मुग्धा स्तब्धा रुद्धा इव समभवत् । मातुस्तथाविधं प्रेम विलोक्य त्यागमूर्तीनामपि श्रीस्वामिमहाभागानां हृदयमपि धैर्यमुत्सृज्य मातृममत्वमेवानुसरतिस्म । मातृममत्वसम्भृतं श्रीस्वामिनां हृदयं सद्यो द्रुतमभून् ।

क्षणानन्तरं प्रशान्ते च प्रेमोद्गारे समवरुद्धे च पारस्परिकं स्नेहोद्वेगे श्रीस्वामिमहाभागाः स्वजननीजनकयोः कुशलक्षेमप्रश्नानन्तरं ससम्मानं सहर्षं सभक्त्युद्रेकं तौ स्वाश्रमस्थलमुपानीय, विशिष्ट-विष्टरोपरि संस्थाप्य शास्त्रोक्तविधिविधानेन तयोः सोल्लासं सपर्य्यांचक्रुः । गृहीतसंन्यासेऽपि तथाविधचर्याऽऽचारविरतेऽपि निजजननीजनक - समाराधननिरतान् श्रीरामानन्दाचार्यानालोक्य - परस्परञ्च प्रेमोद्रेकमश्रु-पातातिरेकमुदीक्ष्य तथाविधं श्रद्धासमृद्धादरमालक्ष्य दर्शकानां तत्र-स्थितानां भावुकजनानामपि प्रेमाश्रुधारासम्पातः सहसा तन्नयनमार्गेण प्रासरत् । तदानीं करुणादेवी सर्वेषां साक्षादिवावतीर्णा संवृत्ता ।

साश्चर्यंञ्च सर्वे विलोकयामासुः—अहो गृहीतसंन्यासभावेऽपि जननीजनकयोः कृते तु पुत्रः पुत्र एवास्ति । लब्धप्रतिष्ठोऽपि विजितविश्वोऽपि प्राप्तवया अपि तयोः

समक्षे तु सः तथैव बाल इवास्ते। धन्यौ खलु माता-पितरौ-न परिवर्तते वार्धक्येऽपि तयोस्तथाऽनुरागः स्वात्मजे। लोके हि कदाचन दम्पत्योरपि परिवर्तते प्रेम-प्रसारः, परन्तु न क्वचन जननीजनकयोः। इति सर्वैस्तदानीं प्रत्यक्षमक्षिलक्ष्यीकृतम्। इति घटनामालोक्य सर्वत्र प्रसृताञ्च वार्तां श्रुत्वा जनतायामपि परमानन्दपारावार-स्तरलतमतरङ्गायितः सञ्जातः। ततो गगनव्यापिजयघोषपुरःसरं श्रीस्वामिनां, समर्हां सर्वे व्यदधुः।

जननीजनकयोः समाराधनान्तरं - स्वपितृचरणपूजनान्निवृत्ता निर्वृताः श्रीरामानन्दाचार्या भावुकान् सर्वान् सम्बोध्य समुपदिदिषुः—

सम्प्रति भवन्तो भावुकजना अपि स्वस्वचेतसि कल्पनाशतसमाकुला इव संवृत्ता इति तर्कयामि, तद्, संन्यासिनो परित्यक्ता सकल सामान्यजनोचितलोक-व्यवहारा - रागद्वेषादिरहितनिर्मलचेतसोऽपि कथमेवं लौकिकजनवत् विगलदश्रु-धारासम्पातपरिम्लान-वदनः सञ्जात इति। किन्त्वेतन्न विचिन्त्यमेव। यतो हि जनो यदा यदा यद्यच्छरीर प्राप्य तथाविधं कर्म कर्तुं प्रवृत्तोभवन् शनैः शनैः स्व-शरीरस्थानेव सकलदुर्जयशत्रून् कामक्रोधादीन् कथञ्चन विजित्य स्थिरीकृत्य चात्मानम, त्यागिनः संन्यासिनो वा भवन्ति-तत्सर्वं तेषां तथाविधं कर्म, निजनिज-जननीजनकयोरेव भावनानुसारम्। अत एवैषां मनसि तदैव तथाविधा प्रवृत्ति-र्जागरिता भवति, इत्ययमाध्यात्मिकः सिद्धान्तः। यतो हि गर्भाधानावसरे जननी-जनकयोर्यादृशी मानसिकी भावना विचारधारा वा भवति ते हि यथा यथा स्वकीयां कल्पनां कुर्वन्ति यादृशीं वा सन्ततिं कामयन्ते, येषां वा महापुरुषाणां चरिताऽऽचरि-तानि स्मारं स्मारं स्वसन्तानोन्नत्यै कामयन्ते तादृश्येव तेषां सन्ततिस्तदनुरूपाचारा तथाविधैव समुत्पन्ना भवति। अतोऽपि शरीरमिदं तु तदुत्पादितमेव, यावदस्य शरीरस्य लोके स्थितिरस्ति तावदनेन शरीरेण तैरेव परिपोषितेन परिपालितेन सवर्द्धितेन, सुशिक्षितेन - वर्तमानां वा संन्यासधारणाऽवस्थां प्रापितेन, तु यावज्जीवनं तेषां पूज्यतम - मातृपितृचरणानां सर्वदैव "अर्चनम्, वन्दनम्, वार्द्धक्ये च पालनमपि तेषां सर्वदैव कर्तव्यमेवेति सर्वाश्रमेषु पुत्रस्य धर्मः। नान्यथा व्यवहर्तव्यम्। एवमेव कर्तव्यपराङ्मुखत्वे तु प्रत्यवायः। तादृशः समुपेक्षाशीलो जनः पातकी भवति, सद्यः प्रच्युतो भवति स्वलक्ष्यादपि। तेषां सद्भावनयैव तदात्मजस्य समुन्नतिर्ब्रह्म-प्राप्तिर्वा। यतो हि ब्रह्मरूपत्वादेव तेषां न तत्पराङ्मुखो ब्रह्मप्राप्तुं सफलसाधनो भवति, साधनच्युतत्वात् - तदर्चन - वन्दन - विमुखत्वाच्च। अतस्तदुत्पादितेनानेन शरीरेण तेषां पूजनं समाराधनकरणन्तु नितान्तमावश्यकमेव यावत्तद्दत्तशरीरधारणम्।

इत्थं लोके मातापित्रोः शास्त्रसम्मतं तत्पूजनोपासनादिकमावश्यकमिति वर्णयित्वा - पुनर्भगवतो संसारप्रवृत्तां सर्वत्र प्रसृतां मोहमयीं मायां वर्णयामासुः — सकलमिदं चराचरं भगवतः क्रीड़ाक्षेत्रमेव। भगवानेव स्वेच्छाशक्तिं विविधविध-विहारार्थमेव मोहमयीमिमां मायां प्रवर्तयामास। यतो यर्थार्थमेव नानाविधं रमणं सिद्धयेत्।

सैवेयमिच्छाशक्तिर्मायाऽपरपर्य्याया भगवतो मनोवृत्त्यनुसारं सकलजनव्यामोहनादिकार्यं सम्पादयन्ती सर्वत्रसंसारे विहरति। सैव विविधरूपेण क्रीडति, किं वा तद्द्वारा स्वयमेव भगवान् नानारूपधरः क्रीडति स्वेच्छया शक्त्या। शक्ति-शक्तिमतोरभेद एव। न हि मनुष्येच्छाशक्तिर्मनुष्यतो भिन्ना भवितुमर्हति, एवमेव व्यवहारे पृथग्भूता प्रतीयते माया। माया मायेति ये वदन्तो भ्रान्ता भवन्ति जना न सा माया काचनाऽन्या। सा तु भगवत एव इच्छारूपा। उक्तञ्च :—

"विष्णोर्माया भगवती यया सम्मोह्यते जगत्।" साऽपि भगवानिव विचित्रतमा बहुरूपा च-सैव "पति, पत्नी, पुत्र, माता, पिता, बन्धु, बान्धव, देह-गेह-धन-धान्य - पशु - पक्षी, वापी - कूप - तडाग, आरामादि नानावनवनस्पतिरूपा, समस्ते जगत्याकीर्णं व्यापृता, प्रतिपुरुषं, प्रतिग्रामं, प्रतिनगरम् प्रसृता, समस्तजड़चेतन-जगज्जातं मोहयन्ती, विहरति सकलमानसे सदा स्थितिं विधाय, प्रतिपलं क्रीडति च सर्वत्र मानवव्यवहारादिषु। तया विमोहितो मानवः स्वयमेवाहं कर्ता, धर्ता, भर्ता, संहर्ता वेति मन्यमानो जगति व्यवहरति, न गणयति स्वेतरान् न मनुते च विद्यते काचन मायाऽपि जगति यद्वशोऽहं प्रवर्ते, इति। सैकैवेच्छाशक्तिर्भगवतः स्वेच्छया जीवान् यथारुचं प्रवर्तयति-सत्कर्मण्यसत्कर्मणि वेति। यथा बालः स्वेच्छया कृत्रिमपुत्तलिकादिभिः क्रीड़ासाधनैर्यथेच्छं विहरति, पुत्तलिकादिवस्तूनि, यथाऽभिलाषं नर्तयति, स्थापयति, पातयति, तद्वदेव भगवतो वैष्णवी मायाऽपि मनुजैः पशुपक्षिभिः सह क्रीडति। भगवतः प्रेरणयैव सा तथा व्यवहरति, मनुजान् वा भगवतः सान्निध्ये - नेतुमपनेतुं वा प्रवर्तते। अतएव ये हि सर्वात्मना भगवदीयाः सन्ति वैष्णवाः तेषामुपरि, भगवदनुगृहीतानां नियमने वा न तस्या गतिः। न कामयते स्वयं भगवान्, यत् तदीया अनन्या भक्ता तथाविधाचारा अन्याऽभिमुखा भवेयुः, इति कथं तान्, अन्यथा प्रवर्तयितुं भगवदिच्छाशक्ति ( माया ) स्तथाऽऽचरेत्। एषा मायानाम्नी भगवदिच्छाशक्तिः, न सा मायावादिप्रदिष्टा मिथ्याऽध्यवसायरूपा भ्रामिका माया। एषा तु साक्षात् भगवतोऽभिलषिताक्रियाकलापसम्पादिनी - ज्ञानेच्छाक्रियारूपा भगवदभिन्ना स्वात्मशक्तिः। अतो मायाशब्दं श्रुत्वा न भ्रमितव्यं भगवद्भक्तैः। इत्थं विधं मायायाः

स्वरूपं यः परिचिनोति स निश्चयं निर्भयमेव विचरति व्यवहरति कुरुते कारयति च कर्माणि। न तं भगवदीयं वैष्णवं साऽपि तदीयव्यापाराद् भ्रामयति।

किञ्च मोहिनीस्वरूपैवैषा माया। या हि भगवन्तं सदाशिवमपि व्यामोहयन् किम्पुनर्मनुजांस्तु। स्वयमेवोक्तञ्च भगवता श्रीशङ्करं प्रति :—

( भागवत० ८। १२। ३६ ) "को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान्।" इति।

अतोऽस्या बन्धनान्मुक्त्युपाय एष एव यद् सर्वात्मना निश्छलभावेन भगवच्चरणारविन्दमिलिन्दायमानः सन् तत्रैव विरमेत, रमेत, विहरेत्। समस्तं लौकिकं देहगेहादिजन्यं कार्यं निर्ममत्वभावनया, अहन्ता ममता चक्रं परिहाय भगवदर्थमेव सर्वथा सर्वभावेन सर्वं परिकल्पयन्नेव लोकसंसारयात्रां परिवहन् सर्वत्र व्यवहरन् सर्वेषु सम्पृक्तोऽपि न तत्कृत कुटुम्बिजन कलित शुभाशुभकर्मणि पतितो व्यामोहितो वा भवन् स्वकीयं मनो भगवच्चरणपङ्कजे सुस्थिरं रक्षन् हिताऽहिते कर्मकलापे शुभेऽशुभे वापि भगवदनुग्रहमेव मन्वानो जले कमलवन्निर्लिप्तो यदि तिष्ठेत् न स क्वचन मायाचक्रचङ्क्रमणं भजिष्यतीति स्वयं भगवता प्रतिज्ञातम्। "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।"

किञ्चेदमपि न विस्मर्तव्यम्, यद् पुनः पुनर्न मानवीयो देहो लप्स्यते,-तत्रापि भगवदनुग्रहस्तु बलवान्-ये हि सर्वदा सर्वात्मना प्रतिक्षणं भगवन्तं चिन्तयन्तस्तद्भावभावितास्तथैव व्यवहरन्तो भगवत्कृते प्रवर्तमाना अहरहस्तन्मनस्कास्तदालापास्तद्विचेष्टास्तदाश्रयाः तमेवाऽनुध्यायन्तोऽन्तकाले स्वं कलेवरं त्यजन्ति ते तु भगवन्तमेव लभन्ते, भगवत्येव लीना भवन्ति। स्वच्छन्दं ते भगवदुपासनार्थं पुनरपि यदि मानवीयं देहं कामयानाः प्राणांस्त्यजन्ति - भगवत्सेवाऽनुपयुक्तं जरठं वा देहं परित्यज्य नवीनेनैव कायेन भगवत्सेवोपयुक्तेन सेवां कर्तुमभिलषन्तो यान्ति ते तु पुनरेव भगवदनुग्रहोल्लसितास्तमेव तथाविधमेव मानवस्वरूपं दिव्यं वा देहं प्राप्नुवन्ति।

उक्तञ्च भगवता :—"यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भाव - भावितः॥" (गीता)

परन्तु व्यवस्थैषा त्वनन्यभगवदीयानां वैष्णवानां कृते, न हि सर्वेषां सामान्यलोकव्यापृतानां देहगेहादिमोहनिपतितानां छलच्छिद्रपाषण्ड-प्रवर्तनपराणां सांसारिकानां कृते। अतस्तैस्तु सुदुर्लभतरां मानवदेहप्राप्तिं मत्वा, वर्तमानेनैव कायेन यावद्बुद्धि-

बलोदयं सर्वदा सर्वथा श्रेयः सम्पादनमेव करणीयम्। न क्षणमात्रमपि व्यर्थं मिथ्या-प्रपञ्चपतितंचेतः करणीयम्। यतो हि नात्रास्माकं कश्चनापि स्वात्मानं विहाय स्व-देहोऽपि सहयोगकरः सहचरो वेति। न हि जीवात्मना सह कश्चन परलोकं गच्छति-उक्तञ्च :—

"धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनाः श्मशाने।
देहश्चितायां परलोकमार्गं कर्मानुगो गच्छति जीव एकः॥" इति

अतः सर्वात्मभावेन भगवच्चिन्तनमेव श्रेयः। मानवजन्मनः परमः पुरुषार्थश्च भगवतः सेवासमाराधनमेव। सेवाऽपि मानवोपयोगिवस्तु समाकलनपुरःसरम्-स्वात्मोपयोगिप्रियपदार्थापयोगपूर्विका समयकालानुगुणा ग्रीष्म-शीतादि - विविधर्तुधर्मानुरूपसामग्रीसमाहरण-समर्पणरूपा। यथा स्व-कीयं कञ्चनात्मजं मातापितरौ पालयतः। पदार्थं प्रतिक्षणं सावधानतया सर्वविधं सौख्यसम्पादन-साधनं कलयतस्तथैव, भगवदर्थमेव व्यवहर्तव्यम्। बालानुरञ्जनार्थं समये समये नानामनोरथान् वितनुते सम्पन्नो जनस्तथैव राजोपचारैर्महाराजोपचाराद्यैः, यथाशक्त्या भगवद्दत्तसाधनैर्वा भगवतः कर्मणा वचसा मनसा स्वात्मप्रियैरेव पदार्थैः सेवा विधेया। अयमेव परोधर्मः इदमेव मानवश्रेयो जन्मसाफल्यसाधनञ्च। एषैव परमाकृतिः (कर्तव्यमिति)। भगवत्सेवयैव जीवन-यापनम्-जीवस्य परमं पुरुषार्थसाधनम्। अतः सर्वतो माया - मोहं परित्यज्य अहन्तां विहाय भगवतश्चरणशरणमेव श्रेयस्करम् नान्यत्।

इत्थं स्वपुत्रमुखादमृतमयमुपदेशं श्रुत्वा श्रीरामानन्दाचार्याणां माता सुशीला देवी, तेषां पिता श्री पुण्यसदनश्च श्रुत्वा नितान्तं परमानन्द निलीनौ संवृत्तौ। यादृशस्योपदेशस्य वार्धक्येऽन्तिमसमये आवश्यकताऽऽसीत् तमेव साक्षात् कपिलदेवाचार्यमुखाच्छ्रुत्वा देवहूति-मोतेव तौ जननीजनकौ सांसारिक-मोहबन्धनं परित्यज्य प्रशान्त-निर्मलचेतसौ मुक्त-समस्तबन्धनौ बभूवतुः।

ततः प्रमुदितमानसौ तौ आनन्दाश्रुविलोललोचनौ प्रेमोद्रेकस्खलद् वाचौ श्रीरामानन्दार्यं स्वसुतं स्नेहार्द्राभिः शुभाशीर्भिरभिनन्दयन्तौ पितरौ जगदतुः, प्रिय ! रामानन्द ! मुमुक्षूचितं तवोपदेशामृतं पीत्वा श्रोत्र-रन्ध्रेणान्तःकरणग्रन्थिविमोचनेनानेन तत्र विनिहिताः सर्वे संशयाः निवृत्ताः। करुणालयेन भगवता भवादृशं सकललोकैकविज्ञानचक्षुषं दत्त्वा दीनानस्मान् निजचरणारविन्दकिङ्करान् मत्वा सस-

पूर्वैः सप्ताऽवरैः सह सकलान् समुद्धरता मोक्षमार्गः प्रदर्शितः। अधुनावधि चिरविलंसिता मानसिकी भवन्मुखविलोकनाऽभिलाषा विद्यमानाऽऽसीद् सा परिपूर्णा सञ्जाता नाधुनाऽवशिष्यते किमपि कामनीयं वस्तु यदर्थं जराजीर्णकलेवरं व्यर्थमेव भगवत्सेवाऽसमर्थं रक्षितुं कामयावहे। त्वच्चरणारविन्दाऽनुग्रहेण पुनर्नवीनं देहमवाप्य सद्य एव भगवदाराधनसमाचरणमेव चिकीर्षावः। प्रार्थयावहे च जन्म-जन्मान्तरेष्वपि भगवच्चरणारविन्दमकरन्दमिलिन्दायमानमेवास्माकं चेतः तत्प्रवणं सन् तदुपासनायामेव सर्वदा सुस्थिरं तिष्ठेदिति। पुनः पुनश्च यत्र यत्र जन्म भवेत् तत्र तत्रैव भवादृशां परमभगवदीयानां - महामनसां महात्मनामेव सत्सङ्गतिर्मिलेद् पुनः प्रार्थये च :—

"ममोत्तमश्लोकजनेषु सख्यं, संसारचक्रे भ्रमतः स्वकर्मभिः।
त्वन्माययाऽऽत्माऽऽत्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात्॥"

इति (भागवत ६/११/२७)

त्वदुपदेशामृतमवाप्य पूर्णकामाः वयं सञ्जाताः। नावशिष्यते किमपि कर्म करणीयम्। सम्प्रति त्वस्मिन्नेव त्रिवेणीतटे, त्वदुपस्थितावेव भगवच्चरणचिन्तननिरतानां नः समाधिमास्थाय सर्वेश्वरस्य भगवतः श्रीसीतासनाथस्य श्रीसीतानाथस्यैवचरणशरणीभवितुमभिलषति मनः। धन्योऽहं सञ्जातः यस्य गृहे भवादृशः सुतः प्रादुर्भूतः। वत्स चिरञ्जीव, भवतु सर्वदा कल्याणास्पदं श्रीरामः सन्ततकल्याणपरम्परां वितन्वद् तवाऽवनः (संरक्षकः) दिग्विजयी भवतु भवान्। इत्थमेव स्वकीयाऽवच्छिन्न-वचनाऽमृतवर्षणैराप्याययन् समस्तप्राणिमात्रोपकारं विधत्स्व। भगवन्नाममाहात्म्यं प्रकटयन्नेव संसारचक्रपतितान् नानाविधक्लेशविशेषैर्निरस्तान् ध्वस्तान् मानवान् निरन्तरं समुद्धरन् जगद्गुरुपदासीनो भव। वर्तमानकलिकालविषमभावनामयमानसान् धर्मविमुखान् विधर्मि - मोहजालजटिलनिटिलान् स्व-स्वधर्मपथे प्रवर्तयन् पुनर्भारते श्रीराममक्तेर्ध्वजमुत्तोलय। सर्वान् भगवदीयान् वैष्णवान् निर्माय श्रीरामभक्तिपरम्परां प्रवर्द्धयेति। शम्।

इत्युक्त्वा - श्रीपुण्यसदनः श्रीत्रिवेणीतटे समाधिनास्थाय भगवन्तं श्रीरामं स्मरन्नेव स्वसुतश्रीरामानन्दाचार्योपस्थितो स्वप्राणान् तत्याज। स्वपतिं तथाविधं श्रीरामचन्द्रचरणशरणगतमालोक्य स्वयमपि स्वसुतमुखावलोकनं कलयन्ती तदुपदिष्टं, श्रीराममन्त्रं स्मरन्ती स्वपतिचरणानुरक्तमानसा तमनुसरणमेव चकार।

इत्थं योगिनामिव तयोस्तथाविधां यौगिकीं गतिं प्राणोत्क्रमणप्रक्रियामालोक्य सर्वे परमविस्मिताः सञ्जाताः। विद्युत्प्रकाश इव सर्वत्रैषा घटनामयी चर्चा वार्ता प्रसृताऽभूत्। सकला नागरिकाः श्रद्धालवो जनाः तथाविध-योगिस्वरूपदम्पत्योः दर्शनार्थं यूथशः समवेताः समभूवन। स्वयं श्रीरामानन्दाचार्याः स्वजननी-जनकयोः समस्तामोर्द्ध्वदेहिकीं क्रियां तत्रैव त्रिवेणीतटे शास्त्रोक्तविधिना वैदिकै-र्मन्त्रैश्चकार।

ततः सकलमुत्तरं कर्म द्वादशदिवसान्तं कृत्वा महता समारोहेण गोदानशय्या-दानकुम्भदान-वैतरणीधेनुदानादीन् विधाय, विविधपक्वान्नैर्ब्राह्मणादिसाधुमहात्मनां सम्मानं भोजनादिकं च कारयित्वा क्रियाकर्मकलापं सम्पादयामासुः।

---

# सप्तचत्वारिंशत्तमः परिच्छेदः

ततः श्रीरामानन्दाचार्यास्तीर्थराजं श्रीप्रयागराजं पुनः पुनः प्रणम्य भगवतः श्रीसीतानाथस्य साक्षात्कारमेव कर्तुं कामास्ततः प्रस्थाय श्रीरामभद्रचरणपावितपरागां सकलशास्त्रबोध्यामयोध्यां प्रति प्रस्थापयामासुः। मार्गे मार्गे च भगवच्चरित्रगानं, नामस्मरणध्वनिं कुर्वन्तः शनैः शनैरयोध्याया दर्शनमलभन्त। तत्रागत्य वारं वारं श्रीसनाथामयोध्यां प्रणम्य, श्रीसरयूतटमागत्य सादरं सश्रद्धं भक्त्या तामपि प्रणम्य, पवित्रतमञ्च तदीयं तोयं शिरसि निधाय, त्रिराचम्य, क्षणं विश्रम्य, मज्जनपानादिकं विधाय, देवर्षिपितृतर्पणादिकं कृत्वा, सन्ध्यावन्दनं जपहोमादिकं सम्पाद्य-स्वात्मनो - निवासार्थञ्च सरयूतट एव कुत्र कस्मिन् स्थले कस्मिन् तटे व्यवस्था विधातव्या इति चिन्तयन्त एव शिष्याः श्रीमद्रामानन्दाचार्यान् पप्रच्छुः। तदा ते तानाज्ञापयन्तो व्यवस्थार्थं तानूचुः—यत्र भगवतः श्रीरामस्य सुलभं दर्शनं भवेत् तत्रैव वासो विधेयः। तदर्थञ्च शास्त्रेषूक्तम्—"जानकीहृदयं रामो रामस्वान्तञ्च जानकी।

वस्तुतो न पृथग्भावः शक्तिशक्तिमतोः क्वचित्॥
न हि सर्वात्मना तिष्ठेद्रामः सीतां विना क्वचित्।
सीताऽपि न क्षणार्द्धं हि विना रामेण तिष्ठति॥

किञ्चः— "जानक्या यत्प्रियं किञ्चित् रामभद्रस्य तत् प्रियम्।
रामोऽपि राजते तत्र यत्र सा जनकात्मजा॥ इति।

अतो यद्धि श्री जनकनन्दिन्यास्तटं राजतेऽस्माकं सम्मुखे, तत्रैव वासः परिकल्पनीयः। एतदेव हिं जानकीतटम् [ जानकीघाट इति ] तत्रैव श्री जानकीतटे (घाटे) सकलाभोजननिवासादिमयी व्यवस्था कारिता। सर्वविधां दैनन्दिनीं प्रक्रियां सम्पाद्य यथानियमं श्रीरामानन्दाचार्याः सुखासनोपविष्टाः समभूवन् तदानीं तदागमनवृत्तान्तमाकर्ण्य तत्रत्याः सर्वे सन्तोमहान्तश्च नागरिकाः पुरस्थाः सकलाः पुरन्ध्र्यः, साधवः संन्यासिनो रक्तपटाः श्वेतपटाः काषायाम्बरधारिणो जटाजूटोल्लासितमस्तकाः, विद्वां-

सश्च सर्वे समवेता अभूवन्। ये हि सुदीर्घकालतो गुप्तवासं कलयन्तो विराजमाना महात्मानश्चासन् तेऽपि तत्प्रसिद्धि कर्णाकर्णिकया संश्रुत्य समागताः। सर्वेषां महात्मनामपूर्व एव कुम्भपर्व इव समागमः जनसम्मर्दश्च सञ्जातः। तदा श्रीरामानन्दाचार्याः सर्वान् प्रणम्य सर्वतः प्रथमं संक्षेपतः तीर्थभूतायाः श्रीअयोध्याया विषये वर्णयामासुः।

श्रीमन्तः परमश्रद्धेयाः सम्मान्याः सन्तोमहान्तो महामनसः पूर्णपुरुषोत्तमश्रीरामचरणारविन्दचञ्चरीकायमानमानसाः पूज्या जानन्त एव भवन्तः सर्वे यदस्याः पावनपुर्याः कीदृशं माहात्म्यमिति— महात्मनां सविधे तु सूर्यस्य सम्मुखे दीपदर्शनमिव भविष्यति, परञ्च सन्ति भूयांसो जिज्ञासवस्तेषां कृते कामपि निवेदयामः स्वभावनाम् :—

तथाहि :— "सैषाऽयोध्या सकलभुवनोत्तंसरत्नावलीका,
सुश्रीका श्रीजनकतनयाजानिजन्मस्थलीका।
पापाऽनीकाहननिपुणा पुण्यपाकाऽवनीका
निर्भीकांस्तान् कलयति जनान् ये श्रिता मृत्युभीकाः॥

किञ्चः— "अत्राऽऽयातो भुवि न पुनरावृत्तिमेति प्रकामं
रामाऽऽसक्ति सक्तो दृढतरमनः शान्तिमाप्नोति जीवः।
सश्रद्धं यः श्रयति, लभते राजसूयक्रतूनां
पुण्यं, वासः कलयति जनो याति वैकुण्ठ (साकेत) धाम॥

वासो यत्र सुसत्रकोटिफलदस्त्रासोंऽहसां भूयसां
पुण्यानां तनुते विकासमनिशं ह्रासं बिभर्ति श्रियाम्।
स्वर्गादेः परिहासमेव कुरुते शान्त्या सुखोल्लासने
सेवोपासनया विदेहतनयाजानौ (कान्ते) रतिं वर्द्धते॥

एषा च परमपाविनी धीरगम्भीरनीरा भगवती सरयूः —

याहिः— "मन्दं मन्दं वहति सरयू, यत्रगम्भीरनीरा
तीराऽऽयातत्रिदशललनोल्लासहासप्रकाशा।
दर्शं दर्शं सुभगसलिलं निर्मलीभूतचेता—
स्त्रेताकालं स्मरति मनुजः स्नाति पुण्योदकेषु॥

यत्र श्रीजनकात्मजा प्रतिदिनं केलिं चिकीर्षुः सखी—
व्रातैः सार्द्धमशेषवारिविहितां लीलाविलासाऽवलीम्।
कुर्वन्ती तटसंश्रिताऽप्यहरहः सम्मानदानादिभि—
र्ह्यर्चन्ती समतोषयद् द्विजसतीः सौभाग्य-पुत्रोत्सवाः॥

किञ्च:— "सिद्धा वृद्धाः समृद्धाः शुचितटकलिताऽऽवासलब्धाऽभिलाषाः
यत्राऽऽशाव्याप्तकीर्ति - प्रथित - निजतपःप्राप्तदिव्यप्रकाशाः ।
यज्ञार्थं भूमि-शुद्धौ, जनकहलमुखोद्भूतकारुण्यदृष्ट्या
श्रीमद्रामाङ्घ्रिसेवाऽनुपमफलममी प्राप्य जाताः प्रसिद्धाः ॥

रम्यं तत्तटमाश्रिता वयमहो सौभाग्यवृद्धोद्भवाः
यत्र श्रीजनकात्मजाऽमरवधूवृन्दैः सदोपास्यते ।
नित्यं यच्च रहस्यकेलिरसिकः सीतासनाथः प्रभुः
श्रीरामः श्रयते क्षणं न सरयूप्रेष्ठं तटं मुञ्चति ॥

"वृन्दावने प्रियतमः प्रणयं प्रियायाः सेवानिकुञ्जमधिगुञ्जितषट्पदालिम् ।
साक्षात् समुल्लसयितुं स्वगुणैकबन्धं तौर्यन्तिकोल्लसितरा सरसं तनोति ॥

साकारमाकार्यं मनोजमित्रं फलान्वितं यत् कुरुते रसेशः ।
अतस्तयोः स्नेहसमृद्धयेऽयं सुमर्द्धिकालो वसतिं विधत्ते ॥

रामस्तथैव भगवान् मिथिलेशजायाः प्रीत्यै तनोति सततं प्रणयप्रवाहम् ।
स्वालिङ्ग्य तां तटनिकुञ्जमुपेत्य रम्यां लोकप्रियां सरसभावविभावहेलाम् ॥

श्रीजानकीजानिरहो रहस्यां श्रीजानकीतटमधि प्रसते स्म केलिम् ।
कुञ्जस्य रामशरणाश्रमनामजातं, रामः स्वयं विहरणे शरणीचकार ॥

किञ्च :—'रामः' सदा विहरति प्रिय 'वल्लभायाः' 'कुञ्जे'ऽलिपुञ्जशुचिगुञ्जनमञ्जुगाथे ।
'श्रीजानकीतट' गते मुनिसिद्धसाध्यैर्देवैः स्तुते सकललोकनुते प्रशस्ते ॥ इति

इत्थं भावनासमुल्लासे विस्तृततमेव वर्णितमस्ति श्रीजानकीतट (घाट) माहात्म्यं, यथा वृन्दावने सेवानिकुञ्जस्यमाहात्म्यं तथैवात्र अयोध्यायां जानकीतटस्य (घाटस्य) विद्यते महिमोल्लासः । आसीत् पुरा परितो जानकीतटं सुविशालं परमं रम्यतमं प्रमदवनं महाराजश्रीदशरथराजकुमारस्य । सम्प्रति कालक्रमेण विलुप्तमभूत् । परञ्च ये हि परमभगवदीया अनन्यश्रीराममक्ताः सन्ति त एव स्वभगवद्विषयकभावना-भाविताऽन्तःकरणाः, भवन्ति त एव तस्य साक्षात्कारं कर्तुं समर्था भवन्ति नाऽन्ये । सर्वतोऽपेक्षयाऽस्यैवाधिकं माहात्म्यम् । स्वप्रियाया भगवत्या जनकनन्दिन्याः प्रियत्वात् भगवतो रामस्याप्यतिप्रियत्वमेव । श्रीजानकीतटम् (जानकीघाट) इति नाम नितान्तं पावनम्, इदमेव जगज्जनन्या श्रीजानक्याः सर्वाङ्गसंसङ्गसेवनत्वात् परमरमणीयमपि । कविकुलशिरोमणिः श्रीकालिदासोऽपि, मेघदूते, चित्रकूटाद्रौ रामगिर्य्याश्रमवर्णने "यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु" इति वर्णितवान् । तथैवात्रापि बोध्यम् ।

एषाऽयोध्या तु मोक्षदायिनीषु सप्तपुरीषु परिगणिता तत्र सर्वप्रथममस्या एव नामोच्चारणमाचर्य्यते सर्वे एव प्रातः स्नानकाले पठन्त्येव :—

"अयोध्या मथुरामाया काशी काञ्ची, ह्यवन्तिका।
पुरी द्वारावती चैव सप्तैता मोक्षदायकाः॥ इति।

अधुना यदस्ति किमपि प्रवचनीयम् - तदर्थमाज्ञापयन्तु, किमहं विशेषतो निवेदयेयमिति।

ततः केनाऽपि प्रार्थिताः—वैष्णवानां कर्तव्याऽकर्तव्योपरि प्रकाशं पातयितुम्। विशेषतो विवेचनार्थञ्चेति।

तदनुरूपं पुनः श्रीरामानन्दाचार्याः कर्तव्यानि दर्शयामासुः।

(१) सर्वतः प्रथमं गुरुः कर्तव्यः। स हि सर्वात्मभावेन परमवैष्णवो भगवदीयो, विद्वान्, प्रशान्तः, कर्मठः, श्रौत-स्मार्तविधिविधानज्ञः, शास्त्रोपदेष्टा, सदाचारनिरताः शुद्धान्तःकरणो भगवत्सेवासमाराधनसंलग्नो भवेद् ब्राह्मणकुलोत्पन्नः सुश्रीकः। यतो हि—"अवैष्णवो गुरुर्न स्यात्" (इति स्कन्दपुराणे)

(२) इदमपि वैष्णवानां कर्तव्यं, यत्ते प्रत्यहं यथामति यथाऽधीतानां वेदानां, वेदान्तानां उपनिषदां रामायणस्य गीतायाः भागवतस्य, भगवदीयान्यशास्त्रस्य च पठनं कुर्युः। अनधीताऽधिकविद्या अपि ते निजनिजमातृभाषासुलिखितानामाचार्यवाचाम् पठनं कुर्वन्तु। भागवतजनानां भक्तानां भगवदीयानां चरितानि वा पठन्तु। स्वस्वाचार्योपदिष्ट-पुस्तकानां तल्लिखितभगवत्कथानां वा पठनं पाठनं, श्रवणं श्रावणं वा कुर्युः।

(३) अन्यदिदमपि कर्तव्यमस्ति यत् वैष्णवः शमदमतितिक्षाश्रद्धाउपरम-समाधानादिभिः क्रियाकलापैः निजेन्द्रियाणि (ज्ञानेन्द्रिय=श्रोत्रत्वक् चक्षू-रसनाघ्राणेति) कर्मेन्द्रियाणि च=(वाक्-पाणि पाद पायूपस्थादीनि) मनसा सह वशीकुर्वन् सर्वदा भगवत्स्मरणं विदधात्, स्वच्छाचारः सन् सत्यं वदेत् कर्मणा मनसा वचसा च न कस्याऽप्यनिष्टचिन्तनं कुर्यात् परद्वेषं परनिन्दां, मिथ्यादम्भं, प्रमादमहङ्कारं च परित्यजेत्। न कञ्चन कुवाक्यैः संवदेत् न हन्यात्, न कस्यापि किमपि वस्तु चोरयेत् न कदाचन जीवानां हिंसां विदध्यात् (आखेटं वा न कुर्यात्) न वा दुर्व्यसनानि प्रकल्पयेत् न कुर्यात्। मद्यं मासं, किमप्यन्यन्मादकं वस्तु (भङ्गा, गजेन्द्र-अहिफेन=भाँग, गाँजा सुलफा, अफीम, सुलफाचरस प्रभृति) कदाचिदपि तमालपत्र-भक्षणं, पानं धूमपानादिकं न कुर्यात्।

द्यूतं पानं हिंसां न चरेत्। द्यूतेऽपि=अक्ष-सारिका (शारी) क्रीडां, तासपत्र-क्रीडां चापि नाऽऽचरेत्।

(४) स्वइष्टदेवस्य भगवतः श्रीसीतासनाथस्य सीतानाथस्याऽहरहः स्मरणं कुर्वन्नेव प्रतिपलं तमेव सर्वत्रव्याप्तं जानन् तद्‌बुद्ध्यैव सकलान् देवान् सर्वदा प्रणमेत् ध्यायेत्। न कुत्रापि कस्यापि देवस्य-अवहेलनां कुर्यात्, श्रद्धया प्रणमेदेव न द्विषेत् नो निन्देत् वैष्णवेष्वपि रामभक्तः कृष्णभक्तो वा योऽपि कोऽपि वा भवेत् सर्वत्र स्वेष्टदेवमेव पश्येत् न भेदबुद्ध्या कुतर्कभावनया वा व्यवहरेत्। सर्वरूपत्वाद् भगवतः, भगवता स्वीयोपास्यदेवेन सहैव विरोधो भविष्यति यद्यन्यदेवेष्वन्यथा व्यवहरेत्। योहि रामः स एव कृष्णः, योहि कृष्णः स एव रामो नृसिंहो वामनो वा। अन्येऽपि देवाः सर्वे भगवत एवाङ्गभूता यथाः—"श्रीमद्भागवते" —'सूर्यश्च चक्षूंषि जलं स्म रेतः' 'इन्द्रादयो बाहव आहुरुस्राः' 'सर्वदेवमयो हि सः' 'सोमोमनो द्यौर्भगवंच्छिरस्ते।' किञ्च 'शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः' इत्यादिभिः स्पष्टमेव सकलदेवमय-विग्रहत्वं भगवतः। अतस्तद्भावनयैव सर्वत्र प्रणमेत्।

(५) किञ्च या काचनापि विलासोल्लासिनी - सुगन्धिद्रव्यादि तैलनिःष्यन्द=इत्र-फुलेल - प्रभृति सामग्री न तस्याः स्वोपभोगार्थमुपयोगः कर्तव्यः सर्वं भगवदर्पितं कृत्वा-तदुपभुक्तं भगवत्प्रसादमेव स्वोपयोगाय युञ्ज्यात्। एवमेव सर्वविध भोज्यादिपदार्थजातं नानाविधपक्वान्नादिकं वसनाऽऽभरणादिकमपि सर्वविधाऽलङ्काररत्नादिकमपि भगवते समर्प्यैव सर्वं स्वीकुर्यात् किं बहुना गृहस्थो वैष्णवोऽपि सकलं देहगेहादिमयं, पुत्रकलत्र - बन्धुबान्धवादिरूपमपि सर्वं भगवते समर्प्यैव स्वीकुर्यात्—यथा :—"त्वदीयं वस्तु गोविन्द! तुभ्यमेव समर्पये इति।" दैनंदिनोपयोगिवस्तुसाधारणं—अन्नं जलम्, फलानि, पुष्पाणि पत्राणि (ताम्बूल-एलालवङ्ग, जातिफलं जातिपत्रादिकं भोज्यं पानं, लेह्यं चोष्यं, सर्वमेव प्रथमं भगवते स्वेष्टदेवाय समर्प्यैव पश्चात् स्वोपयोगे गृह्णीयाद्वैष्णवः अन्यथा 'सः स्त्येनो दण्डमर्हति' भगवदुत्पादितानां भगवदीयानामेव पदार्थानां विना समर्पणेन समुपयोगे वैष्णवोपि—अनाज्ञप्तः प्रयोक्ता तु चौर एव। अतः 'असमर्पितवस्तूनां सर्वथा वर्जनमेव।' न ग्राह्यं क्वचिदपि। गृहस्थे वैष्णवे तु=विवाहकाले पूर्वं भगवन्तमेव प्रार्थयेत-यत् प्रभो! त्वदीय-सेवायां अन्तरायो न पतेत्, अतः सहायतार्थं=त्वदीयसेविकात्वेन काञ्चन सद्धर्मचारिणीं, आनयामीति—ततो विवाहं कृत्वा पुनः प्रार्थयेद् भगवन्

भवत्सेवायामेनामपि सेवकसहधर्मचारिणीं स्वीकुरु, इति । एषा हि मन्दिर-मार्जनादौ पाकादिसामग्रीसम्पादने, पुष्प-ताम्बूल-वासोऽलङ्कारादिनिर्माणे सहायिका भविष्यतीति स्वीकार्येति । गृहस्थव्यापार-समासादनाय मामाज्ञां प्रयच्छेः । इदमेव परमभक्तस्य अनन्यवैष्णवस्य कर्तव्यम् । अतः कर्तव्यमेव ।

( ६ ) श्रीभगवति, गुरौ, भगवद्भक्ते च न कमपि किञ्चिन्मात्रमपि भेदं गणयेत् । समानभावेन, भगवद्भावनयैव गुरुमपि सर्वदा भावयेत् न क्वचन कदाचनापि प्रमादो स्यादिति ध्यानपूर्वकं गुरुदेवं, भगवद्भक्तञ्च सर्वदा साक्षाद्भगवन्तमेवेति मत्वा अर्चनं वन्दनादिकञ्च कुर्यात् । उक्तञ्च : —'ज्ञानं न गुरुणा विना' [ विना ज्ञानं न मुक्तिः स्यात् न देवाऽऽराधनं भवेत् । ज्ञानं विना कथं देवं सेवेतान्धजनो यथा ।' ] अतो गुरुदेवो भगवत्सेवाप्रकारं शिक्षयति । भगवता सह सम्बन्धं कारयति जनस्य तदा भगवानपि तस्य गुरोर्माध्यमेन तं जनं स्वीकरोति । भगवन्तं प्रति भक्तस्य भावनामपि गुरुरुत्पादयति । यदि पूर्वजन्मान्तरीया भवति चेत् - सापि सुप्ता भवति तामपि भावनां गुरुरेव जागरयति ततः स भगवद्भक्तौ प्रवृत्तो भवति । अतो भगवतोऽप्यधिको गुरुः सम्मान्यः ।

एवमेव भगवद्भक्तोऽपि स्वसत्सङ्गरङ्गेन जनस्य भगवदनुरक्ति प्रवर्धयति । ये हि सर्वात्मना भगवद्भक्ता अनन्या वैष्णवा ये च सर्वं भगवदर्पितं कृत्वा निर्मुक्तसमस्त-लौकिकबन्धनाः सञ्जाताः, येषां कृते च स्वयमेव भगवान् दासायितः सन् तान् सेवते । तदंशीभूताश्च स्वयं स्वतन्त्ररूपेण न किमपि कर्तुं प्रवृत्तो भवति-कथयति च दुर्वाससं प्रति ( भागवते ) :—

ये दाराऽऽगार पुत्राप्तान् प्राणान् वित्तमिमं परम् ।
हित्वा मां शरण याताः कथं तांस्त्यक्तुमुत्सहे ॥

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥

नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥

इत्यादिभिर्भगवता स्वयं प्रतिपादितत्वात्, भक्ता भगवतोऽप्यधिकाः सम्मान्या भवन्ति । भगवतोऽधिकाऽधिकप्रियत्वात् । भक्तानां पूजने सम्माने भगवदीयानां वैष्णवानां समाराधनमेव भगवानत्यधिकं प्रसीदति । यथा हि लोके मानवा न तथा प्रसीदन्ति स्वात्मसम्मानेन, यथा तदीयानां बालकानां पुत्रादीनां सम्माने-दाने, लालने प्रसन्ना भवन्ति । स्वसम्मुखे स्वात्मीयानां पुत्रकलत्रादीनां सम्मानेन यादृश-

मानन्दमनुभवन्ति जना, न तथा स्वात्मनः तेषां सम्मानेन तुष्टाः सन्तः प्रीणन्ति। तद्वद्भगवानपि स्वापेक्षया भक्तानां प्रीणने लालने सम्मानदाने च यथा प्रीणाति न तथा स्वभक्त्या। यदि च भगवद्भक्तो भगवन्तन्तु पूजयेत्, किन्तु तदीयान् भक्तान्, भगवदीयान् सतः महात्मनश्च विद्विषेत्, तेन भगवान् न कदाचिदपि तुष्यति प्रत्युत तुदत्येव। अतः सतां महात्मनां साधूनां विदुषां भगवदीयानां वैष्णवानां सर्वदैव सेवां विदध्यात् तेन भगवानप्यधिकं प्रसीदेत्। इदं हि परम वैष्णवानां कर्तव्यं श्रेयस्करञ्चेति।

किञ्च-गुरूणां सम्मुखे परमवैष्णवानां पूज्यानां सम्मुखे च नोच्चासने स्थातव्यम्। समुन्नतपावनस्थले - किंवा देवमन्दिरेऽपि गुरूणां ब्राह्मणानां वेदज्ञानां आचार्याणां सतां महताञ्च सम्मुखे पादोपरिपादं घृत्वा पादौ वा प्रसार्य न तिष्ठेत्। न च तेभ्योऽपि, उच्चस्थाने वा स्थातव्यम्। शिष्टाचारविरुद्धत्वात् वैष्णवधर्म-विरुद्धत्वाच्च।

(७) अपरं कर्तव्यञ्च-सर्वदा यथालब्धोपचारेण-श्रद्धया परमया, भक्त्या च यथासमयं यथाकालं निर्दिष्ट एव समय निरालस्यभावेन भगवतः सदा सेवा समुपासना कर्तव्या। स्वयञ्च सर्वदा यथानियमं शास्त्रोक्तदिशा, समयोपरि दैनन्दिनीं शारीरिकी शौच-दन्तधावन स्नानादि प्रक्रियां सम्पाद्य-कर्मणा वचसा, मनसा, पवित्रः सन् एकाग्रचेतसा अनन्यभक्तियोगेन भगवतः सेवां विदध्यात्। सेवातो निवृत्तः राजभोगार्पणानन्तरं शयनकाले (अनवसरे) हि सर्वदा भगवत्स्मरणं कुर्वन्नेव भगवतो भजनं कीर्तनम् वाद्यं नृत्यादिकं च कुर्यात्।

(८) एकत्र स्थित्वा यदि भगवत्सेवायां मनोयोगो न स्यात्, तर्हि कस्मिन्नपि परमपावनतीर्थादिस्थले निवसन् भगवत्सेवायामेव भगवन्नाम (मन्त्र) स्मरणेन भगवच्चरित्रश्रवणे कथने, कीर्तने, समुपदेशश्रवणश्रावणें कथावाचने वा स्वकीयं समयं यापयेत्। तदानीं सुखे दुःखे वाऽपि सर्वथाऽप्यव्यग्रचित्तो निर्व्यथः सन् लाभाऽलाभे जयाजये समभावेनैव तिष्ठन् प्राणिमात्रोपरि सर्वदा दयाद्रभावभाविताऽन्तःकरणः सन् शत्रुमित्रभावनां दूरीकृत्य सर्वेषामेव कुशलकामनां कुर्वन्नेव तिष्ठेत्।

(यथा गीतायाम्— ) "समः शत्रौ च मित्रे च तथा मानापमानयोः।" इत्यादि

(९) भगवत्कथायां वर्तमानः कथां वा शृण्वन्, कथार्द्धमध्य-एवसमुत्थाय न गच्छेत्। न वा सत्सङ्गमध्यादप्युत्तिष्ठेत्। न वा तथा गच्छेद्येन समुपस्थितानां पूज्यानां वैष्णवजनानां ब्राह्मणानां विदुषां वाऽवमानं प्रतीयते यदि प्रमादेन ज्ञातेनाऽज्ञातेन वा स्वपादस्पर्शस्तेषां केनापि शरीरभागेन सह भवेत् तत्क्षणमेव

तेषां चरणस्पर्शपूर्वकं क्षमां याचेत, मनसि पश्चात्तापञ्च कुर्यात् भविष्यति च सावधानतां वर्तेत। चेत् तथाविधेन दुष्कर्मणा तस्य वैष्णवस्य, आयुर्यशो वर्चश्च हीयते।

(१०) प्रतिदिनञ्च भगवतः प्रसादं, चरणामृतम् तुलसीदलम् गृह्णीयात्। सर्वं समर्प्यैव, अन्नपानादिकं-वस्त्राभूषणादिकं गृह्णन् निवसेत् भगवतः सन्निधौ गुरु-पूज्य-जनानां समक्षे च स्वकीयं किमपि कर्म न गोपयेत् न प्रतारयेत् न वा मिथ्यां वदेत्।

(११) वैष्णवो भक्तः गृहस्थश्चेत् नाऽधिकं वस्त्राभूषणाद्यैः स्वात्मानं भूषयेत् येनाऽहङ्कारः प्रवर्द्धेत। सामान्यं धौतवस्त्रं कौपीनोपरि उत्तरीयञ्चेति हस्ते च लघुवस्त्रखण्डम्। विरक्तः समस्तत्यागी संन्यासी चेत् कौपीनं बहिर्वासो मात्रमेव धारयेत्। यदि देशकालानुसारं शीतर्तुश्चेत् प्रावरणवस्त्रादिक-मपि गृह्णीयात। न तत्र वस्त्रादीनां रञ्जनस्यावश्यकता, यथारुचं, गुरुपर-म्परानुरूपं वा शुक्लं, काषायं वा वस्त्रं धारयेत्। तथा च स्व-स्व सम्प्रदाया-नुसारं भाले तिलकं गले ( कण्ठे ) कण्ठिकाः तुलसीमाला, बाह्वोः शंखचक्रा-दिमयीं मुद्रां-शीतां चन्दनादिमयीं, तप्तां वा यथा सम्प्रदायाचारं धारयेत्।

किञ्च भगवत्सेवोपयोगि, आवश्यक एव धनसङ्ग्रहः करणीयो नाधिकः। नवा-लोभः, धनव्यये न वित्तशाठ्य कर्तव्यम्। यथाशक्ति, नाधिकं न न्यूनम् व्ययो कुर्यात्। अवाच्यवाच्यानि च न वदेत्, न वा निन्दकानां कुसङ्गतिं विदध्यात्। यत्र स्थले, भगवतो मन्दिरं न भवेत् न वा गुरुः महात्मा साधुर्न मिलेत् न तत्र तिष्ठेन्न वसेत्। दुष्टान्नं चाण्डालाद्याहृतं वाऽन्नं न गृह्णीयात्। सर्वदैव स्वात्मानं, स्वां तनुं वा नित्य सदाचारचर्य्यायामेव रक्षेत्।

(१२) भगवदीयो भक्तः सदैव भगवतः स्वरूपे साक्षात् विराजमानभावनामेव सुस्थिरां रक्षेत्, न क्वचन पाषाणादि-धातुमयत्वादिमयीं बुद्धिं वा कल्पयेत्। न वा स्वगुरौ क्वचिन्मर्त्यबुद्धिं चिन्तयेत्ः यथा भागवते—"न मर्त्यबुद्धया सेवेत।" इति, न वा क्वचिद् भगवच्चरणामृतादौ सामान्यजलबुद्धिं, न प्रसादे साधा-रणान्नभावनां न वा गुरूपदिष्टमन्त्रादौ सामान्यवर्णमालाक्षरभावनां रक्षेत्; सर्वत्रैव भगवद्रूपत्वमेव पश्येत्।

उक्तमपि—"मन्त्रे, तीर्थे, द्विजे देवे, दैवज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी॥"

(१३) यदि वैष्णवः स्वयं शास्त्रज्ञो विद्वान् वा न स्यात्, न वा भागवतादि पठनेपाठने समर्थश्चेत्, तर्हि केनाऽपि ब्राह्मणेन विदुषा वैष्णवेन च तत् सर्वं कारयेत्। स्वयञ्च भगवत्सेवायामेव तिष्ठेत्। सेवाऽत्र त्रिविधा "तनुजा, वित्तजा मानसीति।" तनुजा साक्षात् स्वशरीरद्वारा भगवतः सेवां कुर्यात्। सेवाऽप्यनेकविधा-यथा भगवदर्थं पुष्पमालादिनिर्माणमिति पुष्पमयी सेवा भगवदर्थं शाकादिसमाराधनम् स्वच्छीकरणम् पाचनोपयोगीकरणम् - ताम्बूलादि वीटिकासमासादनम्। चन्दनादिघर्षणम्, वस्त्रादिसीवनम्, आभरणादि-गुम्फनम्। सामग्रीसमाहरणम् नैवेद्यार्थं नानाविधभोज्यपदार्थनिर्माणं पाकादि-साधनम् सिद्धिकरणम्। साक्षाच्छ्री अङ्गस्य सेवाभगवतो वा शुभाङ्गे वस्त्रालङ्कारांद्यैः परिधारणकारिणीति, बहुप्रकारा तासु यस्याः कृते योग्यता भवेत् तथाविधैव सेवा प्रतिदिनं विधातव्या। तनुजासेवायामसमर्थश्चेत् वित्तजा सेवा कार्या=यथा स्वकीयेन स्वोपार्जितेन वा द्रव्येण भगवदर्थं वस्त्रालङ्कारादीनां क्रयणाय सहयोगः द्रव्यदानद्वारा। किंवा भोज्य-सामग्रीः घृत-शर्करा-गोधूमादि भाण्डागारोपयोगिनी, दुग्ध-मधु-दधि-सम्पादि-नीति विधातव्या। मानसी सेवा तु परा सर्वोत्कृष्टा-पूर्वोक्तोभयविधसेवयो-राधिक्यफलसम्पादिनी, अपूर्वफलदायिनी, सर्वात्मना मनसो वृत्तीनां भगवति तत्प्रवणीकरणपुरःसरं लौकिकचिन्ताऽपसारपूर्वकमनन्यभावेन भगवत्सेवा-करणीयचिन्तनमेव तन्मनस्कत्वसम्पादनकारिणी सेवैव मानसीसेवा। इति त्रिविधसेवामेव यथासामर्थ्यं विदधत् कालक्षेपं कुर्यात्। सेवायामप्यसमर्थ-श्चेत् सर्वथा निरभिमानः सन् यस्मिन् कस्मिन्नपि भगवद्धाम्नि-अयोध्यायां, चित्रकूटे, वृन्दावनादौ, श्रीरङ्गादौ, वदरिकाश्रमे प्रयागे, ऋषीकेशे, हरिद्वारे, जगन्नाथक्षेत्रे, द्वारिकायां यत्रकुत्र साक्षाद्भगवदाराधनयोग्यस्थले-सामान्यां कुटीं विधाय भगवच्चिन्तने निरतस्तिष्ठेत्। तत्राप्यसमर्थो शुभे शान्तवातावरण-स्थले स्थित्वा चित्तैकाग्र्यं विधाय मनः स्थिरीकृत्य भगवच्चिन्तनं कुर्यात्। एतान्येव वैष्णवानां कर्तव्यानि, अन्यान्यपि समयोपयोगीनि देशकालानुरोधेन लोकानां स्वात्मनश्च क्षेमङ्कराणि भवेयुस्तान्यपि समाचरेत् इत्युक्त्वा श्रीरामा-नन्दाचार्याः सभां विससर्जुः। 'विजयतां श्री अयोध्या' इति जयघोषः सञ्जातः।

इत्थं श्रीरामानन्दाचार्यः कतिचिद्दिनानि अयोध्यायां स्थित्वा सर्वैरयोध्या-वासिभिः सम्मानिताः स्वकीयोपदेशैः सर्वान् सन्तर्पयन्तः आपामरजनान् समुद्धर्तुकामाः श्रीरामनाममन्त्रोपदेशैः समागतान् समुपकृत्य, स्वप्रभावञ्च संस्थिरीकृत्य सकल-

मानसेषु, भगवतः श्रीरामभद्रस्य प्रादुर्भावस्थलीं रामाङ्गसंसर्गसुखोपभोगप्रशान्त-सन्तृप्त- सुशीतनीराम् धीरां गभीरां सरयूं प्रणम्याशेषोजन - स्नज्जलमाचचाम ॥ ततः सर्वे स्वाश्रमस्थलीमुपेत्य —

"श्रीजानकीतट रजोऽञ्चित पूतदेहाः स्नेहाऽभिभूत मनसेक्षित दिव्यदेहाः ।
श्रीरामचन्द्रचरणाऽम्बुजलब्धलक्ष्मीः - तद्वल्लभाऽभिधनिकुञ्जसुमौघभृङ्गाः ॥
श्रीरामचन्द्रपरिरम्भितभूमिजाङ्गाऽन्योन्यैकरूपमहितां सहितां सखीभिः ।
रम्यामपूर्वरसभावित - नित्यलीलामालोक्य विस्मृत - धरातल-गेहदेहाः ॥
जाता इमे 'भगवतोऽद्भुतधाम - कामव्यामोहिनीं रसमयीं करुणैकधाम्नीम्-
श्रीविग्रह-प्रणयकेलि - विलोकनेष्टापूर्तिं वरं समलभन्त समे कृतार्थाः ॥

इत्थं श्रीरामानन्दाचार्याः समस्ताश्च तत्सहचराः साधवः सन्तो महान्तश्च-भगवत्स्मरणाऽनन्यमनसो भगवद्भावनाभाविताऽन्तःकरणाः अविच्छिन्नजनरसानन्दमग्नाः भावुकाः सर्वं दिनं श्रीरामचरणभक्तिरमाऽऽप्यायितविग्रहाः सविग्रहा दिव्यदेहमया देवा इवाधिकारिणः सन्तः श्रीकरुणावरुणालयस्य ह्यकृत्रिमभक्तवात्सल्यसिन्धोरनुग्रहभाजनत्वं गताः सर्वे ते, श्लोकेषु वर्णितां रहस्यलीलां श्रीमैथिलीरामचन्द्रयोः साक्षादेव प्रत्यक्षमक्षिलक्ष्यीचक्रुः । एतदेव हि श्रीजानकीतटस्य तत्रत्य श्रीराम-वल्लभा-कुञ्जस्य च अपूर्वमेव माहात्म्यम् भावुकानां कृते ।

इति प्रातर्घोषयन्तः श्रीरामानन्दाचार्याः सर्वान् सहचरान् श्रीअयोध्याधाम्नः परिक्रमां कर्तुं मद्भुतचमत्कृतिपूर्णान्यनेकानि स्थलानि तत्रत्यान्यालोकयितुञ्चाऽऽज्ञापयामासुः । तत्रत्याः परिभ्रामकाः भूयांसः साधवः महात्मानोऽपि पथदर्शकाः स्थानमाहात्म्यबोधका अपि सार्थवाहिनः समभूवन् । मार्गे मार्गे च भगवत्सङ्कीर्तनार्थं-कांस्य तालादीनां मृदङ्ग-वीणा - वंशी प्रभृति वाद्यानामपि व्यवस्था सञ्जाता । अपरेद्युः सर्वं दिनं नगरवनोपवन - निकुञ्जादि स्थलानां परिक्रमां विधाय, सानन्दं सर्वे पुनस्तत्रैव स्वविश्रामस्थले श्रीजानकीतटे (घाटे) एकत्रिताः सञ्जाताः । क्रमेण-चान्यत्रापि हनुमत्तटादावपि प्रतितटं विश्राम्य-प्रवचनादिकं स्थानमाहात्म्यं च प्रकटय्य, सकलदेवस्थानानि परमया श्रद्धया प्रणम्य-पुनः काशीं प्रति-प्रस्थानं चक्रुः ।

# अष्टचत्वारिंशत्तमः परिच्छेदः

ततोऽयोध्यातः प्रस्थाय श्रीरामानन्दाचार्याः पुनः काश्यां स्वकीये स्थाने "श्री वैष्णवमठे" यत्र तेषां गुरुचरणाः श्रीराघवानन्दाचार्या विराजमाना आसन् समागत्य, श्रीगुरुचरणेषु साष्टाङ्गं प्रणम्य, परमविनीतभावेन तेषां सविधे स्थण्डिले निरासन एव स्थिता अभूवन्। पूर्वत एव विश्रुतसकलवृत्तान्तान् श्रीगुरुचरणान्–तेषां प्रश्नोपर्येव विनम्रमुत्तरं नतमस्तकैरेव श्रीरामानन्दाचार्यैर्दत्तम् नाधिकं न न्यूनमिति तच्छ्रुत्वा नितान्तं हृष्टाः श्रीराघवानन्दाचार्याः स्वशिष्याद्भुतचमत्कृतिमययात्रावृत्तान्त - जनितापूर्वहर्षप्रकर्षोद्गारसमवरुद्धकण्ठस्वरेण हृदयाह्लाद-स्खलितवचनविन्यासैस्तमभिनन्दयामासुः। वारं वारं स्नेहाश्रुधाराभिस्तच्छिरो जटाजूटसमलङ्कृतमप्यभिषिषिचुः। ततः सर्वविधकुशलप्रश्नानन्तरं श्रीगुरुचरणाः श्रीराघवानन्दाचार्याः स्वकीयं प्रियशिष्यं दैनन्दिनकृत्यानि सम्पादयितुमाज्ञापयामासुः। श्रीरामानन्दाचार्या अपि प्रत्यहं श्रीगुरुवरचरणानां भक्तिभावनया परमया श्रद्धया च सर्वविधां, पादसंवाहनादिमयीमपि सेवां स्वयमेव विद्यमानेष्वपि बहुषु शिष्यवर्य्येषु-स्वहस्ताभ्यामेव चक्रुः सर्वविधञ्च वैष्णवमठस्य सञ्चालनसम्बन्धिकार्यमपि स्वयमेव सम्भालयामासुः। अधुना श्रीगुरुचरणाः मठसम्बन्धिकार्यजातं सकलं सानन्दं परिवहन्तं श्रीरामानन्दाचार्यमालोक्य प्रमुदिताः सन्तः स्वयं निश्चिन्ताः सर्वं दिनं श्रीमद्रामचन्द्रचरणाम्बुजासवपानसंश्रिताः, भगवत्सेवायां मानसिक्यामेव संरताः, मन्त्रजापादावेव समयं यापयन्ति स्म, न कुर्वंतेस्म मठसम्बन्धि किमपि कार्यम्। निःशेषमादानप्रदानादिकं - समायातवैष्णवजनसेवा समाधानादिव्यवस्थामयं - प्रसारण-प्रवर्द्धनादिप्राचुर्य्यञ्च भक्तेः प्रचारप्रसारकार्यं समुपदेश-प्रवचनादिबहुलं समस्तं श्रीरामानन्दाचार्याः सम्पादयामासुः।

इत्थं व्यवहरतां तेषां श्रीरामानन्दाचार्याणां सेवामालोक्य श्रीगुरुचरणास्तानेव स्वकीयाचार्यासिने संस्थाप्य स्वहस्तारविन्देन तेषां भालपट्टे तिलकं विधाय

स्वकीयं प्रावरणं ( दुकूलं द्विशालम्=चादर इति दुशाला इति वा भाषायाम् ) तेषा-मुपरि संस्थापयामासुः। ततः प्रभृति त एव श्रीरामानन्दाचार्याः स्वगुरूणां समक्षे तेषां यथाकालमाज्ञां गृह्णन्तः समस्तं प्रशस्तं कार्यं सञ्चालयन्तः श्रीवैष्णवमठा-धीश्वराः संवृत्ताः।

ततः श्रीगुरुवरचरणाः श्रीराघवानन्दाचार्याः स्वकाले प्रयाणावसरे समाधि-मास्थाय श्रीसाकेतविहारिणः साक्षात् सेवायां नित्यसाकेत-धाम्नि शाश्वत निवासार्थं-श्रीरामानन्दाचार्यान् सम्बोध्य आशीः शतं प्रदाय श्रीरामचन्द्रचरणारविन्दे स्वा-त्मानं निचिक्षिपुः।

तदनन्तरं श्रीरामानन्दाचार्याः स्वगुरुचरणानां नित्यसाकेतधाम - स्थितानां प्रीतये भूतले च तेषां ख्यातिप्रशस्तिप्रस्ताराय च निखिलसम्प्रदायस्य महा-त्मनां साधूनां सतां महतां, विदुषां, ब्राह्मणानां निःशेषं पार्श्ववर्तिदेशस्य मठाधिष्ठि-तानां काशीवास्तव्याशेषद्विजानां महामनसां ससम्मानं सादरमामन्त्रणपुरःसरं सम्मेलनमिव कृत्वा विविधविधपक्वान्नाद्यैर्मिष्टान्न-शाक - फलाहारः पयो - दधितक्र-कूर्चिका-किलाटक-कलाकन्द-करचूरिकादि विविध चोष्य - लेह्य - पेयादिभिः परिम-ण्डितं महासत्कारसमाधानोपस्करपरिराजितं - वस्त्रोपवस्त्रप्रदान - दक्षिणासमलङ्-कृतं महामहाविशालं द्विशालादिप्रावरणप्रदानसंयुतं "शम्भु-भेष" नामकं महाभोजं व्यावहारिकक्रमेण सम्पादयामासुः। तेन श्रीवैष्णवमठस्य, कीर्तिः समस्ते भारते सुदूरदूरं व्याप्ता समभवत्।

ततः प्रत्यहं श्रीवैष्णवमठे शतशः साधूनां वष्णवानां, समायातानां प्राघु-णिकानां ब्राह्मणानामभ्यागतानां क्षुधार्तानां येषां केषाञ्चन समागतप्राणिनां भोजनादि-व्यवस्था श्रीभगवतः प्रसादरूपेण प्रचारिताऽभूत्। भूयांसश्च विकलाङ्गा असहाया दीनान्धाः शतशस्तत्रैव वासं कलयामासुः। देशदेशान्तरतश्च समागता विद्यार्थिनो विद्याध्ययनाय तत्रैव न्यवसन्। श्रीमठे च प्रायः क्षेत्राण्येव प्रचलिताःयेवासन् यथा—"अन्नक्षेत्रम्," यतः कोपि क्षुधार्तोऽन्नं प्राप्नोत्। "वस्त्रक्षेत्रम्" शीतार्तो वस्त्रविहीनः-कोऽपि सुशीलः साधुः द्विजो दीनो वा वस्त्रमलभत। "प्रपायः" प्रव-न्धस्त्वविच्छिन्न एव प्राचलत्। ततः सर्वतोवरिष्ठं विशिष्टं "विद्याक्षेत्रम्" वर्वर्ति स्म-यत्र शतशश्च छात्राः सर्वदेशीयाः, अङ्ग वङ्ग कलिङ्ग सुह्य, पुण्ड्र, पाञ्चाल, पञ्चाम्बु गुर्जर सौराष्ट्र, महाराष्ट्र-राजस्थान, विहार, मालव, नयपालादिदेशेभ्यः समायाताः सन्तत विद्याध्ययनसंसक्ताः सर्वात्मना भक्ताः विद्यानुरक्ताश्छात्राः मठाश्रमे स्थिताः यथानियमं सुरसरस्वत्याः समाराधनं कुर्वन्ति स्म। तदानीं अस्य विद्या-

लयस्यापि कीर्तिः काश्यां, काशीतो बहिः समन्ताद् भारते विख्याता परितः प्रसृताऽऽसीत् ।

श्रीरामानन्दाचार्याः योगिनोऽप्यासन्, तेषु योगाराधनसिद्धा ह्यनेके चमत्कारा अपि बहुशो दृष्टा जनैः । कतिपयानामुल्लेखः क्रियते :—

एकदा कश्चन कनिष्ठनामकः कनिष्ठकर्मप्रवर्तको मायिकः समागतः । सच स्वीयनिकृष्टतमया मायिक्या विद्यया जनान् भयभीतान् विदधत् वैष्णमठसमीपमागत्य क्वचन नातिदूरं स्थित्वा श्रीस्वामिनामुपरि निजमान्त्रिकशक्त्याः प्रयोगं व्यरचयत् । तदानीं मठस्थाः सर्वे छात्राः साधवः शान्त्या स्थिता विविधविषयिणीं शास्त्रचर्चां कुर्वन्तो ग्रन्थान् पठन्तः पाठयन्तश्च सुरुचिरसत्सङ्गं कलयन्ति स्म । तदानीं तन्मायाविना प्रचारितो महान्झञ्झावात इव वायोः समुत्पातः सहसा प्रासरत्-सर्वेषां दृष्टिर्धूलिधूसरिता सञ्जाता । यावद्वायुकोपं कथञ्चन सहमानाः स्वात्मरक्षोपायं कुर्वन्ति तावत्तु-गगने समन्ततो भूरिभयावहा घनघटा भीषणं गर्जयन्ती वर्षोपलानां वृष्टिमातन्वाना - सहसैवाऽसृङ् - मांसास्थिवर्षणमिवाऽऽरभत - राक्षसानां-समुत्पातकालं कल्पयन्तस्त्रेतायुगीयदण्डकारण्यनिवासिमुनिजनानुकारिणः सर्वे तत्राश्रमवासिनो भगवन्तं श्रीदशरथराजकुमारं स्मरन्तो भयार्ताः कथमप्युपायं चिन्तयन्त आसन् तदानीमेव तदीयाश्रमस्य निकट एव परित आश्रममेव वा प्रलयकालाग्निः प्रसृतो दृष्टिपथमगमत् । तदा तु सर्वे भयत्रस्ता महामायाग्रस्ताः समस्ताश्रमे समन्ततो धावमानाः कलकलमकलयन् ।

तदानीं भयोद्विग्नं समस्तपरिकरं विघ्नमिवानुभूय समाधिस्थाः श्रीस्वामिनः सहसा नेत्रे समुन्मील्य समाधिस्थलाद्बहिरागत्य परितो महोपप्लवमालोक्य स्वकीययोगदृष्टिक्षेपं विधाय क्षणमात्रेणैव सकलां तदुपसृतां दुर्मायिककलित-प्रक्रियां पराभूय सद्यः शान्तिमस्थापयन् । पुनश्च-सः दुराचारो दुर्वृत्त एवासीत् स्वप्रवृत्त्यनुसारं पुनरपि तथैवाऽऽचरिष्यतीति मनसि निधाय शठे शाठ्यं समाचरेदिति न्यायेन - श्रीरामानन्दाचार्या अपि, सुलभामभिचारप्रक्रियां केवलमुदरशूलकारिणीमेव प्रायुञ्जन् । तदा च सः कनिष्ठः स्वोदरशूलाक्रान्तः प्राणान्तकष्टमिव मन्यमानः ।

त्राहि त्राहि महायोगिन् अपराधं क्षमस्व मे ।
नाहं जाने प्रभावं ते, तस्मान् माया प्रसारिता ॥ १ ॥

ममाऽभिचारयोगोऽयं, मामेव व्यथते भृशम् ।
नाहं पुनश्चरिष्यामि, येनासीदाश्रमव्यथा ॥ २ ॥

रक्ष रक्ष महायोगिन्, त्वामहं शरणं गतः ।
उत्क्रामन्तीह मे प्राणा मा विलम्बं विधेहि भोः ॥ ३ ॥

इति तत्करुणाऽऽक्रोशं-क्रोशन्तं वीक्ष्य तं शठम् ।
कृपया परयाऽऽविष्टाः करुणावरुणालयाः ॥ ४ ॥

दण्डं पर्य्याप्तमालक्ष्य सद्यः शान्तिं चिकीर्षवः ।
वहिरागत्य तं दृष्ट्वा - पादपद्मानतं मुहुः । ५ ॥

स्तुवन्तं याचमान तद्-स्वापराधक्षमापनम् ।
दयालवः कृपां कृत्वा, स्वहस्तेनास्पृशन् सकृत् ॥ ६ ॥

व्याधिमुक्तं मुक्तभोगम् निर्मुक्तं दुष्टकर्मतः ।
कारयित्वा, प्रपन्नं तं-स्वशिष्यं पर्य्यकल्पयन् ॥ ७ ॥

ततः प्रभृति दुष्टोऽपि शिष्टोऽभूत् सर्वसेवकः ।
परोपकारे स्वां विद्यां सर्वदैव प्रवर्तयन् ॥
नोत्पातं रचयामास, कदाचन ततः परम् ॥ ८ ॥

अथैकदा महासेनः कश्चिद्दिग्विजयी सुधीः ।
विद्याऽभिमानमत्तोऽयं धृष्टः काशीं समागतः ॥ १ ॥
वैदुष्यस्य च सत्कीर्तिं दूराच्छ्रुत्वा महात्मनाम् ।
रामानन्दार्यपादानां, शास्त्रार्थं कर्तुमागतः ॥ २ ॥
शास्त्रार्थेप्सुः समागत्य श्रीवैष्णवमठाऽन्तिकम् ।
स्वगर्वेणाऽब्रवीदस्ति, कश्चिच्छास्त्रार्थकृत् सुधीः ॥ ३ ॥
रामानन्दैः समं कर्तुं शास्त्रार्थमहमागतः ।
तद्वैदुष्यं हि द्रक्ष्यामि, प्रतिभां शास्त्रगामिनीम् ॥ ४ ॥
अहं शिष्यं भविष्यामि, यदि तेन पराजितः ।
नो चेत्तं वै करिष्यामि, विजितोऽसून्मया यदि ॥ ५ ॥
शैवाऽऽम्नायेन तं कुर्यां दीक्षितं शैवमन्त्रतः ।
नो चेदहं भविष्यामि राममन्त्रेण दीक्षितः ॥ ६ ॥
श्रीवैष्णवमठस्याग्रे, प्राङ्गणे काष्ठपट्टके ।
शास्त्रचर्चां प्रकुर्वन्तः पृच्छन्तः प्रश्नसंशयान् ॥ ७ ॥

आनन्दभाष्ये, पीपाजी, अनन्तानन्द सम्मुखे ।
महासेनस्य गर्वोक्तिं सस्मितं ते प्रशुश्रुवुः ॥ ८ ॥

शान्तो ह्यनन्तानन्दस्तु नोवाच स्मितमुल्लसन् ।
पीपाजी किन्तु सक्रोधमुच्चैस्तं धर्षयन् भृशम् ॥ ९ ॥

उवाच, किं प्रजल्पन्ति गर्वोक्ति विपश्चितः ?
शास्त्रार्थं कर्तुकामोसि, सम्मुखीभव मेऽधुना ॥ १० ॥

कः प्रश्नः किं विषयकः ? का शङ्का बाधतेऽधुना ।
सद्यो ब्रूहीह गर्विष्ठ ! विद्यां बुद्धिं प्रदर्शय ॥ ११ ॥

पीपाजीगदितां वाचं निर्भीकां गर्वनाशिनीम् ।
श्रुत्वा वाक्कीलिता जाता महासेनस्य तत्क्षणाद् ॥ १२ ॥

वक्तुकामोऽतिगर्विष्ठो विद्वान् शास्त्रविचक्षणः ।
मन्त्रमुग्धस्ततः सद्यो जातः परमविस्मितः ॥ १३ ॥

अपूर्वां काञ्चन प्रेष्ठां मन्त्रशक्ति, तपोबलम् ।
विज्ञाय कीलितां जिह्वां क्रुद्धो भोगीव दुःखितः ॥ १४ ॥

न लज्जितोऽभूततत्त्वज्ञो मन्त्रविन्मन्त्रशक्तितः ।
सर्वं भवति नाश्चर्यं, वैदुष्यं नात्र किञ्चन ॥ १५ ॥

न गर्वोक्तिर्मया कार्या, प्रभावोऽयं महात्मनाम् ।
रामानन्दाचार्यपादानां दर्शनं विदधाम्यहम् ॥ १६ ॥

ततो विद्वान् महासेनो याचमानः क्षमां मुहुः ।
दर्शनार्थं गुरूणां वो दययन्तु दयालवः ॥ १७ ॥

महात्मानो महात्मानः श्रद्धेया मानवोत्तमाः ।
तपःप्रभावं जानेऽहं नयन्तु गुरुसन्निधौ ॥ १८ ॥

पीपाजी सहितानन्तानन्दाद्याः साधवः समे ।
रामानन्दाचार्यपादानां सम्मुखे नैषिषुर्बुधम् ॥ १९ ॥

महासेनः सुधीः श्रीमान् स्तुवन्नाचार्यवैभवम् ।
प्रोवाच विनयोल्लासां वाणीं वैदुष्यगर्भिताम् ॥ २० ॥

श्रुत्वा प्रसन्ना भावज्ञाः प्रशंसन्ते विपश्चितम् ।
विद्याविनयसम्पन्न विद्वांसं समतोषयन् ॥ २१ ॥

आदिष्टः स सुधीः श्रीमदाचार्यैः स्वगृहं प्रति ।
गन्तुं भारतसद्विद्यां म्लेच्छाऽऽचाराच्च रक्षितुम् ॥ २२ ॥

संस्कृतिं भारतीयाञ्च म्लेच्छाचारविनिह्नुतां ।
सर्वतो व्याप्तसञ्चारां स्ववैदुष्यात् प्रवर्तय ॥ २३ ॥

वैदिकीं धर्ममर्य्यादां यज्ञयागादिपद्धतिम् ।
सदाचारप्रवृत्तिं तां स्थापय त्वं गृहे गृहे ॥ २४ ॥

इत्थं समुपदिश्यैव महासेनं द्विजोत्तमम् ।
प्राज्ञं सम्पूजयामास वस्त्रालङ्करणादिभिः ॥ २५ ॥

महाप्रभावं सौशील्यं विद्वत्सम्मानबन्धुरम् ।
तपस्विनं महाप्राज्ञं ज्ञात्वा पादाम्बुजे पतन् ॥ २६ ॥

पुनः पुनः प्रणम्येत्थं, क्षमां क्षेमं बलं महः ।
प्राप्तुमाशीः शतं तेभ्यो याचमानः सुधीवरः ॥ २७ ॥

आचार्यान् स्वगुरून्मत्वा, निःशङ्कं पादयोःपतन् ।
लब्धाज्ञः स गृहं यातः पूजितः स्नेहभावतः ॥ २८ ॥

मार्गे स चिन्तयामास स्वगर्वोक्तिं वृथां,मुहुः-
निन्दन् तदुपदेशेन दिव्यदृष्टिः स पण्डितः ॥ २९ ॥

गृहमागत्य सन्तुष्टः प्रतिज्ञापूर्तये सकृत् ।
यत्नवान् समभून्नित्यं गेहे गेहे जने जने ॥ ३० ॥

प्रवर्तयामास शुभं धर्मं स्वीयं सनातनम् ।
वैदिकं श्रद्धया भक्त्या रामभक्तिरतोऽभवत् । ३१ ॥

तदनन्तरमेकदा कश्चिन्मद्रासप्रान्तीयः पण्डितः समागतः स च :—

अपारनामा द्विजपुङ्गवोऽपि समागतः कश्चन तन्त्रवेत्ता ।
काश्यां तदा नाम निशम्य तेषां विद्यामहासागर एव साक्षात् ॥ १ ॥

विद्याऽभिधा काचन तस्य कन्या तारुण्य-लावण्य-जिताऽमरस्त्रीः ।
अभूतपूर्वप्रतिभामयी सा पारङ्गता तन्त्रमहाऽम्बुराशेः ॥ २ ॥

सौन्दर्य - गर्वोद्धतचापलाक्षी, क्षीराऽब्धिजेव प्रथिता स्वरूपे ।
मनोविनोदार्थमभिप्रयान्ती श्रीस्वामिनामाश्रमाजगाम ॥ ३ ॥

विद्यार्थिनां पण्डिततल्लजानां मध्ये सुराचाय इव स्थितास्ते ।
श्रीस्वामिनोऽध्यापनकर्मलग्नाः प्रश्नोत्तरे ब्रह्म - विचारमग्नाः ॥ ४ ॥

कस्मिंश्चिदस्या नवयूनि दृष्टिः स्मरप्रतिस्पर्द्धिनिकामपूर्णा ।
विमोहिता तद्गतमानसा सा स्मरार्दिता शान्तिमवाप नैषा ॥ ५ ॥

विचिन्तयन्ती प्रतिवेलमेनं मनोहरं नव्यतनुं मनोजम् ।
तल्लब्धये व्याकुलचेतसा - सा विस्ततश्चङ्क्रमणं चकार ॥ ६ ॥

अथैकदा दैववशाद् युवाऽपि चिरेप्सितश्चित्तहरः स एव ।
समागतस्तत्र तयाऽनुदृष्टः स प्रार्थितः केलिकुतूहलाय ॥ ७ ॥

एवं विधाऽऽलापकलापशून्यो ह्यज्ञातकान्तासहवाससौख्यः ।
स नैष्ठिकब्रह्ममहाव्रताऽस्वच्चेताः प्रणेता नियमव्रतानाम् ॥ ८ ॥

श्रुत्वाऽदमुतां वाचमुवाच क्रुद्धो निर्लज्जसे, किं वदसि त्वमित्थं ।
त्वं पुंश्चली चेदिह सन्तिभूयो भवादृशाः कामुक-चित्तवृत्ताः ॥ ९ ॥

तानन्वगच्छेः किमु नैव, तैस्ते रतिः समं पूर्णतमा न जाता ।
या मे व्रतं खण्डयितुं प्रवृत्ता वर्णाश्रमाचारविलोपनार्थम् ॥ १० ॥

वर्णिव्रती स्वाश्रम-धर्म कर्माचारप्रवाहैः प्रथितोऽस्मि लोके ।
कथं पतेयं नरकीयकुण्डे, तुण्डेऽर्गलां धारय, माऽऽलपेत्थम् ॥ ११ ॥

न स्थापयिष्यामि कुकर्ममार्गे पदं कदाचिद् भव मे दयालुः ।
क्षमस्व मां धर्मविरुद्धकृत्ये मतिर्ममेयं न भविष्यतीति ॥ १२ ॥

मान्यः सदा भारतसंस्कृतीनामादर्शभूतः परमाश्रमोऽयम् ।
स्थित्वाऽत्रशिष्यः किमु तं कलङ्कपङ्के निमग्नं स्वयमेव कुर्याम् ॥ १३ ॥

स्वीयाऽभिलाषां कुरु देवि, पूर्णामन्यत्र दृष्टिं क्षिप कामिलोके ।
न मां स्थिरप्रज्ञमकामचित्तं विचालयिष्यस्यपि लक्ष्यदार्ढ्यात् ॥ १४ ॥

श्रुत्वा तथागर्वभरास्तदुक्तीः, भृशं तिरस्कारभरा ह्यसह्याः ।
क्रोधान्धमूर्तिर्विचचाल धैर्याज्जगर्ज, चक्रे निजतन्त्रवश्यम् ॥ १५ ॥

अवाप मूर्च्छां स वटुः कटूक्ति श्रुत्वाऽऽस्यतः शोणितमुत्ससर्ज ।
भूमौ विसंज्ञो न्यपतन् मुमूर्षुर्जातः क्षणात् डाकिनिमन्त्रमुग्धः ॥ १६ ॥

क्षणेन वृत्तं प्रसृतं समान्तात्-शोकाऽऽकुलः स्वाश्रमवासिलोकः ।
जातस्तदा स्वामिमहोदयास्ते स्वमन्त्रपूतां दृशमुत्ससर्जुः ॥ १७ ॥

तपःप्रभावात्स वटुः सचेताः सद्योऽभवत् सुप्त इवोत्थितः सन् ।
सा तान्त्रिकीसिद्धिरपि क्षणेन निःशेषमूलासमभूच्च तस्याः ॥ १८ ॥

हृतप्रभा नष्टसमस्तविद्या - विद्याऽगमत् स्वीयपितुः समीपम् ।
रुरोद सोच्चैरपमानवृत्तं जगाद सर्वं रुदती सुविह्वला ॥ १९ ॥

क्रोधाभिभूतः खलु तन्त्रमन्त्रसिद्धिं स्वकां दर्शयितुं प्रवृत्तः ।
श्रीवैष्णवं प्राप्य मठं शठः सश्चक्रेऽभिचारावलिचक्रवालम् ॥ २० ॥

श्रीस्वामिपादैः प्रथमं प्रयुक्तम् श्रीवैष्णवास्त्रां मठरक्षणाय ।
सद्यो हि तद् - दुर्जनकृत्यकृत्यां दग्ध्वा प्रयोक्तारमथोऽस्तुदत्तत् ॥ २१ ॥

अपारनामा स हि तान्त्रिकोऽपि नष्टां स्वविद्यामवलोक्य खिन्नः ।
भृशं स्वकीयोदरशूलमूलां कीलायितां स्वां तनुमेक्ष्य दीनः ॥ २२ ॥

सम्पीडितः पिण्डितसर्वगात्रस्त्राहि प्रभो त्राहि सुदुर्जनं माम् ।
संरक्ष मार्तविहितं किमेतत्, ममाऽभिचारः किमु हन्ति मां, सः ॥ २३ ॥

तस्येष्टदेवी प्रकटीबभूव, प्रोवाच सान्त्वं वचनं तदर्थम् ।
वत्स त्वयाऽनिष्टमिदं कृतं यच्छ्रीवैष्णवे दुष्कृतिमाचचार ॥ २४ ॥

तद्गच्छ पादौ स्वपतेर्गृहीत्वा श्रीस्वामिनः क्षान्तिदयार्णवस्य ।
क्षमापय स्वाघकृते प्रपन्नो भूत्वा सुखं शर्म लभस्व सद्यः ॥ २५ ॥

स शान्तिकामः सकलप्रियेच्छुः निर्वैरभावोदययेदजस्रम् ।
समागतं त्वां स्वहृदा नियोज्य शोकापनोदं हि विधास्यतीति ॥ २६ ॥

अन्तर्हिताऽभूदिति तं प्रजल्प्य - स्वेष्टाऽस्यनुज्ञः स मठं प्रविश्य ।
श्रीस्वामिपादाम्बुजरेणुलिप्तः स्तुवन् प्रपन्नः समभूद्विनम्रः ॥ २७ ॥

तदीयकन्यापि विहाय गर्वं शिष्याऽभवत् सा विदुषी सुविद्या ।
आज्ञानुसारं व्यदधात् सुकार्यं स्त्रीणां समाजे प्रमुखा तदाऽभूत् ॥ २८ ॥

सद्यो विचित्रप्रतिमाप्रकाशो मुक्तोपरागाऽर्कमरीचिभेव ।
समन्ततः प्रास्फुरदुलसच्छ्रीर्विद्येवसाक्षात् भुवि सुप्रसिद्धा ॥ २९ ॥

अपारनामाऽपि गृहीतदीक्षः श्रीवैष्णवः पण्डिततल्लाजोऽभूत् ।
मठे वसन् शास्त्रविचक्षणाभः सुशिक्षको धर्मपथोपदेष्टा ॥ ३० ॥

आकोणकोणं प्रसृतं समन्तात् वृत्तान्तमेतत् प्रकटीचकार ।
श्रीवैष्णवास्त्रस्य समस्तमाया - विनाशकृद्दुर्जयमुग्रवीर्यम् ॥ ३१ ॥

ततो न कश्चित् खलु तान्त्रिकोऽपि दुश्चेष्टितं कर्तुमहो प्रवृत्तः।
श्रीस्वामिनां कीर्तिलताप्रसूनैरलङ्कृताऽभूत् तपसां चयौघैः॥ ३२॥

अथैकदा कलितललितगुणगणां कीर्तिवल्लरीं परितः प्रसारमातन्वती नानाविध-विचित्रवर्णसुमनःपुञ्जपरिमल - सुरभितदिगन्तराम्, समस्त भारत वसुमती सौभाग्य-सिन्दूरायिततपः प्रताप-पराहृत - विशिष्टतान्त्रिकपटलप्रभावां, गौरवगाथामाकर्ण्य-मद्रासदेशवास्तव्यः शास्त्रार्थकेसरी निजवैदुष्याऽभिमान-मदोद्धतमानः कश्चिद्विपश्चित् श्रीस्वामिमहाभागैः सहशास्त्रार्थसमारम्भाय समायातः श्रीवैष्णवमठे। तदानीं श्रीरामा-नन्दाचार्याः स्वशिष्यान् "उत्क्रान्ति-गत्यागतीनाम्।" इति ब्रह्मसूत्रोपरि स्वकीय-मानन्दभाष्यं पाठयन्ति स्म। समागत्य च सः पाठनं श्रोतुकामः प्रशान्तः तत्रैकदेशे-दूरतः एव सर्वं पाठनक्रमं विषयप्रतिपादनम्, छात्राणामपि प्रतिभाप्राचुर्य्यम् आचार्याणा-मवबोधनप्रकारम् सकलमलौकिकमिव श्रुत्वा तस्य चेतसि काचन शास्त्रीयालापनस्फूर्तिः प्रस्फुरिताऽभवत्। स च सान्निध्यमुपेत्य सुप्रणतिततिप्रदर्शनपुरःसरम् स्वकीयनाम-गोत्रप्रवरोच्चारणपूर्वकं दाक्षिणात्यपद्धत्याऽऽत्मपरिचयं प्रदत्तवान्।

भगवन्! ऋग्वेदान्तर्गताश्वलायनसूत्रानुसारि शाकल्यशाखाध्यायी कौण्डि-न्यस्गोत्रः 'सत्यमूर्ति'-नामा मद्रासवास्तव्योऽहं सकलकलाकौशल-समुल्लसित-प्रशस्त-गुणगणपटलीं भुवनविततां शारदशशधर-कलाकलितललितविशदविकासां कैलास-काश-संकाशगिरिशाट्टहाससदृक्षामपूर्वप्रतिभाप्रभाकराऽभाभास्वरां प्रशस्तिमाकर्ण्य शास्त्रार्थं चिकीर्षुरहमत्रसमुपस्थितोऽतीवसौभाग्यसमुदयमनुभवामि यदत्र श्रीमतां प्रत्यक्षमक्षि-लक्ष्यीविषयत्वमासवान्। सम्प्रति साफल्यमुपगता चक्षुषोः समुलब्धिः।

इति श्रुत्वा हर्षप्रकर्षोच्छ्वसितस्नेह-सागरोत्तुङ्गभङ्गाऽऽर्द्रसुधाधाराधराऽऽसार-स्नपितवचनविन्यासोल्लासविकसितवाग्वैभवाः, श्रीरामानन्दाचार्याः स्वप्रेमोद्रेकाऽर्क-किरणनिकरविकासिततद्धृदयारविन्दाः निजसुखद - शान्त-सरससमालापसरसितस्वान्ताः नितान्तमानन्दह्रदनिमज्जनोन्मज्जिततरलतरङ्गरङ्गरञ्जितीकृतसर्वाङ्गाः सपदि समु-त्थाय बाहुभ्यामालिङ्ग्य हृदयेन संयोज्य सोत्कण्ठम् सानन्दम् सविशेषम् तं सम-भिनन्दयामासुः।

तदर्थञ्च शीघ्रमेव मठैकदेशे विनिर्मितायामातिथ्यशालायाम्, तन्निवास-भोजन-पान-शौच-स्नानसन्ध्यावन्दनविधायिनीं सर्वविधां व्यवस्थामास्थापयामासुः। सम्प्रति-विश्राममुपकल्पतामिति समभिधाय, श्रीमतामभिलाषापूर्तिः परेद्युः पण्डितपरिषदि भवत्रीति प्रोचुः।

ततः—अन्येद्युः शास्त्रार्थव्यवस्था सञ्जाता - काशीस्था विद्वांसः समाहूताः सुविशाला 'शास्त्रार्थपरिषद् सुसज्जिता सञ्जाता। सर्वे विद्वद्वर्य्याः यथास्थानं

मञ्चोपरि विराजमानाः समभूवन् । मध्ये समुन्नते मञ्जुलसिंहासनपीठे श्रीरामानन्दाचार्याः विबुधवृन्दमध्ये सुराचार्या इव विराजमाना आसन्, सम्मुखे च विशिष्टपीठे समागतः शास्त्रार्थं चिकीर्षुर्महानुभावः सुस्थितोऽभवत् । तदा श्रीस्वामिनस्तं सम्बोध्य जगदुः, भोः भोः विद्वद्वरेण्याः कः कः कीदृशो वा भवतां पूर्व-पक्षः सम्यक् प्रतिपाद्यतामिति ।

सत्यमूर्तिः —मान्याः ! "उत्क्रान्ति गत्यागतीनाम्" इति सूत्रस्य भाष्यपाठने श्रीमद्भिः पाठितम् यत् जीवो हि ज्ञातृत्वधर्मवानिति अथ यदि जीवो ज्ञातृत्वधर्मयुक्तस्तर्हि तस्य तज्ज्ञातृत्वम्-सर्वत्र सर्वदा किन्नोपलभ्यते । जीवस्य नित्यत्वे "नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ।" इति वाक्यात् स्पष्टमेव तस्य सर्वगतत्वं, तर्हि सर्वगतस्य यथा सर्वत्रोपलब्धिस्तथैव तज्ज्ञातृत्वरूपधर्मस्यापि तथैवोपलब्धिर्भाव्या, किन्तु न सा भवति कस्तत्र हेतुः ।

श्रीस्वामिनः —( मन्दस्मित-पुरःसरम् ) भगवन् । सत्यमेतद्, परञ्च जीवो हि नास्ति विभुः । विभोरेव सर्वत्रोपलब्धिः सर्वदा भवति न हि 'अणु" भूतस्य । भवदुक्तप्रमाणेनैव "जीवः सर्वगतस्थः अणुश्च" ति [ सर्वगतस्थाणुः ] इति वाक्यबोधनात् । अणोश्चातीन्द्रियत्वादप्रत्यक्षत्वान्न प्रतीतिः । जीवस्यैव यदा नोपलब्धिस्तदा तद्धर्मस्य कुतो विभुत्वाभावात् । किञ्च जीवस्य विभुत्वे सर्वत्रैव व्यापकत्वे च कुतस्तस्य उत्क्रान्तिः गतिः, आगतिः, इति व्यवहारः सर्वत्र विद्यमानं वस्तु तु विद्यमानमेव भवति न ततो रिक्तं किमपि स्थानं यत्र तद्गच्छेत्, विद्यमानस्य त्वागमनमपि कुतः, कुतो वा गमनम् । अतः सूत्रेणानेनैव जीवस्य विभुत्व-खण्डनम् । इति ।

सत्यमूर्तिः —भगवन् ! परन्तु-श्वेताश्वतरोपनिषद्वाक्ये तु जीवस्य विभुत्वमेव प्रतिपाद्यते—"स चानन्त्याय कल्पते" इत्यनेन । किञ्च गीतावाक्येनापि-यदा— "नित्यः सर्वगतः" इति विशेषणेन तु नित्यत्वं सर्वगतत्वं च सिद्ध्यति तेन सर्वगतस्तु-विभुरेव भवति ।

श्रीस्वामिनः.—भगवन् ! सत्यमेव, परन्त्वर्थस्य बोधने भ्रान्तोऽसि, यतो हि तत्र तात्पर्य्यमस्ति यज्जीवस्य धर्मभूतं यज्ज्ञानं तद्विभुस्तस्यैव विभुत्वे जीवेऽपि व्यवहारः । यथा "देवदत्तोऽय" मितिशब्देन व्यवहार्यमाणो देवदत्तस्य देह एव न तु जीवो देवदत्तः देहसम्बन्धादेव देहाऽभ्यन्तरस्थजीवो देवदत्तनामा भवति न हि स्वतन्त्रो जीवः । जीवो हि यस्मिन् यस्मिन् नामधारिणि देहे प्रविष्टो भवति तेनैव नाम्ना सः तत्तद्देहसम्बन्धात् तत्तन्नामवान् कथ्यते । वस्तुतस्तु न जीवो देवदत्तो वेति ।

यदि च जीव एव विभुः स्वीक्रियेत तर्हि–"बृहदारण्यक ६।४।२" श्रुतेः ["प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः"] इत्यस्य का गतिः। चक्षुर्भ्यां, मूर्ध्ना वा अन्यरन्ध्रभागद्वारा-निष्क्रमणं जीवस्य सर्वत्रैव व्यापकस्य विभोः कुत्र रिक्तस्थाने कथं गमनम्। नास्ति क्वचन तद्रिक्तं स्थानन्तु लोके यत्र स गच्छेत्। तर्हि श्रुतेः का गतिः ?

किञ्च ["ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति"] इति (कौषीतकी १ २) किञ्च (तत्रैव बृहदारण्यके ६ ४।६) जीवस्य गमनम् एक-देशतोऽन्यत्र देशे-यथा ["तस्माल्लोकात् पुनरेत्यास्मैलोकाय कर्मणे"] इत्यादिभिः प्रमाणैः सिध्यति यज्जीवो न विभुः (न व्यापकः) गमनागमनशलित्वात्। सर्वत्र-विद्यमानस्य व्यापकाभिधस्य न कुतो गमनं नागमनञ्चेति।

सत्यमूर्तिः—भगवन्? यस्मिन् बृहदारण्यके सा श्रुतिः जीवस्य-अणुत्वबोधिका-तस्मिन्नेव (बृहदारण्यके) ["स वा एष महानजः आत्मा।" ६।४।२५] अनया तु स्पष्टं विभुत्व प्रतिपाद्यते जीवस्य। तर्हि कथमणुत्वं ? कथं वा विभुत्वमिति।

श्रीस्वामिनः—"भगवन्! मा भ्रान्तो भूः ? प्रस्तुतप्रसङ्गे सावधानतया समवधेयमेतत्, यत् न सर्वत्र "आत्मा" शब्देन जीवस्यैव बोधः ? अपितु प्रकरणपर्य्या-लोचनया ज्ञातव्यम्। क्वचन-आत्मनो जीवोऽर्थः क्वचिच्च-आत्मन् शब्दस्य परमात्मार्थः-ईश्वरो वेति। अत एवात्र श्रुतेरस्याः ['स वा एष महानज आत्मा"] इत्यस्याः लक्ष्यं, "आत्मा" शब्देन परमात्मनः (ईश्वरस्यैव) बोधो न तु जीवस्य।

यद्यपि बृहदारण्यके— "योऽयं विज्ञानमयः प्राणेषु" ६।३।७] अनया श्रुत्या जीवस्य प्रस्तावः कृतः। तथापि ["यस्यानुवित्तः प्रतिबुद्ध आत्मा" ६ ४।१३] इत्यनया श्रुत्या तु परमात्मनः (ईश्वरस्य) एव निरूपणं क्रियते। अत एव परमा-त्मनो बोधिका श्रुतिर्न हि जीवस्य। किञ्च:—मुण्डकोपनिषदि ३। १।९ — ["एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश।" इति, तत्रैव—["आराग्रमात्रो ह्यवरोपि दृष्टः। ५। ८] अपि च ["बालाऽग्र शतभागस्य शतधा कल्पितस्य च, भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" ५। ९] इति श्वेताश्वरोपनिषद् "श्रुतिभिस्तु जीवस्य अणुत्वमेव प्रतिपादितं न हि विभुत्वम् क्वचित्। अत्र-आराग्रशब्दः, यव-गोधूमादि क्षुपाग्रभागे धान्यमञ्जर्य्याः श्मश्रुलोम्नोऽ-ग्रभागस्य दशसहस्रतमोभागो यदि कल्प्येत तत्समोऽणुर्जीवः।

सत्यमूर्तिः—भवतु वा "जीवोऽणुरेव" परञ्च यद्यणुस्तर्हि सः शरीरस्य यस्मिन् कस्मिन्नप्येकदेशे स्थितः कथं समस्तशरीरगतं सुखं दुःखमेव वा अनुभवति, विभुत्वाऽभावात्। न वाणुरूपस्य तादृशी शक्तिः।

श्रीस्वामिनः—भगवन् ! सत्यं भवदुक्तम्-न हि जीवः स्वयं व्यापको विभुर्वा । किन्तु तदीयं धर्मभूतं यज्ज्ञानम् तद्व्यापकमेव तेन समस्तशरीरवर्ति सुखं दुःखं चाऽनुभूयते । यथा ललाटे धारितश्चन्दनबिन्दुः एकत्र स्थाने ललाटैक-देशे विद्यमानः सर्वस्मिन् शरीरे शैत्यं प्रवर्तयति । अत्रापि न चन्दनबिन्दु-व्यापकः किन्तु तदीयः सुरभिः तदीयो वा शीतं गुणः सुरभिरूपो धर्मः स व्यापको न हि चन्दनबिन्दुरानन्दं प्रसारयति निःशेषे शरीरे, अपितु चन्दनबिन्दुगतः सुरभिमयः शैत्यमयो वा धर्मः, स एव समस्तं शरीरं सुखयति शीतलयति च । एवमेव जीवगतो धर्मः, धर्मभूतं ज्ञानमेव वा सकलदेहगतमाकोणकोणस्थं सुखं दुःखं ज्ञापयति । नात्र कश्चन् दोषः ।

सत्यमूर्तिः—जीवस्य स्थितिः शरीरस्य कस्मिन् मार्गे स्वीक्रियते ?

श्री स्वामिनः—["हृदि ह्येष आत्मा अत्रैतदेकशतं नाडीनाम् ।" प्रश्नो० ३ । ६ ] यद्धि नाडीशतस्य केन्द्रं हृदयं विद्यते तत्रैव जीवस्थितिः । यथा आकाशस्थितो भास्वान्, आकाशस्यैकदेशस्थोऽपि सर्वं विश्वं प्रकाशयति । तद्वदेव हृदयाऽऽकाशैकदेशे विद्यमानो जीवः समस्तं देहं व्याप्नोति स्वकीय - धर्मज्ञानेन । यथा सूर्यः स्वप्रकाशेनेति ।

इत्थं विवदमानः सत्यमूर्तिः स्वीयप्रश्नानां समाधानमाकर्ण्य निरुत्तर इव संवृत्तः । ततः सः प्रश्नान्तरं प्रक्रमपरिवर्तनपुरःसरं कुरुते ।

सत्यमूर्तिः—भगवन् ! यथा भगवान् सत्-चित्-आनन्द-स्वरूपः अजः अखण्डः अव्यक्तः अद्वितीयस्तथैव तस्यांशभूतो जीवोऽपि तादृश एव, यथा अग्निः अग्निस्फुलिङ्गः तथैव तत्तद्गुणयुक्तः सच्चिदानन्दो भवेत्—"अजो नित्यः शाश्वतोऽयं पुराणः" इति श्रुत्या शाश्वतः सनातनः प्रतिपादित एव । तर्हि कस्तत्र जीवेश्वरयोर्भेदः । उभयोरेकधर्मित्वात् ?

श्रीस्वामिनः—भगवन् ! इदमेव हि चिन्त्यम् । नहि जीवेश्वरयोः साम्यम् भगवांस्तु विभुः ( व्यापकः ) जीवश्चाऽणुः । भगवान् सर्वज्ञः, जीवस्त्वल्पज्ञः । परमात्मा तु सर्वाऽऽधारो धारकश्च जीवस्तु धार्यः । भगवान् शेषी जीवः शेषः किं वा "योऽवशिष्येत सोऽस्म्यहम्" इत्युक्तेः भगवान् शेषस्तु जीवः शेषी भवति ततोऽपि भेद एव द्वयोः ।

किञ्च—परमात्मा शरीरभूतो जीवस्तु शरीरी,—शरीरजन्य - कर्मफलभोक्ता भगवांस्तु सर्वनियन्ता नियामकः, जीवस्तु नियाम्यः । प्रभुः सर्वतन्त्र—

स्वतन्त्रः, जीवस्तु परतन्त्रः, ईश्वराधीनः। परमात्मा त्वेक एव, जीवास्त्वनेके। भगवांस्तु = स्वीयेच्छारूपाया - ज्ञानरूपायाः क्रियारूपायाः इच्छाशक्तेः अधीशः प्रवर्तकश्च मायायाः, जीवस्तु मायापरवशः। यतो हि स्वकीयाऽज्ञानेन मायायामेव सकलाऽऽनन्दं मनुते, किन्तु मायातु स्वयमेव भगवत एव आनन्दं लभते-स्वव्यवहारार्थं सृष्टयर्थञ्च भगवतः गुणानेव गृह्णाति= [यथा भागवते, २।५।१८] "सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः। स्थितिसर्गनिरोधेषु गृहीता मायया विभोः।"] इति भगवतः सच्चिदानन्दधर्मेभ्य एव सत्वरजस्तमसां ग्रहणम् ततो मायया स्वयं सत्त्वं, रजः, तमः, इति नामकरणीकृतमेषां-भगवतो धर्मेभ्य एव गृहीतानां-सद्धर्मात् = सत्त्वस्य, चित् धर्मात् रजसः, आनन्द धर्मात्-तमसः-नामकरणम्। भगवति यावद्विद्यमाना अंशभूताः एते, अंशाः सच्चिदानन्दधर्मा एवाऽऽसन् किन्तु-मायया यदा तद्धर्मेभ्यः पृथक् तदंशा गृहीतास्तदा तेषां सच्चिदानन्दांशानां-सत्त्व-रजस्तमांसि नामानि मायया कृतानि येन भ्रान्ता भवेयुः सर्वे, अन्यथा भगवता बादरायणेन-कथं "निर्गुणस्य गुणास्तत्र" इति-पृथङ्निर्देशः कृतः। यतो हि भगवांस्तु निर्गुणः "गुणशब्दस्य व्यवहाररहितः। स सच्चिदानन्दधर्मा=तत्र धर्मस्वरूपेणैव विद्यमानाः सत्-चित्-आनन्दाः। तेभ्यस्तदंशभागान् गृहीत्वा मायया="सत्त्वरजस्तमांसि" नामानि दत्तानि। तदन्तरं ते, अंशाः सच्चिदानन्दांशा गुणतां गता गुणशब्देन व्यवहृताः संवृत्ताः। अयमेव जीवेश्वरयोर्भेदः। अत एव भगवतः स्वरूपमाचार्यैर्निरुक्तम् "यत्—"प्राकृतधर्माऽनाश्रयः अप्राकृतनिखिलधर्मरूपः" इति। किन्तु जीवस्तु मायागुणनिबद्धो मायापरतन्त्रः। प्रभुस्तु न तदधीनः-सतु मायायाः स्वामी, मायैव तदधीना, तदाज्ञानुचरी विद्यते। इति स्पष्टं जीवेश्वरयोः पारस्परिको भेदः। स्वामि-सेवकयोरिव=भिन्नत्वमेव, नैक्यम्।

सत्यमूर्तिः—भगवन्! यद्येवं=तत्र श्रुतिरपि= "य आत्मनि तिष्ठन्, य आत्मानमन्तरः, यमयति स, ते आत्माऽन्तर्याम्यमृतः" किञ्च-गीतायामपि-"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्राऽऽरूढानि मायया।" इति स्पष्टमेव जीवस्य - भगवदधीनत्वम्। किञ्च-[ "तमेव साधुकर्म कारयति यमेवोर्द्ध्वं निनीषति। तमेवाऽसाधुकर्म कारयति यमधोलोके निनीषती" ति ] श्रुत्या तु स्पष्टतरमेव यद् भगवान् स्वयमेव जनाना-

मूर्द्धं वमधोलोकेषु निनीषाऽनुसारं प्रेरयति तान् जीवान् - सदसत्कर्मसु प्रवर्तयति स्वयमेव तर्हि पुनः किमर्थं जीवेष्वेव सदसत्कर्म - प्रवर्तनप्रयुक्तो दोषः पात्यते ? कथं न स दोषो-भगवति प्रवर्तके प्रेरके च मन्यते । किञ्च, क्वचित् कांश्चित् सत्कर्म कारयित्वा स्वर्गादीन् नयति-काँश्चिच्च दुष्कर्मसु प्रवृत्तान् विधाय नरकानुभवं कारयतीति कथं न भगवति वैषम्यं-नैर्घृण्य-ञ्चेति दोषद्वयम् । ?

श्रीस्वामिनः—भगवन् ! अस्त्यत्र भवतः प्रश्नद्वयम् । एकस्तु भगवान् स्वयमन्तर्यामी सन्-सर्वान् सदसत्कर्म कारयितुं प्रेरयति-अतो नाऽत्र जीवस्य दोषो अपितु परमात्मन एवेति ।

२. अपरश्च प्रश्नः=स्वयन्तु प्रेरक कर्मकारयिता=किन्तु फलभोगिनस्तान् विधाय सुख-दुःखादिदण्डेन दण्डयति-कर्मफलानि भोजयति बलात् । तत्रापि कांश्चन सुख-स्वर्गादीनि नयति, कांश्चन नरके पातयति इति-विषमता-भेद-बुद्धिस्तथा-निर्दयताऽपि । तांस्तथा कारयित्वा-निरयभोगं कारयतीति स्पष्ट-मेव द्वैतभावना । इति । तत्रोत्तरम्—

१. प्रथमस्य :—परमात्मा न कञ्चन दुष्कर्मणि प्रवर्तयति, स तु सर्वदा सत्कर्म कर्तु-मेव प्रेरयति । दुष्कर्मणि जीवो यदा प्रवर्तते तदा भगवान् सर्वतः प्रथममेव तं प्रबोधयति, यन्नैतत् त्वया करणीयं, अनुचितमेतत् न तवस्वरूपोचित-मित्यादि स्वात्मनि कर्मप्रवर्तनात् पूर्वमेव तद्धृदये प्रस्पन्दनद्वारा ( दिलधड़कन द्वारा ) तं सूचयति, किन्तु स जीवो मायाचक्रनिपतितः, इन्द्रियादि-लोभा-ऽऽकृष्टः जानन्नपि न जानातीतिवत् गजनिमीलिकां विधाय, पश्यन्नपि न पश्यति= पूर्वजन्मार्जितानुशयवशात्=पूर्वजन्मविहितसदसत्कर्मजनित-फलभोगार्थमेव भगवत आज्ञामपि हृदयस्थसूचनामपि-हृदय-स्पन्दनमप्यवगणय्य, अवहेल्य च भगवत्प्रे-रणां, बलान्माया-चक्रनिगडितचेताः दुष्कर्मणि प्रवृत्तो भवति, ततस्तत्फलमपि भुनक्ति तदनन्तरं फलभोगकाले पश्चात्तापमपि कुरुते, स्वकृतामवहेलनां पुनः पुनः स्मारं स्मारं हृदयस्पन्दनक्रियामपि चिन्तयन् भगवता तु पूर्वमेव मां हृदयस्पन्दन-कम्पन-गात्रस्तम्भन-रोमोद्गमनादिद्वारा प्रबोधितोऽपि स्वेन्द्रियलाल-साकृष्टचेताः कामलिप्सयैव वा दुष्कृतमिदमाचरितं मया महाननर्थः कृत इति चिन्तयन् व्यथते । इति सर्वानुभूतोऽयं विषयः ।

अतो भगवान् न कञ्चन जीवं दुष्कर्म कारयितुं प्रवर्तयति । किञ्च-जीवे तु भगवता प्रदत्तमेव ज्ञानं पूर्वत एव विद्यमानमस्ति, ज्ञानमेव जीवस्य स्वाभाविको

धर्मः किं करणीयम् किं वाऽकरणीयमिति चिन्तनकरणरूपं ज्ञ.नन्तु तस्मिन्नस्ति तथापि स न तदनुसारं चलति, मायाचक्रपतितो यथेच्छं प्रोच्छलति-निपतति च स्वयमेवान्धगर्ते पूर्वजन्मार्जितकर्म-फलभोगाय, तत्र भगवान् किं कुर्यात् ?, यदा तदाज्ञां न मानयति मायाविमोहितो जीवः। न तत्र भगवति दोषारोपः। अतः ब्रह्मसूत्राऽनुसारम् :—[ "कृतप्रयत्नापेक्षस्तु विहिता प्रतिषिद्धा वैयर्थ्यादिभ्यः" इति। अर्थात् जीवस्तु स्वयमेव निजपूर्वजन्मार्जितकर्मबन्धननिगडितः, तत्तत्कर्मफलभोगावश्य-कतया तथा प्रवृत्तोभवति। भगवांस्तु केवलं मध्यस्थ एव तं समये-समये सदसत्कर्म-प्रवृत्तिकाले तं बोधयति - उचिताऽनुचितविचारविमर्शनार्थम् प्रेरयत्यपि-परम्परया तद्धृदय-स्पन्दनादि-परोक्षव्यापारेणैव न तु साक्षात् समागत्य, किन्तु अज्ञानध्वान्ता-न्धदृक् स न पश्यति, न वा हिताहितं चिन्तयति, नाऽवदधाति च स्वान्तःकम्पनमपि, यथेच्छाचारः सन् तथा प्रवर्तते ततो भगवानपि तदनुसारमेव तं फलादिभोगद्वारा शोधयति। यथा कश्चन न्यायाधीशः सहृदयोऽपि तत्तत्कर्मानुसारं अभियुक्तस्य-क्रिया-कलापानुरूपमेव स्वव्यवस्थां दण्डनिर्धारणादिकीं वितनुते। नात्र तस्य कश्चन पक्षपातो व्यामोहो वा। स तु दण्डनायकः, तटस्थो यथानियमधारानुसारं तद्व्यापारसिद्ध्यै तदनुकूलामेवाज्ञां प्रसारयति। न तस्य तेन दण्ड्येन सह द्वेषो न वा स्नेहः। स त्वपरा-धसिद्ध्यनुसारमेव विरचयति दण्डविधानम्, किंच निर्दोषत्वे सिद्धे बन्धनमुक्तिमपि घोषयति। एवमेव भगवानपि।

२ द्वितीयस्योत्तरम् — यच्च 'एष एव साधुकर्म कारयति' इति श्रुतिः। अस्यार्थो यथा भवता गृहीतो न तथा, अस्याः श्रुतेरर्थस्तु-यो हि जीवः स्वकृति - स्वप्रवृत्त्यनुसारं यथा भगवत आज्ञा तथैव चलति - तदा भगवानपि तं तथैव प्रेरयति न बलात् तं समाकर्षयति तस्मिन् व्यापारे। तत्र जीवेच्छानुसारमेव स्वातन्त्र्येण तं कर्म कारयितुं तदिच्छामेव समनुसरति प्रभुः। न मनागपि विरोधं भजते। एवमेव सैव जीवो यथेच्छाचारः सन् भगवदाज्ञां भगवत्प्रेरणामपि तिरस्कृत्य न सत्कर्मणिप्रवृत्तो दुष्कर्म-स्वेव निरंतरं संसक्तो भवति, परोक्षविधया तत्स्वान्ते स्पन्दन-कम्पनादि-जागरित-सद्भावनया बोधितोऽपि न भगवदाज्ञां पालयितुं प्रवर्तते-तदापि भगवान् न तं तत्क्षणं किमपि कथयति नावरुणद्धि च, हृदयकम्पन-गात्रविकृति-मालिन्यादि-रोमोद्गमादिक-प्रतिषेधमयीं परोक्षसूचनामवश्मेव ददाति तामपि तिरस्कुर्वन् तथाविधे दुष्कर्मणि प्रवृत्तोभवति तदापि भगवान् न तं रुणद्धि-न तस्येच्छाव्याघातं कलयति प्रभुः तत्रापि तं स्वतन्त्रमेव मुक्तं करोति यथेच्छया व्यवहर्तुम्। जीवोऽपि मनसेप्सितं दुष्कृतं कृत्वा पुनस्तत्फलमपि स्वयमेव भुनक्ति। कृतस्य कर्मणः फलन्तु भोक्तव्यमेव। तस्य तु

भोगेनैव क्षयो भविता नान्यथा। उक्तञ्च "प्रारब्धकर्मणान्तु भोगादेव क्षयः" अतो भगवानत्रापि न दोषभाग् भवति। दुष्कर्मणि बलादिव प्रवृत्तं-भगवानपि तमनुमनुते। तत्प्रवृत्त्यनुकूलमेव तं समर्थयते। नैवात्र मनापि भगवान् दोषभाक्। अत्रतु जीवस्य पूर्वजन्मविहितकर्मणामनुशया एव तत्तत्कर्मजन्या भावना-तत्तत्कर्मप्रवृत्तिरेव वा हेतुः। तदनुसारमेव जीवः प्रवृत्तो भवति सदसत्कर्मफलभोगाय। ईश्वरस्तु केवलं तत्कृतकर्म-जनितफलोपलब्धिनियामकः कूटस्थः। तत्तत्कर्मभोगभुक्त्यै तं प्रेरयति, यथासमयम्। न भगवतस्तत्र स्वीयाग्रहो वा। तथापि भगवान् करुणावरुणालयः परमकारुणिको दयार्द्रहृदयो मृदुलसद्योद्रुतचेताः। यदाहि जीवोऽत्यन्तं खिन्नः सन् तच्चरणारविन्दमेवा-नन्यमनस्कतया शरणीकरोति प्रार्थयते च स्वोद्धारार्थं तदा भगवान् क्षणमात्रमपि विलम्बमसहमानः, समवशिष्टेष्वप्यनुशयेषु, कर्मभोगेषु चाऽभुक्तेष्वपि दयया तं मुक्तकिल्विषं विधाय सपदि समुद्धरत्येव। न तत्र कस्यचनाऽपि प्रतीक्षा। यथा राज्ञः कृपाभाजन जनः कृतपराधोऽपि नैवापराधदण्ड - विधाननियमानुरूपफलभाक् सन् कृपाविशेष - बलसहायः सद्यो राजप्रियः सन् राज्ञा सहैव तदीयाऽऽमोद-प्रमोदेषु फलभाग्भवति, तथैव जीवोऽपि भगवत्कृपाबलसहायो भगवच्चरणशरणः परमानन्दसंप्लुतो भवति।

सत्यमूर्तिः—भगवन्! ईश्वरो हि सर्वशक्तिमान् कर्तुमकर्तुमन्यथाकर्तुं समर्थश्चेत् तर्हि सः कथं न जीवं प्रतिकूलकर्मणि प्रवर्तमानं रुणद्धि?

श्रीस्वामिनः—बन्धो! भगवांस्तु सर्वतः प्रथममेव हिताऽहितज्ञानाय सदसद्-विषय-विवेचनार्थं तस्मै पण्डानाम्नीं बुद्धिं प्रायच्छत्। तयाऽपि स न किमपि चिन्तयति चेत् तदर्थं भूयांसि वेदादिशास्त्राण्यपि प्रादुर्भावितानि तान्येव दृष्ट्वा सः स्वयमेवात्मानं किं न सत्कर्मणि प्रवर्तयेत् कथं वा प्रतिकूले व्यापारे प्रवर्तमानमवरुणद्धि। जानन्नपि, पश्यन्नपि, स यदाऽन्धकूपे निपतितुमेव कामयते तर्हि कस्मिन् दोषदृष्टिः पात्येत।

सत्यमूर्तिः—भगवन् यदुक्तं "जीवा अनन्ता एव" परन्तु शास्त्रे प्रत्यक्षं स्पष्टमुद्घोषितं यत् "आत्मात्वेक एव भेदरहितः" तर्हि कथमियं द्विविधा मान्यता?

श्रीस्वामिनः—भगवन्! "आत्मा त्वेक एव" इति श्रुत्याश्रयो न भवद्भिश्चिन्तितः। श्रुतेरभिप्रायस्त्वित्थम्-आत्मा एक एव=एकप्रकाशकः नास्ति-विभिन्ना-ऽऽकारवान्। अर्थात् यथा एको जीवोऽणुरूपो न विभुस्तथैवाऽन्यो जीवोऽप्यणुस्वरूपो न व्यापकः। किञ्च दुःखसुखाऽनुभूतावपि समानत्व-मेव-यथा एको जीवो यादृशं दुःखं सुखं वा समये समये अनुभवति; तथैवा-

न्योऽपि जीवः स्व-स्वकर्मजन्यं समये समये सुखं दुःखं वाऽनुभवति न तत्र, दुःखसुखादिभोगे द्वैविध्यम्। अतस्तदधृष्ट्यैव भोगे भेदराहित्यं, अपितु समानमेव। न तत्र संख्यायां जीवात्मनः ऐक्यम्। जीवास्तु प्रतिशरीरं भिन्ना अनन्ता एव। यदि जीवेषु एकता स्वीक्रियेत तर्हि एकस्य सुखेऽपरोऽपि जीवः सुखी भवेत्। एकस्य दुःखभोगकालेऽपरोपि जीवो दुःखभागेव भवेत्-परञ्च न विलोक्यते तथा प्रवृत्तिर्व्यवस्था वा लोके-पितुर्दुःखं पिता भुनक्ति न पुत्रः। पुत्रस्य दुःखं सौख्यं वा पुत्र एवाऽनुभवति न तत्पिता। लोके प्रत्यक्षमेव दृश्यते भेदस्तु जीवेषु-यथैको धनसम्पन्नो जीवः, अन्यो दरिद्रो भ्रमति। एको राज्यं कुरुतेऽन्यो भिक्षां याचते। इत्यस्ति जीवेषु नानात्वं भेदश्च प्रत्यक्षचर एव। विषमतैषा तु एकस्मिन्नेव गृहे परस्परं भ्रातृषु, माता-पित्रोः, पतिपत्न्योः सर्वत्रैव व्याप्ता विद्यते अतः कथमेकसंख्यात्वं जीवे।

किञ्च देहभेदादेव दुःखादीनां भिन्नताऽङ्गीक्रियते साऽपि वा देहस्य न जीवस्य इत्यादि शङ्का न कार्या यतो हि सौभरि महर्षिस्तु एक एव परञ्च पञ्चाशद्राजकुमारीभिः सह पाणिग्रहणकाले गार्हस्थ्यधर्मपालनावसरे, ताभ्यः सौरतं सुखमनुभावयितुं वा स्वात्मनोऽपि पञ्चाशत् संख्या देहानां कारिता (कृता वा) तपोबलेन। किन्त्वेकस्यैवाऽनेकरूपतायां सुखदुःखानुभूतिः प्रतिशरीरं भिन्नभिन्नैवानुभूता। तथापि न तत्र केवलं देहभेदः कारणम्, अपितु तदन्तर्वर्ती जीवात्माऽपि हेतुः —

सौभरि महर्षिस्तु एक एवासीत्, एकस्यैव नानारूपता जाता, तर्हि सर्वेषां देहानां दुःखं सुखं परस्परं न भिन्नभिन्नशरीरेषु व्याप्तमभूत्। जीवात्मातु सौभरेः सर्वं शरीष्वेकैवासीत्, परन्तु एकत्वेऽपि प्रतिशरीरं जीवेनापि भिन्नभिन्नतया पीड़ाऽविभिन्नैवानुभूता यद्देहगता पीड़ा, सुखं वा, तेनैव देहेनाऽनुभूतं नान्येन। अतो ज्ञायते देहभेद एव न केवलं सुखदुःखभोगे हेतुस्तत्रतु जीवोऽपि तदन्तर्गतत्वात् दुःखसुखभोक्ता जातः। तदानीं सौभरेः जीवात्मनोऽपि देहानुसारिनानात्वमेव जातम्-तत् तपःप्रभावात् अतएव तत् तद् देहेन तत् तद्देहगतेन जीवभेदेनैव सर्वानुभूतम्। अतो न तत्र केवलं देहभेद एव कारणं सुखदुःखाद्युपलब्धौ, (अनुभवे वा) तत्रापि-जीवात्मैव हेतुः। अन्यथा जीवात्मना विना तु जड़स्वरूपो देहो न किमपि कर्तुं पारयति। विना जीवेन तु स मृतः। मृतदेहो न चेष्टते, तर्हि कथं दुःखं सुखं वाऽनुभवितुं शक्नोति जड़श्चेतनस्वरूपेण जीवेनहीनः। अतः सर्वत्रैव जीवात्मैव कर्ता भोक्ता च, न केवलं देहः। जीवोऽपि देहद्वारैव सर्वं सुखदुःखादिकं अनुभवति न स्वतन्त्रः। सर्वं देहमाध्यमेनैवाऽनुभवति। अतो जीवकृतो व्यवहारो देहे उपचर्य्यते। जना देहकृतमेव मन्वते।

अत एव जीवो येन येन देहेन सदसत्कर्म करोति तत् फलं तेनैव देहेनानुभवेत्, इत्यपि न नियमः पूर्वजन्मार्जितं यावत्कर्मफलं समाप्तं न स्यान्न तावत् तत्कर्मकृतं फलं तत्क्षणे भुनक्ति। अत एव जन्मान्तरे कृतानां सदसत्कर्मणां सुखदुःखरूपाणि फलानि जन्मान्तरे पुनर्नवीनविधृतदेहद्वारा भोक्ष्यति, इति क्रमः।

यच्च पूर्वजन्मार्जितं कर्म, कर्मफलं वा नवीनेन देहेन, अहमधुना भुनज्मि, इति न सः स्मरति यतो हि पूर्वजन्मस्थाः संस्काराः जन्मकालिककष्टानुभवकाल एव सर्वे विस्मृता जाताः। अत एव बालः जन्मकाले मातृगर्भतो बहिर्गत एव सर्वं विस्मृत्य रुदत्येव "क्वाहम् क्वाहम् क्वाहम्" इति, न स्मरति सः किमपि। तत्र पूर्वजन्मार्जितसंस्कारनाश एव कारणम्। किञ्च नवीनजन्मना लब्धदेहे विद्यमानत्वात् तद्देहगतशुभाशुभवासनानामप्युद्गतत्वात् - उद्भूतत्वात् 'उद्भटत्वाच्च, न भवति तस्मिञ्जन्मनि पूर्वजन्मजातः संस्कारोदयः। किं वा सुदीर्घकालत्वात् विस्मृतत्वाद्वा। तत्रापि यदि-केचन योगिनो भवन्ति ते स्वयोगाभ्यासेन यौगिकज्ञानेन वा सकलं तत् पूर्वजन्मार्जितमपि प्रत्यक्षमिवाऽनुभवन्तीति तत्र तेषां योगप्रभावः। न तत्र सर्वसाधारणजनानुभूतिविषयः। अतो देहादिधारणानन्तरं सुखदुःखाद्यनुभवे - सुखदुःखादिव्याप्तौ वा न देहभेदः कारणम्। अपितु जीवात्मनां नानात्वम्, भिन्नभिन्नरूपत्वम्, कारणम्। अतो जीवा अनन्ता एव प्रतिशरीरं भिन्नाः सन्ति। न क्वचन जीवस्यैकैव संख्या।

श्रुतावपि :—"यथाऽग्नेः क्षुद्राः विस्फुलिङ्गा व्युच्चरन्ति, तथैवेमे जीवाः रमणीयचरणाः कुपूयचरणाः।" इति श्रुत्या ज्ञायते यत्—

सहसैव असंख्यानां - अग्नेर्विस्फुलिङ्गानामिव सद्यः समुद्भूतिः सञ्जाता। किञ्च—"रूपं रूपं प्रतिरूपो बभूव।" एवमेव—"तत्सृष्ट्वा तदेवाऽनुप्राविशत्।" इत्यादिभिश्च प्रतिदेहम् पृथक् पृथगेव नानादेहेषु द्विपद-चतुष्पदादिषु-भिन्नभिन्नरूपेषु भिन्नो भिन्न एव प्रविष्टोऽभवत्। इति सुतरां जीवानां नानात्वमेव।

किञ्च :— "नित्योनित्यश्चेतनश्चेतनानामेको बहूनां यो विदधाति-कामान्।"

इत्यादिभिः, एवमेव—"पुरश्चक्रे द्विपदः पुरश्चक्रे-चतुष्पदः पुरः स पक्षी भूत्वा सन् पुरः पुरुष आविशत्।" इति अनेकाभिः श्रुतिभिर्जीवानाम् नानात्वम्-प्रतिशरीरं भिन्नभिन्न-रूपेण नानाशरीरेषु अपि नाना जीवानां प्रवेशेन सहैव नानारूपाणामन्तर्यामिणामपि जीवात्मनां नियन्तृत्वरूपेण प्रतिशरीरं पृथक्-पृथक् प्रवेशः। जीवान्तर्यामिणोः परस्परं सख्यभावोऽपि वर्णित :—

यथा :—"द्वा सुपर्णा सयुजा सखाया, समानं वृक्षं परिषस्वजाते।
तयोरेकः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्यो ह्यभिचाकशीति ॥"

अतो—जीवानामनेकत्वे अन्तर्यामिनाश्चानन्तत्वे नोदेति शङ्कैव ।

सत्यमूर्तिः—भगवन् ! श्रुतिषु प्रतिपादितमस्ति यत्—"एकमेवाऽद्वितीयं-ब्रह्म" इति "सर्वत्र च स्वगतभेद-विवर्जितात्मा" "आनन्दमात्रकरपाद-मुखोदरादिः।" इत्यादीनां कोऽभिप्राय :?

श्रीस्वामिनः—ब्रह्म त्वेकमेव न ब्रह्मणो भिन्नं किमपि ब्रह्माण्डेषु यतोहि "तदेव सर्वं सर्वरूपमभवत् "इति। यश्च भगवान् "आनन्दमात्रकरपाद" इति वर्णितः सर्वं यथार्थमेव, समुद्रे यथा यत्रकुत्रापि स्थले गत्वा तज्जलं प्राशयेत् सर्वत्रैव-आकोण-कोणं-एकरसमेवानुभूतिविषयमवगच्छति जनः। एवमेवोक्तम् :—"स सैन्धवघनः" इति यथा न तत्र सैन्धवातिरिक्तः कश्चन रसोऽनुभूयते, तथैव भगवति अपरिमित-अगणितानन्दमये सर्वांशेन सकलावयवेन च केवलमानन्दमानन्दमेवाऽनुभविष्यति समर्थो भक्तः। आनन्दातिरिक्तं नान्यत्किमप्यवलोक्यते। अत एवैक रसरूपत्वा-दितरभेदत्रिवर्जितत्वमपि ब्रह्मणि-तत्र"इतर पदार्थस्यैवाऽभावः। अतः श्रुतौ स्पष्ट-मेवोक्तम् "नान्यत् किञ्चन मिषत्" इति ब्रह्मातिरिक्तं त्वन्यशब्दस्य प्रवृत्तिरेव नोदेति। अतः स्वगतभेदविवर्जनं प्रतिपादितम् तथापि-तत्र ब्रह्मणि सजातीयः स्वगतश्च भेदो नास्ति किन्तु विजातीयभेदस्त्वस्त्येव-यतोहि ब्रह्मातिरिक्तं किमपि नास्ति तर्हि विजातीयस्य-सर्वथाऽभावात्-विजातीयोभेद एव-अर्थात् नास्ति तत्र किमपि विजाती-यत्वम् अशेषस्य ब्रह्माण्डस्य ब्रह्ममयत्वात् ब्रह्मस्वरूपत्वाद्वा। इति

सत्यमूर्तिः—भगवन् ! यदुक्तम्—"सत्यं ज्ञानमनन्तं ब्रह्म" इति किञ्च—"साक्षी चेता केवलो निर्गुणश्च" इति ब्रह्मणो निर्गुणं निर्विशेषं स्वरूपं प्रतिपादितम् विशुद्धचैतन्यमयम् तर्हि कथं निर्गुणे सगुणत्वम्-निराकारेऽपि साकारत्वं साध्यते ?

श्रीस्वामिनः—भगवन् श्रुतावेव स्पष्टं वर्णितं किन्तु जना यथेच्छमेव तदर्थं कल्पयन्ति। निर्गुणशब्दस्योत्पत्तिरपि गुणेभ्य एव। गुणा भविष्यन्ति तदैव गुणाभावोऽपि भविष्यति नान्यथा। अतो ब्रह्मस्वरूपम् सत्यं ज्ञानं अनन्तं-इति वर्णितम्-तत्र ब्रह्म यदि निर्गुणम्-सर्वथा गुणरहितमेव स्यात् तर्हि त्वेकविधमेव तत् न भविष्यत्यनन्तम्। अनन्तत्वं गुणानां न्यूनाधिकतया विद्यमानत्वे सत्येव नानारूपता "अनन्तरूपता" सेत्स्यति। अनन्तत्वमप्येकप्रकारको गुणो धर्मो वा। यदा धर्मो यत्र विद्यते स धर्मी भविष्यत्येव यदा यो धर्मी भवति तदा सः सावयवो भवति ब्रह्मणि गुण एव धर्मो, धर्म एव गुणाः। अतो न सर्वथा ब्रह्म

निर्गुणम्-प्रत्युत सगुणमेव। ब्रह्म शब्द वाच्यो भगवानेव-स च निर्गुणः न निरीहः न निर्विशेषः अपितु-सगुणः सर्वाऽऽकारः सविशेषसस्पृहश्चेति। यच्च निर्गुण श्रुतौ निर्गुणत्वं वर्णितमन्तत्-न गुणराहित्यं वदति श्रुतिः सातु ब्रह्मणि प्रकृतिजन्यानां गुणानां निषेधं करोति- नहि प्राकृता गुणा ब्रह्मणि विद्यन्तेऽतो निर्गुणम् ब्रह्म। किन्तु भगवतो नित्या ये धर्मा अप्राकृता गुणा वा सन्ति तेतु सन्त्येव। एवमेव - यथा निर्गुणः शब्दस्तथैव निराकारोऽपि। अस्याऽप्यर्थः। निर्गता आकाराः - नाना नामरूपाणि यस्मात् सः। निराकारीं न तु आकाररहितः। आकारस्त्वस्त्येव, अतः साकार एव भगवान्। यदि च निराकारस्य आकाररहित एवार्थोऽभिमतस्तर्हि - सामान्यजनवत् प्राकृताकाररहितः। यतोहि-सामान्याकारेण तु सामान्यमेव कार्यं शक्यते न हि विशेषम्। यथा भगवान् श्रीकृष्णः, यशोदाया भवने मासादपि न्यूनवयाः आसीत् तदा सा- पूतना तं समुत्थाय सामान्यं वालकमेव मत्वा स्वं स्तन्यं विषमविषमहोल्वणं दुर्जरं पाययामास येन सः सद्यो मुखतो जिह्वया स्पर्शमात्रेणैव तत्क्षणान्म्रियेत। परन्तु भगवान् न प्राकृतवालरूपः प्राकृताकारः सतु तथाविध स्वल्पकायोऽपि महाकायां तां निशाचरीं, स्तनपानमिषेणैव "प्राणैः समं रोषसमन्वितोऽपिवत्" इति भागवते। पुनश्च साऽतिविह्वला सञ्जाता-सती="सा मुञ्च मुञ्चालमिति प्रभाषिणी प्रवेपमानाऽखिल जीवमर्मणि। विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्न-गात्रा क्षिपती रुरोद ह।" [भागवते १०।६।१०-११] इति अप्राकृतशरीरत्वमेव। नहि मासैकवया वाल एवं कर्तुं शक्नोति। अतः प्राकृताकाररहितः किन्तु साकारः। किञ्च— भगवान् सप्तहायनादपिन्यूनवयाः सप्तक्रोशपरिमितं महाकायं गोवर्धनादि सद्यः समुत्थाप्य कराङ्गुल्येकदेशाऽग्रभागे सप्तदिनावधि विधृतवान् न मनाग् विचचाल। अतः प्राकृतशरीरधारी- कश्चन बालकः सप्तवर्षात्मकः सप्तसेरक परिमितमपि सुवर्ण सप्त घण्टात्मकं यावत् धृत्वा न सुस्थिरैकत्र स्थातुं प्रभवति। कुतः सप्तदिनकथा। इत्यादिकन्तु तदानीमेव तत्रत्या गोपाः स्वयमेव सन्दिहानाः श्रीनन्दरायेन सह समालपन्तः स्वशङ्कायाः समाधानमपाप्नुवन्।

प्रश्नस्तेषाम्—"नन्द! ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम्।"

"क्व सप्तहायनो वालः क्व महाद्रिविधारणम्?" इति प्रश्ने [भागवते १०।२६।१३-] ततो श्रीनन्दराजेन भगवतो विशिष्टस्वरूपगुणकर्मवर्णनात् सर्वं समाहितम् अतो न भगवतः प्राकृतगुण-धर्माकाराः सन्ति। भगवतो विरुद्धधर्माश्रयत्वात्= असम्भवमपि कार्यं कर्तुं समर्थत्वात् = यथा श्रुतिः—

["अपाणिपादो जवनो ग्रहीता। पश्यत्यचक्षुः स शृणोत्यकर्णः"]

इत्यादिः श्रुतिः स्वयमेव प्रतिपादयति यद् भगवतो नानाऽऽकाररूपत्वम् प्राकृतगुण-

धर्माऽऽकार - राहित्यञ्चेति । अतोहि सः प्राकृताकारादिरहितः अतएव-निराकारः । किञ्च "ज्ञान-आनन्दादयोऽपि ब्रह्मणो विशेषधर्माः । तथैव चेतनाऽचेतनात्मकं निखिलं जगदपि ब्रह्मणो विशेषणात्मकं शरीरमेव । अतो निर्विशेषमपि ब्रह्म न भवितुमर्हति, प्रत्युत सविशेषमेव ।

सत्यमूर्तिः—भगवन् ! यच्च "ब्रह्म सत्यम् जगन्मिथ्या" इति । प्रपञ्चात्मकं जगत् मिथ्या-मायामयम् । माया हि ब्रह्मणः शक्तिस्तथापि सा अनिर्वचनीया अगण्या, तुच्छपदार्थरूपा इति । कियत् सत्यम् ?

श्रीस्वामिनः—भगवन् ! इति सर्वं शाङ्करसिद्धान्ते स्वीकृतं तद् भ्रमात्मकं, वदतो व्याघातं एव तेषाम् । यतो हि— "ब्रह्म सत्यम्" इति तु सर्वसिद्धान्तनिष्पन्नं सत्यमेव । किन्तु जगत् कुतोजातम् ? जगदुत्पत्तिरपि ब्रह्मण एव जाता, तर्हि "कममसतः सद्-सतो वा असद् जायते । नियमस्तु सतः सत् असतश्चासदेव समुत्पद्यते । कर्तृरूपं ब्रह्म यदि सत्यं तर्हि तदुत्पन्नं जगत् कथमसद् भवितुमर्हति । असत्-नामकं किमपि पदार्थमेव नासीत्-तदा तर्हि किम्बहुना ब्रह्मातिरिक्तं किमपि नासीदन्यत् । तत्र श्रुतय एव- "स एकाकी न रमते" "स द्वितीयमैच्छत्" सोऽन्वैक्षत "नान्यदात्मनोऽपश्यत्" "सच्च त्यच्चाऽभवत्" इति । किञ्च—"एकोऽहम्-बहुस्यां, प्रजायेय" इत्यादिश्रुतिभिः स्पष्टमेव वर्णितम् यद् ब्रह्मातिरिक्तमन्यत् किमपि नासीत् तदानीम् । ब्रह्मणश्च बहुभवनरूपा इच्छा सञ्जाता । तदानीञ्च स्वात्मनोऽतिरिक्तं किमपि नापश्यत्-तदा सः स्वयमेव नानानामरूपाकारो जातः । "सत्"-जड़ात्मकम्, अचरम् तथा "त्यत्" चेतनात्मकं चरात्मकं इति उभयस्वरूपं चराऽचरात्मकं किंवा जड़चेतनात्मकं जगत् स्वात्मनैव ससर्ज = स्वयमेव सर्वरूपः समभूत् तर्हि ब्रह्म सत्यं तदेव अविकृत-परिणामरूपेण ( नानारूपेण नानाऽऽकारेण ) प्रकटितम् जगद्रूपं जातं तद् साक्षादेव ब्रह्मभूतं जगत् कथं मिथ्या भवितुं, कथितुं वा योग्यं स्यात् तदानीन्तु असन्नामकं किमपि वस्त्वेव नासीत् तर्हि कथमसज्जगद् निगद्येत ।

किञ्च मायायाः प्रपञ्चात्मकं न जगत् । जगत्तु ब्रह्मरूपं-सत्यमेव । प्रपञ्चात्मकश्च संसारः अहन्ताममतात्मकः । अहन्ता ममता-रूपाहि सा माया-तस्या एव प्रपञ्चः संसारः । अयं मम, एष मदीयः इत्याकारकः । संसारस्तु जगद्भिन्नमेव । जगद्धि=(ज) जायते=ब्रह्मणः सकाशादुत्पद्यते, (ग) गच्छति=अन्ते स्वाधारे समु-

त्पादकं ब्रह्मण्येव लीयते, ( अत् ) अतति=व्याप्नोति=सर्वत्रस्थितिमत्, इति जगत्, तत्तु ब्रह्माद्भूतं, सर्वत्रैव व्याप्तं, अन्ते ब्रह्मण्येव लयं प्राप्नोति। भगवता स्वेच्छया स्वविहारार्थमेव समुत्पादितं, तर्हि सत्यसङ्कल्पस्य सत्यकामस्य विहारोपयोगि कथमसद्वस्तु भवितुं शक्नोति। इत्थमेव मायाऽपि साक्षाद् ब्रह्मणः स्वेच्छारूपा-स्वसङ्कल्पस्वरूपा=तत्क्रियाशक्ति - ज्ञानशक्ति - इच्छाशक्तिस्वरूपा=तर्हि ब्रह्मरूपैव। ब्रह्मणोधर्माः ब्रह्मणोज्ञानम् ब्रह्मणः कृतिः ब्रह्मणः शक्तिः सर्वं ब्रह्मैव। न ब्रह्मतो भिन्ना। यतो हि शक्ति-शक्तिमतोरभेद एव। अतः सा माया ब्रह्मरूपा कथं तुच्छा कथं वा मिथ्या भवितुं शक्यते सर्वदैव ब्रह्माश्रितत्वात् तदधीनत्वात्। न हि कस्य-चन मनुष्यस्य कीदृश्यपीच्छा मनुष्याद् भिन्ना भवति।

सत्यमूर्तिः—भगवन्! शाङ्करसिद्धान्ते "जीवः" ब्रह्मणः-प्रतिविम्ब आभासो ब्रह्म-समस्वभावो विशिष्टप्रकाशवान् ( स्वप्रकाशरूपः ) नित्यमुक्तश्चेति। अत्र का सम्मतिर्भवताम्?

श्रीस्वामिनः—भगवन्! जीवः कदापि न ब्रह्मण आभासो भवति न वा प्रतिविम्बोऽस्ति न च क्वचन स्वप्रकाशात्मको न वा नित्यमुक्तोऽपि भवितुं शक्नोति। यतोहि - श्रुतौ प्रतिपादितमस्ति-यत्—[ "यथाऽग्नेः क्षुद्रा-विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनोहि-सर्वे जीवा व्युच्चरन्ति" ] इत्यग्नितो यथा विस्फुलिङ्गानां सूक्ष्माग्निकणानां वहिरुद्गमन तथैव ब्रह्मणोंऽशानां सूक्ष्माणुरूपाणां जीवानां सहसा समुत्पत्तिः। अतो जीवा हि ब्रह्मणोंशाः। किन्तु अणुरूपा न विभुरूपा, न वा स्वतः प्रकाशरूपाश्च। अपितु-अल्पज्ञा ब्रह्मपरतन्त्राः, ब्रह्माधीना एव। ईश्वरनियम्याः सन्ति। भगवान् नियामकः सर्वतन्त्रः स्वतन्त्रो न तथा जीवः। प्रभुस्तु सर्वशक्तिमान् न तथा जीवः। प्रभुर्विभुर्न तथा विभुर्जीवः! तर्हि कथं ब्रह्मसमान-स्वभाववान् विशिष्टो जीवः?

सत्यमूर्तिः—भगवन्! यथा घटान्तर्वर्ती आकाश आकाशात् पृथग् दृश्यते परन्तु यदि घटः स्फुटितःस्यात् तदा घटान्तर्गतः आकाशः महाऽऽकाशे विलीयते। एवमेव जीवः स्वदशायां पृथक् किन्तु मुक्तिदशायान्तु यदा ब्रह्मणि लीनो भवति तदातु घटाऽऽकाशवत् एकीभवत्येव = आकाशे घटरूपोपाधिवत् जीवेऽपि अविद्यावच्छिन्नोपाधिः यदा विनष्टो भवति दूरीभवति तदैव जीवो ब्रह्मणि-लीनो ब्रह्मरूपो भवत्येव न तत्र तदानीं जीवस्य पृथक् अस्तित्वमिति अत्रभवतां भवतां का विप्रतिपत्तिः?

श्रीस्वामिनः— भगवन् सत्यमेतत् किंतु जीवोऽल्पज्ञः ब्रह्मणोंऽशभूतोल्पशक्तिमान् तर्हि सः ब्रह्मणिलीनोपि यावत्-मुक्तिकालं ब्रह्मण्येव ब्रह्मस्वरूपःसन् तदात्म-भावेनैव स्थास्यति। किन्तु पुनः सृष्टिकाले यथा ब्रह्मतः पृथग् उत्पन्नो भवि-ष्यति तदा सः स्व-स्वानुशयैः साकमेव स्वस्वरूपे जीवरूपे तथैवाल्पज्ञे-सीमितशक्तिमये पूर्वरूपगुणानुसारी एव पूर्ववदेव प्रकृतिस्वभावश्चेति। किन्तु मुक्तिकालेतु तस्य स्थितिस्तादृश्येव स्थास्यति यथा लोहगोलकस्य वह्नौ। तप्तायःपिण्डे लोहगोलके अग्निमये सञ्जाते भेदं कर्तुं किंवा अग्नेः स्वरूपाद् लोहगोलकस्य पृथक् प्रतीतिं कर्तुं समर्थो भवति। न वा भेदमप्यनुभवति तदानीन्त्वग्निस्वरूपमेव सर्वतः प्रतीयते कार्यमपि अग्निवत् दाहादिकं करिष्यति यावदग्निस्तस्मिन् तं अभिव्याप्य तिष्ठति। अतो यदा अग्निः शीतलः शान्तो भवति तदा सः लोहगोलको लोहगोलक एव न स तदा किमपि ज्वालयितुं दाहयितुं शक्तो भवति न च तस्य तदा तद्रूपमेव तथा-विधं सुवर्णवर्णमपि स्थिरं भवति। सतु तथैव स्वपुरातनरूपतां लोहत्वं कृष्णवर्णत्वं विदधदेव तिष्ठति एवमेव जीवानामपि यावन्मुक्तिकालं ब्रह्मणि स्थितिर्ब्रह्मरूपेण तदनन्तरं पुनः स्वीयजीवत्वरूपैव स्थितिः। अतो न ब्रह्मै-क्यं जीवानां क्वचन सम्भवम् जीवास्तु मुक्तिदशायामेव ब्रह्मानन्दानुभवं विदधति न सर्वदेति।

सत्यमूर्तिः——भगवन्! जीवस्य मुक्त्यर्थं किम् "तत्त्वमसि" इतिवाक्यस्य ज्ञानमेव पर्य्याप्तं किं वा तज्ज्ञानेन स्वात्मनि "अहं ब्रह्मास्मि" इति धारणैव पर्य्याप्ताऽथवाऽन्यत् किञ्चन?

श्रीस्वामिनः —भगवन्! वस्तुतस्तु "तत् त्वमसि, इति ज्ञानेन मुक्तिर्भवति न वा" अहं ब्रह्मास्मीत्यभिमानेन। प्रत्युत अहंमानीजनस्तु अधः पतत्येव। यदि भवत्यपि यथा "ऋते ज्ञानान्न मुक्तिः" इत्यादिवाक्याऽनुसारं तत्त्वतो यदि ज्ञानं स्यात् जीवस्य स्वात्मनि ब्रह्मणि च न वस्तुतो-भेदः प्रतीयेत-यदा च "शुनि चैव श्वपाके च" समत्वेन बोधो व्यवहारो वा स्वतोदृढतरः सिद्ध्-येत् तदा भवति-किन्तु नात्यन्ततो मुक्तिर्न चात्मसुखम्। तादृशी मुक्ति-स्तु स्वात्मनः स्वकीयत्वस्यापि लोपरूपा। यथा नद्यो गङ्गायमुनादयः समुद्रे सम्मिलिता भवन्ति तदा तासामस्तित्वमपि समुद्रेण सहैक्ये जाते नष्टं भवति न तदानीं तस्मिन् कुत्रापि गङ्गाया गङ्गात्वेन प्रतीतिर्भवति। तथैव मुक्तिः, यदि जीवः कर्मबन्धेभ्यः स्वात्मनो मोक्षं कामयेत तर्हि सर्वदा सर्वात्मभावेन अविच्छिन्नतैलधारा सदृशा ध्रुवाऽनुस्मृति - स्वरूपां

भगवतो भक्तिरेव सदोपास्या। तेनैव भगवतस्तुष्टिः उक्तञ्च [भक्त्या तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधवः] किञ्च–"भक्त्या लभ्यस्त्वनन्यया" गीतायामपि–[भक्त्या मामभिजानाति यावान् यश्चाऽस्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।"] इत्यादि स्पष्टमेवोक्तम्–भक्त्यैव भगवतस्तत्त्वतो ज्ञानं तेन तादृशेन च ज्ञानेन भगवति प्रवेशः। प्रवेश एव मुक्तिः। अतो भक्तिं विना न मिलति वस्तुतो मुक्तिः।

किञ्च— "नाऽयं सुखापो भगवान् देहिनां गोपिकासुतः।
ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह॥" इति। (भागवते १०।६।२१)

यदि च जीवः स्वात्मानमेव यदि "ब्रह्मास्मि" मानयति मनुते वा सः स्वयमेव भवति भगवदपराधी। न लभते स्वाऽभिमानीजनः क्वचनमुक्तिम् [असति-अभिनिवेशात्] ये च "तत्त्वमसि" इति वाक्यस्य "त्वमेव स्वयं ब्रह्मासि" इत्यर्थं कुर्वन्ति तेऽपि भ्रान्ता एव। वस्तुतस्त्वस्यार्थः-जगतः कारणभूतं यद् ब्रह्म तदंशभूतस्तद्रूपस्त्वमसि [अंशांशिनोरभेदात् = अवयवाऽवयविनोरभेदाद्वा] इत्यादि भावनां स्वहृदि दृढां कृत्वैव भगवदुपासनां विदध्यात्। यतोहि भावनैव सिद्धिदा भवति यस्य यादृशी भावना। उक्तञ्च—"न काष्ठे विद्यते देवः पाषाणे न च मृण्मये (यथा पाषाणादिमय्यां मूर्तौ-भाव एव) "भावोहि विद्यते देवस्तस्माद्भावोहि-कारणम्।" इत्थं भावनया सुदृढाऽनुरागो भवति भगवति तदा तव मुक्तिः सुतरां करगतैव।

किञ्चायमप्याशयः-यथोपनिषत्सु-'अन्नं ब्रह्मेत्युपासीत' 'मनोब्रह्मेत्युपासीत' 'आदित्यो वै ब्रह्म' इत्यादेशः इत्यादिभिर्वाक्यैः मनोऽन्नम्, आदित्यादीनां ब्रह्मभावनां स्थिरीकृत्य यथा उपासना कर्तव्या, इति समुपदेशस्तथैव "जीवमपि ब्रह्म मत्वा ब्रह्मरूपेणैव समुपासीत" एतदर्थमेव "तत्त्वमसि श्वेतकेतो!" इत्यादि ब्रह्मभावनामेव जीवे स्थिरीकरणार्थं पुनः पुनरुपदेशः "जीवस्य साक्षादेव अग्नेःक्षुद्रविस्फुलिंगवत् अंशरूपत्वात् अंशो नांशिभ्यः पृथक्, तस्यैकोवयवोऽतो न भिन्नः। ब्रह्मांशमपि ब्रह्मरूपेण समुपास्वेत्युपदेशः।

किन्तु जीवो न साक्षाद् ब्रह्म अंशत्वेन तत्सम्बन्धेन समुपासनीयः तद्रूप एव मन्तव्यः समादरणीयः किन्तु न तस्य ब्रह्मैक्यम्। यदि-ब्रह्मैक्यं स्वीक्रियेत तर्हि कथं स्वस्य स्वात्मनि प्रवेशादीनां निरूपणं क्रियते। श्रुतौहि:—["अन्तः प्रविष्टः शास्ता जनानाम्" इत्यत्र किञ्च:—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।"। इति गीतायामपि स्पष्टं जीवानां शासनार्थं प्रतिशरीरं समस्तजीवैः सह ईश्वरस्याप्यन्तर्यामिरूपेण प्रवेशो वर्णितः। यदि जीवो

ब्रह्म चेत् एकरूपश्चेत् तर्हि कथं ईश्वरस्य जीवानां शासनार्थं प्रवेशः। न हिं कश्चित् स्वात्मनः शासनार्थं स्वस्मिन्नेव प्रवेशं कुरुते? शासनन्तु स्वात्मनो भिन्नस्यैवान्यस्य कर्तुं शक्यते। अतो जीवो न ब्रह्मैकरूपः, जीवब्रह्मणोः परस्परं भेदः। जीवस्तु नियाम्यः शास्यः ईश्वरो (ब्रह्म वा) नियामकः शासकः, अतो जीवो ब्रह्मणो भिन्नः। एवमेव 'अहं ब्रह्मास्मी' त्यस्यापि नाहं साक्षाद्ब्रह्मैवेतिमन्तव्यम्। अस्याप्यर्थोऽपि 'अहं ब्रह्मात्मकः' [ब्रह्मैव, आत्मा यस्य सः] मूलकारणम्-स्वजनकमिति। न तु ब्रह्मैकरूपः इति। पिता-पुत्रवत् तु भेद एव। पितुरात्मैव पुत्रः, किन्तु भिन्नः। पितृवत् सम्मान्योऽपि भवति तत्प्रतिनिधिरूपेण व्यहार्य्योऽपि किन्तु पितृस्थानस्थोपि पितृतो भिन्नः पितुः कार्यं पिता एव करिष्यति, न पुत्रः। एवमेव ब्रह्मांशो ब्रह्मसदृक्सम्मान्यः समुपास्यः किन्तु भिन्नः।

एवमेव ["ब्रह्मविद् ब्रह्मैव भवति"] इत्यादीनामपि जीवो ब्रह्मवित् किं वा "ब्रह्मसम्पन्नोऽपि" सुषुप्तिदशायां, ब्रह्मसमानत्वं, ब्रह्मानन्दानुभोक्तृत्वं च भवति तदानीं जीवः "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति-यदा च भगवान् स्वयं जीवस्य वरणं करोति-तदा जीवोऽपि स्वेच्छया यथेष्टं पर्य्याप्तं सर्वकामोपभोगं करोति ब्रह्मणा (भगवता) सह तदातु भगवान् स्वयमेव जीवं प्रधानासनोपरि विराजमानं कृत्वा स्वयमपि गौणभूतः सन् भक्तवरं जीवं प्राधान्येन सर्ववस्तूपभोगं कारयति। यथा कृष्णावतारे भक्तवरं सुदामानम्। परञ्च सामान्य-मुक्तिदशायान्तु ["निरञ्जनः परमं साम्यमुपैति।"] इति परमा उत्कृष्टा समानता एव भवति न तदैकरूपत्वं तादात्म्यं वा सर्वभावेन।

अत्रेदं शङ्क्यते-क्यत् समानत्वे जीवस्य जाते-परस्परं भगवतो जीवस्य च यः पूज्य-पूजकभावः सेव्य-सेवकभावो वा स तु नष्ट एव भविष्यति? इति।

किन्तु निर्मूलैषा शङ्का, यतोहि "उक्तमेव—"पितृसमः पुत्रः, मातृसमा-कन्या" इत्यत्र पितुः पुत्रस्य, मातुः कन्यायाः समानत्वे स्वीकृतेऽपि किं पुत्रः पितैव समभूत् किं वा कन्या मातैव सञ्जाता, किं तयोः परस्परं पूज्य-पूजकभावो नंक्ष्यति किं वा ऐक्यमेव, एक शरीराऽऽकारत्वं वा जायते? कदापि न, तथैव जीवब्रह्मणो-रपि, भगवतो भक्तस्य च साम्येऽपि न तत्र सेव्य-सेवकत्वहानिः तत्र ब्रह्मसूत्रादौ तथैव स्पष्टीकृतम्—"भोगमात्र - साम्यलिङ्गात् च" इति एकत्र - आनन्दानुभूतिः भगवता सह सर्ववस्तूपभोगः समानो न तत्र भेदो भवति, यथा "श्रीकृष्ण-सुदाम्नोः" अतो भोगमात्रे साम्यम्-नान्यत्रेति। अतो जातेऽपि साम्ये न तत्र जीव-भगवतोः पारस्परिकः सेवक-सेव्यभावो नश्यति। सर्वदैव भगवांस्तु सेव्य एव जीवश्च सेवकः।

सत्यमूर्तिः—भगवन् ! शाङ्करवादे–"माया, अविद्या, अज्ञानम्" इति त्रयमेकैव तत्त्वस्य पर्य्यायाः । माया च ब्रह्म-आश्रित्य नानाभ्रमात्मकानि कार्याणि कुरुते । विदधाति च जनान् भ्रान्तानेव । कस्तत्र भवतां भवतां सम्मतिः ?

श्रीस्वामिनः—भगवन् ! सर्वतः प्रथमन्त्वयमेव भ्रमो यत् त्रयमेकमेव पर्य्यायवाचि । न हि त्रयमेकस्यैव नाम । अपितु "माया" भिन्ना, अज्ञानञ्च भिन्नमेव । यतो हि—"मायातु ब्रह्मणः शक्तिरस्ति ।" अज्ञानञ्च ज्ञानाऽभावरूपः । ब्रह्मणः शक्तिर्माया तु ब्रह्माऽऽश्रया ब्रह्माधीना । अज्ञानञ्च जीवाश्रितम् जीवाधीनम् । न हि जीवाधीनम्-अज्ञानं ब्रह्मपर्य्यन्तं गन्तुं स्प्रष्टुं व समर्थम् । अज्ञानस्य प्रभावस्तु जीवोपर्य्येव प्रसरति । तदपि यावन्न स पुरुषो जीवो वा मुक्तिमधितिष्ठति । मुक्तजीवस्तु "अज्ञानमपि न स्प्रष्टुं प्रभुः । अज्ञानस्य नाशे एव-मुक्ति प्राप्नोति जीवः ।

सत्यमूर्तिः—भगवन् ! जीवात्मा अनेनैव देहेन ब्रह्मणः साक्षात्कारं कर्तुं समर्थो भवितुमर्हति-किं वा साक्षात्कारं विधाय जीवन्मुक्तोऽपि भवितुं शक्नोति ?

श्रीस्वामिनः—वन्धो ! उक्तञ्च पूर्वमेव अनेकधा यदनेन देहेन अज्ञानाकृतेन न जीवो मुक्तिं लब्धुं शक्नोति । देहस्यास्य परित्यागेऽपि जीवस्तु जीव एव, जीवदशायामेव तिष्ठति । न हि जीवो ब्रह्मरूपो तदभिन्नो वा क्वचिद्भवति । जीवस्य तु सर्वदा सार्वकालिकी स्थितिस्तु भिन्नैव भवति न ब्रह्मैकरूपतायाम् ।

किञ्च ये हि भगवतः सर्वात्मना भक्ताः परमभगवदीया वा भवन्ति ते तु न कदाचन मुक्तिं कामयन्ते भक्तिं विहाय । उक्तम्-हि—["दीयमानां न गृह्णन्ति विना मत्सेवनं विना" ] इति स्वयं भगवता प्रोक्तम् । किञ्च ["श्रेयः स्रुतिं भक्तिमुदस्यते विभो क्लिश्यन्ति ये केवल बोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद् यथा स्थूलतुषावघातिनाम्" ] इति ज्ञानप्राप्तेर्मुक्तेर्वा निन्दामेव कुर्वन्ति भक्तिं विना भागवताः ।" ते तु सर्वदात्मना जन्मजन्मान्तरेऽपि भक्तिमेव कामयन्ते न मुक्तिम् । मुक्तिस्तु तेषां दासी । वस्तुतस्तु मुक्तिदशापन्ना एव भक्तेरधिकारिणो भवन्ति । यथा महाराज्ञ्याः समक्षे दासी भवति तथा भक्तेः समक्षे मुक्तिः ।

इत्थम् श्रीस्वामिनां रामानन्दाचार्याणां विवेवचनमाकर्ण्य सर्वात्मना सन्तुष्टः पण्डितेन्द्रः श्रीसत्यमूर्तिः स्वीयदार्शनिकत्वाऽभिमानमुत्सृज्य भक्त्या श्रद्धया च श्रीरामानन्दाचार्याणां शिष्यत्वमाप्तुं श्रीराममन्त्रदीक्षां गृहीत्वा श्रीवैष्णवसमुदाये मान्यः सन् श्रीवैष्णवधर्मप्रचारप्रसारार्थं लब्धाज्ञः स्वं देशं प्रति गन्तुकामः श्रीस्वामिना आशीर्वादयुतामाज्ञामवाप्य गतः ।

——

# एकोनपञ्चाशत्तमः परिच्छेदः

अथैकदा श्रीवैष्णवमठे विराजमाना समन्ततो विद्वद्वृन्दसमञ्चितमञ्जुपीठाः पीठाऽऽसनस्थाः विविधविबुधवृन्द परिमण्डितवाचस्पतिप्रतिमूतय इव निजसुशिक्षित-शिष्यगणनिषेवमाणाः श्रीरामानन्दाचार्याः विविधविषयमवलम्ब्य प्रवर्तितसनातनधर्म-रहस्यनिभृतसदाचाराचारप्रसार-प्रवर्तनीभूतपरस्पराऽऽलापललितरह स्यप्रकाशनपरिरा--जितविद्वद्विचारविमर्श-गोष्ठीगरिष्ठधर्माचार्यैः सह विमर्शयन्ति स्म ।

सहसैव-वसुमतीतलादुत्थित - परागपटलान्धकारितदिगम्बरे, सद्यः समाच्छा--दितविस्तृतोल्लोच इवाऽऽवृतभास्करविभानिचयचक्रवालः, सजल - जलदघनपटल इव पिहिताम्बरो, धूलिधूसराद्भुततिमिरायमाणक्षोणिरजःपटलः, असामयिकीं गोधूलिवेलामुल्लसन्, रेणुकाकलुषितलोचननिचयैः साश्चर्यं सोत्कम्पं सभयचकित-मालोकि जनैः । कुतोऽयमसामयिकोधूलितमःप्रसार इति ससम्भ्रमं तर्कयन्तः सर्वे यावद्बहिरागत्य पश्यन्ति तावत् सुदूरतः समुड्डीयमानाः कादम्ब - पङ्क्तय इव स्वाऽभिमुखमेव समायाताः धावमानवाहनाः क्रमेलककुलोत्तं-स-पृष्ठ-सुसज्जितपर्य्या--णसमलङ्कृतमखमल्लविनिर्मितासनाऽऽसीनाः नीलाम्बरोपरिपरिराजितराजत-पटिकासुशोभितोष्णीषाः सुवर्णराजततन्तुनिर्मित - विचित्रचित्राऽञ्चित - रक्तकञ्चु-काऽऽच्छादितसर्वाङ्गः, आजानुपरिधारित - धौताऽधोवसनाः पार्श्वतोऽवलम्बमान--भीषणभुजङ्गम-भोगायमानककौक्षेयक - कृपाणमण्डिताकुञ्चायित - कुक्षिभागाः शतशः सरघाव्याप्तक्षौद्रपटलायमानश्मश्रुकूर्चस्फुरित - वातोल्लासित - केशावृतमुखरमुखमण्डला यवनाऽऽखण्डलाज्ञापालनविधायकाः तदीयसेनानायकाः श्रीवैष्णवमठोपकण्ठमेव समा-याता व्यदृश्यन्त ।

समागत्य च जवनवेगाः वेगाऽनुकारिवचनविन्यासा न्यासाऽनुरूप - निवे-दितनिजपरिचयप्रयासाः प्रयासाऽनुकूल - कलिताऽऽवासा आवासानुरूप - समापादि-तविविधवस्तूपहाराः क्रमेलकेभ्यः समवतीर्य, द्वारपालप्रदर्शितपन्थानः सहसा सह

साहसेन समीपमेत्य श्रीरामानन्दाचार्यचरणयोः प्रणतिं विधाय निजागमनप्रयोजन-प्रदर्शनपुरःसरं परिचयपूर्वकं रत्ननिचयमुपस्थाप्य निवेदयामासुः ।

पूज्यपादाः ! वयं हि देहलीसम्राजः पातशाह - श्रीबहलोललोदीति नाम्नो वदान्यस्य सकलराजमण्डलसम्मान्यस्य सैनिकाः स्मः । अस्माकं सम्राजः सहसा शिरोवेदना विविधवैद्यविद्याऽनुभवानभिज्ञातसमुद्भूतिवेदना समजनि । तदुच्छेदनाय विहितनानाविधोपचारसम्भाराः पराहतसकलचिकित्सकप्रसाराः क्षणमात्रपि न लभन्ते नैरुज्यलेशम् । विशेषवृद्धिमेवानुभवन्ति क्लेशविशेषैः पातशाहमहानुभावाः । विश्रुतभुवनविततपःप्रभावातिशयाः श्रीमद्यशःपुञ्ज - विशदीकृत - सकललोकमालोक्य सश्रद्धं सानुनयं निवेदनाय स्वकीयां प्रतिक्षणप्रवर्द्धमानां व्यथां प्रेषिताः स्म निवेदयितुमेव ।

भगवन् ! शतशो भारतीया आयुर्वेदविदो वैद्याः मोहम्मदीयाश्च नः शत-सहस्रशो विचिकित्सन्तश्चिकित्सन्तो न पारयन्ति स्म-पातशाहस्य शिरोवेदनां दूरी-कर्तुमिति-अतोऽस्मत्पादशाहः सानुनयं साग्रहं श्रीमन्तं दिल्लीनगरं स्वचरणकम-लरजोभरेण पावयितुं प्रार्थयते, श्रीमन्तमानेतुमेवास्मान् प्रेषितवान् । शास्त्र-वचनानुसारं ["रिक्तपाणिर्न गच्छेद्धि राजानं देवतां गुरुम्"] इति न्यायेन श्रीचरणक-मलेषु समुपायनीकर्तुमयं रत्नराजिरपि प्रेषितः । इत्युक्त्वा महर्घमूल्यमयं प्रस्फु-रत्किरणनिकरणपरिराजितं - माणिक्य - हरिन्मणि, वज्र-मुक्ताफलकलापं विविध-विधहारावलीसनाथं - सुवर्ण-रजत - पात्रसंस्थापितं श्रीरामानन्दाचार्याणां सम्मुखे संस्थाप्य निवेदयामासु :—यत् पातशाहप्रेषितमिममुपहारं स्वीकुर्वन्त्विति, अस्माभिः सहैव देहलीं स्वपदधारणेन पावयन्तः श्रीपातशाहाय तच्छिरोवेदनापहारणेन स्वा-स्थ्यलाभं प्रदाय समुपकुर्वन्त्विति ।

"इति तद्वचनं श्रुत्वा मधुरैः वचसां क्रमैः ।
प्रोचुरत्रास्थिता एव, वेदनाशान्तयेऽनिशं ॥

पातशाहस्य सद्यो नः प्रभुमभ्यर्थयेऽधुना ।
साम्प्रतं देहलीं गन्तुं, समयो नास्ति कार्यतः ॥

पुनः कदाऽऽगमिष्यामः सानन्दं गच्छताधुना ।
पातशाहश्च भवतां स्वस्थ एव न रोगभुक् ॥

श्रीमन्तः सर्वथा स्वस्थाः सञ्जाता नाधुनार्दिता ।
क्रीडन्तो हि मिलिष्यन्ति हासोल्लासविलासिनः ॥" इति

इत्थं श्रीरामानन्दाचार्याणामाशीर्वादमादाय सादरं सम्मानितास्ते तं रत्नराशिं समर्पयामासुः। तदा श्रीस्वामिनः सस्मितं जगदुः—भवन्तः किमर्थं व्यर्थमेतावन्तं रत्नराशिमादाय समागताः। वयं तु विरक्ताः संन्यासिनः किमनेन महार्घ्यरत्नराशिना। नास्माकमनेन कश्चनोपयोगः। अतः प्रतिनयन्तु, किं वा भूयांसोऽत्रस्थिता याचकाः पाचकदयो वा दीनाः ब्राह्मणाश्चापि काश्यां विचरन्ति, तेभ्यो वा प्रयच्छन्त्विमम्। ततस्ते सर्वे पुनर्यथाऽऽयातास्तथैव तेनैव पथा स्व - स्वक्रमेलकानारुह्य प्रस्थिताः। यथासमयं देहलीं राजभवनं यथा हि ते प्रविष्टास्तथैव सम्मुखे स्वीयोपवने स्वमित्रैः सह क्रीडन्तो विविधविलासैर्हासोल्लासैर्विहरन्तः पातशाहाः स्वस्था विलोकिताः समायातांश्च तान् विलोक्य तन्मुखाद्वृत्तान्तमाकर्ण्य नितान्तं हृष्टः पातशाहो बहलोललोदी सर्वांस्तानपि सम्मानयामास। स्वयञ्चाब्रवीद् यदहं ह्यो मध्याह्नात् प्रागेव सहसैव वेदनाविहीनः संवृत्तः।

अहो ! अहो ! स्वामिनां तपोबलस्य प्रभावः। यत् तत्रस्थिता एव प्राणापहारिणीं भयङ्करीं शिरःपीडां तत्क्षणान्नाशितवन्तः। धन्यास्ते महात्मानः सत्यं महात्मान एव। भगवदीया भक्ताः किन्न कर्तुं प्रभवन्ति? इत्युक्त्वा सैनिकैः प्रत्यानीतं महान्तं तं रत्नराशिं, निःस्वार्थभावेन प्रत्यावर्तितं समालोक्य महान् प्रभावितो भूत्वा श्रीरामानन्दाचार्यस्य दर्शनार्थं नितान्तं समुत्कण्ठितः सञ्जातः। त्यागवृत्तेश्च तेषां भूरि भूरि प्रशंसां कुर्वन् पुनः स्वकीयं गुरुं "तक़ी" इति नामानमाहूय ततोऽपि द्विगुणतरं रत्नराशिं, भूयांस्याभरणानि च दत्वा प्रोवाच - परमया श्रद्धया-सकलानि वस्तूनि तेषां चरणयोः समर्प्य सप्रश्रयं-साग्रहम्, भूरि भूरि विनयेन सम्प्रार्थ्य यथा कथञ्चन तान् परमगुरून् - महात्मनः स्वामिपादान् देहलीमानयन्तु। इति। ततः "तक़ी" नाम्नो गुरोः प्रेषितस्य च रत्नराशेः रक्षार्थं स्वसैनिकानपि कतिपयान् प्रेषयामास।

यद्यपि 'तक़ी' नाम यवनमौलवी, खलीफा वा नितान्त कलुषितान्तरात्माऽऽसीत्। परंमद्वेषी हिन्दूमहात्मनाम्, विशेषतश्च तथाविधविविधचमत्कारप्रचार - समाकर्षितमहामहिमशालिपातशाहादिहृदयान् प्रति तु घोरघोरतरं विषं भक्षन् समुद्गिलन् भ्राष्ट्रभर्जितचणक इव बुद्बुदायितहृदयः सञ्जातः। अत्यन्तं परोत्कर्षाऽसहिष्णुश्च सः तथाविधां पातशातस्य परमोत्कृष्टां विशिष्टामाकृष्टिम् तान् प्रति समाकर्ण्य प्रस्फुटितश्रोत्रपटल इव विदीर्णहृदय इव समुच्छ्वसन् पातशाहप्रेरितत्वात् किमपि वक्तुमशक्तो मन्त्रौषधिरुद्धवीर्यो भोगीवाऽभ्यन्तर्निश्वसन्, महामहान्तं रत्ननिचयमुपायनीकर्तुं प्रेषितञ्चालोक्य, ईर्ष्योद्रेकाग्निभस्मीकृतस्वान्त इव स्वलालसापिशाचीग्रस्तं इवारुणनयनः भूताऽऽवेश इव द्वेषोद्वेजितमना अनारतकलुषितान्तरात्मा

दुरात्मा, पातशाहप्रेषितभट्टैरावृतः किमपि कर्तुं हतुं वा रत्नपटलं वक्तुं वा ताम् प्रतिकटुवचनं सर्वात्माऽसमर्थो व्यर्थमेव खेदमावहन्, वहन्निव-शाखास्खलित-हतवृन्त-पल्लवो नदीजलप्रवाहपतितः, पथि प्रचलन् बलान्नियोजितो योजितश्च महात्मनां समाराधनाय भटैरावृतः काशीं प्रति प्रचलितः।

यथासमयं शनैः शनैः स तकी नामा काशीं समागत्य श्रीवैष्णवमठं प्रविश्य यथानियमं श्रीस्वामिमहोदयानां सम्मुखमुपस्थाय पातशाहस्य कुशलतां निवेद्य स्वागमनकारणं स्वकीयां मानसिकीं नानाविधां प्रश्नावलीं समाधातुमेव स आगत इति सामान्यपरिचयानन्तरं कतिचन प्रश्नानुपस्थापयामास :—

तकी :—भगवन्! भवतां शास्त्रेषु वेदादौ वा ब्रह्मणः शरीरमेव नास्ति तत्तु निर्गुणं निष्क्रियं, अशरीरि, निरवयवमिति भण्यते-तर्हि कथं भवन्तः तस्य-मूर्ति विधाय-महान्ति वृहत्कायानि मन्दिराणि तदर्थं विधाय च तं पूजयन्ति। किमिदं न भवन्तः स्वकीयशास्त्रोक्तविरुद्धमाचरन्तस्तत्खण्डनमिव कुर्वन्ति? किं तत्रबीजम्?

श्रीस्वामिनः —शास्त्रेषु ब्रह्मणः शरीरमेव नास्तीति न प्रतिपादितम्। तद्वचनानामाशयो भवतां बुद्धिगम्यो भवेन्नवेति शङ्के। तथापि श्रावयामि-यद्यपि-अशरीरीति-शब्दः प्रयुक्तः। तथापि तस्याशयोऽस्ति यथा अस्मदादीनां शरीरं विद्यते प्राकृतं, न तथा ब्रह्मणः प्राकृतं शरीरं, सीमितं परिच्छिन्नं, परिच्छिन्नक्रियाकलापकलनार्हम्, अशक्तं असमर्थं, नियमित-हस्तपादादियुक्तम् विद्यते च तस्य शरीरं परम विचित्रमेव, इत्यपि वेदे, एवास्माकं मौलिकग्रन्थे ब्रह्मबोधके वर्णितम्-यथा :—["सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्वतो स्पृत्वाऽत्यतिष्ठद् दशाङ्गुलम्।"] इति वर्णितम्-श्रूयतामस्यार्थः "ब्रह्मणः शरीरम्-विद्यते यस्मिन्-शरीरे नास्त्येकं शिरः, तस्मिन् सहस्राणि अनन्तानि वा सन्ति मस्तकानि। प्रत्येके मस्तके सर्वेषां द्वे नेत्रे भवतः अतः सहस्रमस्तकेषु द्वे सहस्रे नेत्रे भवेताम्। किन्तु नेत्राण्यपि सहस्राण्येव। एवमेव पादा अपि सहस्राण्येव। अतः सहस्र - सहस्र संख्या परिमितसकलावयवो भगवान् - अपि दशाङ्गुलपरिमिताऽऽकारवान् किन्तु समस्तां नदनदीपर्वतमालापरिवृतां गहनवनालीपरिराजितां पृथिवीं समन्ताद् व्याप्य स्थितः ईदृशो विचित्रतमः कश्चन भवतां कुरानशरीफे अल्लाह-स्वरूपाकारः क्वचन वर्णितो दृष्टः। तर्हि भवति किमेतादृशं शरीरं सामान्यप्राणिनाम्? तर्हि कथं भगवान् ब्रह्मशब्दवाच्यः शरीरीति कथितुं शक्यते। अतएवोक्तम् "अशरीरी" इति। न प्राकृतशरीरधारी यथा वयमिति निषेधः। अन्यथा यदि शरीरं ब्रह्मणो नो चेत्, तर्हि कथं सृष्टिरचना कारणे समर्थ स्यात्। अतः सं भगवान् सर्व-

शक्तिमान् सर्वरूपः सर्वविधः सर्वविधां सृष्टिमपिसमुत्पादयितुं प्रभुः प्रभु। विचित्राणि तस्य कर्माणि न हि सः मनुष्यादिवत् सामान्य - हस्तपादैः किमपि करोति। तस्य कर्माण्यपि परमाश्चर्य-कराणि। यथा—["अपाणि-पादो जवनो ग्रहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः।"] इत्यादि विचित्रतमा तस्य गतिः।

तर्की :—भगवन्! यदि शरीरी भगवान् तर्हि शरीरस्य तु नाशो भवति-पुनः कथमविनाशी स भवितुं शक्यते?

श्रीस्वामिनः —इति तु मया प्रथममेव प्रतिपादितं यत् भगवतः शरीरं न प्राकृतम्। प्राकृतस्यैव शरीरस्य नाशो भवति न त्वप्राकृतस्येति। भगवतः शरीरस्य प्रतिपादनन्तु श्रुतमेव = "सहस्रशीर्षा०" इत्यादि - एतादृशं प्राकृतं शरीरं कदापि न भवति। तर्हि तथाविधस्य सहस्र-शीर्षात्मकस्य-प्रकृतिशक्ते - र्बहिर्भूतस्य कथं नाशः। नाशादयोऽपि प्राकृता एव गुणा धर्माः। न ते भगवति प्रवेशमप्यर्हन्ति।

किञ्च :—प्राकृतशरीरधारिणि जीवे; तथा अप्राकृतशरीरधारिणि भगवति च परस्परं भेदः शरीरकृतोऽपि पूर्वमेव प्रतिपादितः। जीवस्य शरीरं हि प्राकृतं विनाशशालि नियताऽवधिकम्। भगवतः शरीरमप्राकृतं, आनन्दमयम् = "आनन्दमात्र कर-पाद-मुखोदरादि" इत्यानन्दघनं - अपरिमिताऽऽनन्द - धर्ममदम्। अव्ययं अविनाशि निर्विकारम्। अतएव जीवेश्वरयोः परस्परं भूयान् भेदः। लोकेतु जीवशरीरे पशुपक्षिप्रभृतीनां शरीरेष्वपि भूयान् परस्परं भेदः, तर्हि जीवेश्वरयोः शरीरभेदस्य कथा तु विचारातीता।

यदि च सर्वथा शरीररहित एव भगवान्, भवदभिमतमते मानितः तर्हि सः अल्लाताला-नामधारी भगवान् कथं-स्वकीयं सन्देशं भवन्मतसम्मत-पैगम्बरादि-पद-वाच्यैः स्वदूतैः शरीरधारिभिः मानव-सविधे-स्वभक्त (बन्दापद समलङ्कृत) जनपर्य्यन्तं प्रेषयति। अशरीरी कथं वा वदति पैगम्वरादीनपि विना मुखजिह्वाभ्यां? भवतां कुरानशरीफेऽपि लिखितमस्ति - यत् पैगम्वरादयो भगवद्विभूतयः पृथिव्यां "खुदा" पर्य्यायवाचिनो भगवतः सन्देशं (पैगाम) गृहीत्वा समागताः। किञ्च- "जब्रइल" प्रभृतयश्च आकाशे भगवतः समीपं गताः।" इत्यादि कथनं सङ्गच्छेत्- यदि भगवान् सर्वथा अशरीरी स्यात्। कथं वा पैगम्वरादीन् प्रेषयेत्, कथञ्च शरीररहितास्तेऽपि पैगम्वरादयो याताऽऽयातं विदध्युः। अतः भगवतः शरीरं स्वस्वरूपात्मकमेव अलौकिकधर्मैः सच्चिदानन्दमयैः "अपरिमिताऽगणिताऽऽनन्दमयैः संचालितमलौकिकं वर्णनातीतमेव। केवलं तत्कृपैकगम्यं भक्तजनानुभवैकवेद्यमेव। परमानुग्रहं कृत्वा

भक्तेभ्यः स्वां दृष्टिं भगवान् स्वयं ददाति-तदा भक्ता भगवद्-दत्तदिव्य - दृष्ट्यैव लक्ष्यम् भगवत्स्वरूपं द्रष्टुं कथञ्चन शक्नुवन्ति नान्यथा। यथा गीतायाम्—["दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्" ]

एतेन अस्माभिर्या सर्वभावेन विविधोपचारै - र्नित्यनव्यमहोत्सवादिभिश्च भगवतः सेवा विधीयते साऽपि परमानन्दसंवलिता अलौकिकरसप्रदा मनोरथानुरूपा भगवत्कृपालभ्या अपरिमितानन्द-दायिनी सफला। न तत्र काचन शङ्का करणीया। यथा भवतां सम्प्रदाये "कब्र" तकिया - दीनां सामान्यतया पुष्पमाला लौह-वाणः यक्षकर्दमधूपवर्तिका, अगरुवर्तिकाऽऽद्यैः पूजा क्रियते साऽपि तद्रूपैव।

तकी :—भगवन्! अप्राकृतऽलौकिकाद्‌भुत - धर्ममयस्य, अपरिमिताऽऽनन्दविग्रहस्य भगवतः स्वरूपकल्पनां जडमये प्रस्तर-पाषाणमूर्तिमये शरीरे कृत्वा यदुपास्यते तत्तु सर्वथैवाऽज्ञानकृतमेव ?

श्रीस्वामिनः-- महाभाग! सर्वमिदमज्ञानविजृम्भितमेव भवतः कल्पनम्। चेतनस्य परमात्मनो जडपाषाणे चिन्तनं ध्यानं पूजनं वा नाज्ञानजन्यम्। यतोहि-सर्वात्मनः. सर्वस्वरूपस्य, सर्वत्रव्याप्तस्य भगवतः यत्र यस्मिन् कस्मिन्नपि स्थले, ध्यान कर्तुं शक्यते। यस्मिन् कस्मिन्नपि स्वरूपे जीवः यथेच्छं ध्यातुं शक्नोति तस्मिन्नेव विग्रहे साक्षादेव प्रभुः तत्र विराजमानो भक्त-विहितां सपर्य्यां गृह्णाति। यतो हि सः सर्वत्रैव विद्यमानः। किञ्च यस्मिन् स्वरूपे वयं तस्य समुपासनां विदध्मः, प्रारम्भे प्रतिष्ठाकाले एव वैदिक-मन्त्रैर्धारणा-ध्यानोपासनाद्यैः स्वभावनाऽनुरूपस्य भगवतः स्वरूपं प्रतिष्ठापितमस्तीति साक्षादिव तत्र विद्यमानः प्रभुः सर्वविधां भक्त्या समुपस्थापितां समर्पितां वा सामग्रीं स्वयमेवाऽतिप्रीत्या गृह्णाति। उक्तञ्च यथा—["अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्य्येव मे भवेत्। भूर्य्यप्यभक्तो (गत्यो) पहृतं न मे तोषाय कल्पते।" ] अतएव वयं भगवतस्तोषाय स्वात्मनश्चापि सन्तोषाय सर्वं कुर्मः। यथा भवन्तोऽपि "कब्रा"दीनां पूजां विधाय ततः, शुभाशाप्राप्तेः कामना क्रियते तद्वदपि, तद्वदवगच्छतु। यदि च भवन्तः तानेव पूर्वजान् मृतान्=तत्रनिखातान् "कब्रे" तदस्थिपिञ्जरांशेन विद्यमानान् मत्वा तेषां स्मरणार्थमेव तथा पूजनादिकं कलयन्ति चेत्—तदपि समीचीनमेव। तथैवास्माकीनाऽपि पूजा ज्ञातव्या भक्तिविहीना स्वकृतानुकृतैव।

वस्तुस्तु न वयं भवद्भावनाऽनुरूपं कुर्मः। वयन्तु सर्वत्रविद्यमानस्य स्वेष्ट-देवस्य स्वभावनाऽनुरूप-मेकस्मिन्नेव भगवद्विग्रहस्वरूपे=(मूर्तौ) प्रतिष्ठाकाले वैदिकमन्त्रैराहूतस्य सु-प्रतिष्ठापितस्य सर्वदा भक्तमनोरथानेव पूरयितुं विराजमानस्य प्रभोः स्व-स्वभावनानुसारं समुपासनां कुर्मः। सर्वदाऽविच्छिन्नप्रवाहरूपेण सर्वत्रप्रसक्तां निज-निजमनोवृत्तिं सर्वतः समाकृष्य तद्भावनाविशेषैर्भावितां विधाय-तदीयस्वरूप-सौन्दर्य-लावण्य-शृङ्गारादि-विशिष्टेष्टापूर्तिमयविग्रहे संयोज्याऽलौकिकानन्दसिन्धौ निमग्नां, तद्रससम्पृक्तां च कृत्वा जीवनसाफल्यं भगवत्स्वरूपानन्दमनुभवामः।

यच्च, महदज्ञानकुण्ठितमतयश्चिन्तयन्ति यत् सर्वत्र व्यापकस्य भगवतः पाषाणादिनिर्मित-जडमूर्तौ ये समुपासते, तेऽज्ञानिनः। इति

तत् तेषां मनसो भ्रमः, जडबुद्धेर्दुर्विवेकः। न जानन्ति वराकास्ते, यत् भगवानेव साक्षादेव भक्त्या समाहूतः भक्तैरावाहितः समागतस्तत्र विराजमान एवास्ते। इति सम्यक् प्रपञ्चितप्रायः। न तत्र पाषाणादिविग्रहे क्वचित् जड़भावो भवति भक्तानाम्। भक्तास्तु साक्षादेव पश्यन्ति प्रसन्नवदनाऽम्भोजं स्वेष्टदेवमिति। भगवांस्तु भक्तभावनामेवावलोकते। तथैव सः स्वस्वरूपं भक्तभावनानुरूपमेव विदधाति, दर्शयति, मोदयति, आनन्दयति च। उक्तञ्च :—["यो यच्छ्रद्धः स एव सः"]। किञ्च भगवता तु स्वयमेवोक्तम् गीतायाम् --

["यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमर्हति।
तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् ॥"]

स तया श्रद्धयायुक्तस्तस्याकराधनमीहते। लभते च ततः कामान्, मयैव विहितान् हि तान्।" इति। भगवांस्तु भक्तभावनाऽनुरूपमेव स्वात्मानं प्रकटयति दर्शयति च।

तर्की—भगवन्! यदि भगवान् साक्षादेव मूर्तौ (स्वरूपे-विग्रहे वा) विराजते तर्हि ये खलु दुष्टप्रकृतयो मूर्तिविध्वंसकाः खण्डयन्ति भगवतो मूर्तिम्, चोरयन्ति वा तेषामाभरणानि तर्हि भगवान् तथाविधकर्मणि प्रवृत्तान् दुष्टान् कथं न तत्क्षणमेव दण्डयति? कथं वा ततः स्वकीयं पाषाणविग्रहं तत्प्रहारेभ्यो रक्षति? किमत्र रहस्यम्?

श्रीस्वामिनः—यद्यपि प्रश्नस्योत्तरं प्रश्नेनापि समाधातुंशक्यते-यथा भवतां सिद्धान्तेऽपि भगवतः (खुदाऽभिधस्य) सर्वत्रैव स्थितिः सः सर्वशक्तिमान् इति मन्यते, तर्हि यदि कश्चन दुष्टो दुराग्रही भगवन्तं सर्वत्रविद्यमानं न मन्यते नवा भगवन्तं प्रणमति, नच सम्मानं कुरुते-तदा भगवान् तत्क्षणमेव न तं दण्डेन शोधयति-

नवा प्रत्यक्षं चपेटाशतैः तन्मुखं तदीयकपोलफलकं वा सद्यः शोणायितं करोति कारयति च वा, किं तेन भगवतः (खुदाऽऽख्यस्य) न सर्वत्रस्थिति :? न-वा सः शक्तिमान्, योहि न तं तत्क्षणमैव दण्डयति । इति भवान् स्वीकर्तु-मभिमतः ?

अस्तु—वस्तुतस्तु भगवान् परमकारुणिको येनकेनाऽपि भावेन भगवन्तं सत्येन मनसा प्रार्थयते । नाथ ! अहं दुःखी दुराचारी दीनश्चौर्यव्यवसायी, सम्प्रति भवन्तमेव शरणीकरोमि सर्वात्मनाऽशरणो नाऽन्यत्र सफलो मे मनोरथोजातः दुग्धमुखान् पृथुकान् कथं पालयामि नाऽन्यतः किमपि लब्धम्, अतएवाऽद्य तवैवाऽभरणादिकं हर्तुमुपागतोऽस्मि । नाथ पूरय मे मनोरथं, इति मनसि कल्पनां कृत्वा भगवत आभूषणानि भगवच्छरीरादवतारयति । तदा भगवानपि हसति तथाविधं चौरभक्तं स्वाभूषणानि वितरति । तत्र भगवतो दयालुत्वमेव ।

यश्च मूर्तिखण्डनकर्ता दुष्टो राक्षसाश्रितो भक्तः तस्यापि तथाविधामनन्यचिन्तनमयीं कामनां पूरयितुं सन्नद्धो भवति । तदानीमपि तथाविधां तदीयां चेष्टां दृष्ट्वा प्रभुर्हसत्येव न रुणद्धि तथाकर्तुं तम् । तत्रापि तामसरूपिणोभक्तस्याभिलषितपूरकः ।

किन्तु यत्र कुत्रापि भगवद्भक्ताः पशवः पक्षिणः क्षुद्रा वा सरघादयो यदि जागरूकाः भवन्ति तदातु ते एव तं तथाकर्तुं प्रवृत्तं निवारयन्ति । यथा बहुत्र स्थले श्रूयते, तथा दुश्चेष्टमानं तं वृक्षतः स्वमधुकोषात् क्षौद्रपटलान्निःसृत्य सरघाः सद्यस्तान् स्वशल्यैः सन्दंशन्ति स्मेति । परञ्च न भगवान् तथेप्सितकर्तॄन् निषेधति अतो भगवति न काचन विरुद्धा कल्पना करणीया । भगवतस्तु सर्वे सर्वविधाः भक्ताः राजसाः तामसाः सात्त्विका दुष्टा दुराचारादयोऽपि भक्तत्वात् समाना एव । तेषां तादृश्येव भक्तिः ये भगवतोऽङ्गेभ्योऽलङ्कारादीन्यपाकुरुते । केचन समर्पयन्ति धारयन्ति कतिचनावतारयन्ति समपहरन्ति च परञ्च स्वस्वकर्माऽनुसारं तु तेऽवश्यमेव तत्तत्कर्मफलानि भुञ्जंत्येव । किञ्च कालान्तरेण कर्मपरिपाकदशायामेव यावत्तेषांपूर्वजन्मार्जितसत्कर्मणामुदयो न तावत्ते दुष्कर्मफलं मोक्ष्यन्तीति शास्त्रीयसिद्धान्तः इति श्रुत्वा विगतशङ्कः सश्रद्धमुवाच तकी ।

तकी :—भगवन् वयं हि पातशाहेन प्रेषिताः तदुक्तं निवेदनमेव निवेदयितुमुपस्थिताः स्मः । अस्मत्पातशाहः श्रीबहलोललोदीतिनामा श्रीचरणयोः वारं वारं प्रणतिपुरःसरं निवेदितवान् यदहं श्रीमतामनुग्रहेण विगतव्यथः समासादितसर्वात्मसौख्यलाभः संवृत्तः । आश्चर्यकरं लोकलोचनचमत्कृतिकारकं घोरतमवेदनापहारकं दासजनपत्तिवारक तपः - प्रभावं विलोक्य साक्षाद्दर्शनाभिलाषापरवशः प्रार्थये

यच्छ्रीमन्तोऽत्रपदं धारयित्वा स्थानमिदं पवित्रीकृत्य पूरयन्त्वास्माकीनान् मनोरथा-निति ! सम्प्रेषिताञ्चैनां समुपहारसामग्रीमिति स्वीकुर्वन्त्विति । निवेद्य, सुवर्ण रजता-दिपात्रसम्भूतामनर्घां बहुविधां रत्नाऽऽभरणादिसामग्रीं श्रीरामानन्दाचार्य - सम्मुखे स्थापितवान् ।

सर्ववृत्रान्तमाकर्ण्य सम्मुखे रत्नसम्भृत - जाम्बूनदविनिर्मितां स्थालीमालोक्य सस्मित मन्दं प्रावोचन् श्रीमदाचार्याः—भगवन् ! वयन्तु त्यागिनः संन्यासिन एतानि महार्हाणि रत्नानि राजकुलोचितानि, नास्माकमेभिः किमपि पारलौकिकं कार्यं सम्पत्स्यते, अतो नैवोपयोगः । व्यर्थान्येवाऽस्मत् कृते । अतः पातशाहप्रेषितानीमानि दीनेभ्यो याचकेभ्यो द्विजेभ्योऽनाथेभ्यः पङ्गुभ्योऽन्धेभ्यश्च वितीर्यन्ताम्, येन सर्वेषां क्षुधार्तानां क्षुन्निवृत्तिः, समभिलषितानामभिलाषापूर्तिर्दीनानां दैन्योपहतिः द्विजानां च भगवद्भजने सन्मतिः समुदीयात् तेन च पातशाहस्य यशोवृद्धिः सर्वदा नैरुज्यम् प्रवर्द्धेत । एषामाशीर्भिः सर्वदा पातशाहस्य क्षेमं कल्याणं सम्पत्स्यते ।

भवांश्च तत्र गत्वा पातशाहं निवेदयतु-यत् स्वामिरामानन्दाचार्येण सस्नेहं सातिशयप्रेमपूर्वकं भूरि भूयाशीःपरम्पराभिश्चाभिनन्दयता निवेदितम् यदहं भवता-माग्रहस्य देहलीसमागमनाय सविशेषसम्मान करोमि, समभिनन्दयामि च भवतां भावनाम्, सम्प्रति समयाभावात् समागमनाय विवशोऽस्मि । पुनः कदाचन समुपस्था-स्यामि । इतः स्थित एव सर्वदा श्रीमतां शुभकामनामहरहः करोमि, श्रीमतां सद्भावना सर्वदेवोल्लसत्विति रतिश्च धर्मे ।

इति श्रीमदाचार्याणां मधुरतमवाक्पीयूषवृष्टिस्तपनसौख्यसन्तृप्तस्वान्तः स तकीमुहम्मदः सश्रद्धं श्रीस्वामिनां चरणयोः वारं वारं प्रणतिं विधाय यथागत-स्तथैव देहलीं प्रति प्रस्थितोऽभवत् । तत्र गत्वा च पातशाहसविधमुपेत्य- श्री स्वामिनां वैदुष्यस्य, शीलस्नेहमयस्वभावस्य माधुर्यपूर्णवचनविन्यासस्य त्यागस्य सन्तोषस्य च हृदयेन भूरि भूरि प्रशंसामकरोत् ।

अथैकदा काश्यामेव तत्र श्रीवैष्णवमठे समायातानां नानादेशवास्तव्यानां विपश्चिदविपश्चिमानां महती विद्वत्सभा समायोजिताऽभूत् । तस्याञ्च वेदान्ते ब्रह्म-सूत्राण्यादाय तेषामुपरि लिखितानां व्याख्याभूतानां सुविस्तृतानां विवेचनात्मको विषयः प्रस्तुतः । तदानींतनाः महामहावेदान्तिनो, भाष्यकाराश्च समवेताः समा-गता इव तत्तत्प्रतिनिधिभूता नाना वादविशारदाः 'अद्वैतवादिनः, द्वैतवादिनः, द्वैताद्वैतवादिनः विशिष्टाद्वैतवादिनः, केवलाद्वैतवादिनः" तेऽपि समायाता येषां सिद्धान्तः शतवर्षानन्तरं प्रकटितोऽभूत "शुद्धाद्वैत" नाम्ना । सर्वेषां सम्मर्दे संवृत्ते

शास्त्रार्थं इव प्राचलत्। स्व-स्वसिद्धान्त-प्रकाशने नानायुक्तयः प्रयुक्तयो दृष्टान्तदाष्टर्न्तादयः बहुविधानि च श्रुति-स्मृति-पुराणेतिहास-विकासितानि वाक्यानि समुपस्थाप्य विषयप्रतिपादनं विधीयते स्म। अलौकिक इव विद्वत्समागमः सञ्जातो यथा हि सुधर्मायां नानारूपधारिणां वाचस्पतिप्रतिभूतानां सुराणां संसदि दैवीसम्मेलनं कारितं सुरेन्द्रेणेवेति दर्शनीयतममासीत्।

श्रीबोधायनवृत्तीनामाशयमादाय स्व - स्वभाष्यव्याख्यानेऽपि सूत्राणां भाष्यप्रस्तावे स्थाने स्थाने प्रतिपादितो बोधायनवृत्तेराशयोऽपि प्रामाण्येन प्रस्तुतीकृतोऽभूत्। प्रसङ्गवशात् भाष्याणामपि परस्परमालोचना, तुलनात्मको वा विवादः प्रवृत्तोऽभवत्। अनेकदिनावधि परस्परं वाग् - विवादः प्राचलत् परञ्च सर्वेभावाः सर्वत्रैव सम्यक् प्रतिपादिताः आसन्। न तत्र केषुचन न्यूनाधिकोभावः। यथाकालं यथासमयं, यथा तदानीन्तनीं परिस्थितिमालोक्य यस्मिन् काले यस्या वा विचारधारायाः सामयिके प्रसारप्रचारे यस्य यस्य वस्तुनो-आवश्यकता सञ्जाता यादृग्रूपेण वा प्रतिपादनमावश्यकमभूत् तस्य तथैव तावत्परिमितं (परिमाणकम्) तस्मिन् तात्कालिके तदानींतने भाष्ये विततं विस्तृतं तावत्परिमाणकमेव साधितम्। किन्तु यथा यथा समयः सुकरः सुलभो वा शान्त्या विचारविमर्शस्य मिलितस्तथैव तत्तदाचार्येण तत्कालानुगुणं तस्मिन सशोधनं परिवर्द्धनं परिवर्तनं वा समारब्धम् तस्यैव विषयस्य प्रतिपादनं तैस्तैराचार्यैः कृतम्। पूर्व-पूर्व-भाष्यकारलिखितं भ्रममूलकमिति समुद्घोषितम् न तत्र केषाञ्चन भाष्यकाराणां पाण्डित्यप्रलोपो, नाऽवमानो, न वा भ्रमः। तस्मिन् काले यावत् विषयस्य यस्य वा तत्त्वस्य प्रख्यापना ह्यपेक्षिताऽऽसीत् तावतैव विस्तारिता, तस्मिन् काले सैव सनातनधर्मीय-विचारधारणासमाधानाय पर्य्याप्तं वासीत्। समये समये विस्तारः प्रसारः सिद्धान्तानुसारी स्व-स्व-भावनाविषयः प्रसारितः स्व - स्वभाष्ये। स्वस्वविषयप्रतिपादने तु पूर्वपक्षस्य-तदुत्तरपक्षस्य भवत्यपेक्षा, तथैव तत्पूर्वलिखितान् ग्रन्थान् भाष्यादीन् वा पूर्वपक्षिणो विधायैव तदुत्तरपक्षस्य प्रतिपादनं स्वस्व-भाष्ये विहितं तत्तदाचार्यैः।

नाऽत्र केषाञ्च मानाऽमानचिकीर्षा, केवलं स्वस्वसिद्धान्तस्थापनमेव समेषां लक्ष्यम्। सर्वतः प्रथमं भाष्यनिर्माणेषु श्रीमच्छङ्कराचार्या एव सुगृहीतनामधेया आसन्। यदा हि सर्वत्रभारते बौद्धानां प्रभावः, भारताद् बहिरपि चीनजापानादि देशेष्वतिप्रभावो धर्मप्रचारश्च विस्तारितोऽभवत्। भारते च परम्परागता यज्ञयागादिप्रक्रिया सकला समासीकृता। मूर्तिपूजायामपि न तथा मनोयोगः कर्मयोगो वा प्रवृत्त आसीत्, यादृशोमाव्यः। कर्मलोपस्तु सञ्जात एव सहैव वैदिकवि-

ज्ञानधाराऽप्यस्तङ्गता सञ्जाता ज्ञानमार्गोऽपि रूपान्तरमभजत् केवलं चारुवाक् (चार्वाक) प्रभृतीनां शून्यवादिनां "सर्वत्रैव" "खज्जे पिज्जे" हि मोक्षः स्थूलशरीरमेवात्मा संसार एव स्वर्गो नान्यो मोक्षः—

[ "यावज्जीवेत् सुखं जीवेत्, ऋणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥" ]

इत्यादि सिद्धान्तो विस्तारित आसीत् । तदानीं ब्रह्मवादस्य स्थापनं भगवद्भिः श्रीशङ्कराचार्यैः कृतम् । तदानीं यावतां विषयाणां स्थूलरूपेण विवेचनस्यावश्यकता, उपयुक्ताऽभूत् तावतामेव प्रतिपादनं कृत्वा ब्रह्मवाद-स्थापनम् कृतम् । महति घोरतमे सङ्घर्षकाले मण्डनमिश्रादीनां तत्पत्नी-प्रभृतीनां विदुषीणां बौद्धमतावलम्बिनां विदुषां मण्डले शास्त्रार्थपरम्परया सर्वांस्तान् पराजित्य "ब्रह्मवाद प्रतिष्ठापनं" न सामान्यजनसाध्यम् ।

तदनन्तरं श्रीरामानुजाचार्यैः 'ब्रह्मसूत्रोपरि' स्वकीयं "श्रीभाष्यम्" प्रकाशितं तत्र विशिष्टाद्वैतस्य प्रतिपादनं सम्यक् विहितम् । तत्रापि "श्रीशाङ्करभाष्ये" अद्वैतवादे यत् किमपि विवेचनं न तदानी कृतम्, तत्सर्वं "श्रीभाष्ये" प्रतिपादितम् । पुनश्च, श्रीमध्वाचार्यैरपि कृतं स्वस्वभावनानुरूपं विषयप्रतिपादनं स्वसिद्धान्तस्थापनं स्वेस्वे भाष्ये । एवमेव "विशिष्टाद्वैते" एव श्रीरामानन्दाचार्यैः स्वकीयां 'श्रीआनन्दभाष्यम्' अपि ब्रह्मसूत्रोपरि सर्वजनबोध्यम् स्वसिद्धान्तसम्भृतं सरलयैव संस्कृतलेखन-प्रणाल्या सर्वसाधारण-जन-बोधायैव - आपामरजनमानसे प्रसाराय प्रचाराय युगानुरूपया आवश्यकताऽनुसारिण्या-संस्कृतभाषया सुस्पष्टं सुगमं मनोरम्यं "भाष्यम्" ब्रह्मसूत्राणां प्रकटितं प्रकाशितञ्च । नीतिगभीरया धीरया युक्त्या खण्डनीयविषयाणां खण्डनादिकं स्वसिद्धान्तमण्डनञ्च सम्पादितम् । श्रूयते तत्र भवान् श्रीव्यास-नारायणोऽपि प्रकटितः सन् प्रशंसां कृतवान् भाष्यस्येति ।

# पञ्चाशत्तमः परिच्छेदः

इत्थम्-श्रीरामानन्दाचार्याणां शरच्चन्द्रचन्द्रिकाशतैरिव सन्ततं समुपास्यमाना,-कल्पतरुमञ्जरीव विस्तारितनिजसुरभिसन्ताना. समस्तभुवनमण्डलमण्डनायमाना, परितो दिग्दिगन्तान्तं वितानित-वितानायिता नुयशःसन्ततिः सकलधरणिमण्डलमधिष्ठितानां धर्म-प्राणभूतानां मानवानां मानसपटलं स्वभासा भासयन्ती विलसति स्म वसुन्धरामण्डले ।

सकलभुवन-राज्यलक्ष्मीरिव विहरति स्म सकल - धरणिमण्डलाऽऽखण्डलानां राज्यप्रासादेषु विद्योतयन्ती सपरिकर-नरपतिस्वान्तमन्दिराणि । किम्बहुना भूतलतलविलसितानामापामरमनुसन्ततीनां स्वान्तानि नितान्तमुल्लासयन्ती, सुभगशुभ्रवदनादूतीव सकलांस्तान् स्व-स्वामिसमीपमुपस्थापयितुकामा स्वर्वमिव मनोऽभिरामा प्रेरयति स्म सकलज्ञानपिपासानिवृत्तये श्रीरामानन्दाचार्यचरणशरणीकर्तुं, तदीयपादपद्मपरागरागरञ्जितोत्तमाङ्गान् विधापयितुं तद्वदनारविन्दनिःष्यन्दित-मधुरमधुरसास्वादनाय चञ्चरीकायमानचेतसां स्थिरीकरणाय मोहनमन्त्रमिव तेषां श्रुतियुगलेषु समुपदिशन्ती, समाकर्षणमन्त्रपटलीव तान् तत्पार्श्वे समानयन्ती सम्मोहनमन्त्र-तन्त्र - प्रयोगमालेव सत्सङ्गरङ्गसमुल्लासाय. तरङ्गयन्ती तत्कीर्त्यङ्गना नानाविधां विदधे विल सोल्लासहासावलीं प्रतिभवनमिति ।

ततः श्रीमद्रामानन्दाचार्य-यशश्चन्द्र - मरीचिनिचयसुधाक्षालितदृक्पुटा निबद्धहस्ताञ्जलिसम्पुटाः कुक्कुटायित क्रमेण-मन्द्र-मध्यमतारस्वरेण जय जय घोषं समाचरन्तः सत्सङ्गरङ्गस्थलीमवाप्याद्भुत-भगवच्चमत्कारातिशयदिदृक्षवः श्रीमदाचार्यवर्यकरुणाकणिकाभिक्षव इव देशदेशान्तरतो यूथशो नरा नार्यो नरपतयश्च ज्ञानपिपासवो भक्त्यासवोन्मत्ताः समवेताः समभुवन् । समागत्य कतिचन दिनानि तत्रोषित्वा सत्सङ्गानन्दमवाप्य निवेदयामासुश्च स्व - स्वदेश - नगर - ग्रामस्थलीं तच्चरणाम्बुजपरागेण पावयितुं तत्रत्यान् गमनागमनकर्मव्यापार-प्रसार-पराङ्मुखान्

तदीयदर्शनोत्मुखान् विमुखांश्च सांसारिकविलासगोष्ठीभ्यः समुपकर्तुं भावनाप्रवृद्धान् वृद्धान् तच्छ्रुतियुगलानि प्रवचनपटलैः पूरयित्वा भक्तिरसार्णवतरलतमतरङ्गान्दोलनविलोलन - विलासभाजां मनोरथान् पूरयितुमेव ततस्थानेषु पदं धारयित्वा जगति प्रसृतं पाषण्डमयं धर्माऽऽडम्बरं दूरीकृत्य वस्तुतो विशुद्धं भक्तिमार्गं प्रकाशयन्त्विति। किञ्च साम्प्रतिकीं सर्वत्रप्रसृतां स्वेच्छाचारतां, विपरीतां वैदेशिकजनसम्पर्कात् परिवर्तितां मनोवृत्ति व्यवहारमयीं दुर्वृत्तप्रवृत्ति च साक्षादेव विलोक्य सद्यः परिवर्त्य याथार्थ्येन धार्मिकीं भावनां पुनः प्रवर्तयितुमेव प्रदेशपर्य्यटनव्याजेन सर्वत्र धर्मप्रचार- प्रसारं विदधतु" इति।

तथाविधांश्च तेषामशेषां प्रार्थनां श्रुत्वा, पतनोन्मुखीञ्च मानवप्रवृत्ति धर्मधारणायाः ह्रासञ्च, लक्ष्यीकृत्य-पुनर्जनमानसेषु भक्तिसमृद्धिवृद्ध्यै दिग्विजयप्रस्थानार्थं स्वशिष्यान् समाहूय, श्रीवैष्णवमठस्य समुचितां व्यवस्थां विधाय योग्यशिष्यस्कन्धोपरि मठीयकार्यसञ्चालनभारं निक्षिप्य निश्चिन्ताः सन्तः श्रीमन्तः स्वामिमहानुभावाः कतिपयसुयोग्यान् विशिष्टान् शिष्टान् स्वशिष्यान् स्वात्मना सहैव प्रचलितुमाज्ञापयामासुः।

ततः कस्मिश्चनैकस्मिन् मङ्गलमयप्रभाते "गङ्गासागरसङ्गम" समालोकनापदेशेन वङ्गादिदेशेषु श्रीवैष्णव - दीक्षा - प्रसारपुरःसर सर्वजनसमुद्धारकं भुक्तिमुक्तिकारकं श्रीरामनाम - प्रकारकं तारकं मन्त्रराजसमुपदिश्य तत्र तत्र भक्तिमार्गप्रसारं कुर्वन्तः स्वोद्दिष्टं श्रीगङ्गासागरसङ्गमस्थलं प्रापुः। तत्र भगवतो मरीचिमालिनः प्रतिवत्सरं मकरराशि - सङ्क्रमणावसरे जलराशिरपि स्वतः समुपजातं भगवत्प्रेरणात्मकं व्यापारमाधारीकृत्य अपारागाधगाम्भीर्यगुणाधारोऽपि पारावारः स्वजलप्रसारं सङ्कुचितं विधाय भक्तजनमानसमुदे तावत्परिमाणकं श्रीकपिलदेवतपःस्थलीविशेषं निःशेषं - नविशेष - भक्तिभावभरितः खिलीकृत्य, भक्तजननिवासार्थं द्वित्रिदिनावधिकं कालं यावत् स्वयमेव समाधिस्थ इव, सुप्त इव स्वात्मानं समुच्छ्वासपूरवर्जितं कलयित्वा स्थितः सन् निःशुल्कसेवक इव परितः प्रसारित-निजजल-जवनिकामपसार्य श्रीकार्दम तेजःपुञ्जपरिराजित - श्रीकपिलदेवमूर्ति तत्तपःक्षेत्रं प्रकटयति प्रतिहायनमिति। स एव क्रमोऽद्यावधि प्रचलित एव। तत्रैव श्रीरामानन्दाचार्याः तस्मिन्नेव मकरराशिसङ्क्रमणावसरे भगवतोभास्करस्य, समुद्रस्नानम् श्रीकपिलाचार्यस्वरूपदर्शनं विधाय समुपस्थितांश्च समागत-भक्तजनान् तत्स्थल-माहात्म्यं प्रकटीकृत्य भगवद्भक्तिप्रवर्तकं समुपदेशमुपदिदिशुः। विशेषतश्च मकरराशिसङ्क्रमणकाले मार्तण्डमण्डलस्य महीमण्डले महती तेजस्तत्त्वस्य, गोतत्त्वस्य

ज्योतिस्तत्त्वस्य आयुस्तत्त्वस्य च प्रसृतिपरम्परा प्रवर्द्धमाना नानाप्रवृत्तिं जनयति जगतिजनमानसे। अस्मिन् सङ्क्रमणकाले कृतस्य कर्मणः स्नानस्य दानस्य द्विजातिसम्मानस्य भगवतो ध्यानस्य चाऽनन्तानन्तमेव फलमस्ति। विशेषतोऽत्र श्रीकपिलमुनेस्तपःस्थलीसमालोकनस्य पर्वणि च श्रीभगीरथतपःपुञ्जप्रभापटलायमानविग्रहाया सविग्रहायाः भगवत्या भागीरथ्याः स्वकान्तेन सागरेण सह सङ्गमस्थले स्नानदानादीनामनन्तगुणं पुण्यनिलयं माहात्म्यं महीयते महीमण्डले। इत्यादिभिः प्रवचनैः सुगुप्तप्रायमपि तीर्थप्रभावं पुनः प्रबलतमं प्रवर्तयामासुः।

इत्थम्-श्रीगङ्गासागरसङ्गम-सत्सङ्गसमागममाकलय्य साधु-सज्जन भक्तजनपरिवृताः स्वीयशिष्यपटलैः सह श्रीस्वामिमहानुभावाः श्रीपुरुषोत्तमक्षेत्रं [ श्रीजगन्नाथपुरी धाम ] प्रत्याऽऽकृष्टचेतसः साक्षात् स्वरूपेण विराजमानस्य भगवतो दर्शनचरणस्पर्शन - समर्चन - वन्दनोल्लासैः "सता यम्पद्यमानत्वमिवानुभवितुकामाः स्थाने स्थाने भगवद्गुणगणान् गायन्तः शृण्वन्तः श्रावयन्तश्च निजसमुपदेशैः कलिङ्गेषु भक्तिरसस्रोतस्विनीं प्रवाहयन्तः स्त्रीबालवृद्धेष्वपि सकृदुपदेशपरम्परातः प्रवर्तयन्तो भक्तिसञ्चारं चिराकाङ्क्षितं परमपावनं पुण्यतमं श्रीपुरुषोत्तमक्षेत्रम् स्वनयनपथिकीभूतमकुर्वन्।

श्रीस्वामिनां समागमनवृत्तान्तमाकर्ण्य पुरीनिवासिनो नरानार्य्यश्च प्रमुदिताः सन्तो यूथशस्तद्दर्शनकुतूहलिनः संवृत्ताः। तत्रत्य नृपतिना च तेषां स्वागतसम्मानाय स्थाने स्थाने मङ्गलतोरणद्वाराणि निर्मापितानि, सुविशालश्चैकः सभामण्डपोऽपिसुसमीचीनः समन्ततः पटपरिधिसमञ्चितो विस्तृतवितानविलसितो मध्ये समुन्नतसमलङ्कृतमञ्चपीठिकापरिराजितः समायातविपश्चितां-सभ्यानां नागरिकाणां ज्ञानपिपासूनाञ्च कृते आचार्यपीठिकाऽभ्यर्णमेव सुभगासनानां परिकल्पनमकारयत्।

श्रीरामानन्दाचार्याः मानन्दं सश्रद्धं प्रणतशिरसः पुरीं प्रविश्य भगवतः श्रीपूर्णपुरुषोत्तमस्य ( श्रीजगन्नाथप्रभोः ) दर्शनार्थं मन्दिरद्वारमधिष्ठाय विहितानेकप्रणामाः सभक्त्युद्रेकं भगवतो दर्शनं चक्रुः। स्वात्मानं कृतकृत्यं मन्यमानाः भगवतोनुग्रहमेव सर्वात्मनाऽनुभवन्तः स्तवनादिकं परिक्रमाञ्च विधाय स्वनिवासस्थलमुपेत्यसमुद्रस्नानाय सपरिकराः सागरतटमुपेत्य, समुच्छलल्लोलकल्लोलमालामय - भुजसहस्रैरिवाऽऽयातानां स्वागतमिव कुर्वन्तं हर्षप्रकर्षोद्गारमिव वीचिसहस्राप्सां नर्तनमिव कारयन्तम्, पुनःपुनः सलीलं सलिलोल्लोलनक्रमेण पाद्यार्घ्यादिविधिमिव सम्पादयन्तं प्रसन्नागाधपाथोनिधिं विज्ञाय सश्रद्धं प्रणम्य समुदं स्वीयशिष्यपटलैः सह स्नानविधिं सम्पदयामासुः।

ततश्च राजपरिकरेण सम्मानिताः श्रीस्वामिनः पुनस्तैः सह महता राजकीय-समारोहेण - परिकरपरिमण्डिताः श्रीजगदीशदर्शनार्थं साक्षाद् वैकुण्ठधामेवाऽकुण्ठ-वैभवं सर्वदा विलसत्लक्ष्मीकं सर्वविधतापप्रत्यनीकं सुश्रीकं सन्ततसचेतसाञ्चेतश्चन्दिरे भगवन्मन्दिरे प्रविविशुः। तत्र गत्वा च अखण्डवेदध्वनिश्रवणं, स्वमेव सपरिकरा भगवत्कीर्तनम्, मनसाऽहरहः प्रभुचरणस्मरण, कुर्वन्तोऽभ्यन्तरं प्रविश्य समुपलब्धोपचारैः राजोपचारसहित निजसमुदाचारैः विविधसुरभिसम्भृतगन्धाद्यैः नानाविधसामयिक-सुरभितसुमनःपुञ्जैः बहुविधपक्वान्नाद्यैर्नैवेद्यैश्च धूपदीपबलिपुष्पोपहार - श्रीफल-ताम्बूलदक्षिणा - वासोयुगलाऽभरणाद्यैः श्रीजगन्नाथ - समर्हां विदधुः। पुनः पुनश्च भक्तिभावभरितसन्ततश्रद्धासमृद्धादरेण पादसंवाहन - भावनापुरःसरं चन्दनपरम्परां रचयन्तः स्वात्मनो जीवस्यवा सर्वदैव दास्यमेव प्रकटयन्तः स्वात्मनि च सख्यभावनया परिलालयन्तः सवदा स्वभाविकभक्तिसमुद्रेकविस्मृतात्मभावाः साष्टाङ्गप्रणति-परम्पराभिः स्वात्मनिवेदनमिवाकलयन्तो नवधाभक्तेः सर्वाङ्गाणीव प्रदर्शयन्तः समाराधनामेव श्रीसीतानाथोपासनाप्रकारेण श्रीजगन्नाथप्रभोश्चक्रुः। ततस्तोत्र-पाठादिकं विधाय मन्दिरद्वारमागत्य पुनः भगवतोऽभिऽमुखीभूय प्रणेमुः। मन्दिराद् बहिरागत्य रामानन्दाचार्याः स्वीयाऽऽवास प्रति प्रत्यावर्तमाना राजमार्गे शनैः शनैः यष्टिकासाहाय्येन प्रचलन्तं कञ्चन द्विजोत्तमं विज्ञाय जन्मान्धं जराजीर्णकलेवरञ्च तं दृष्ट्वा सहृदयतया समनुद्रुतचेतसः परिहासेन साधारणकुतूहललुलितया मधुरयैव गिरा सविनयं सस्नेहं तं जगदुः। भगवन्! कथमित्थं संक्षुब्धमानसो यष्टिकामितस्ततः प्रक्षिपन्नेवाऽऽतुरभावमाश्रित्य चपलगत्या क्व यासि प्रतपति प्रचण्ड - मार्तण्ड-मरीचिनिचयेऽस्मिन् करालसन्तप्तवालुकामये पथि प्रचलन् किमर्थमसमयपरि-भ्रमणनिषिद्धवेलायां किमर्थमिमं प्रयासं विदधासि। को हेतुस्त्वरमाणस्य ते प्रयाणे? इति सरसमधुरां प्रणयसम्भृताममृतमयीं वाचमाचार्यमुखादाकर्ण्य सकरुणं स प्रोवाच— भगवन्नहमस्मि जन्मान्धः पापात्मा द्विजवंशजः कान्यकुब्जाह्वयो दीनब्राह्मणः। श्रुतमद्य मया यदत्र श्रीरामानन्दाचार्याः समायातास्तेषामेव दर्शनार्थं त्वरितया गत्याहं गन्तुकामः किन्त गमने, जन्मान्तरीयं मे यदि किमपि पुण्यं स्यात् तदातु भविष्यत्येव तेषां दर्शनम् सफलश्च परिश्रमोऽपि।

श्रीस्वामिनः—तर्हि भगवन्! विनैव लोचनाभ्यां कथमालोचनं तेषाम्।

ब्राह्मणः—दीर्घं निःश्वस्य, आं, महात्मन् सत्यं ब्रूषे, दुर्भगोऽहं जन्मान्धः किं करोमीति वदन्नेव तस्य लोचनाभ्यां सन्तप्ततैलबिन्दव इवाऽत्युष्णतमा बिन्दवः सहस्रो न्यपतन्। तथा दैन्यदृश्यमालोक्य सहजदयार्द्रहृदयेषु दयायाः स्रोतः प्रासरत्। न ते तस्य तथाविधमत्यन्तखेदाकरं दृश्यं द्रष्टुमशक्नुवन् तदा सद्यः

ममुपसृत्य द्विजवर्य्यस्य कपोललुलितानश्रुविन्दून् स्वकरतलेन प्रोञ्छन्तः शनैः स्वकरपङ्कजस्पर्शेन तदीयनयनोपरि परिमृजन्तः समाश्वासयामासुः-मैवं रुदिहि ! भगवांस्ते सद्यो विधास्यति श्रेयो बलीयान् खलु भगवदनुग्रहः, मैवं विचिन्तयेति ।

एवं निजकरतलस्पर्शपावितविग्रहो विनष्टजन्मान्तरीयाऽघसञ्चयः सः ब्राह्मणः श्रीस्वामिचरणानामनुग्रहेण तत्करकमलस्पर्शव्याजेन पुनःप्रकाशितज्योतिः-पटलेन सम्प्राप्तनयनाऽऽलोकनो नितान्तप्रमुदितमनाः समुन्मीलितान्तर्ज्योतिश्चक्षुष्को लब्धाऽभिलषितमनोरथः सम्मुख एव समुपस्थितान् मन्दविकसितवदनारविन्द-निःस्पन्दित-मकरन्दमिव मधुरतमवचनामृतनिर्झरी-सुसलिलसेकोल्लासिन विवेकभाण्डागार-श्रीस्वामिचरणानालोक्य परमानन्दनिमग्नः सगद्गदस्वरेण श्रद्धासमृद्धादरेण गृहीत-चरणो ह्यपूर्वं ज्योतिर्लाभपरिपूरितस्वान्तः साक्षाद्भगवन्तं जगन्नाथस्वामिनमेव भक्त-वत्सलमुपायान्तमिव मत्वा कृतकृत्यतां प्रकटयंस्तानस्तावीत् ।

ततः श्रीस्वामिचरणाः सद्यश्चरणनिपतितं ब्राह्मणमुत्थाप्य सहजकारुण्यार्णवास्त हृदयेन संयोज्य समाश्लिष्य समाश्वासयन्तस्तदीयजन्मान्तरीय - पापप्रक्षालन-पुरःसरं तत्कर्म प्राकाशयन् । भगवन् ! द्विजराज ! इदमासीत् तव प्राग्जन्मविहित-दुष्कृतफलमयं जन्मान्धत्वम् । तदानीं भवान् कमपि निर्दोषं पशुं क्रोधावेश वशं वदो लगुडेन ताडयन् तस्याक्षिणी नाशितवान् । तत्कृतमेवेतद्दुष्कृतं, तेन त्वमन्धत्व-मात्तवान् । सम्प्रति भगवतो देवाधिदेवस्य श्रीजगन्नाथस्य चरणशरणमुपागतः सुदीर्घकालपर्य्यन्तं तन्मन्दिरद्वारसोपानसरणी - गतं रजः प्रतिदिनमञ्जनायितं कुर्वन् स्वनयनेऽर्पितवान् तत्पुण्योच्चयेन त्वदीयं तत्सकलं दुष्कृत विनष्टमभूत् । अधुना भगवतोऽनुग्रहेण त्वदीयं दृक्पटलं दिव्यालोकाऽऽलोकनोपयुक्तं सञ्जातम् । सम्प्रति प्रत्यहं भगवद्दर्शनेन नयनसाफल्यं लभस्वेति विविधाश्वासन-सौख्येन सहैव पुनर्नयनज्योतिर्दानेन तमुपचक्रुः । समुपदिदिशुश्च यद् भगवतो विविधलीलातनुधरस्य नानानामरूपगुणधर्मादिभेदेन पार्थक्यं प्रकटयतो देवमनुष्य-तिर्यक्-पशु-कीटपतङ्गादि-संख्याऽतीततनुमयस्य , जगन्मयजगदीशस्य यस्मिन् कस्मिन्नपि जड़जङ्गमादिरूपे विश्वात्मनि सर्वदा सर्वत्र सर्वस्वरूपेण विद्यमानस्य. परात्मन एव साक्षात् परम्परया वा परोक्षापरोक्षरूपेण विद्यमानस्यैव दर्शनं विदधत् तमेव परमात्मानं तत्रस्थि-तमिति विज्ञाय, न कुत्रापि कुप्रवृत्तिः कुचेष्टा कुत्सिता वा व्यवहृतिः । तस्मिन् दुर्भा-वनाऽपि न विधातव्या, न वा हेयता द्रष्टव्या दर्शनीया वा । सर्वदैव सर्वरूपे परमा-त्मनि न निम्नव्यवहारः कर्तव्यो, न वा नीचोच्चभावनैव रक्षणीया । सर्वेषां जड़-

जङ्गमानां सम्मानमेव करणीयम् । सद्वाचा मधुरस्निग्धयैव व्यवहर्तव्यम् । अवधातव्यश्च सदैव यत्र-कुत्रचन कस्यचन केनाऽपि वचनेन न भवेदपमानः । केनापि वा कर्मणा ज्ञाताऽज्ञातरूपेणापि न प्रवर्तेत क्वचनःऽपकारो यो हि खेदाकरः स्यादित्यवधानीय-मेवेति ।

इत्थम् विदितनिजपूर्वजन्मवृत्तान्तः शान्तो विप्रवरः पीयूषश्रुतिपूरितश्रवण-युगलः प्रसन्नचेताः श्रीस्वामिचरणे पुनः पुनः प्रणतिं कुर्वन् लब्धवरप्रसाद इव मुदितान्त-रात्मा तेषां गुणगणान् गृणन् यथागतोस्तथैव श्रीस्वामिनं वचनोपदेशान् संस्मरन् लब्धापूर्वनेत्रलाभो निजजीवनं तद्दर्शनात्सफलमेव मन्वानः स्वस्थानमागत्य सर्वान् सम्बोध्य श्रीरामानन्दाचार्याणां गुणगणप्रशस्तिं प्रख्यापयामास । ततः साऽद्भुताऽघटि-तघटना विद्युदिव क्षणार्द्धेनैव सर्वत्र पुर्यां प्रसृताऽभवत् । सुदूरदूरतो जनाः सोत्कण्ठं सकुतूहलं श्रीस्वामिनां दर्शनार्थञ्च यूथशः समागताः । आचार्याणामावासस्थले समभव-न्महान् जनसम्मर्दः ।

ततः सशिष्याः श्रीमदाचार्याः स्वावासमाश्रित्य भगवतो महाप्रसादादिकं मध्याह्नाऽशनरूपेण सम्प्राप्य कञ्चित्कालं ( होरामात्रं ) विश्राम्य पुनः सभामण्डप-मागत्य विराजमाना अभूवन् यत्र पूर्वत एव प्रतीक्षापरवशाः सहस्रशः श्रोतुकामा सभामाः युवानो वृद्धा योगिनः संन्यासिनो महात्मनो नागरिकाश्च यथास्थानं समुपस्थिता आसन् । तदानीं सहसा प्रासरद् समन्ततो जय जय ध्वानम् ।

समागत्याचार्याः सम्बोध्य सर्वान् भावुकान् भगवदीयान् पप्रच्छुः—यद् भवन्तः कं विषयमवलम्ब्य प्रवचनश्रवणेप्सवो राजन्त इति । सर्वे—सहैवैकस्व-रेणोचुः—भगवन्तः "परलोक-" विषयमवलम्ब्य समेषां मनसि निवसितां ह्यसितां शङ्कां समुन्मूलयन्त्विति ।

शङ्का—हि—यद् "न स्वर्गो नाऽपवर्गो वा नैवात्मा पारलौकिकः ।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥

इति, सर्वमेतदज्ञानविजृम्भितमेव । ये हि स्वार्थसाधनपरा धूर्ता विद्वांसः आसन्, तेषां मानसिकी कल्पना, भयोत्पादिका, कातरजन-मनोमोहिनी सकल-मानवोन्मादिनी मदिरेव प्रसारिता मनः-कल्पना मिथ्यैवेति ।

श्रीस्वमिनः—प्रहसन्तः शान्तमधुरस्वरेण सर्वान् सम्बोध्य विशुद्धचेतसा कुतर्क-कौटिल्यादि - दोषानपसार्य्य विवेकपूर्वकं विवेचनभावनया सिद्धान्त - तत्त्व ज्ञापनाय, तत्त्वज्ञानलब्धये, प्रशान्तचेतसा सावधानतया स्थित्वा सर्वैः श्रोतव्यम् मन्तव्यम् निदिध्यासितव्यम् ॥ इति ॥

महानुभावाः भावुकाः भगवदीयाः सर्वं एव यूयं सनातनधर्मावलम्बिनः विश्रुताऽनेकशास्त्र - प्रबन्धकल्पनाः सत्सङ्गरङ्गरञ्जिताः तत्त्वजिज्ञासवः सम्प्रति विद्यमानाः सन्ति। शङ्का चेयमपि नापूर्वानैकशो वा समुपस्थिताः। यदा यदा हि स्वच्छन्दाचार-चरितानि भुवस्तले प्रसृतानि भवन्ति तदा तदैवैषा शङ्का समुदेति। प्रवृद्धासमृद्धाऽपि कदाचन कुत्रचन तादृशेषु प्रवर्तिताऽपि भवति। समयेसमये चास्याः समाधानादिकमपि नैकधा नैकशो वा प्रसारितमभूत्।

भवन्तः सर्वं एव स्वकीये गृह एव दृष्टिं निक्षिप्य विलोकयन्तु-यदि-शङ्काऽसारं परलोक-कल्पना मनःकल्पिता मिथ्यैव चेत् तर्हि भवतां गृहेषु या ललनाः सुदूरदेशस्थाः सम्बन्धिनां गृहेषु लब्धोत्पत्तिकाः अन्यदीयाः पुत्र्यः अन्यदेशीया विभिन्नस्वभावा एकत्रैव, एककुटुम्बकुलकामिन्यो राजन्ते सुखिताः दुःखिताः वा प्रसन्ना अप्रसन्ना वा भक्ता अभक्ता वा सर्वा एकमत्यः, एकस्यैव गृहज्येष्ठस्य श्रेष्ठस्य महापुरुषस्यैवाज्ञया प्रवर्तमाना परस्परं यथा-मानं यथास्थानं यथा-योग्यं श्रद्धया भक्त्या वा स्नेहेन प्रेम्णा, वात्सल्येन वा व्यवहरन्ति इत्यस्य किमस्ति मूलम्? यस्मिन् कस्मिन्नपि गेहे तु दुर्जन-पुरुषाधीनाः सुशीलाः सदाचारा नार्योऽपि कदाचन क्रोधान्धेन क्रूरेण ताड्यमाना अपि तत् ताडनां सोढ्वाऽपि न किमपि वदन्ति कुलीनाः सत्कुलप्रसूताः। न प्रकटयन्ति च तदीयचरितानि लोकलज्जाभियाऽन्य-सम्मुखे स्वशरीरोपरि समनुभूतां तां व्यथां निजमानसे नितरां प्रतिक्षणं विलक्षणां कुटिल-कुश्वश्रूसमुत्पादितां नवनवां दुःस्थितिमनुभवन्त्योऽपि कोऽत्र हेतुः?

कथं किमर्थं वा ताः सकलाः सत्कुलीनाः सुशीलाः सुन्दर्यः सर्वदा तिष्ठन्ति-भवतां तथाविधे दुर्व्यवहारप्रसारे? तेषु च तासां सौजन्यपूर्णव्यवहार - व्यापारेषु वर्तमानानां शान्तानां सहनशीलस्वभावानां नो जागर्ति भवतां प्रति प्रतिशोध-भावना तासां चेतःसु सर्वपीडितानामपि किं कारणमत्र? विचिन्तयन्तु सर्वे शान्त-चेतसा। न भवेद् यदि तासां मनस्सु परलोक-भावना न ताः परलोक - कल्पना कल्पित-निजनिज-पातिव्रत्य धर्म - लोपभीतिं विचिन्तयेयुः, न वा परलोके सुरक्षित-पातिव्रत्य धर्मपालनपरायणाः महिलाः स्व-स्वभर्त्रासाकं स्वर्गादि लोकेषु वैकुण्ठादि लोकेषु च—शचीव पुरन्दरेण सह, लक्ष्मीव विष्णुना सह, कैलासे पार्वतीव शङ्करेण सह सानन्दं परमानन्दसौख्यमनुभवन्ति कल्पान्तावधि-इत्यादि भाविनी सौख्यसम्पा-दिनी शुभाशा परलोकमयी न सुस्थिरा चेत्—तासां मनःसु तर्हि कथं भवता-मीदृशं कठोरतममपि व्यवहारं सहेरन्। एषा परलोकमयी भावनैव ताः सर्वाः स्वस्वधर्मे कर्मणि व्यवहारे वा प्रवर्तयन्ति।

नो चेत्—को भवान् कस्याः पतिः कः सम्बन्धः ? अरे सम्बन्धस्तु प्रणयस्यैवासीत्, सतु सर्व एव भवता त्रोटितस्तां ताडयित्वा पीडयित्वैव। अधुना कस्त्वमस्याः ? यदि भवान् कथयेदहमस्मि पतिरस्याः। तर्हि किं मानमस्मिन् ? यदि च मन्त्रद्वारा अग्नि-साक्ष्यीकृत्य विवाहितोऽहमिति तर्हि-न सा मनुते तदानींतनस्याग्नेः साक्ष्यम्। गच्छतु भवान् अग्नेरुपालम्भनाय। यथा आधुनिके युगे न्यायालये प्रतिदिनमायान्ति तथाविधा ह्यभियोगाः। भवति भूयसीनां सम्बन्धविच्छेदस्वीकृतिः। तथैव-प्रसरिष्यति सर्वत्र तादृश्येव प्रवृत्तिस्तर्हि न कश्चित् सुखेन स्थास्यति न वा सञ्चालयिष्यति स्व-स्व-गार्हस्थ्यमेव। न पालयिष्यन्ति काञ्चन धर्ममर्यादां। न स्थास्यति च विशुद्धा सन्तानपरम्परा। न प्रसरिष्यति प्रचलितो गृहस्थस्य वर्तमानो व्यवहारोऽपि, यदेषा मम भगिनी-यदेषा च मे शालभद्रिकेति। न तयोः परस्परं कोऽपि शारीरिको वा भेदः कथं तर्हि भगिनी शालभद्रिकयोः स्नेहादिको भिन्न-विषयको व्यवहारः। कथं वा ननान्द्र-भ्रातृजाययोः समवयस्कयोः परस्परं भिन्नस्वरूपं प्रेम-प्रसारयितुं समर्थो भविष्यति जनः स्वभगिन्यां स्वपत्न्यां वा, कथं नैकविध एव भवेदेनयोः स्नेह-सञ्चारः। अत्रापि परलोकभयमेव हेतुः पापप्रकोपपरिकल्पनैव ? नान्या काचन। कथं न ते तथाशङ्का प्रवर्तकाः स्वभगिन्या सह विवाहविधानं कलयन्ति ? यदि न भवेत् पाप-भयं परलोकभयं वा।

अतः परलोक-भावना परलोक-जनित वा भयमेव सर्वानस्मान् स्व-स्व-मर्यादायां सञ्चालयितुं सकलं वा. पिता, पुत्र, माता, भगिनी, ज्येष्ठ-श्रेष्ठ-गुरुपत्नी गुरुपुत्री, श्वश्रू-श्वशुरःश्यालः शालभद्रिका, पितृष्वसा मातृष्वसा मातुलः मातुलानीतिसर्वमेव व्यवहारमूलं परलोकपरिकल्पतमेव। यदि परलोकव्यवस्था न स्वीक्रियेत तर्हि सर्वं विप्लवमेव भविता। अतः सर्वैः स्वीकर्तव्यो मन्तव्यः सुदृढधारणया व्यवहर्तव्यो वा परलोकः।

किम्बहुना, आस्माकीनान्याचरणानि, अस्माकं धर्मशास्त्राणि, वर्णाश्रमविभागो धार्मिकी वा श्रद्धा, आस्तिक्यभावो भगवन्निष्ठा, वेदाः पुराणानि स्मृतयः देवाः स्वर्गादयः सर्व एव परलोक-विश्वासोपगतानि कर्माण्येव। दैनन्दिनी प्रक्रिया लोकव्यवहारो व्यापारश्चेति सर्वं परलोकावलम्बितम् यज्ञयागादयोऽपि, तत्फलान्यपि सर्वाणि तदधीनानि। अतः सकलसृष्टि-विधारक एव परलोकः।

अत्रैव सन्ति वहूनि प्रमाणान्यपि परलोकसाधकानि-यथा कठोपनिषदि यमस्योक्तिः—"न साम्परायः प्रतिभाति वालं, प्रमाद्यन्तं—वित्तमोहेन मूढम्।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे।"

इति नचिकेतम्प्रति-कथयति यमराजः । — ये हि-प्रमादवन्तः धनमदसमुद्धताः गर्वोन्नतमस्तका मूढा ज्ञान-विज्ञानशून्या परलोकेऽप्यश्रद्धावन्तः वारं वारं जन्मानि लब्ध्वा मम शासने समायन्ति बन्धनादिकमनुभवन्ति । अतः श्रुतिरियं परलोक-स्थितिं वर्णयति । परलोकेऽप्यविश्वसन्ति । इति ।

किञ्च छान्दोग्योपनिषदि च—

"ये चेमेऽरण्ये श्रद्धातप इति उपासते, तेऽर्चिष-मभि-सम्भवन्ति०"

[अध्या-५-खण्ड१० मन्त्र १]

'अथ य इमे ग्राम इष्टापूर्त्ते दत्त-मित्युपासते ते धूममभिसम्भवन्ति"। मंत्र ३

इत्यादिभिः जीवात्मनः परलोकादि गमनं स्पष्टमेव स्फुटीकुर्वन्ति श्रुतयः। अन्यदपि गमनागमने श्रुतिषु प्रतिपादिते ।

तथाहि :—["तपः श्रद्धे ये ह्युपवसन्ति, अरण्ये शान्ता विद्वांसो भैक्ष्यचर्य्यां चरन्तः।"

सूर्यद्वारेण ते विरजाः प्रयान्ति यत्राऽमृतः स पुरुषो ह्यव्ययात्मा । (मु उप०)

श्रुत्याऽप्यनया सूर्यद्वारेण (अर्चिरादि = देवयान) मार्गेण ज्योतिर्लोकान् प्रतिगमनं साध्यते योगिनां विदुषां वेति (अतः परम् ऋग्वेदेऽपि:— ५ ४६।३)

["इन्द्राग्नी मित्रावरुणाऽदितिस्वः पृथिवीं द्यामानः पर्वतां अपः"] इत्यनेनापि इन्द्र- अग्निः मैत्रा-वरुणः - अदितिः, स्वर्ग-पृथिवी-द्यौः प्रभृतिलोकानां नामानि-प्रकाश्यन्ते स्थितिश्चापि पृथक्पृथक् लोकानां प्रतिपादिता भवति ।

एवमेव यजुर्वेदेऽपि ["नाकं गृभ्णानाः सुकृतस्य लोके"] (१५।५०)

संहितायाश्चापि—["पाद्यममादनात् पापलोकान् "] (१८।५।६४)

इत्यादि वाक्यैरपि पापात्मनां कृते पृथक् यमलोकादन्यत्र यातनालोकानां-स्थितिः। यत्र पापात्मानः प्रेष्यन्ते नीयन्ते वा यमदूतैः। एवञ्च गीतायामपि-

ऊर्ध्वं गच्छन्ति सत्त्वस्था, मध्ये तिष्ठन्ति राजसाः।

जघन्यगुणवृत्तिस्था - अधोगच्छन्ति तामसाः ॥" (१४- ८ गीता)

इत्थं सत्त्वगुणवृत्तीनामूर्द्ध्वगमनमेव सिद्ध्यति। राजसानां मध्ये स्थितिः जघन्यकर्मकारिणां पापात्मनां कृते अधोलोकेषु नरकादिषु गमनं निरूपितमस्ति ।

किञ्च परलोकस्य सिद्धिस्तु पक्षान्तरेणापि पुनर्जन्मना साध्यते :—

पुनर्जन्म :— पुनर्जन्म विषये महाभारते विद्यते प्रसङ्गः :—यदा हि- भीष्मपितामहाः शरशय्यामधिगत्य यावदुत्तरायणमायाति तावद् तथैव शरशय्यायामेव सुप्ताः सकलां शरयातनामनुभवन्त एव स्थिता आसन् पुनश्च समायाते भगवतो

भास्करस्योत्तरदिगनुसरणे - योगधारणाया स्वप्राणोत्क्रमणानन्तरं यमराज-मुपेत्य प्रोक्तवन्तः—भगवन् धर्मराज ! स्मराम्यहमात्मनः शतजन्मसु किं कि-माचरितमिति न तत्र पश्यामि किमप्यवद्यं कर्म यस्य फलमधुना शरशय्या-रूपेण मरणकालेऽनुभूतं मयेति । कोऽत्रहेतुः किमर्थं पातितो मय्येष दण्डः, इति ।

तदा श्रीधर्मराजः प्रावोचत् भगवन् ! न शतजन्मसु तु भवता किमप्याचरितं तथाविधं कर्म-किन्तु शतोत्तरैकस्मिन् जन्मनि भवान् कमपि निर्दोषं पक्षिशावकं शुकं तत्प्राणसंरक्षणभावनयैव भूतेभ्योऽन्य-जन्तुघातिभ्यः काकादिभ्यः संरक्षन् तमेकत्र स्थापयित्वा तदुपरि कण्टका-वृतं (लघु बदरीफलक्षुपनिचयं =) (बेरी के झींटकेति भाषायां राजस्थाने) आच्छाद्य गृहं प्रत्यागतो विस्मृतवाश्च तं पक्षिणम् । सोऽपि क्षुत् तृड्भ्यां व्याकुलः अज्ञातकण्डकाच्छादनः समुड्डीयमानमानसो यथोदपतत् तथैव सः कण्टकशतसञ्छिन्नभिन्नवपुः तत्रैव संलग्नो वहिर्गन्तुमक्षमः प्राणांस्तत्याज । तत्कर्मजन्यमिदमंहो भुक्तवान् शरशय्याधिशयनरूपमिति । एतेन स्पष्टमेव पूर्वज-न्माऽपरजन्मनी । यद् यदस्माभिः पूर्वजन्मनि कृतं तदेवाऽस्मिञ्जन्मन्यनुभूयते । किञ्च लोकेऽपि वहवः सन्ति दृष्टान्ताः । पातञ्जलयोगसूत्रेपि :–[ 'क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः । ["सति मूले तद् विपाको जन्माऽऽयुर्भोगाः"] इति पूर्व-जन्मार्जितानामेव कर्मणां फलमन्येस्मिञ्जन्मनि भुज्यते मानवेन पशुना पक्षिणाऽपि ।

गीतायामपि :— ["यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥"

किञ्च " "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप !"
एवं च "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।" किञ्च
पूर्वजन्मार्जितां विद्यां पूर्वजन्मार्जितं धनम् ।
पूर्वजन्मानुसम्वद्धां मनुजो लभते स्त्रियम् ॥"

गर्भोपनिषदि च–यदा जीवः सप्तमे मासि जीवेन सह संयुक्तो भवति, अष्टमेमासि च सर्वाङ्गलक्षणसम्पूर्णो-नवमे मासि सकल ज्ञानकरणसम्पूर्णो भूत्वा पूर्वजन्मजातं स्म-रति शुभाशुभं च कर्म विन्दति । स्मारं स्मारञ्च निजकृतानि चरितानि-योनि-गर्भान्तर्गत-कष्टं यदा न सोढुं शक्नोति तदा भगवन्तं प्रार्थयते स्वात्मनो वहिर्निस्सारणार्थम् । प्रतिजानीते च शतशः शपथपणादिपुरःसरं [ "भगवन् यदि योन्याः प्रमुच्येऽहम् तत्प्रपद्ये नरायणम् । यदि योन्याः प्रमुच्येऽहं तत्सांख्यं योगमभ्यसे । यदि योन्याः

प्रमुच्येऽहं ध्याये ब्रह्मसनातम्" ॥ इत्यादि। पुनर्यदा च सूति-मारुतेन ततः समुत्थाप्य बहिर्निक्षिप्यते तदासूक्ष्मयोनिद्वारतो निःसरन् महान्तं क्लेशमनुभवन् स्मृतिभ्रष्टः प्राण-कृच्छ्रमासाद्य कथञ्चन बहिरागतो जीवः सांसारिकीं दशामुपगतः सर्वं विस्मृत्य रोरवीति "क्वाहम् -क्वाहम्" इति-पुनश्च पूर्वजन्मविहित कर्मानुसारमेव उच्चनीचकुले [जातः कर्मानुरूप-मेव फलं सुख-दुःखादिकमनुभवति।

बृहदारण्यकेऽपि—"यथाकारी यथाचारी तथा भवति।

साधुकर्मकारी साधुः पापाचारी पापी भवति। पुण्यः पुण्येनकर्मणा पापः पापेनेति।"

"पूर्व-कृत फलाऽनुवन्धात्तदुत्पत्तिः।" इत्यादि

गीतायाञ्च :—["शुचीनां श्रीमतां गेहे योगभ्रष्टोऽपि जायते।
अथवा योगिनामेव कुले भवति धीमताम् ॥"

अग्रे च—"अनेकजन्म संसिद्ध-स्ततो याति परां गतिम्।" इत्यादि स्पष्टं पुनर्जन्मेति।

---

# एकपञ्चाशत्तमः परिच्छेदः

## अत्र वर्णाश्रमव्यवस्था

सर्वतः प्रथमं भगवता सृष्टिरचना-कालादेव समुत्पादितानां प्राणिनां हित-सम्पादनाय तेषां लोकव्यवहार-कृते स्वस्व - मर्यादानुसारं व्यवहर्तुं स्वे स्वे कर्मणि संरक्ता-स्ते निज-निज-व्यवसाये संसक्ताः प्राणिनः सानन्दं ससुखं सप्रेम सोल्लासं निवसेयुरिति स्थिरी - कृत्यैव वर्णाश्रम - व्यवस्थां स्थापिता प्रवर्तिता प्रसारिता चेति । प्राणिनः समुत्पाद्य तेषु प्रकृत्यनुसारं कांश्चन वेदाध्ययनाध्यापन-यजनयाजन-प्रयोगोपासन - पुरःसरं शम-दम-तपः - शौच - क्षान्ति-सारल्य-ज्ञान - विज्ञानास्तिक्य-भावोल्लासित-कर्म - समाम्नायाऽऽसक्तमनसां ब्राह्मणत्वम् । तथैव शौर्यतेजोधृति-समुत्साह - संरक्षण - प्रजापालन - समरस्थैर्य - दान-मान यज्ञोपासनाद्यवर्ण (ब्राह्मण) संरक्षण धर्मव्यवस्थिति - परिपालन - समाचरणपूर्वक - दुष्टदमन - मर्यादापालनादि-लोकस्थिति-समासादन-कर्म-निरतत्व - व्यवसायिनाम् क्षत्रियत्वम्, एवमेव-लोकानां कृते सर्व-विधसामग्री - समासादनपूर्वकं कृषिकर्म - गोरक्षण-वाणिज्यैः सर्वमानव-समाजस्य सेवार्थं प्रवृत्तेषु वैश्यत्वम्, तथा च त्रिवर्णानां सेवनपूर्वकं तेषामावश्य-कता - सम्पूर्तये विविधविधकलाकलापैः वास्तुकर्म-शिल्पकला-गजवाजि - रथादिचा-लन - कर्मदक्षत्वादिसम्पादनरतेषु च सर्वेषां चिन्ता-शोकादि - निवारण - कुशलेषु शूद्रत्वम् [शुचं शोकं द्रावयति = सर्वान् सुखयति शूद्रः]" इति व्युत्पत्तिलभ्यार्थ-प्रति-पादकेषु शूद्रनाम्ना व्यवहारः । इत्थं क्रमेण चतुर्विधमानवेषु स्व-स्व - प्रकृति-प्रवृत्त्य-नुसारमेव तत्तत्कर्मकलापसूचकं वर्णव्यवस्थापनं कृतम् । तेन सर्वे प्राणिनः स्वं स्वं कर्म सम्पादयन्तः परस्परं सहयोगं विदधतः पारस्परिकीं सकलजनाऽऽवश्यकतां परस्परमेव पूरयन्तः सकल-लोकयात्रां निर्वहन्ति । तथैव तेषां नामानि कर्माणि च परिकल्पितानि भगवता ।

तथा हि ये हि ज्ञानविज्ञान-निधयो निखिल-शास्त्र-विज्ञातारः, सर्वदा मन्त्र-तन्त्रादि-बलेन सहसा समायात-आधिदैविकआधिभौतिकापत्तिनिवारण-पूर्वकं स्वेतर-

सकल-वर्णानां संरक्षणात्मकं कार्यं सर्वदा सार्वकालिक-मेव "चर्म" वत् कुर्वन्ति स्म। यथा युद्धे प्रवर्तिते खड्गाऽऽघातादिभ्यः समाक्रान्तो योद्धा स्वहस्तगतेन कच्छपपृष्ठात्मकेन चर्मणा किंवा गण्डकहस्तिं (खड्गनामक जलगज) - पृष्ठचर्मनिर्मितेन शस्त्रापातनिवारकेन (ढाल इति भाषानाम्ना प्रसिद्धेन) स्वात्मनः संरक्षणं करोति- तथैव ब्राह्मणाः स्वकीयाऽऽध्यात्मिकशक्त्या मन्त्रतन्त्रौषधादिबलेन समये समये समेषां रक्षण-कार्यं कुर्वन्ति स्म। अतएव तेषां नाम्ना सहैव "शर्मन्" शब्दस्य व्य-वहारः प्रचालितोऽभवत् यथा "देवदत्त शर्मा ब्राह्मणः" इति।

एवमेव क्षत्रिया अपि स्वस्व-कर्मणि ब्रह्मनिर्दिष्टव्यापारे संलग्नाः स्वनिय-मानुसारं स्वेतर-त्रिवर्ण (ब्राह्मण वैश्य शूद्र) संज्ञकान् रक्षन्ति स्म यथा योद्धा सङ्गरे स्वाऽऽक्रान्तृभ्यः परेभ्यः स्वात्मानं विधृत-कवचद्वारा वर्मणाऽऽत्मशरीर - रक्षकेणैव रक्षति तथैव क्षत्रिया अपि वर्मस्थानापन्ना इव रक्षन्तीति ते क्षत्रियाः वर्माणः कथ्यन्ते। यथा "श्री रामसिंह वर्मा" इति।

तथैव येषां प्रवृत्तयोरुचयश्च "कृषि-कर्मणि गोरक्षणे गोसेवायां वा वाणिज्य-व्यवसाये एकदेशतोऽपरस्मिन् देशे दैनिकोपयोगीनि वस्तूनि आदाय क्रीत्वा च किञ्चिदधिकलाभेनऽन्यत्रानीय विक्रीणते ये च तत्रत्यं वा समर्घं वस्तु नीत्वाऽन्यत्र-नयन्ति विक्रीणते च यथेप्सितलाभेन। इति वाणिज्यं व्यवसायं विधाय वस्तुसङ्ग्रहं द्रव्यसङ्ग्रहं कुर्वन्तो मार्गे-स्वस्थाने वा स्वात्मनो धनस्य वस्तूनाञ्च संरक्षणं काम-यन्ते अतः समेषां तेषां संरक्षणं हि आत्मिकीभ्य आपद्भ्यो ब्राह्मणाः भौतिकीभ्यश्च विपद्भ्यः चौरै-लुण्टाकैर्वा समुत्पत्स्यमानाभ्योऽन्यैर्वा दुर्मानसैर्मानवैः प्रोत्पादिता-भ्यश्च विपत्तिभ्यो राजानः क्षत्रिया-स्तेषां रक्षणं विदधति। अतस्ते सर्वदा संरक्ष्याः गोप्या वा संरक्षणीया भवन्ति। परम्परया च आसृष्टेः सदा तैः ब्राह्मणैः क्षत्रियैश्च शर्मभिर्वर्मभिर्वा गुप्ता भवन्ति स्म अतस्ते "गुप्ताः" कथ्ययन्ते यथा "रामजी-लाल गुप्तः।"

एवञ्च वर्णत्रयाणां सेवार्थमावश्यक-वस्तुजातं समुत्पादनार्थं अन्यानि वा निर्वहणोपयुक्त-साधनानि समाहतुं सर्वलौकिक वस्तु-निर्माणार्थं घटपटादि - समुत्पा-दनादि-कर्म-करणाय नानाविधकर्म-व्यवहार-व्यापारानुरूपमेव बहुविध सेवाकरणा-नुकूल पृथक् पृथक् कार्यभेदेन कर्मभेदेन तत् तत्कर्मकर्तृणां तत्तन्नाम्ना व्यपदेशेन नानाविधत्वात् तत्तद्भावानुरूप कर्मानुरूप-प्रयोगबोधिकाः संज्ञाः तेषां समभवन् :— काष्ठकर्मरतस्य नाम तक्षाः वर्द्धकी दारुकर्मकारीति। अयस्कारस्य लौहकारः। सुवर्-र्णादिधातूनां नानाऽऽभरणादि-कर्त्तृणां स्वर्णकाराः। मणिकाराः। रथकाराः।

चर्मकाराः। गोपालाः। शिल्पिनो मालिकाः कुलालाः सौचिकाः तन्तुवायाः चित्रकाराः, असिधावकाः शौण्डिकाः दिवाकीर्तयः जाबालाः ( अजाजीवाः ) देवलाः, मार्दङ्गिकाः वैणिकाः पाणिवादाः शाकुनिकाः दासदासादयो नानाविधा नानाकर्मकरा कर्मप्रणेतारः कर्मकलोपजीविनः, वनपाला, भृतका प्रैष्या भुजिष्यादयः सञ्जाताः पृथङ्मण्डलभूता यूथशः स्वस्व-कर्मसाधर्म्यसम्मताः संरताः समव्यसनिनः समशीला सम्बन्धिनो बन्धवो बान्धवाश्च संवृत्ताः। ते हि सर्वे दासभूतत्वात् दासकर्मरतत्वाद् "दासाः" दासशब्द-वाच्याः समभूवन्।

इत्थम् ससौकर्य्यं सानन्दं लोकव्यवस्था-सम्पादनाय स्रष्ट्रा वर्णव्यवस्था-परिकल्पिता। इत्येव न, अपितु सकल चराचरे जगति जडचैतन्येष्वपि प्रवर्तिताऽभवदेषा व्यवस्था। तैत्तरीयोपनिषदि :—["सर्वेषां वा एव वनस्पतीनां योनिर्यत् पलाशः।" ] इति-यथाहि तरुष्वपि पलाश-बिल्व चूलदल इङ्गुदी उदुम्बर शमी कदम्बादयो न्यग्रोधादयो देववृक्षाः ब्राह्मणाः शिंशपानिम्ब-वञ्जुल-कपित्थ-राजादन-परिजातादयः क्षत्रियाः। सहकार कर्णिकार केसर नाग पुन्नागादयो वैश्याः, श्लेष्मातक सौवीर नारङ्गक तिन्दुक मधूक तूद प्रभृतयो भूयांसः सेवापरायणाः फल-पुष्पच्छायादिभिः सर्वदैव-जनसेवारताः फलैश्च सकलप्राणिपरिपोषकाः तोषकाः शूद्राः ( शुचं शोकं द्रावयन्ति ) क्षुधानिवृत्तिकराः दीन-पशुपक्षि - मनुजोपकारिणः फलन्ति नमन्ति समुपकुर्वन्ति। किम्बहुना नीरसा अपि निजशुष्क-काष्ठैः इन्धन-रूपेण सर्वदा सेवन्ते मृता अपि। एवमेव पशवोऽपि-गावो विप्राः, अश्वाः गजाः क्षत्रियाः महिष्यादयो वैश्याः, उष्ट्रा गर्दभा अजा मेषादयः शूद्राः। पक्षिणोऽपि हंसाः शुकाः सारिकादयो ब्राह्मणाः। बकाः मयूराः चक्रवाकाः सारसादयः क्षत्रियाः। चटकाः पारावताः कोकिलाः हरितकपोता वैश्याः। कादम्बाः काका जलकुक्कुटाः कुक्कुटाः क्रौञ्चादयः शूद्रा विद्यन्ते। हिंसकास्तु सकलाः क्षत्रिया एव तेष्वपि जम्बूकादयः क्षुद्राः प्राणिनस्तु शूद्रा एव।

अतः परम् मानवादिशरीरेष्वप्यस्ति वर्णव्यवस्था :—यथा मानवस्योत्तमाङ्गम् ( मस्तकम्- ) आग्रीवात्केशान्तम् ज्ञान-विज्ञानभाण्डागारं ब्राह्मणात्मकमेव। तथैव हृदय-बाहू-पाण्याद्यवयवाः क्षत्रियाः, शरीरस्य मध्यभागो वैश्यरूपः सुगुप्तः सकल शरीरभारवहनकर्मदक्षो जानु - जङ्घापादाङ्गुलीपर्यन्तः सर्वाङ्गसंसेवको भागः। चरणस्थानापन्नः शूद्रभागः सर्वविध-गमनागमनक्रियाकलापसम्पादकोभागः।

यथाऽयं वर्णविभागो मनुष्येषु विद्यते तथैव देव-गन्धर्व-नागादिष्वपि—

तत्र श्रुतिर्महाभारते— "आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा।

शान्तिपर्वणि :—] अश्विनौ तु स्मृतौ शूद्रौ, तपस्युग्रे समाहितौ।
स्मृताश्चाऽङ्गिरसोदेवा ब्राह्मणा इति निश्चयः। ]

सर्पा अपि "सुवर्णवर्णा भुजगा ब्राह्मणा निरुपद्रवाः।
नो दशन्ति ह्यनाक्रान्ता निर्वैराः पितरः स्मृताः॥

ईदृशाः प्रायशः निक्षिप्तधनादौ वासनामया मोहावृताः पितरो येषां केषाश्चन गृहेषु परिभ्रमन्ति क्रीडन्ति च निज पूर्वजन्मान्तरीय पुत्रपौत्रादिभिर्मुग्धशिशुभिः परश्च न दशन्ति तानर्भकान् तत्करविधृता अपि। तत्रतो सहस्रायुषः सुदीर्घकालमुषन्ति - निधिभूत-धननिचये स्थिता रक्षन्ति तदीयं पूर्वजन्मनि निखातं द्रव्यम्।

ये च शोणित-वर्णाः सूर्यचन्द्राकारचिह्नवन्तो भवन्ति ते क्षत्रियाः। ये हि धूम-धूम्राः कपोतवर्णा वा वैश्य-संज्ञकाः भवन्ति। ये च पुनः कृष्णाः कठोर-चर्मवन्तो गज-महिषसमान-वर्णास्ते शूद्राः शूद्रवर्णा वा भवन्ति। किञ्च ज्योतिषशास्त्रेऽपि नक्षत्रेष्वप्यष्टाविंशतिषु वर्णव्यवस्था।—तथाहि :—"सप्त सप्त क्रमाज्ज्ञेया विप्राद्याः कृत्तिकादयः।" अर्थात्—"कृत्तिका-रोहिणी मृगशिरा - आर्द्रा - पुनर्वसु-पुष्य-अश्लेषान्तानिनक्षत्राणि ब्राह्मण-संज्ञकानि। मघा-पूर्वाफाल्गुनी-उत्तराफाल्गुनी-हस्त-चित्रा - स्वान्ति-विशाखान्तानि क्षत्रियसंज्ञकानि। अनुराधा-ज्येष्ठा-मूल, पूर्वाषाढा-उत्तराषाढा-अभिजित् श्रवणान्तानि वैश्य-वर्णानि। धनिष्ठा शतभिषा पूर्वाभाद्रपद-उत्तराभाद्रपद-रेवती - अश्विनी-भरणीपर्य्यन्तानि शूद्रवर्णानीति विभागः। एवं द्वादशराशिष्वप्यस्ति वर्णव्यवस्था :—तथाहि "मीन वृश्चिक कर्क राशयो विप्राः। मेषः सिंहः धनुः—"क्षत्रिया—" मिथुन तुला कुम्भाः शूद्राः कन्या वृष मकराः वैश्य-वर्णाः ["मीनालिकर्कष्टा विप्राः, क्षत्रमेषोहरिर्धनुः।
"शूद्र-युग्मं तुलाकुम्भौ, वैश्य कन्या-वृषो-मृगः॥"]

इति। किञ्च वेदादिस्वपि विद्यते वर्णव्यवस्था यथा ( तैत्तिरीय ब्राह्मणे :—"ऋग्भ्यो जातं वैश्य-वर्णं तमाहुः यजुर्वेदं क्षत्रियस्य आहुर्योनिम्।" सामवेदो ब्राह्मणानां प्रसूतिः पूर्वं पूर्वेभ्यो व च एतदूचुः। ( ३ : १२ । ९ । २ )। मन्त्रेऽस्मिन् सामवेदो ब्राह्मणः। यजुर्वेदः क्षत्रियः। ऋग्वेदो हि वैश्यः अवशिष्टोऽथर्ववेदः शूद्रः। एतेन सिद्धयति—यद्-लोके हि मूर्तिप्रतिपादको यो वेदभागश्छन्दोबद्धः स एव "ऋक्"। ऋगेव स्वरूप-प्रतिष्ठापिका=सकलाकारजनयित्री। आकारनिर्मापकेनानेन ऋग्वेद-नाम्नावेदभागेन = समस्त चराचरजगतःस्वरूप-निर्माणञ्जातम्। तथा च यथा वैश्याः व्यापारद्वारा सर्वत्र सर्वविधं वस्तु प्रतिष्ठाप्य नानारूपां नगरसज्जां

सम्पादयन्ति अतो वैश्यरूपत्वं ऋग्वेदस्य निर्माणकुशलत्वञ्चेति। किञ्च आकार-निर्माणानन्तरं तत्र गतिसमुत्पादनं कर्म यजुर्वेदस्य। यथा ऋग्वेदस्य देवता अग्निः स एव स्वरूपोत्पादकः, यथैव यजुषो देवता वायुः स सर्वदा गतिमान् गतिमेव समुत्पादयति। प्रत्यक्षमेव अस्मासु श्वासः प्रश्वासक्रमः सर्वदा प्रचलति सर्वमिदं कार्यं वायोरेव। प्राणवायुः यावत् यथानियमं प्रचलति तावदेव मूर्तेरपि यथावत्स्थितिः अन्यथा मृतप्राया। अतो वायुः गतिसम्पादकस्तथैव यजुर्वेदोऽपि गतिप्रदः। एव-मेव सामवेदोऽपि स्वयं ज्योतिःस्वरूपः प्रकाशशील = सर्वत्र ज्योतिःप्रद एव ज्योतिषा सहैव विस्तारं आकारप्रसारं जनयति। प्रकाशात्मकं ज्योतिः शरीरे यथा चक्षुः सर्व-प्रदर्शकं तथैव सामवेदोऽपि सर्वत्र व्याप्ति तनोति। विस्तारयति च स्व-कीयं-विततनम् ( मण्डलम् ) इत्थं जातेषु च "स्वरूपप्रतिष्ठा, गतिः ( क्रियाशील-त्वमिति ) तथा ज्योतिः प्रकाशो विस्तारो विततनमिति- ( स्वरूप-गति-मण्डल प्रभागेषु जातेष्वपि ) लोके क्रियाकलाकलापः कथं कलनीयः कल्पनीयो वेति जिज्ञा-सायाम्=सर्वविध क्रियाकरण-विधिविधान विद्योतकः ( सकलमानव - प्राणिजन ) मानसस्थितो ज्ञान-जनित-शोकविद्रावणकारणभूतः। शुचं शोकं द्रावयतीति=शूद्रः इति व्युत्पत्तिलभ्यार्थप्रतिपादकः शूद्र शब्दो "अथर्व वेदार्थम् सकललोकशोक-विमोक-करं प्रतिपादयितुमेव प्रवृत्त :—अतः अथर्ववेदस्य शूद्रत्व संज्ञा। किञ्च-नानाविध उचितानुचित-सकलजनीन कर्म कलापकराणि कर्माणि-तत्र विधिविधान-पुरःसराणि वर्णितान्येव सर्वविधाः प्रयोगाश्च सरहस्यास्तत्र प्रतिपादिताः। शूद्रे-ष्वेव सर्वविध-कार्यकरणसामर्थ्यविलोकनादेव शूद्रस्य शूद्रत्वम् तद्वदेव वेदेष्वपि सकलविशिष्टवेदबोधित - नानाविधतन्त्र-मन्त्र - यन्त्रविधान - निधानीभूतत्वादथर्ववेदस्य शूद्रत्व व्यवहारः।

उक्तञ्च तैत्तिरीय ब्राह्मणे ३/१२, ["ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः।
सर्वागतिर्याजुषी हैव शश्वत्॥"]

[ "सर्वंतेजः सामरूपं हि शश्वत् सर्वं हृदि ब्रह्मणा हैव सृष्टम्]" ॥

इति वेदत्रय्याः स्वरूपं प्रतिपादितम्। यतो हि वेदे त्रयो भागाः सन्ति-छन्दोबद्धा पद्यरूपाः मन्त्राः "ऋग्" वेद नाम्ना व्यवहृताः। प्रकृष्टाः गद्यात्मका ये मन्त्रा-स्ते पुनर्यजुः-स्वरूपो यजुर्वेद नाम्ना। एवमेव गेयाः गीति (गान) रूपा ये मन्त्रास्ते सामनामधारिणो जाताः। इति "पद्य, गद्य, गेय" विभागः। ततः यज्ञ-प्रकरणे प्रायश्चत्वारः कर्मकरा भवन्ति यथा—होता, उद्गाता, अध्वर्युः = सर्वेषां निरीक्षको ब्रह्मा इति चत्वारः। तत्र होतुर्वेदो ऋगेव, उद्गातुः साम एव

अध्वर्योः यजुः । अथर्वश्च सर्वेषां सङ्ग्रहात्मकोः वेदत्रयीस्थ मन्त्र (गद्य-पद्य-गेय) समुदायात्मको मन्त्रभागोऽथर्ववेदः तस्य विज्ञाता ब्रह्मैव भवति स हि चतुर्वेदश्चतुर्मुखश्चतुरः सर्वकर्मकलापदक्षो भवति नियामकोनियन्ता च । अतः सकलक्रियाकलाप - कलनात्मक सर्वविध पद्य - गद्य गेयात्मकमन्त्र - समूहात्मक एव "अथर्ववेदः" तस्य प्रयोक्या ब्रह्मैव भवति । इत्थं वेदेऽपि चातुर्वर्ण्यविभागः । सर्वत्रैव-गीतायाम् :—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्म विभागशः ।
तस्य कर्तारमपि मां विद्धयकर्तारमव्ययम् ॥"]

केवलं गुणान् कर्माणि वाऽऽलोक्य तेषां यथा-प्रवृत्तिर्यथा यादृक्कर्मरुचिः यथा स्वभावमालोक्य तेषु तदनुरूप वर्णेषु तेषां सन्निवेशो विहितः । अतः समानेष्वपि रूपाकारेषु पृथक् पृथक् वर्णानुरूप - नामकर्मव्यापारा न विलोक्यैव तेषां ब्राह्मण-क्षत्रिय वैश्य शूद्रत्वादि शब्द प्रयोगैर्व्यवहारः कृतः प्रचारितश्चेति ।

उक्तञ्च भागवते स्कं० ७ अ० ११-श्लो० २१-२३
इत्थं मानवेषु तत्तत्स्वभावकर्माणि वीक्ष्य वर्णव्यवस्था कृता ।

यथा— "शमोदम तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
ज्ञान दयाऽच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम् ॥
शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ।
ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्र-लक्षणम् ॥
दैव-गुर्वच्युते भक्ति - स्त्रिवर्ग - परिपोषणम् ।
आस्तिक्यमुद्यमो नित्यं नैपुणं वैश्यलक्षणम् ॥
शूद्रस्य संन्नतिः शौचं सेवा स्वामिन्यमायया ।
अमन्त्र - यज्ञो ह्यस्तेयं सत्यंगोविप्ररक्षणम् ॥"

किञ्च आकाराणां रूपाणां समानतायामपि तेषु बाह्याऽभ्यन्तरभेद-दृष्टया भेद उपलभ्यते न केवलं चाक्षुषप्रत्यक्षेणैव दर्शनमात्रतस्तेषां वैशिष्ट्यं ज्ञातुं-शक्यते ब्राह्मणेषु ब्रह्मवर्चसो वैशिष्ट्याद् सर्वतोऽधिकत्वात् तपःप्रधानत्वात् "तेजो विशेषः" भस्मनाऽऽच्छन्नवह्निवत् वहिः प्रकटितं न प्रतीयते गूढवर्चस्विनां ब्रह्मवर्चः । एवमेव क्षत्रियेष्वपि क्षात्रं तेज ओजश्च प्रच्छन्नमेव तिष्ठति यावन्न ते समाक्रान्ता भवेयुः परैः । यथा कुहराच्छन्न - प्रचण्ड - मार्तण्डप्रखररश्मिपुञ्जवत् न तीक्ष्णत्वमनुभवितुं शक्यते । यथा हि मौक्तिक हीरक माणिक्यादि भस्मनां रसायनानां सहस्रपुटपाकपाचिताऽभ्रमस्मनोवा माहात्म्यं प्रभावो वा न सामान्यजयाऽवलोकितुं शक्यते केनापि विनापि भिषजा न वा रत्नानां मूल्याङ्कनमपि कर्तुं पार्य्यते सामा-

न्यजनैर्विनारत्नपरीक्षकैः। एवमेव समानाकारेष्वपि प्राणिषु बलाबलपरिचयः समये एव मिलति न तथा दर्शनमात्रेण। यद्यपि ब्राह्मणा अपि क्षत्रिया अपि सर्वे समानहस्तपादाद्याकारवन्तो भवन्तोऽपि पुरुषार्थः प्रति-शरीरं भिन्न एव भवति। एवमेव देवादिष्वपि-सर्वत्रैव जडचेतनेष्वपि भिन्नगुणवीर्याहि सर्वे सर्वत्र यथासौभाग्य-मुपलभ्यन्ते।

एते हि सर्वे वर्णाः नामतो भिन्ना एव किन्त्वेते परब्रह्मणः सर्वे अवयवभूताः। यथा स्वशरीरे भिन्न-भिन्नेष्वपि मुख-हस्त-उदर-पादादि-सर्वाऽवयवेषु-शरीरन्त्वेक-मेव। यस्मिन्नपि अवयवे व्यथा यदि भविष्यति सर्वमेव शरीरं शिथिलं खिन्नं दुःखितं छिन्नमिव व्यथाकरं भविष्यति न केवलमेक एव भागः। अतः चतुर्वणस्वरूपस्य भगवतो वर्णनन्तु स्वयमेव वेदे भगवता प्रदिष्टम्—

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरूतदस्य यद्वैश्यः पद्भयां शूद्रो अजायत॥" इति।

साक्षाद् भगवतः परब्रह्मणो मुखं ब्राह्मणः। ब्राह्मणस्योद्भूतिः भगवतो मुखा-देव। एवं क्षत्रियाणां समुत्पत्तिर्भगवतो भुजाभ्यामेव। मध्यभागात् = ऊरुरूपाणां वैश्यानामुत्पत्तिः। पादाभ्यां शूद्राणां। अत एव सकलशरीरस्य संवाहकाः पादा एव भवन्ति तथैव शूद्राः सर्ववर्णानां संवाहकाः सर्वविधसेवाकराः भवन्ति व्यव-हारसञ्चालकाः।

एवम् आपस्तम्बेऽपि— "चत्वारो वर्णा ब्राह्मण-क्षत्रिया वैश्य शूद्राः।
तेषां पूर्वः पूर्वो जन्मतः श्रेयान्॥" भवति।

यथा पादयोरुपरि ऊरुभागः तथैव शूद्रेभ्य श्रेष्ठा वैश्याः। एवं मध्यभागोपरि भुजयोः स्थानम् एवमेव वैश्ययोरुपरि क्षत्रियस्य स्थानम्। तथैव बाह्वोरुपरि मुख-स्य शिरसः स्थानम् सकलज्ञानसाधन - सम्पन्नस्य सकलज्ञानेन्द्रिययुक्तस्य मस्तकस्य ज्ञानभाण्डागारस्य स्थानम्। सन्मार्ग-परिदर्शकस्य ब्रह्मविद्यासम्पन्नस्य वेदविदो ब्राह्म-णस्य सर्वोपरिस्थानं विद्यते सर्व वर्णोपदेष्टृत्वात् वित्त्वात् सर्वसम्मान्यो ब्राह्मणः।

एवमेव चतुर्णां वर्णानां स्वभावगुणानुकारीणि कर्माण्यपि प्रविभक्तानि सन्ति। यथा गीतायाम् [ ब्राह्मणक्षत्रियविशांशूद्राणाञ्च परन्तप। कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः।] ( ४।४१ )

किञ्च :—"स्वे - स्वेकर्मण्यभिरतः संसिद्धि लभते नरः। सहजंकर्म—कौन्तेय सदोषमपि न त्यजेत्॥" इति।

उपनिषदिच :—[तद्य इह रमणीय चरणा अभ्याशोह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथय इह कपूयचरणा अभ्याशोहयन्ते कपूयां योनिमापद्येरन् श्वयोनिं सूकरयोनिं वा चाण्डालयोनिं वा।"]

इत्थं पूर्वं पूर्वजन्मार्जितैः सदसत्कर्मभिरेवाग्रिमजन्म परिकल्पनं ( निर्माणम् ) स्वयमेव करोति जीवात्मा स्व - स्वकर्मानुसारितत्तच्छरीरमापद्यते। सत्कर्मभिः सच्छरीरम्, असद्भिश्चासदेव मिलति शरीरम्। इति रमणीयचरण - कपूयचरण-शब्दाभ्यां प्रतिपादितम्। एवं क्रमेण शूद्राद्वैश्यः श्रेष्ठः। तस्मात् - क्षत्रियस्ततोऽपि ब्राह्मणः। ब्राह्मण एव सर्ववर्णानां नियन्ता - धर्मोपदेष्टा। स्व - स्वधर्मणि परिचालकः परिचायकः प्रवर्तकश्चेति।

स्मृतावपि ( मनुस्मृतिः १। ३१ ) [ 'लोकानान्तु विवृद्धयर्थं मुख बाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्तयत्॥"

[ "यज्ञसिद्धयर्थं मनद्यान् ब्राह्मणान् मुखतोऽसृजत्। (हारीतस्मृतौ १। १२ १५ )
असृजत् क्षत्रियान् बाह्वो-वैश्या-नप्यूरुदेशतः। शूद्रांश्च पादयोः सृष्ट्वा०" ]

तथा च कर्मानुसारेण यथाजनिः तथैव श्रुत्युक्तं "सुश्रुतसंहितायामपि"—

[ "कर्मणा चोदितो येन तदाप्नोति पुनर्भवम्" अङ्ग प्रत्यङ्ग निर्वृत्तिः स्वभावादेव जायते" ] इत्येव न, अपितु—[ "अङ्ग प्रत्यङ्ग निर्वृतौ ये भवन्ति गुणाऽगुणाः" ] इति गुणा अपि तथैव।

किञ्च :— "शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः।
प्रकृतिर्जायते तेन, तस्य च लक्षणं शृणु।"

एवमेव गीतायामपि :—[ "यदा सत्त्वे प्रवृद्धेतु प्रलयं याति देहभृत्। तदोत्तमविदां लोकान् अमलान् प्रतिपद्यते। रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते। तथा प्रलीनस्तमसि मूढयोनिषु जायते॥ ( १४। १४-१५ ) इति स्पष्टमेव कर्मानुसारि पुनर्जन्म - धारणम्। पूर्वजन्मशरीर - प्रकृति - स्वभावानुरूपमेवाऽपरजन्मन्यपि शरीरादिप्राप्तिः पूर्वजन्मस्थ कर्मानुरूप स्वभाव - कर्मकारी जनो भवति।

अत्रेदं न कदापि शङ्कनीयम्—यदत्र व्यवस्थेयं वर्णविभागस्य कुलपरम्परया जन्म - जाति-क्रमानुसारिणी न स्वीकृत्य - कर्मानुसारिणी मन्तव्येति।

यतो हि - वर्तमान गुण - कर्मानुरूपा वर्णव्यवस्था न सुस्थिरा भवति। न वा भविष्यति - चञ्चलचित्तवृत्तिकत्वात् जनानाम्-प्रतिक्षणं परिवर्तनशीलविचार-भाव-भावना धारणशीलस्वभावाज्जनमात्रस्येति नैकरूपा वर्णव्यवस्था सुस्थिरा स्थास्यति

न कोऽपि वा जनो नैकविधकर्मरतो वा तिष्ठति। साम्प्रतिको लोकस्तु - कश्चित् न्यायप्रिय-प्रकृतिकः सन् न्यायनियमानामध्ययनं विधाय न्यायाध्यक्षो भूत्वा निर्णयान् प्रयच्छति तदातु सः न्यायाधीशत्वं भजति। किन्तु समयानन्तरं सेवानिवृत्तः सन् कृषिव्यवसायं सम्पादयन् कृषको भवति। ततोऽपि निवृत्तः परस्परं द्रव्यविनिमयं विदधद्व्यापारसञ्चारं करोति सः एक एव - कदाचिन्न्यायाध्यक्ष-कदाचन कृषीवलः कदाचिच्च व्यापारी आदानप्रदानकर्ता द्रव्याधीशः श्रेष्ठी भवति।

इत्थम्—कर्मानुसारिणी वर्ण-व्यवस्था न चिरस्थायिनी भविष्यति नैकविधोवा व्यवहारोऽपि कर्तुं शक्यते। एक एव पुरुषो ब्राह्मणोचितानि कर्माणि कुर्वन् ब्राह्मणो भवति कथ्यते च, पुनः स एव वैश्य-कर्मणि प्रवृत्तो भवति तदा किं स एव वैश्यो भविष्यति किं वा क्षत्रियोचितानि कर्माणि कुर्वन् क्षत्रियो भविष्यति तदा तत्तत्का-लिकी तदीया चेष्टा प्रवृत्तिः स्वपुत्रपुत्रीणां तत्तत्समुदाये वैवाहिकी प्रकृति-प्रयुक्तादानप्रदा-नप्रक्रिया ब्राह्मणादिविविध-कर्मकरण-कालिकी ब्राह्मणादिषु विहिता सम्बन्धव्यवहृतिः कथं विभिन्ना विछिन्ना वा प्रवर्तिता प्रचलिष्यतीति सर्वं महद्विप्लवमेव सम्पादयित्री भवित्रीति। तत्तत् कालोत्पन्ना तदीया सन्ततिरपि किं परस्परं सोदरसम्बन्धं विहाय विभिन्न-वर्णरूपा स्थातुं शक्यते? पुनः कथं वा तेषु सहोदरस्नेहत्वं स्थास्यति। कथं ते भ्रातरो भगिन्यो वा व्यवहरिष्यन्ति। वैश्यकर्मणि प्रवर्तमानस्य तस्य तस्मिन् काले समुत्पन्ना सन्ततिः पुत्रः पुत्री वा, वैश्या भविष्यति - पुनः कृषककर्मनिरते कृषकतनया, शासन-कर्मणि संलग्नस्य क्षत्रिया - किं वा शूद्रकर्मकुर्वाणस्य शूद्रा शूद्रीति व्यवहृता भविष्यति? इत्थन्तु सर्वथा ह्यनर्थमेव भविष्यति। अतो न कर्मा-धारा वर्णव्यवस्था अपितु जन्म-जातिमहत्कृतेव - ब्राह्मणात् ब्राह्मण्यां समुत्पन्नो जनो ब्राह्मण एव, क्षत्रियायां क्षत्रियाज्जातः क्षत्रिय एव एवं वैश्याद्वैश्यायामुत्पन्नो वैश्यः। शूद्राच्छूद्रायां लब्धजनिः शूद्र एवेतिसुगमा सुप्रतिष्ठिता सुस्थिरा सुव्यवस्थेति स्वीकर्तव्या।

यत्र क्वचन ["धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ॥ [आपस्तम्बसूत्रे :—] "धर्मचर्यया पूर्वो पूर्वो वर्णो जघन्यं वर्णमापद्यते जातिपरिवृत्तो

इत्यादि वाक्यानि मिलन्ति यैर्भ्रान्तो भवति रहस्यावेदी (तत्त्वानभिज्ञोजनः।) परञ्च तेष्वेव वाक्येषु लिखितमस्ति यत्–[ "जातिपरिवृत्तौ" ] इति - अत्र जाति-शब्दो "जनि प्रादुर्भावे" धातोः यथा "क्तिन्" प्रत्ययान्तो भवति, तथैव 'ज्ञा-अवबोधने" इत्यस्यापि ज्ञातिः भवितुमर्हति। यदि "जनि' धातोः रूपं मत्वा वयं विचारयामस्तर्हि "जाति - परिवृत्तौ" इत्यस्य जन्मपरिवृत्तिरप्यर्थः। यतो हि

एकस्मिन् जनसमुदाये सवर्णसमूहे गृहीतजन्मनां जनानां वर्गे प्रयुक्तोऽयं जाति शब्दो लोके प्रसिद्धः। व्युत्पत्तिलभ्योऽर्थस्तु जातानां समूहो जातिः गृहीतजन्मनां समुदायः इति। अतः तत्परिवृत्तौ सत्यां उत्तमोत्तम - अधमाऽधमरूपतामाप्नोति जनो धर्म-चर्ययेति। अर्थात् धर्माचरणं चरन्नेव सः प्राणत्यागानन्तरमेव उत्तमोत्तम - वर्णेषु जन्म लभते तत्तत्कर्माऽनुरूप-मित्येवाशयः।

यदि च विश्वामित्र महर्षेरुदाहरणं प्रस्तूयेत - यत् सतु गाधिराजस्य क्षत्रियोत्तंसस्यपुत्रः क्षत्रियः सन्नेव ब्रह्मर्षित्वमवाप्त-वा-निति।

इति-कर्म प्रभावादेव तपश्चर्ययैव क्षत्रियात् वर्णादेव ब्रह्मर्षिपदमलभत। इति कथम्?—तत्र ज्ञातव्यम्-यत्-विश्वामित्रः यद्यपि जन्मना क्षत्रियक्षेत्रे जन्म-ग्रहणाद् क्षत्रियत्वम् लब्धवान्। यथा भगवान् श्रीरामः श्रीकृष्ण इति। किन्तु भगवतः कृते नास्ति यद्यपि काचन प्राकृतिकी व्यवस्था किन्तु भगवता स्वयमेव वर्णव्यवस्था पालिता संरक्षिता चेति। एवमेव समस्त-तपस्विनां तेजःपुञ्जमेकत्री-कृत्य पुंसवन-चरु-र्निमितः एवमेव समस्तक्षत्रियाणां तेजःसमूहं संकलय्य द्वितीयः पुंसवन चरुः सम्पादितः इति-महर्षिणा "ऋचीकेन" ततः चरुं द्विविधं परिकल्प्य स्नानार्थं गतवान् स महर्षिः। तन्मध्ये महर्षेः ऋचीकस्य भार्यायाः सत्यवत्याः सकाशात् तस्याः माता महाराजस्य कुशाम्बोः राजमहिषी ऋचीक-महर्षेः श्वश्रूः मनसि पापशङ्का कृत्वा [ यत् तस्या जामाता ऋचीक-महर्षिः सत्यवत्याः कृते तु उत्तमं चरुं कल्पयित्वा रक्षितवान् मदर्थंञ्च सामान्यमेव इति पापेन-सा स्वपुत्र्याः तदीयं चरुं गृहीत्वा तु स्वयं भक्षितवती स्वकीयं च चरुं स्वपुत्र्यै दत्वा परिवर्तनं कृत्वा परस्परं मातापुत्र्यौ अन्योन्ययोः कृते पृथक् पृथक् सकलक्षत्रियतेजः समुप-बृंहितं तु स्वश्वश्चै, समस्तमहर्षीणां तपोबलमेकत्रीकृत्य स्वपत्न्यै सत्यवत्यै रक्षित-वान् महर्षिः। तद् द्विविधं उभे मातापुत्र्यौ परस्परं परिवर्त्य भक्षितवत्यौ। पुनः महर्षिः समागत्य ययोः परस्परं विभिन्नस्वभावं स्वरूपञ्च विलोक्य पृष्ट्वा च रहस्यं प्रकटितवान् महर्षिः। यदनर्थमेव विहितमुभाभ्याम्-। राज्ञो गृहे तपस्वी-महान्नूर्ध्वरेता, तथा च स्वपत्न्यां महान् दारुणः क्षत्रियो भवितेति, श्रुत्वा उभे भयभीते खिन्ने पश्चात्तापपीडिते च संवृत्ते। तदा महर्षिः तयोः पुत्रं विहाय पौत्रस्तु तथैव भविष्यतीति तपःप्रभावेण किञ्चित् परिवर्तनं कृतवान्-अतः कुशांबु महाराज गृहे गाधिराजः तत्पुत्रश्च विश्वामित्रो महान् तपोधामा समभवन्। एवं महर्षिगृहे पुत्रो जमदग्निः पौत्रश्च परशुरामो महान् पराक्रमी शस्त्रधारी क्षत्रियाणां हैहय-वंश्यानां विनाशकृत् सम्बभूव। अतो ब्रह्मर्षिः श्री विश्वामित्रस्तु गर्भाधानात् पूर्वत

एव-समस्त ब्रह्मर्षिगणातपस्तेजोरूप एव संवृत्तः तेजः परमाणु-पुञ्जमयशरीरी सन्नेव चरुरूपेणगर्भंगतोब्रह्मर्षिपरमाणुभूत एव प्रादुर्भूतः न सः सामान्यः क्षत्रिय एवासीत्। इति रहस्यम्। कथेति।

न हि सामान्य-जनानां कृते तथाविधो दृष्टान्तः प्रवर्तितो भवति समुपयुक्तोवा। अतो वर्णव्यवस्था तु जन्मना सहैव मन्तव्य न हि कर्मणा। इति।

कश्चिज्जिज्ञासुः पृच्छति स्म, भगवन्! भवतां श्रीसम्प्रदाये वर्णव्यवस्थायाः का स्थितिः? श्रूयते हि श्रीसम्प्रदाये सर्वे वर्णा दीक्षां ग्रहीतुं प्रवेष्टुं वा मन्यन्ते योग्याः न तत्र केवलं त्रिवर्णानामेवाधिकारः किम्बहुना अन्त्यजा अपि भवन्ति साधिकाराः इत्यत्र किमुचितमेतदिति?

श्रीस्वामिनः—भगवन्! आस्माकीनः श्रीवैष्णवसम्प्रदायोऽपि वैदिक एव। अतो या हि वैदिकी वर्णाश्रमादिकी व्यवस्था विद्यते सैवाऽस्मदीये श्रीसम्प्रदाये व्यवहृताऽस्ति न हि ततो भिन्नः कश्चन व्यवहारः प्रयोगो वा विधीयते। श्रीवैष्णवदीक्षायां यथा त्रिवर्णानामधिकारस्तथैव चतुर्थवर्णस्यापि स्वात्मनः समुद्धारार्थं भगवच्छरणागति-प्राप्त्यर्थन्तु सर्वेषामेव आपामरं आश्वचाण्डालादि-सर्वेषामेवाधिकारः। सर्वे जीवाः स्वबन्धमोक्षं कामयन्ते। न तत्र केवलं मानवा एव, अपितु सर्वे प्राणिनः स्व-स्व समुद्धार-प्रेप्सवो लसन्ति नरो वा वानरो वा, मृगो वा मृगयुर्वा मृगादनो वा, श्वा-वा श्वपाको वा पुरुषो वा पुरुषाभासो वा नरो नारी च सकलजीवनिकायानां कृते विमुक्तः सुलभो भगवद्भक्ति-मार्गो निर्बन्धनः। न तत्र कस्यचन वर्णस्य, आचारस्य, वैदुष्यस्य कुलस्य सम्पन्नताया विपन्नताया, बलस्य पौरुषस्य वा काचनाऽऽवश्यकता, तत्र तु केवला अनन्यसाधारणा सुदृढा सर्वतोधिका निश्छला भक्तिरेव समपेक्षते। सा हि यस्मिन् व प्राणिनि पशु-पक्षि-प्रभृतावपि भवेत् तत्रैव भगवान् विहरति। स एव प्राणी भगवतः परमः प्रियो भवति यो हि सर्वदा तमेव ध्यायति तमेव स्वातत्र्यं-प्रियतमं सर्वस्वं मनुते तन्निष्ठोऽहर्निशं तमेव विचिन्तयति तदङ्घ्रिसरोजे मधुव्रतायते यस्य चेतः स एव तत्प्रियो तदीयो भवति। न तत्र जाति-कुल क्रमादीनामावश्यकता। उक्तञ्च—"देवोऽसुरो मनुष्यो यक्षो गन्धर्व एव च। [भजन् मुकुन्दचरणं स्वस्तिमान् स्याद् यथा वयम्"।

यतोहि :—"नालं द्विजत्वं देवत्व-मृषित्वं वाऽसुरात्मजाः। प्रीणनाय मुकुन्दस्य, न वृत्तं, न बहुज्ञता॥ न दानं न तपो नेज्या न शौचं न व्रतानि च।

प्रीयतेऽमलयाभक्त्या हरिः, अन्यद्विडम्बनम् ॥" इत्यादि प्रह्लादचरिते श्रीमद्भागवते ७।७।५०-५२।

इत्थम् भक्ति-मार्गे न तज्जात्यादीनां वर्णाश्रमादीनां वा प्रतिवन्धः सर्वेषामेव कृतेऽयं सुलभः सुगमः पन्था निष्कण्टकश्चेति।

यदि समुन्नत-कुले लब्धजन्माऽपि मानवो भगवद्भक्तिविहीनो न तथा भगवत्प्रियेषु भगवदीयेषु परिगण्यते श्रेष्ठतमो यथा नीचकुलोत्पन्नोऽपि कश्चिज्जनो भगवच्चरणारविन्दमकरन्दलिप्सु - रहरहर्भगवच्चरण - चिन्तन - निकृन्तितसकलाघ-पटलः पुलकसकोऽपि श्वपचोऽपि सर्वात्मनानन्य - भगवद्भक्ति - समनुरञ्जितचेताः श्रेष्ठातिश्रेष्ठो मन्यते भगवदीयैः।

उक्तञ्च :—विप्राद् द्विषड्गुणयुतादरविन्द-नाभपादारविन्द विमुखाच्छ्वपचं वरिष्ठम्।

"मन्ये तदर्पितधियो (मन्ने) वचनेहितार्थं प्राणं पुनाति सकुलं न तु भूरिमानः॥ इति स्पष्टमेव द्वादशगुणविशिष्टाद्वेदविदोऽपि भगवद्भक्तिरहिताद् ब्राह्मणात् भगवति समर्पित-सर्वस्वात् विस्मृत सकलदेह-गेहाभिमानः सर्वात्मना भगवच्छरणः परम भगवदीयो श्वपचोऽपि नितान्तं श्रेष्ठतम एव।

यतोहि — "'मन्ये धनाऽभिजनरूपतपः श्रुतौजस्तेजः प्रभाव वल पौरुष बुद्धियोगाः।
नाराधनाय हि भवन्ति परस्यपुंसो भक्त्या तुतोष भगवन् गजयूथपाय॥'']

इति- ' श्रीभग्दागवते प्रह्लाद-चरिते तत्कृतस्तुतौ स्कंध ७ अ० ६ एश्लो० ६-१०] अतोऽस्मिन् भक्तिमार्गे सर्वेषामेव भक्तिमतां प्रवेशोऽधिकारः स्वीकरणञ्चेति।

जिज्ञासुः— भगवन्! शास्त्रसम्मतो वैदिकश्चायं सम्प्रदायः, तर्हि-

["स्त्रीशूद्र द्विज वन्धूनां त्रयी न श्रुतिगोचरा" ] इति कियमात्-वेदस्वरूपाणां दीक्षामन्त्राणां कथं तथाविधेषु प्रयोगः ? तत्र किं रहस्यम् ?

श्री स्वामिनः—भगवन्! सत्यमेतत् श्रीसम्प्रदायोहि सकल जीवनिकाय-कायपरिशोधकः सकल सुलभ-साधन-सम्पन्नः भक्तिमात्रैक - लब्धसमस्तसत्कर्मजनिपुरुषार्थः सर्वोद्धार-प्रयत्नपरः। अतो वैदिक मर्यादाऽनुसारि-प्रसारात्मकाः मन्त्राः अपि तथाविधा एव। न तेषु प्रणवाक्षरस्य योगः। तत्रतु तन्त्रशास्त्रानुरूप प्रणवसदृशान्तं वीजाक्षराणां योगः। यथा-पात्रं, मन्त्रदीक्षा विधीयते परमभगवदीयत्वसम्पादनायानन्यशरणानां कृते। षडक्षरो मन्त्र अष्टाक्षरो दशवर्णात्मकः पञ्चदशाक्षरः द्वात्रिंशदक्षरात्मकः इति तेषु षडक्षरोहि तारकोमन्त्रो द्विविधः

एकस्तु-श्रीसीतारामात्मकः [ श्रीरामायनमः ] अयं सर्वेषां आचाण्डालाना-मुद्धारकः येहि भक्तिमहिताः संवृत्ताः स्युः। सर्वेषां गृहस्थानां क्षेमंकरः सर्वसम्पत्तिकरः सर्वदाकल्याणकारकः। अपरश्च-विरक्तानां त्रिवर्णानाञ्च कृते क्षेमङ्करः [रां रामाय नमः] इति- एवमेव- [श्रीसीतायैनमः, श्रीलक्ष्मणायनमः श्रीहनुमते नमः सर्वेऽपि सर्वेषां चतुर्वर्णानां कृते ] तथैव त्रिवर्णानां विरक्तानां महात्मनां साधूनां कृते ] सीं सीतायै नमः लं लक्ष्मणाय नमः, हं हनुमते नमः।

किञ्च — अष्टाक्षरस्तु सर्वेषां कृते एकविध एव "सहि शरणमन्त्रः। श्री रामः शरणं मम ] इति। तथा-विदुषां महात्मनां कृतेतु - अन्योऽपि शरणमन्त्रः "श्रीमतेरामचन्द्राय नमः" इति दशाक्षरः तथा श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये।" इति पञ्चदशाक्षरः। तथा प्रपत्ति प्रतिपादकः-["सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम"] इति त्रिंशदक्षरात्मको महामन्त्रश्चरम-मन्त्रः। इति जिज्ञासूनां प्रकृत्यनुसारं प्रवृत्त्यनुसारञ्च दीक्षा दीयते। अतो न कश्चन वैदिक सिद्धान्तव्याघातः। येहि स्त्रीशूद्र द्विजबन्धवो वेदानधिकारिणस्तेऽपि यदि भक्ति-भावना - भाविताऽन्तः-करणाः सुदृढानुरक्ता भगवच्चरणाऽऽसक्ताः सन्ति तर्हि सर्वात्मना भगवन्निष्ठवृत्तिकत्वात् शरणादिमन्त्रदीक्षा योग्या एवेति न दोषः।

किञ्च तथाविधोभगवद्भक्तोऽनन्यशरणः श्वपचोऽपि यदि स्यात् सोऽपि-भगवद्भक्तिरहितादुत्तमोत्तमवर्णेऽपिलब्ध जन्मनोऽभक्ताज्जनात् सर्वात्मभावेन श्रेष्ठः सहि न सामान्य - व्यक्तित्वेन तत्तज्जातित्वेन तत्तद्वर्णतत्तद्वर्गभेदेन साधारणमनुजभावेन बोद्धव्यः। सतु वस्तुतो भगवद्गुणगणगरिष्ठः समभवत् यथा रविदासादयः [रैदासः, सैना, अन्येऽपि भूयांसो भगवद्भक्ता अन्त्यजाः समभूवन् येषामलौकिकीगाथा श्रूयते भक्तमालादौ ] श्रूयते हि केनचिदनन्यभक्तेन श्वपचबालकेन महत्तरेण सहक्रीडति स्म भगवान् श्रीगिरिराजधारी श्रीनाथजीति। तदा असमाप्तायामेव क्रीडायां मध्य एव उत्थापनसमये सेवकैः सहसा शङ्खनादः कृतः, तच्छ्रुत्वा भगवान् लोकव्यामोहनाय सद्योधावन् मन्दिरं यथा-स्थानं यथारूपं दर्शयितुं स्वां लीलां सुगुप्तामेवाऽप्रकटयितुं प्रावीविशत्। तदाश्वपच-बालकेन तेषां दुकूलमाकृष्टवान् धावतां श्रीनाथचरणानां। दुकूलस्यैकतमोभागःश्चपचबालकहस्तेधृत एवासीत्। सेवकस्तु सेवायां समुपस्थितस्तदा विदीर्णदुकूलं दृष्ट्वा गोस्वामिचरणान् न्यवेदयत्, गवेषणा च जाता यदा तद्दुकूलखण्डं श्वपचगृहे दृष्ट्वाऽऽश्चर्यचकिताः समभूवन्निति जनश्रुतिः। अतो ज्ञायते भगवद्भक्तो, भगवदनुग्रहे च न कोऽपि वैदिकः प्रतिबन्धो नवा शास्त्रीयाचारचर्यानियमः, नच तत्र ज्ञाति ज्ञातेयभेदो-नवा वर्णाश्रमीया व्यवस्थैव। तत्रालौकिककोहि-प्रणयपन्थाः

प्रेमाऽऽसक्तिरनन्या भक्तिरधिकाऽधिका चानुरक्तिरेव वर्वति सर्वोपरि। अत एवौक्तम् नहि भगवद्भक्तेषु सामान्य-व्यवहारेण लौकिकमर्यादानुसारं वा वर्णाश्रमाचारेण जात्यादिभेदभावेन च व्यवहर्तव्यम् द्रष्टव्यम् - मन्तव्यं वेति - एवं कृतेतु महान् दोषोऽप्यापततिः—

वामनपुराणे श्रूयतेः— "शूद्रं वा भगवद्भक्तं निषादं श्वपचन्तथा।
वीक्षते जातिसामान्यं स याति नरकं ध्रुवमिति ॥

किञ्चः— "ब्राह्मणाः क्षत्रिया वैश्याःशूद्राश्चैव तथैव च।
पञ्चायुधाऽङ्किता देवि मद्रूपा नात्रसंशयः ॥ इति साम्प्रदायिकाः ॥

अनन्या येहि वैष्णवाः सन्ति तेतु भगवदीयं जनं सर्वदा भगवत्स्वरूपमिव मन्यन्ते। सर्वात्मना भगवन्निष्ठचित्तत्वात् तद्धृदये भगवतः सर्वदानिवासत्वात् भगवन्तो नैव तं पश्यन्ति भगवदीयं भगवता भगवद्भावनाभाविनान्तःकरणाः। अतो हि भगवदीयेषु समायात्यलौकिक भगवद्धर्मसंहतिः। भवन्ति च ते सद्योऽलौकिक-धर्मवन्तो महान्तः सन्तः। भगवत्परत्वेन परिसमाप्तसर्वार्थत्वात् तेषाम् इति-भगवद्भक्तैः सर्वदैव भगवति, भगवद्धर्मेषु - भगवन्मन्दिरेषु भगवद्भक्तेषु भगवत्-प्रतिमासु भगवद्गुणेषु भगवद्धामसु भगवन्नामसु न हि मनागपि भेदो मन्तव्यः। इति।

———

# द्वापञ्चाशत्तमः परिच्छेदः

इत्थम् लौकिकाऽलौकिक वेदशास्त्र-व्यावहारिकयुक्ति प्रयुक्तिभिः सर्वविषयक-प्रश्नोत्तराणि स्वसिद्धान्त-निष्पन्नानि सम्पाद्य सर्वेषां जिज्ञासूनां मनस्तोषपोषं विधाय शङ्कातङ्कपङ्क - प्रक्षालनपटीयांसो महामनसः श्रीरामानन्दाचार्याः पुरीतः प्रस्थातु-कामाः श्रीरामेश्वरं प्रति जिगमिषवः सकलनरनारी - भक्तजनसमर्चितपाद-पद्मा नानारत्ननिकर-प्रधानोपहारैः सम्मानिताः सर्वान् समुपस्थित - ज्ञानपिपासून् श्रद्धालून् भगवदीयान् तत्रत्यान् सस्नेह-मत्यादरेण स्वकीयाशीः - परम्पराभिः प्रणय-वचोभिरभिनन्दयामासुः ।

प्रस्थानकाले च श्रीरामानन्दाचार्याः श्रीजगन्नाथमन्दिरे भगवन्तं सम्प्रार्थ्य संस्तुत्य प्रसादसुमुखं वरदानोद्यतमिव विराजमानं साक्षाद् भक्तवत्सलं श्रीजगदीशं वारं वारं प्रणम्य-समुद्रतटमुपेत्य समुद्राचमनम् स्पर्शं च विधाय प्रत्यावर्तयितुमुद्यता आसन् तदानीं तत्रत्यैर्जनैः प्रार्थिताः यदत्रायं वारां-निधिः स्वोच्छ्वासेनैव निज-पूरेणैव च प्रायः पूरीमेव सकलां जलमग्नामिव विधातुं प्रयतते । अतः समस्ता जनता सर्वदा सन्त्रस्ता भवति अतः समुद्रः नैवं कुर्यादिति विधीयतां कश्चनयत्नः इति प्रार्थिताः श्रीरामानन्दाचार्याः स्वकीयां मनः - शक्ति प्रकल्प्य जलस्तम्भिनीं विद्यां वा स्मारं स्मारं तत्रस्थिता एव परितः पुरीम्-मानरेखां विधाय समुद्रं प्रार्थयामासुर्यदेनां रेखां नोल्लङ्घयेदिति ।

किञ्च तत्रत्ये चन्दन - सरोवरे प्रायः सर्वदैव ग्रीष्मर्तौ जलाभावो भवति स्म-तदर्थमपि कैश्चिद्भक्तैः प्रार्थिताः श्रीमदाचार्याः जलप्रपूरिणीं विद्यां संस्मृत्य सरोवरे कमण्डलुजलं निक्षिप्य भगवन्तं जगदीशं सम्प्रार्थ्य प्रोचुः नायं सरोवरो नीरसः क्वचन स्थास्यतीति । ततः प्रभृति श्रूयते-यदयं वारांनिधिः क्वचन न तां रेखामुल्ल-ङ्घितवान् न वा स चन्दनसरोवरोऽपि कदाचन विरसः समभवत् । सर्वदैव सरोज-

मालापरिमण्डितमध्यभागः पङ्कजपरागपीतपयोराशिरिव राजतेस्म, न पुनर्नीरसः सः क्वचन दृष्टो जनैरिति ।

अत्र केषाञ्चन मते-श्रीरामानन्दाचार्यचरणशिष्यप्रवरश्रीकवीरदासस्य जलस्तम्भनविद्यायाः प्रभावात् समुद्रो नाधिकमग्रे प्रासरदिति ।

एवमेव चन्दन-सरोवरेऽपि द्वितीय शिष्यस्य श्रीयोगानन्दस्य जल-प्रपूरिण्याः विद्यायाः प्रभावो यदत्र चन्दनसरोवरेऽप्यक्षुण्णो जलराशिः प्रादुर्बभूवेति । जनश्रुतिः-विद्यते भक्तिसमुदाये । भवतु कस्यापि महत्ता, परन्तु सर्वत्र गुरुप्रभाव एव चमत्कृतिं तनुते, इति सार्वदिकी प्रसिद्धिः । इत्थं कलिङ्ग देशेऽपि श्रीरामभक्तेः प्रचारं प्रसारं कलयन्तस्ततः प्रस्थिताः समभूवन् ।

एवमुत्कलदेशे समन्ताद् भगवद्भक्तेः प्रसारं प्रचारं प्रसारयन्तः शनैः शनैः प्रचलन्तो निजशिष्यमण्डली-परिवृताः सुरवरनिकरसमावृतसुराचार्या इव राजमानाः श्रीरामानन्दाचार्याः मार्गे मार्गे नानाविधशास्त्रीयप्रसङ्ग-सत्सङ्ग-मण्डलमारचयन्तः स्थापयन्तश्च स्थाने स्थाने भगवन्नामसंकीर्तनमण्डलानि, साधुसेवासमाजांश्च, श्रीरामेश्वरं धाम समाजग्मुः । तदानीं तत्र श्रीवैष्णवेषु श्रीशाङ्करेषु प्रचलतिस्माभूयान् पारस्परिकः सङ्घर्षः । तदनुसारमेव संन्यासिषु प्रावर्द्धत महान् विरोधाग्निः । यदा च श्रीमद्रामानन्दाचार्याः सुशिष्यमण्डलमण्डिताः महामहिमशालिनः सर्वत्र विविधविधचमत्कारचक्र-प्रचारणपटीयांसः नानाविधां सत्सङ्गमण्डलीं स्थाने स्थाने स्थापयन्तः स्वप्रभावं जगति विस्तारयन्तः सन्तारयन्तश्चाज्ञानिनोऽपि हीन-जातिजनान्, श्वपचहूण - यवनादींश्च कलयन्तः स्वशिष्यान्, महता समारोहेण समागच्छन्ति रामेश्वरमन्दिरोपरि स्वाधिकारं स्थापयितुमिति कर्णाकर्णिकया श्रुत-समाचारा मिथ्याप्रकल्पनाशतसङ्कुलितमानसा व्याक्षिप्तचित्ता इव वित्ताभिरक्षण-चिन्तासङ्कुचितसकलक्षणाः विलक्षणाकार - प्रसारितविद्वेषणविकाराः साकार-कलहाऽऽकाराः समासादितापकारसम्भाराः सुसङ्गठिताः समभूवन्-सकल श्रीरामेश्वर-मन्दिरस्थाः पूजकपरिवार-जन्या जघन्याः परिजनाः ।

तेषां तथाविध-दुर्व्यवहारवर्द्धित - दुर्वृत्तवृत्ताचार-सम्भारसमाचार - प्रसारा-नाकर्ण्य भयोद्विग्नान् निजशिष्यबन्धूनालक्ष्य सन्त्रस्तांस्तान् विश्वस्तान् विधातुकामाः श्रीरामानन्दाचार्याः सोत्साहं सर्वांस्तान् सम्बोध्य स्वसिद्धान्तविनिश्चितं निर्णयं तदीयं तात्कालिकं कर्तव्यञ्च स्मारयन्तः [ "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" ]

इति गीता-सिद्धान्तमपि बोधयन्तः सोत्साहवन्तः कलयन्ति स्म । नात्र किमपि चिन्तनीयं "यद्भाव्यं तद्भाव्यमेव ।" उक्तञ्च—

"यदभाव्यम् न तद्भावि, भाविचेन्न तदन्यथा।" अतो भगवतः स्मरणं प्रकुर्वन्त एव भगवच्चिन्तन - तत्पराः सन्तः सर्वे स्वलक्ष्यं सफलीकुर्वन्तु। न हि फलाऽफलकल्पनाप्रवाहे प्रवहन्तु। शूरा इव धृताऽग्रपादा न प्रत्यक्पदं स्थापयन्तु। भगवान् स्वयमेव सर्वं भवदानुकूल्यमेव विधास्यति। निर्भयं प्रसरन्तु। इति।

इत्थं निजाचार्यवर्यसन्देशं समवाप्य निर्भयाः सन्तः सर्वे महान्तः [ "हरिस्मृतिः सर्वविपद्विमोक्षणम्।" ] इति वाक्यं स्मारं स्मारं भगवन्नामसंकीर्तनध्वनिं घोषयन्तः सकलभुवनविततमविरतजनमानसविहितनिवासं बहुलाऽऽयासं विरचितविकृतवेषं पारस्परिकद्वेषविशेषं समूलमुन्मूलयन्तः भगवद्भक्तिरससिन्धुं समुद्वेलयन्तः सकलमानव-मानसविलसिता - ज्ञानध्वान्त - ध्वंसनपुरःसरं भगवन्नाममाहात्म्यज्ञान-ज्योतिरुद्भासयन्तोऽग्रेऽग्रं प्रसरन्तः कलिकल्मषमपहरन्तो भक्तिरसाब्धौ विहरन्तो हरन्तश्च द्वेषिद्वेषदुर्भावनाम्—"श्रीराम जयराम जय जय राम!" विजयतां श्री-वैष्णवोधर्मः, विजयेतां श्री सीतारामौ, विजयन्ताम्, श्रीरामानन्दाचार्याः इत्युच्चैस्तरां नितरां रटयन्तो रटन्तश्च सोल्लासं सहर्षं सभक्तिप्रकर्षम् नृत्यन्तो गायन्तः समुच्छलन्तः सर्वे साधवः सन्तो महान्तश्च श्रीरामानन्दाचार्यपुरःसराः श्रीरामेश्वरमन्दिरमवाप्य स-भक्त्युद्रेकं प्रतिसोपानं प्रणमन्तः समारोहन्तः समारोहेण समुत्साहेन साटोपं साक्षाद्भक्तित्रिकमेव सजीवमुपस्थापयन्तः सन्तो विजयन्ताम् श्री श्रीरामेश्वर-चरणाः, विजयन्तां श्रीराघवेन्द्रपादाः,

शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः।
यथाशिवमयो विष्णुरेवं विष्णुमयः शिवः॥

[ यथाऽन्तरं न पश्याम - स्तथा नः स्वस्तिरायुषी ] इति समुच्चतरं घोषयन्तो यथा हि मन्दिर-द्वारमासादितवन्तस्तस्मिन्नेव क्षणे विलोक्य च तेषामपूर्वभक्तिसमुद्रेकमश्रुतपूर्वमिमामेकाकारमयीं श्रीराम - शङ्करमयीं सुदृढानुरक्तिं, स्तब्धा अपि प्राक्तनद्वेष-मूलं हृद्गतशूलं सद्यो निः-सार्य्य सभक्तिसमुच्छ्रायं सरसस्नेह-सुधासम्पृक्तां विशुद्ध-सत्त्वमयीं भावोद्रिक्तां श्रद्धासमृद्धां प्रवृद्धां भक्तिभावनां पुरस्कृत्य सर्वे श्रीरामेश्वर-प्रभोः पूजकप्रवराः ये हि साक्षात्कारात् प्राक्क्षणं यावद् दुर्भावनाऽभिभूतभावा भयावहा विरोधमेव प्रसारयन्त - आसन् त एवाधुना सर्वतोऽग्रे सभक्तिपूरोल्लसित - समर्चासमाराधनसम्भारसंसक्ताः नितान्तमनुरक्ता इव साक्षाद्भगवद्दर्शनमिव मन्यमानास्तदानींतनीं भक्तितरङ्गिणीं - स्वयमेवोपयातसुरतरङ्गिणीमिव पुण्यतमां निज-भाग्योदय - समुद्भूतिमिव नवनवानुभूतिं कलयन्तः समागतानां श्रीवैष्णवभक्तवराणां श्रीस्वामिचरणानाञ्च स्वागत - संमोहनमहामन्त्रप्रकर्षमिवाऽ-

द्भुत प्रभावमाजक्ष्य समायातप्राघूर्णिकानां स्वागत-सम्मान - निवासाशनप्रबन्धन-प्रबन्धकाध्यक्षतामेव परिवहन्तः सकलाः पूजक-प्रवराः सहर्षं सोत्कण्ठं सेवा हेवाका एव संवृत्ताः। कलयन्ति स्म यथाऽधिकसुखसाध्यां निवासाशनादिकीं प्रशस्तां सुव्यवस्थाम्।

श्रीरामेश्वर-सेवकनिवहो यथा हि श्रीरामानन्दाचार्य - समीपमासाद्य प्रणमति स्म तदानी-मेव तेषां मधुरस्मितशोभित - मुखेन्दुमण्डलमालोक्य परममधुरमोहनमयीं तनुत्विषं चाक्षुषीकृत्य सरससुधास्रोतस्विनीं मधुरतरवचनामृतरसझरीमास्वाद्य (कर्णकुहरीकृत्य) नितान्तस्नेहलिप्तामिव परस्परालाप - पात्रनपरम्परां प्रणय-परिपाकपूरपरिवृतां व्यवहृतिश्च विलोक्य सर्वेषां मानसे सहसैव समुद्भूता हृदया-ऽऽकाशवाणी-यदेषो महापुरुषस्तु "रामानन्दः स्वयं रामः प्रादुर्भूतो महीतले।" इति। ततस्ते सर्वे श्रीरामानन्दाचार्याणां बहुतरं सम्मानं चक्रुः। तत्र यथानियमं श्रीमद्रामभक्तिसुरतरङ्गिणीं प्रवाहयन्तः पारस्परिक-द्वेषमूलक - शिवभक्त-रामभक्तयोः दुर्भावात्मकविरोधभावं समूलघात - मुन्मूल्य परस्परस्नेहसद्भावभाविताऽन्तःकरणान् सर्वान् शिवभक्त-रामभक्तान् परस्परैक - प्रणयसूत्रसम्बद्धान् मालामणिकानिव परस्परपृष्ठपोषकान् विरचय्य त्रिरात्रनिवासमाकल्प्य-पुनः श्रीरामानन्दाचार्याः "विजय-नगरं प्रति" प्रस्थानमाचेरुः।

ततः क्रमेण शनैः शनै-रध्वानं पारयन्तः श्रीमद्रामानन्दाचार्याः—

["मध्येमार्गं तिरुपतिपदं व्याप्तलोकं प्रसिद्धं
"वालाजी" ति प्रकटविभवं राम-धाम प्रकामम्।
दृष्ट्वा नत्वा स्तवनविधिनाऽऽराध्य सन्दिश्य भक्तान्
भक्ति श्रद्धा "विजय-नगरं सोत्सवं प्राप्तवन्तः॥]

श्रीविजय-नगराधीश्वरोऽपि श्रुतवृत्तान्तः परमया श्रद्धया भक्तिभावोद्भा-वितानन्तसत्कारमहोत्सवो महता समारोहेण सम्मुखमुपेत्य गीतवाद्यैर्जय जय-घोषपुरःसरं श्रीरामानन्दाचार्याणां स्वागतसमारोहं सोल्लासं व्यतनुत। तदानीं ते राजकीय-सम्मानसमहिता राजभवने एव राजकीयोद्याने मध्योपवने विशेषातिथीनां कृते निर्मापिते शोभाधाम्नि सम्मानिताऽतिथिरूपेण विराजमानाः राजोपचारा-ञ्चितां पूजामन्वभूवन्।

तदानीमेव :— "विजयनगराधीशस्याऽऽसीत् कुरङ्गसुलोचना,
त्रिदशललनैवैषाऽऽयाताऽधुनाऽवनि - मण्डले।

जननसमयान् मूकां, वाचां प्रसारणवञ्चितां,
सदयितनृपोऽप्यासीत् खिन्नो विलोक्य "सुगौरिकाम् ॥"

स्वमनोरथसिद्धिसाधनसमुपयुक्तसमयमुपस्थितमालक्ष्य विजयनगरनरनाथोऽपि विविधविधचमत्कार-चर्चितगुणान् सौभाग्यादेव सुलभाऽनुग्रहान् स्वगृहानेव समुपागतान् विचिन्त्य तामेव राजकुमारीं तत्र तेषां सम्मुखं समानीय सश्रद्धं सोत्कण्ठं सभक्त्युल्लासम्—

"रामानन्दपदाम्बुजैकशरणीकृत्य स्वकीयाऽङ्गजां,
नावोचत् किमपीह, तद्धृदयगं ज्ञात्वाऽखिलं स्वामिनः ।
लावण्याऽमृतवापिकां मृगवधूचञ्चद् - दृगुल्लासिनीं
प्रोचुस्तां वद पुत्रि ! "राम ! रमण ! श्रीश ! प्रयच्छेर्गिरम् ॥"

तदानीं श्रीरामानन्दाचार्याः समालोक्य रुद्धवाग्व्यापारामपाराञ्च शक्ति वैदुष्योल्लसितां विलसितानि सुरसरस्वत्याः करुणाऽक्षणाऽपाङ्गवीक्षितायां तस्यां निजमानसे भगवदनुग्रहकारकं वाग्वैभवप्रसारकं मन्त्रराजं स्मारयामासुः—

यतः— "योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां,
सञ्जीवयत्यखिल - शक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरण - श्रवण - त्वगादीन्
प्राणान्, नमो भवतते पुरुषाय तुभ्यम् ।" इति ॥

स्मरणसहकालमेव भगवतः करुणावरुणालयस्य श्रीरामस्यानुग्रहः सञ्जातः ।
सद्यः सन्मधुराक्षरां गिरमहो "श्रीराम, रामे" ति सा
प्रावोचत्, "स्फुरिताऽभवद्धृदि सक्रद्वर्णाऽऽत्मिका वैखरी ।"
दर्शं दर्शमलौकिकीं गुरुवचः सिद्धिं प्रसन्नाः समे
शिष्या राजसभासदः समभवन्, श्रीस्वामिनां सेवकाः ॥

तेन हि :—किम्बहुना भूपतिस्त्वेतावान् प्रभावितः सञ्जातो यदयं स्वयमेव षोडशमनुजवाह्यायां शिविकायामग्रतमे भागे नियुक्तः सन्नुवाह ।

तथाहि :—"भक्त्युद्रेकवशंवदः स शिविकां रत्नाऽञ्चितां भूपतिः
स्कन्धे तां प्रणिधाय राजभवनादुद्यानवाटीं नयन्-
सामात्यः सगणः कलत्रसहितः शिष्यो भवन् भक्तितो
दिव्यां तत्र समर्हणां स्म तनुते राजोपचारान्विताम् ॥"

ततश्च सा राजकुमारी परमया श्रद्धया श्रीमद्रामानन्दाङ्घ्रि - सेवाव्यसनिनी श्रीमद्गुरुवरचरणवरेण लोकोत्तरप्रतिभाभासिनी संवृत्ता ।

तथाहि— "सैषा राजकुमारिकाऽपि समभूच्छिष्या विपश्चिद्वरा
सौन्दर्यातिशयाऽनुकूलवचनोल्लासैर्जगन्मोहिनी ॥
जाता, राजसुनीति-रीतिनिपुणा साम्राज्यसञ्चालिनी,
स्वाचार्याऽङ्घ्रिसरोजसेवनफलं लेभेऽथ साऽलौकिकम् ॥"

इत्थं विजयनगराधीश्वरराजकुमारीं सुकुमारीं सरसमधुरया वाचासमलङ्कृतां विधाय विविधशास्त्रतत्त्वज्ञां परमविदुषीं राजनीतिनिपुणां परमभक्तां कृत्वा निजशुभाशीर्भिरभिनन्द्य सकलराजपरिवारं विशेषतो महाराजञ्च श्रीवैष्णवधर्मदीक्षया भक्तिशास्त्रसमीक्षया गोब्राह्मणविद्वद्गणादि - प्रतीक्ष्यप्रतीक्षया सर्वदैव स्थातव्यमिति निखिल वैष्णवेषु भगवदीयेषु भगवद्भावेक्षयैव व्यवहर्तव्यमिति सदुपदेशशिक्षया समलङ्कृत्य शिवकाञ्चीं प्रति प्रस्थापयामासुः सुसाधुमण्डलमहेन्द्राः श्रीरामानन्दाचार्याः ।

तदानीं शिवकाञ्च्यामपि प्रवर्द्धते स्म शैवश्रीवैष्णवयोः पारस्परिकप्रद्वेषः । शैवाः सर्वदा निन्दन्ति स्म श्रीवैष्णवान् । तेऽपि नितान्तघृणामय्या दृष्ट्यैव विलोकन्ते स्म शैवान् । किञ्च यदा श्रीरामानन्दाचार्याः सुशिष्यगणपरिमण्डिताः प्रकाण्डपण्डिताः सदैवाऽखण्डिताकारमेव शिवविष्णुस्वरूपं मन्यमानाः श्रीशिवकाञ्च्यां पदं धारयन्ति स्म तदा तेषां दर्शनमात्रत एव विस्मृतस्वपरभेदभावना भावुकाः शिवभक्ता अपि तदनुरक्ता इव सहचरा इव सेवमानास्तान् निजस्वागतसमाराधन-साधनोपकरणैः स्वस्वरूपानुरूपमेव स्वागतसम्मान-मानादिकं व्यदधुः ।

तत्र गत्वा च भगवतः साम्बशिवस्य दर्शनार्चनस्तवनवन्दनादिकं विधाय विहितसकलनित्यनैमित्तिक - दैनन्दिन - क्रियाकलापा भगवत्प्रसादादिकं समुपभुज्यविहितक्षणैक विश्रामसुखाः समयोपरि सभामण्डपमुपेत्य शिवतत्त्वोपरि स्वप्रवचनामृतनिर्झरीं प्रसारयामासुः—

"शिवमद्वैतं चतुर्थं मन्यन्ते" किञ्च- "एको रुद्रोऽवतस्थे"

इत्यादि श्रुतिभिः "परतत्त्वरूपः शिवः" इति प्रतिपादितम् । किन्तु— "वाङ्मनोभ्यामतीतः शिवः" इति नियमात् वाचा मनसाऽप्यतीतस्य कथमुपासना क्रियेत, अतः पुरुषरूपेणैव सर्वरूपस्य परमात्मनः सर्वत्रैवोपासना विधीयते । अतः पुरुषरूपेण शिवस्वरूपं प्रतिपाद्यते—वैदिकविज्ञानाऽनुसारं "अव्यय [ अव्ययपुरुषरूपः शिवः ]—पुरुषस्य" पञ्चकलाः भवन्ति, आनन्दकला, विज्ञानकला, मनःकला, प्राणकला, वाक्कला इति । आसां पञ्चानां कलानामधिष्ठाता भगवान् शिवः ( शङ्करः ) एव । अतः पञ्चमुखी-शङ्करः शास्त्रेषु वर्णितः । तत्र आनन्दमय-

रूपस्य भगवतः शङ्करस्य नाम मृत्युञ्जयः। स एव "रसः"। "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति श्रुतिः। अतः मूलतत्त्वस्वरूपोहि रसः। तस्यैव रसात्मकमूलतत्त्वस्यापरा शक्तिः "वलम्" [ पराऽस्य शक्तिर्विविधैव श्रूयते ] "बल, शक्ति, क्रिया," इति एकस्यैव नामत्रयम् [ स्वाभाविकी ज्ञानवलक्रिया च ] एवं, रसो वलञ्चेति द्विविधं मूलतत्त्वम्। तत्र रसस्त्वानन्द एव, सहि मृत्युञ्जयः। वलञ्च नाम मृत्युः। अतः वलं ( मृत्युरेव ) रसं आनन्दं आवृणोति। अतस्तं आवरणकारकं वलं ( मृत्युरूपं ) जयति आनन्दः; अत आनन्दो रसो मृत्युञ्जयः कथ्यते स एव मृत्युञ्जयो आनन्दकलात्मको भगवान् शङ्करो मृत्युञ्जयः। मृत्युञ्जयनाम्ना प्रसिद्धः समुपास्यते च।

द्वितीया कला "विज्ञान कला" अतो विज्ञानमयी शङ्करमूर्तिर्हि दक्षिणामूर्तिः ( तान्त्रिकैः सर्वदोपास्यते ) विज्ञानं नाम वुद्धिः। तस्याः-घनस्वरूपं सूर्यमण्डले विद्यते [ सूर्यमण्डलमेव वुद्धेः ( ज्ञानस्य ) घनस्वरूपम्। ] सूर्यमण्डलादेव विज्ञानं सर्वत्र सौरजगति व्याप्तं भवति। तत्रस्थाः प्राणिनः सौरमण्डलगताः विज्ञानं तत एव ( सूर्यदेव ) लभन्ते। सूर्यो मण्डलस्य ( वृत्तस्य ) केन्द्रे विद्यते केन्द्रं सर्वदा उत्तरत एव तिष्ठति, अतो विज्ञानं केन्द्रात् ( उत्तरतः ) दक्षिणं प्रति प्रसरति। विज्ञानञ्च वर्णमातृकायामेव स्थितम्। अत एव देववाण्याः वर्णमाला ( हिन्दी देवनागरी-प्रभृति लिपीनां वर्णमाला वा ) उत्तरतो दक्षिणमेवानुसरति। एवञ्च विज्ञानं स्वतः प्रकाशरूपं भवति, प्रकाशस्य च वर्णः श्वेतो भवति अतः शङ्करस्य स्वरूपमपि श्वेत-वर्णमेव।

तृतीया कला "मनोमयी"—अस्या अधिष्ठाता "श्रीकामेश्वरः शङ्करः" मनसः कामप्रधानत्वात् कामजनकत्वात्-अतः कामोहि मनोजः कथ्यते।

[ "कामस्तदग्रे समवर्तताधि मनसोरेतः प्रथमो यदासीत्। ] ऋ० १०/१२९।४ )
[ सतो वन्धुमसति निरविन्दन् प्रतीस्या कवयो मनीषा।" ] इति श्रुतेः।

अतो मनसोऽधिष्ठाता कामेश्वरः तन्त्रशास्त्रे प्रसिद्धः पञ्चप्रेतपर्य्यङ्कस्थितः शक्तिसहितः श्रीकामेश्वरो भगवान् तान्त्रिकैः समुपास्यते। प्रेमास्पदम् अनुरागमयं हि मनः। अनुरागस्य वर्णो रक्त अतो रक्तवर्णेव कामेश्वरमूर्तिः।

किञ्च चतुर्थीकला प्राणमयी—प्राणोहि पशुपतिः सच नीललोहितः अतो नीललोहितस्यैव प्राणमयकलात्मकस्य पशुपतेः समुपासना। आत्मा पशुपतिः प्राणरूपेण पोशन विकाररूपान पशून् नियमयति। वैदिकपरिभाषायां प्राणो द्विविधः एकः आग्नेयः प्राणः, अपरश्च सौम्यः। अतोऽग्नेः स्वरूपं लोहितम्, सोमस्य रूपं कृष्णं

( नीलम् ) अतो नीललोहितो भगवान् उभयस्वरूपो-( अग्नि-सोमात्मकरूपः ) उक्तम् हि छान्दोग्ये [ "यदग्ने रोहितं रूपम् तेजसस्तद्रूपम्, यच्छुक्लं तदपाम् यत्कृष्णं तदन्नस्ये" ति ] ( छान्दो-६·४ )। अन्नशब्देनात्र सोमस्यैव ग्रहणम्। "अन्नं हि सोमः, अन्नादश्चाऽग्निः" इति। अतो मूर्तिरेषा नीललोहितकुमार-रूपा प्रसिद्धा। अतः सर्वेषां योगात् पञ्चात्मिका शिवमूर्तिः सम्पन्ना भवति आनन्दरूपा, विज्ञानरूपा, मनोमयी, अग्निप्राणरूपा, सोमप्राणरूपा चेति-"मृत्युञ्जय, दक्षिणामूर्ति, कामेश्वररूपा पशुपतिरूपा द्विविधा आग्नेयप्राण सौम्यप्राणरूपेति" पञ्चविधा पञ्चमुखी शिवमूर्तिः। इति। ध्यानञ्चः—[ "मुक्ता पीत पयोद मौक्तिक जपावर्णैर्मुखैः पञ्चभिः

त्र्यक्षै रञ्चितमीशमिन्दुवदनं ( मुकुटं ) पूर्णेन्दुकोटिप्रभम्।
शूलं टङ्कण पाणि वज्रदहननान्नागेन्द्र घण्टाऽङ्कुशान्

"पाशं भीतिहरं" दधानममिताकल्पोज्ज्वलाङ्गं भजे॥ १॥ ] इत्थं पञ्चमुखस्य शङ्करस्यैकं मुखं ऊर्ध्वभागे-चत्वारिमुखानिच्चतुर्दिक्षु सन्ति तेषां नामानि-च ऊर्ध्वं मुखस्यनाम 'ईशानः" पश्चिमाभिमुखस्य नाम "सद्योजातः" उत्तराभिमुखस्य च "वामदेवः" इति विभिन्न-नाम्ना पूज्यन्ते पञ्चमुखानि।

किञ्च पञ्चमीकला वाक्कला, साहि वाङ्मयीमूर्तिः शिवस्य "भूतेश" इति नाम्ना समाराध्यते इत्थमव्ययपुरुषस्य परमात्मनः पञ्चकलात्मकं रूपं पञ्चमुख-शङ्करस्य, भगवत एव स्वरूपम्। एवमेव [ अक्षरब्रह्मणोपि अक्षरब्रह्मरूपः याः पञ्चकलाः ता अपि भगवति शङ्करे विद्यन्ते "ब्रह्मा, विष्णुरिन्द्रः ( सूर्यप्राणभूतः सूर्यमण्डलमध्यस्थः ) अग्निः सोमः ( चन्द्रः ) सोम-(-तत्त्वमपि ) एताः पञ्च भगवति शङ्करे=इन्द्रः सूर्यस्तु दक्षिणं चक्षुः, सोमः चन्द्रो वामनेत्रम्। अग्निस्तृतीयं ललाटे भ्रुवोर्मध्ये स्थितं नेत्रं तथैव विष्णुर्हृदयम्। ब्रह्मा च सर्वशरीरगः। अतोऽप्ययं सिद्ध्यति भगवान् शङ्करः स्वयमेव ब्रह्माविष्णुमहेश्वराख्यत्रिपुटीमयोऽभिन्न एव-तथा कार्यकाले पृथक् पृथक् मानवशरीरेऽपि स्थितिग्रहणात् क्रियाकलापभेदाच्च भिन्नत्वेन प्रतिभाति। यथा शरीरे नाभिदेशे विष्णुः, हृदयकमले ब्रह्मा, ब्रह्माण्डे ( मस्तके शिवः विष्णोः कार्यं प्रीणनम् ( जीवन दायिन्याः ) शक्तेः आदानम्। यथा श्वासप्रश्वासक्रमे इन्द्रः आभ्यन्तरस्थ विषाक्तं वायुं ( कार्बनडाई आक्साइड ) वहिर्निःसारयतिः तत्क्षणमेव विष्णुः सञ्जीवन ( ऑक्सीजन ) वायुं वहिर्भागात् समाकृष्याऽभ्यन्तरं समानयति, यावत् शरीरस्थं वायुर्वहिर्निःसरति यावच्च प्रीणन-वायुर्न यथास्थानं समायाति, तावत्कालिकं क्षणं ब्रह्मा शरीरे हृदयस्थो जीवनं स्थिरं रक्षति। यथैव प्राणोत्क्रमणकाले मूर्छितविराजमानः शिवः प्राणोत्क्रमणं

कारयति अतः परस्परविरुद्धदिशि- ( नाभौ तथा मस्तके च ) विष्णोः शिवस्य च निवासः कार्यमपि विरुद्धमेव विष्णुः प्राणधारणं कारयति, शिवश्च प्राणोत्क्रमण-मित्यपि कार्यविरोधत्वमुभयोः। इत्थं लोकव्यवहारे परस्परविरुद्ध - गुणधर्मित्वं दृश्यते द्वयोः विष्णौ शिवे चेति। एवमेव चराचरे जगति विष्णु-शिवयोः स्थिति-र्ब्रम्हणश्चे ति।

किम्बहुना वृक्षादावपि-मूलदेशे वृक्षाणाम् ब्रह्मणो निवासः। मध्येच विष्णो-र्यज्ञस्वरूपस्य पालन-पोषणकर्तुः स्थितिः। शिरसि ( उपरितनेभागे ) शिवस्येति। तत्र रसमङ्ग्राहको ब्रह्मा मूलत एव रसं गृह्णाति। मध्यस्थो विष्णुः सर्वत्र विभजति। शिवोऽग्रिमभागस्थः रसद्वारा नवनवपल्लवानां क्षत-विरोहादिकीं वा उत्पत्तिं प्रतनुते। इति त्रयाणां ब्रह्मविष्णुशिवानामेकरूपतैव न कश्चन भेदः। इति।

अक्षरब्रह्मरूपत्वं शिवस्य =

इत्थं शङ्करः साक्षात् अव्ययपुरुषरूपः ( अव्ययपुरुष कलामयविग्रहः ) तथैव "अक्षरपुरुषरूपः [ अक्षरपुरुषकलामयस्वरूपः ] तथैवाऽ"क्षरपुरुष" - रूपोऽपि। क्षरपुरुषस्याऽपि पञ्चकलाः "प्राणकला, आपकला, वाक्कला, अन्नादकला, अन्नकला" इतिपञ्चकला=आसु पञ्चकलासु अग्नीषोमात्मकम् जगत्" इत्येव विश्वस्वरूपं अग्नि-सोममयमेव।

अत्र प्राणो हि "ऋषिरूपः" पितृरूपः, देवरूपश्चेति त्रिविधः। देवेषु च "पृथ्वी, अग्नीः, वायुः, द्युलोकस्थः सूर्यः,। तत्र वायुरपि द्विस्थानस्थः। एकस्त्वन्तरि-क्षस्थो 'रुद्रसंज्ञकः' अग्निप्रधानो वायुः उग्रः उपद्रवोत्पादको रोगजनकोऽपि भवति समुद्वेजकत्वात् रुद्ररूपः। अपरश्च सोमप्रधानो वायुः सच सूर्यमण्डलादप्यूर्ध्वमेव "जनः, तपः, "लोकेषु विलसति सहि परमेष्ठि मण्डलस्थेषु जनस्तपोलोकेषु सञ्चरति-सोमप्रधानत्वात् जीवनदातृत्वात् आनन्द-सौख्यसाधनत्वात् पूर्णशान्तिकरः। अस्यैवापर-स्वरूपं "आपः"रसमयत्वात् अपां नामान्तरं"अम्बा" इत्यपि शास्त्रे विद्यते अतः अम्बयासहितः साम्बः सर्वदा कल्याणकारित्वात् शङ्करत्वाच्च "साम्बसदाशिवः" इति नाम भवति- अतः वायुमूर्तेः शङ्करस्य रूपद्वयं जातम्। एकोरुद्रः अपरः साम्ब-शिवः इति।

किञ्च—प्राणस्याऽपि द्विरूपम्-आग्नेय प्राणः सोमप्राणश्चेति। "वाग्" अपि अग्निप्रधाना, अन्नादश्चाप्यग्निरेव, आग्नेयप्राणस्त्वग्निरस्त्येवेति-अग्निरूपत्वात् तथैव सौम्यप्राणः सोमरूपः अन्नम्-सोम एव, आपः सोमस्यैवोदभूतरूपाः। अतः सोमात्मकत्व-मेव-क्षरपुरुषस्य सर्वा पञ्चैवकला अग्निसोमात्मिकाः ताभ्योविश्वस्योत्पत्तिः। अतःसर्वं

विश्वमेव "अग्निसोमात्मक" मित्याहुः। एतेन सिद्धयति यत् सोमप्रधानो वायुः साम्वसदाशिवः। अग्निप्रधानश्च रुद्ररूपो घोरः शिवः। अन्तरिक्षस्थो वायू रुद्रः। परमेष्ठिमण्डलस्थः सोमरूपोवायुः साम्वसदाशिवः। "एकादशरुद्राः"—किञ्च शरीरेऽपि "दशप्राणाः एकादश आत्मा" इत्येकादशरुद्राः। एतेषामुत्क्रमणे जाते सर्वे रुदन्ति शरीरस्थेन्द्रियादयः अतः रुद्रसञ्ज्ञकाः प्राणाः। ते च-सप्त-शीर्षण्याः [ द्वे नेत्रे, द्वे नासिके, द्वौ कर्णौ, मुखमेकम् इति ] द्वौ, अवाञ्चौ ( नीचैर्भागेस्थितौ ) एका नाभिश्चेति - तत्र दशस्थानेषु विद्यमानत्वात् प्राणानां, दशसंख्या। "आत्मा चैकादशः" इत्येकादशरुद्राः।

विश्वस्मिन् रुद्राः—एवञ्च-पृथिवी, जलं, तेजो वायुराकाशः सूर्यः चन्द्रो विद्युत् ( यजमानः ) इत्यष्टमूर्तिः सदाशिवः, तथा च "पवमानः पावकः शुचिः" इति त्रिरूपो घोरो रुद्रः उपद्रावकः वायुविशेषभूतः अन्तरिक्षस्थः। इति मिलित्वैकादश रूपत्वम्। अतएव अष्टमूर्तेस्तूपासना क्रियते सर्वैः, त्रिरूपस्यतु सर्वदैव दूरस्थित्यर्थमेव प्रार्थना क्रियते वेदे—["विज्यं धनुः कपर्दिनो विशल्यो वाणवान् उत"] — ["परोमूजवतोतीहि"] इत्यादिभिः प्रार्थ्यते-यद् अयि घोररूप ! रुद्र ! भवान् सर्वदा अस्माकं कुटुम्वस्य अस्माकञ्च सर्वदा रक्षां करोतु। भवतो धनुरप्यस्माकं कृते तु विगतप्रत्यञ्चं तिष्ठतु, विगतशल्यश्च वाणः किञ्च रुद्ररूपन्तु—"मूजवतः" पर्वतादपि सुदूरमेवैतद् घोर रूपं तिष्ठतु-सुदूरञ्च गच्छतु भवानिति। तथैव शिवरूपं कल्याणकरं वायुरूप साम्वं सदाशिवस्वरूपञ्च सर्वदाऽत्र समागत्य कल्याणानि कलयन्त्विति वारं वारं प्राथ्यंते-यत् :—

"मा नस्तोके तनये मा न आयुः मा नो गोषु मा नो अश्वेषु रिरीषः।
मानो वीरान् रुद्र भामिनोर्वधीर्हविष्मन्तः सदमित्वा हवामहे।
या ते रुद्र शिवा तनूरघोरा पापकाशिनी तया नस्तन्वा शन्तमया गिरिशं ताऽभि चाकशीहि।" इत्यादिभिः स्तूयते।

"एक एव शिवो विष्णुः परमतत्त्वमेव नान्यो न वा कश्चन भेदः— तथाहि-

यद्यपि मूढाः अन्धश्रद्धालवः सिद्धान्ततत्त्वविमुखाः जना परस्परं कथयन्ति यच्छिवो जीवः ( जीवविशेषो वा ) केचन कथयन्ति--"विष्णुः" परमात्मनः परतत्त्वस्वरूपस्य शिवस्य - अनुगतसेवको जीवविशेषः। इति पारस्परिकं द्वेषभावनामूला एषा धारणा। निर्मूला निर्मर्यादामयी अशास्त्रीया अज्ञानकल्पिता-उपासकानां नितान्तमूढता-द्योतिनी।

वस्तुतस्तु उभयोर्नाणुमात्रमपि कश्चिद्भेदः। एकस्यैव परमतत्त्वस्य कालभेदेन अवस्थाभेदेन कार्यभेदेन व्यवहारभेदेन च भेदः कल्प्यते यथा महाराजे विलास-क्रीडाऽवसरे विलासी महाराजः। शासनकाले शास्ता, भयङ्कर - कठोर-दण्डदाने निष्करुणो घोरो दण्डधरः। दानकाले महान् दाता। शयनकाले पल्यङ्क-शायी। गमनकाले—गन्ता, गजारूढो अश्वारूढो रथारूढादि नानानाम-भाक् भवति तथैवैक एव परमात्मा—"पालन-पोषण-व्याप्ति-[ सर्वत्र सर्वं व्याप्य स्थिति-समये। "विष्णुः", इति नाम्ना, [ वेवेष्टीति-विष्णुः ] इति व्युत्पत्त्या विष्णुः व्यापकः कथ्यते। एकः स एव यदा महाप्रलये सर्वान् स्वात्मनि निलीय-स्वस्थः सन् शेते तदा शिवः संहारकरः इति कथ्यते-यदा च शिवं कल्याणं करोति तदा सैव शङ्करः [ शं=कल्याणं करोतीति शङ्करः ] किं वा—["शेरतेऽस्मिन् सर्वे प्राणिनः इति शिवः। इत्यादि व्युत्पत्त्या च तस्यैव परमात्मनो नाम शिवोऽपि भवति। लयानन्तरं यदवशिष्यते-सः शेषः तस्यैव शय्या-मविकल्प्य सर्वान् स्वोदरे निलीय शेते—अतः सः शेषशायीति वर्ण्यते। वस्तुतः स एव परमात्मा-क्रियाभेदेन स्वेच्छया-भिन्नभिन्न कर्मणि प्रवृत्तत्वात्; विष्णुः व्यापकत्वात्, शिवः सर्वलयकार-कत्वात्। नामभाक् [ विभिन्ननाम्ना वा ] व्यवहृतो भवति।

किञ्च—[ "सर्वधर्मोपपत्तेश्चे" ति ] वेदान्तसूत्रानुसारं सर्वे धर्माः सर्वाणि कर्माणि सर्वाणि वा नामानि यस्मिन् भवितुमर्हन्ति स एव भगवान् परब्रह्मेति। इत्थम्-"विष्णुसहस्रनामसु=" [ "अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः" ] [रुद्रो बहुशिरा बभ्रुः"] "ईशानः प्राणदः प्राणः" "भूतकृद् भूतभृद्भावो भूतात्मा भूतभावनः" "स्वयम्भूः शम्भुरादित्यः" "सर्वः शर्वः शिवः स्थाणुः" इत्यादीनि शिव-नामानि-सन्ति। एवमेव "शिवसहस्रनामसु" अपि विष्णोर्नामानि सन्ति बहुशः। अतः, सिद्धमस्ति यद् यः परमशिवः स एव महाविष्णुः। उभावेकरूपावेव नहि तत्र भेदः। केवलं उपासकानां रुचेरनुसारमेव भिन्न - भिन्न - नाम्ना भिन्नेनैव रूपेण परब्रह्मणः समुपासना। यत्र कुत्र भेद इव प्रतीयेत तत्र-तयोर्व्यापारभेदेन कार्य-भेदेनैव भेदः। यथा आदानक्रियाया अधिष्ठाता विष्णुः तथैवोत्क्रान्तिक्रियाया अधिष्ठाता महेश्वरः। आदानक्रियया प्राणशक्तेः बहिर्मार्गादाभ्यन्तरीकरणम्-ततो विरुद्धक्रिया प्राणोत्क्रान्तिः प्राणानां बहिर्निष्काशनम्। इति। जीवनशक्तिदाता शक्तिसञ्चारको महाविष्णुः महेशश्च जीवनशक्तिसंहारकः। इति द्विविधमपि कार्यं परमात्मन एव। यो हि सृष्टिकर्ता, स एव परिपालकः स एवहि संहारकः सृष्टिकर्तु-र्नाम् ब्रह्मा, परिपालकस्यनाम विष्णुः संहारकस्यनाम महेश्वरः इति सर्वं सर्वविधं

कार्यमेकस्यैव ब्रह्मणः अतो नैव भेदो बोध्यः। अतएवोक्तं [ केनचित् कविनोक्तं] "हरि-हरयोर्मध्ये-केवलं प्रत्ययस्यैव भेदः प्रकृति-स्तु धातुरूपैकैव।" "हृञ्" हरणे धातोः यत्र "ऋदोरप्" अप्प्रत्ययः तत्र "हरः" एवमेव यत्र "हृञ्" धातोः "अच इः" ( अणादि ५७८ ) इः प्रत्ययः। तदा "हरिः" शब्दो भवति उभयत्र केवलं प्रत्ययस्यैव भेदः धातुस्त्वेक एव।

अतः हरि-हरयोर्न भेदः—उभयोरेका प्रकृतिः, प्रत्ययतो भिन्नवद्भाति।
कलयतु कश्चन मूढो हरि-हर-भेदं विना शास्त्रम्॥

प्रत्ययतो ( ज्ञानादेव ज्ञानमात्रस्य भेदादेव भेदवद् भाति न तु वस्तुतो भेदः इति ) किञ्च उत्क्रान्तेर्नेता "इन्द्रः" आदानस्य च उपेन्द्रः [विष्णुः] इन्द्र ईश ईश्वरः पर्य्यायाः। एवञ्च :— विष्णोः स्थितिर्नाभौ-शिवस्य स्थिति मूर्धनि, परस्पराऽभिमुखमेव स्थितिर्यथा शरीरे नीचैरुपरि च स्थितिः सम्मुखे एवमेव लोकेऽपि शिवकाञ्ची कृष्णानद्याः वेन्ना ( वेणा = पेणा वा ) नद्याः एकस्मिन् तटे विद्यते तत्रैव सस्या एव कृष्णाया नद्याः अपरस्मिन् तीरे सम्मुखे विष्णुकाञ्चीति विद्यते। उभयोर्मध्ये कृष्णानदीः वहति - याहि सकलां भेद-दृष्टि दुर्भावनां वा कृष्ट्वा दूरं नयति-कथयति-उभयोर्मध्ये एकैवाहं "रसरूपा" रसधाम्नी वहति अत एकाकारे सत्येव रसाऽनुभूति-र्भवतीति बोधयति। किञ्च मानव शरीरेष्वपि-विष्णुर्नाभौ तिष्ठति-शिवोमूर्ध्नि तन्मध्ये हृदये ब्रह्मा विद्यते अतो नाभितोहि समानवायुः सर्वावयवेषु समभागं रसं वितरति हृदयात् प्राणवायुः सञ्चरति-इन्द्रो हि प्राणस्थं दूषितं वायुं वहिर्निःसारयति। नाभिस्थो विष्णुः सद्यः विशुद्धं सञ्जीवन-वायुमाददाति इति विष्णु-शिवयोर्मध्ये श्वास-क्रमरूपा कृष्णा नदी प्रवहति एषैव वैतरणी नदी-संसृतिः शिवः प्राणान् रक्षति यदा उत्क्रमणकाल आयास्यति तदा मृत्यु-र्भविष्यति तथा च याहि ब्रह्मबोधिकाः विष्णुस्तावकाः श्रुतया विद्यन्ते ताः सर्वाः शिवस्तावका अपि उभयोरेकरूपत्वात् ब्रह्मैक्याद्वा :— यथा श्वेताश्वतरोपनिषदि—

"एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणेश्च, इति॥ (श्वेता० ६।११)

"यस्यात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-स्तेनेदं पूर्णंपुरुषेण सर्वम्॥ (श्वेता० ३।९)

"यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च विचैति सर्वम्।
तमीशानं वरदं देव-मीड्यम् निचाय्येमां शान्तिमत्यन्तमेति॥ श्वेता०-४।११

सर्वाऽऽननशिरोग्रीवः सर्वभूतगुहाशयः।

सर्वव्यापी स भगवांस्तस्मात् सर्वगतः शिवः ॥ श्वेता० ३।११ ; इत्यनेकशो मन्त्राः विष्णोः शिवस्य च समाना एव उभयप्रतिपादकाः। विष्णोः कृते यथा नामानि पूर्णपुरुषः ( पुरुषोत्तमः ) साक्षी चेता केवलो निर्गुणः सर्वभूतान्तरात्मा-आदीनि सन्ति तथैव शिवनामान्यप्यत्रैव ईशानःशिवः देवो ( महादेवः ) इत्यादीनि। अत एकस्यैव परमात्मनः यथा सात्त्विकी कला विष्णुस्वरूपा तथैव तस्य परमात्मनः तामसी कला शिवो महेश्वरः नाम्ना समाख्याता [ श्रीमद्भागवते ५ स्कन्धे १७ अध्याये १६ श्लोकः ]—"भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसंज्ञामात्मसमाधिरूपेण सन्निधाप्यैतद-भिगृणन् भव उपधावति ॥ १६ ॥ तत्रैव च—

[ नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहायाऽऽत्मतत्त्व-व्यूहेनाऽऽत्मनाऽद्यापि सन्निधीयते ॥१४॥ ]

भगवान् नारायण एव तत्र भव ( शिव ) रूपेण विराजते। भगवत एवेयं तुरीया तामसी कलामूर्तिः। संकर्षणाऽऽख्या, शिवरूपेतिच स्पष्टम्। किञ्च स्वयं भगवता प्रोक्तम् :—[ श्रीमद्भागवते ४ स्कन्धे ७ अ० ५०–५४ श्लो० । ] अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्। आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषणः॥ आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज। सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ तस्मिन् ब्रह्मण्यनिर्देश्ये ( ण्यद्वितीये ) केवले परमात्मनि। ब्रह्मरुद्रौ च भूतानि, भेदे-नाज्ञोऽनुपश्यति ॥ यथा पुमान्न स्वाङ्गेषु शिरः पाण्यादिषु क्वचित्। पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः॥ त्रयाणामेकभावानां यो न पश्यति वैभिदाम्। सर्व-भूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥ किञ्च-[रुद्राणां शङ्करश्चास्मि] इत्यादिभिः—स्पष्टमेव प्रतिपादितमस्ति-। एवम् शरीरेऽपि ( पार्थिवेऽस्मिन् शरीरे ) पृथ्वीस्थाः प्राणाः पृथ्वीतः उपलभ्यन्ते अतो नाभिदेशे विष्णोः स्थितिः पृथिवीतोऽपि बहिर्भागादेव सद्यः प्राणवायुं गृह्णाति-हृदये ब्रह्मा संरक्षति तद्रिक्तं स्थानं यस्माच्छ्वासो बहिर्निःसृतः यावत् सः श्वासः पुनः स्वस्थानं न प्राप्नोति तावद्ब्रह्मा रक्षति प्राणान्। विष्णुश्च-सञ्जीवनं वायुं बहिर्भागात् सद्य एवाऽऽनयत्येव। शिवोऽपि मूर्धनि स्थितः प्राणान् रक्षति। नासिकाच्छिद्राभ्यां परं उपरितने भागे आयान्तं प्राणं रुणद्धि नाग्रे गन्तुं ब्रह्माण्डपर्य्यंतं, प्राणाः प्रभवन्ति शिवस्याऽवरोधात् किन्तु प्राणोत्क्रमणकालो यदाऽऽयाति, तदा सैव शिव आज्ञापयति अधुना निर्गच्छन्तु - इति किंवा योगिभिः हठादेव क्रियन्ते नासारन्ध्रौ निरुद्ध्य, अपान वायोराधात्। प्राणा ऊर्ध्वं प्रक्षिप्ती-

क्रियन्ते, तदा ब्रह्माण्डे व्यग्रता भवति, तदा शिवस्यापि समाधिः स्खलितो भवति = तदा ब्रह्माडं भित्वा प्राणा उत्क्रामन्ति। तदा ब्रह्माण्डभेदने शिवोऽपि साहाय्यमाचरति।। इति अस्तु विषयान्तरेणालम्।

एवं लोक - व्यवस्थयापि ब्रह्माण्डे सर्वोपरि स्वयम्भूमण्डलं विद्यते यत्र सोमः प्राधान्येन विद्यते, ततोऽधः परमेष्ठिमण्डलं = विष्णोर्धाम मुक्तिस्थानम् इदमेव गोलोकः=नित्यसाकेतधामापि, इत एव गावः = किरणाः प्रसरन्तीति गोलोकः। ततोऽधः सूर्यमण्डलम् ( स्वर्गः=देवायतनम् ) अत्र प्राणरूपेण इन्द्रस्तिष्ठति। अतएव देवानां राजा इन्द्रः सूर्यमण्डलं हि स्वर्गः सूर्यमण्डलतो गोतत्त्वम् (रसतत्त्वम्) ज्योतिस्तत्त्वम् प्रकाशाख्यं आयुस्तत्त्वम् (जीवनदायकम्) इति तत्त्वत्रयं प्रसरति-एतत् तत्त्वत्रयं पृथिव्यामायाति तदेव=सर्वैः तरुलतादिभिः वनस्पतिभिः ओषधीभिः पशुभिः पक्षिभिर्मानवैश्च गृह्यते। ततोऽधः चन्द्रमण्डलमपि ( सूर्य - पृथिव्योर्मध्येऽन्तरिक्षभागे ) विद्यते ततोऽधोऽस्माकं पृथिवीमण्डलमस्ति इति लोकव्यवस्था। मण्डलानां मध्येऽपि अन्तरिक्षभागो यथा स्वयम्भू-परमेष्ठि-मण्डलयोर्मध्ये "तपोलोकः" । अन्तरिक्षभागः एवमेव परमेष्ठि सूर्यमण्डलयोर्मध्येऽपि "महर्लोकः" अन्तरिक्षभागः। अत्रैवास्ति चन्द्रलोकः यत्र विद्युत्पुरुषो मिलति स एवाग्रे परमेष्ठिमण्डलं नयति योगिनां प्राणोत्क्रमणानन्तरं जीवात्मानम्। तत्रैव क्षीराब्धिश्चापि। सूर्य-पृथिव्योर्मध्येऽप्यन्तरिक्षमस्ति यत्रप्रत्यक्षश्चन्द्रो विद्यते ( चन्द्रमण्डलमिदम् )। एषु लोकेषु सर्वदा यज्ञकार्यं प्रचलत्येव = यज्ञोनाम आदानप्रदानम्। सन्ततमविच्छिन्नप्रवाहरूपेण स्वयम्भूमण्डलात् परमेष्ठिमण्डलमभिव्याप्य सोमः अक्षुण्णधाराभिः सूर्यमण्डले निपतति-तं सोमं स्वतः आहुतिरूपेणाऽऽयान्तं सूर्याग्निः अश्नाति, अतएव सन्ततं जाज्वल्यमान एव विद्यते ततश्च-अत्यधिकमायान्तं सोमं चन्द्रमण्डले, ततः पृथिव्यां, वितरति, सोमेन सहैव गोतत्त्वमायुस्तत्त्वं ज्योतिस्तत्त्वमपि प्रसारयति च सूर्यः। एषैव यज्ञप्रक्रिया। "यज्ञो नारायणः साक्षाद् भगवानिति शुश्रुम।" इति वाक्यात् यज्ञस्य विष्णुरूपत्वमेव=यज्ञादेव समस्तदेवानां रुद्रादीनामुत्पत्तिः। अतो यज्ञात्मकविष्णोर्हृदये रुद्रादयो (शिवादयो) देवा विद्यन्ते।

किञ्च अग्निप्रधानं सूर्यमण्डलं उग्ररूपत्वात् शिवनामकम्। इन्द्रः प्राणात्मकत्वाद्वा = इन्द्रस्य च महेश्वर - रूपत्वात् = सौरजगदन्तर्गत यज्ञस्वरूपस्य विष्णोर्विद्यमानत्वाच्च शिवस्य हृदये विष्णोः स्थितिर्जाता। एवमग्रे सूर्यमण्डलस्याप्युत्पादकम् परमेष्ठिमण्डलम् विद्यते तच्च विष्णुस्वरूपं = परमेष्ठिमण्डलाऽभ्यन्तर एव सूर्यमण्डलत्वात् - विष्णोर्हृदये पुनः शिवः तदग्रे च परमेष्ठिमण्डलमपि स्वयम्भूमण्डलान्तर्गतमिति स्वयम्भूमण्डलस्य च आग्नेयत्वाद्-अग्निस्वरूपस्य नियन्ता महेश्वर एव अतो

महेश्वर मण्डलान्त-र्गतत्वात् परमेष्ठि - मण्डलस्य, पुनः विष्णुः शिवहृदयङ्गतोऽभवत् इति क्रमेण परस्परं शिव-हृदये विष्णुः, विष्णोर्हृदये च शिवः सिद्धयति—

अत एवोक्तम्—"शिवस्य हृदयं विष्णु - र्विष्णोश्च हृदयं शिवः ।
यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः ॥"

यथाऽन्तरं न पश्यामि तथा मे स्वस्तिरायुषीति । इत्यलम् ।

इत्थम् शिवतत्त्व-निरूपणं श्रुत्वा, शिवस्य विष्णुरूपतां, विष्णोश्च शिवरूपताम्, उभयोरेकाकारत्वञ्च श्रुत्वा सर्वे शैवाः ततः प्रभृति सम्भृतां समस्तां द्वेषभावनां स्वात्मनोऽप्यज्ञतां विहाय लब्धविज्ञानदृष्टयः सर्वे मोहिताः प्रभावान्विता भवन्तः सहसा जयघोषपुरः-सरं-प्रवदन्तिस्म :—"रामानन्दः स्वयं रामः प्रादुर्भूतो महीतले ।" विजयन्तां श्रीरामानन्दाचार्याः । इति तेषां समेषां शैवानां तादृशीं स्थितिं विलोक्य श्री वैष्णवा अपि येहि शिवं प्रति कलुषितान्तः-करणा आसन् तेऽपि निर्मल-हृदय "शरदभ्र इवाऽमलाः" संवृत्ताः । तेषामपि भ्रमोऽज्ञानं वा शिवो जीव एवेत्याकारकं, प्रणष्टमभूत् तेऽपि परमतत्त्वमेव शिवं शङ्करं कल्याणमूर्तिमेवा-मन्यन्त ।

पुनश्च श्री रामानन्दाचार्याः सर्वांस्तान् सम्बोध्य बोधयामासुः— ये हि वैष्णवाः शैवा वा स्वकीयामव्यभिचारिणी-मेव भक्ति प्रदर्शयन्तः सन्तो हि-यदि एवं वैमनस्यं कलयन्ति-न हि ते वैष्णवाः नवा शैवाः ने तु पापण्डिनो धूर्ता द्वेषोद्भावकाः भावुकवेषेण क्लेशकरा राक्षसा एव न जानन्ति ते, अभिज्ञा अपि अनभिज्ञा एव । का नाम अव्यभिचारिणी भक्तिः कोऽस्या अभिप्रायः इति सावधानैः श्रोतव्यमेवः—

अयमेवाशयो; अव्यभिचारिण्याः भक्तेः, सर्वत्र यस्मिन् कस्मिन्नपि स्वरूपे स्वकीयस्य इष्टदेवस्यैव दर्शनं कुरुत । अर्थात् तेषु-तेषु अन्यस्वरूपेषु स्वेष्टदेवातिरिक्तेषु-स्वकीयस्यैवेष्टदेवस्यायं विग्रहः इदमपि रूपम्, अयमप्याकारः । इति मत्वैव प्रणमेत् तथैव मन्तव्यम् । यदि श्रद्धा न भवेत् तर्हि तद्रूपेणदर्शनं दातुं प्रार्थयन्तु वा परञ्च भावनया स्वेष्टदेवस्वरूपस्यैव तद्रूपमिति सर्वात्मना व्यवहर्तव्यम् । न निन्देयुर्न द्विषेयुः । इति शम् ।

——

# त्रिपञ्चाशत्तमः परिच्छेदः

इत्थं शिवकाञ्च्यां श्रीशङ्करमाहात्म्यं प्रतिपाद्य ततो विष्णुकाञ्चीं प्रतिप्रस्थातुकामाः श्रीरङ्गनाथधामापि द्रष्टुं समुत्सुकास्ततः शिष्यमण्डलमण्डिता मध्येमार्गं पावयन्तीं कृष्णां सुरनिम्नगासदृक्षमाहात्म्यां समागतां प्रणम्य दिव्य वारि पीत्वा आचम्यच स्नात्वाथ सन्ध्या-तर्पणादिनित्यकर्माणि विधाय नौकाभिश्च तां तीर्त्वा परिक्रम्य परस्मिन् तटे विद्यमानां विष्णुकाञ्चीं प्रावीविशन् ।

तदानीम् तत्र :—[ "शिष्या रामानुजार्यं प्रकटितभगवद्भक्तिसिद्धान्तदीनाः—
क्षीणाऽऽचाराऽनुवृत्ताऽऽचरण - सुकलहद्वेषमात्सर्यपीनाः ।
हीनाः सद्भक्तिभावैः स्वजन-परजन-त्रास-विन्यास-लीनाः
कीनाशाकारवेषाः परिभवनिरताः 'स्वामि' चर्या-विरुद्धाः ॥१॥

तत्रत्याः विष्णोः पूजकवराः परस्परद्वेषविशेषकलुषितस्वान्ता नितान्तं विरोध-प्रतिरोधादिकमेव कलयन्तो दुर्वचांसि व्यवहरन्तः परितः प्रसरन्ति स्म । न ते कामयन्ते स्म यद् भगवतः सेवनं, दर्शन-स्तवनाराधनादिकं किमपि वा कर्म श्रीरामानन्दाचार्यास्तत्रागत्य कुर्वन्त्विति दुर्भावनाभावितसकलव्यापाराः-श्रावं श्रावञ्च तेषां दिगन्तविश्रान्तां प्रशस्तकीर्ति-कल्पलतां वितताम् आकर्ण्य च

श्रीमन्तः— "रामानन्दाचार्य - पादा विविधबुधवरैः शिष्यवृन्दैरुपेताः
जेतारः शास्त्रचर्चाऽप्रतिहतगतिका भूरि विद्वत्सभासु ।
आयान्त्यत्रापि द्रष्टुं स्तव-नति-रतिभिः साधितुं श्रीन्दिरेशं—
क्रुद्धा भीताः शपन्तः प्रगतिमपि ततो रोद्धुकामा यतन्ते ॥२॥

परन्तु न जानन्ति ते भगवतो भक्तैः सह कीदृशं ग्रन्थिबन्धनं भवति । कथं वा भगवद्भगवदीययोः पारस्परिकः प्रणयः ? कीदृग्विधो वा भवति तयोर्व्यवहारः ? सर्वथा भक्तिशून्याः कथं जीवनसञ्चालनमात्रैकलक्ष्या जीवनाधीश-

प्रेमपन्थानं जानीयुः ? अनास्वादितभक्तिरसमाधुर्या वैधुर्यभावनाऽभिभूतभावा वञ्चितप्रणयाः ; यत् — 'द्वारोपान्तमुपागतं प्रियतमा प्रेमोल्लसन्मानसा
प्रेष्ठं प्रेक्षणलालसायितदृगुन्मेषा विशेषोत्सुका ।
न त्यक्तुं क्षमते क्षणं स्वदयितं दृग्भ्यां प्रदत्तक्षणं,
भक्तप्रेष्ठवरस्त्यजेत् कथमिमं भक्तं "सुशीलात्मजम्" । ३।।

सर्वथाऽनभिज्ञा अहरहः कलुषितान्तःकरणाः सर्वात्मना विवेकरहिताः राग-द्वेषसमन्वितक्लेशविशेषविलुप्तसद्भावनाप्रतीका निश्रीका इव समीकाः ससम्भ्रमम्:—

"श्रुत्वा पुर्य्यां प्रवेशं झगिति भगवतः पूजनं सविधाय
द्वारं सद्यः पिधातुं ह्यनवसरविधौ पूजका यत्नवन्तः ।
तत्रत्यौ तौ कपाटावविचलगतिकौ वज्रकीलायिताङ्गौ
जातौ, न मन्दिरोयं कथमपि पिहितुं नैव शक्ता ह्यभूवन् ।।४।।

इत्थं तत्रत्याः पूजका अविज्ञातभगवद्भक्त-माहात्म्याः श्रीस्वामिनां सर्वात्मना भगवदनन्यत्वानभिज्ञाः तेषां भगवन्मन्दिरे प्रवेशमप्यकामयमानाः यथाशक्य प्रगतौ बाधामेवोत्पादयितुं यत्नं चक्रुः परं न जानन्तिस्म ते यत् :—

"श्रीनारायण" एव नैजवदनाऽम्भोजस्रवत्सन्मधु-
प्रेष्ठं पाययितुं यदा त्वरयति प्रेम्णाऽऽह्वयत्यादृतः ।
स्वीयाऽऽस्येन्दुसुधामरीचि-निचयव्याजात् समालिङ्गितुं
वारं वारमुदीक्षते प्रियवरं द्वारं समुद्घाट्य यः ।।५।।

भगवता महाविष्णुना स्वयमेव स्वकीयमन्दिरद्वारं समुद्घाट्य - स्वदर्शनं साक्षात्कारं वा कलयितुमेव सस्नेहं समाहूताय भक्तोत्तमाय परमहंसाय [ श्रीरामानन्दाचार्याय ]. स्वानन्ददानाय भक्तवरागमनं यदा प्रतीक्ष्यते तदा को नाम मानवस्तन्मन्दिरद्वारं पिधातुं शक्तो भवेदितिविचारविमर्शशून्यास्ते द्वारं पिहित कर्तुकामा फलमेव प्रयत्नं व्यदधुः ।

दथाहि:—[ "कस्तं सम्पिहितुं भवेद्धि सफलव्यापारआधारित-
द्वारो मूढमतिर्विवेकरहितोऽनालोकितस्नेहदृक् ।
नोवाऽऽनन्दरसानुभूति विभवीयः शेवधिर्वाञ्छितो-
जानीयात् कथमेव भक्ति[भक्त] महिमानं भाग्यहीनो नरः ।।६।।

सत्यमेतद्-यद् भगद्भक्तिरहितव्यापारः सर्वथा भगवद्गुणगणोद्गीरणानन्द-रसाऽऽस्वादन - परिवञ्चितः संसारसागरमहाऽम्भसां भ्रमनिपतितः रागद्वेषादिघोर-

तरतरङ्गचपेटाऽऽघातशोणितकपोलः - मात्सर्योन्मादमहामहाभोगि - फूत्कार - दूषिताक्षियुगलः कथ भगवत्प्रियवरं सम्पृक्तैकान्तनितान्तस्वान्तं समाराधितनवधाभक्तिविलासोल्लासितसदाचारं विहितभगवद्भक्ति - माहात्म्यप्रचारं भक्तितत्त्व - रहस्योल्लासन-प्रकाशनपारङ्गतैर्विद्वद्वरेण्यैर्निखिल - शास्त्रविवेचनाब्धिमन्थनसमुद्गतनानाविधभक्तिभावोऽऽज्ज्वलरत्नराशिसमलङ्कृतैः पुञ्जीभूताऽद्भुतचमत्कार - चाक - चक्यानवलोकितानन्तमाहात्म्यैः सांसारिकमहामोहान्धविलोचनालक्षितनिजनिजस्वरूपविभवैर्भगवदीयैः सच्छिष्यपटलैः परिवृतं समागतं समाकारितं निजस्वामिना साक्षाद्भगवता महाविष्णुनैवेति श्रीरामानन्दाचार्यस्वरूपं जानीयात् ? अत एव यो हि-सर्वथाऽनभिज्ञः सः कथं परस्परप्रेमभावनाप्रभावं प्रभोर्भक्तस्य वा स्नेहातिरेकं पश्येत् सर्वथा प्रीतिबन्धनाऽनुपभोगी । स्वात्मनो ह्यनभिज्ञत्वमपि न परिचिनोति मूढः । अतो दुश्चेष्टते, प्रियतमयोः पारस्परिकप्रवर्द्धितस्नेहसागरे व्याघातं कर्तुं यतते, परन्तु स्वयं महामहाप्रणयसागरीय-लोलकल्लोलमाला-जालपतितः स्वयमेव खिन्नो भवति ।

यथाहि — भक्त-स्वाम्यनपायि निश्छल समुद्भूतेऽद्भुतप्रेमणि—
प्रीत्युद्रेक-विवेक वारि विलुलद्वीची सहस्राम्बुधौ ।
विक्षेपप्लवमानिपात्य मनुजः क्षोभं समुद्भावयेत्
न व्याघातमुताऽऽत्मघातकलनां कर्तुं यतेत स्वयम् ॥७॥

इत्थम् सर्वात्मना प्रवर्तमानैरपि पूजकवरैः श्रीमद्भक्तवत्सलस्य भगवतो मन्दिरद्वारकपाटौ स्वस्थानान्न विचलितौ वारं वारं विद्धितेऽपि नानोपायप्रयोगे परिश्रममेव विधाय 'तुषावघात' मिव निष्फलं विज्ञाय हताशाः सन्तः श्रीमद्भगवत एव तथविधां दर्शनदानेच्छां ज्ञात्वा भृशं दुःखिताः परवशाः सर्वे पूजकाः—

साश्चर्यं पूजकास्तेऽप्यनुमित सकलस्वामि-माहात्म्यतत्त्वाः,
ज्ञात्वा स्वीयं प्रयत्नं वितथफलगुणं लज्जिता नान्ययत्नाः ।
रामानन्दार्यपादानिह निजशरणीकर्तुकामाः सवामाः,
श्रद्धावन्तः प्रयाता विधिविहितदिशाऽप्यर्चयन्तः सशिष्यान् ॥८॥

श्रीमद्रामानन्दाचार्याणामद्भुततमां काप्यनुषङ्गिनीमपूर्वां सिद्धिमेत्र सम्यक्मुविचार्य भगवतश्चानुग्रहमनुपमेव तदुपरि मत्वा 'भोगीव मन्त्रौषधिरुद्धवीर्याः' सन्तः तेषामेव शरणं श्रेयस्करं मन्यमानाः स्वापराधार्थमपि क्षमां प्रार्थयमानाः सभामाः (सस्त्रीपुत्राः) सर्वे प्रयतपाणयः सपदि तान् शरणीचक्रुः । यथाऽऽचारं यथाकुलाम्नायं आचार्योचितसम्मानैः सगीतवाद्यैः चामरच्छत्र-व्यजनादिचिह्नैः सुभगशिविकावाहन-

द्वारा मङ्गलतूर्यनिःस्वनैः नगराभ्यन्तरतः सोल्लासं जय जयध्वनित-प्रतिध्वनित-सकल-प्रदेशं निजाचार्यविशेषमिव सम्मानसाधनोपस्कारैः सशिष्यांस्तान्, तद्विश्रामस्थलान्मन्दिरपर्य्यन्तमनैषुः ।

तत्रागत्य भगवतो दर्शनमभिवन्दन-स्तवन - नमनादि यथाविधि विधाय तत्रैव मन्दिरप्राङ्गणे एकतः समुच्चासने निःश्रेयस्कामाः सर्वे शुश्रूषवः श्रीरामानन्दाचार्यान् संस्थाप्य तद्वचनामृतपानोत्कण्ठिताःसभामिव विरचय्य समुपदेशार्थं प्रार्थयामासुः ।

श्रीरामानन्दाचार्याः — अयि परम भगवदीया भावुकाः ! एषोस्माकं वैष्णवो-धर्मः सनातनः परम्परागतो वैदिक एव । सृष्टिकाले जीवानां यथैव समुत्पत्तिर्भवति तत्सहक्तैव तेषां सदाचाराणां व्यवहाराणां तदनुकूललौकिकव्यावहारिक - शारीरि-कादिनियमानामप्युत्पत्तिः क्रियते सृष्टिकर्त्रा । सृष्टिर्हि कल्पनानुसारिणी भवतीति नियमात् कदाचित् कस्मिंश्चित्कल्पे भगवत्या जगदम्बायाः सकाशाद्भवति कदाचिच्च रुद्रगणेशादिभ्यः श्रूयते - यतोहि सर्वेषां ब्रह्मरूपत्वात्, ब्रह्मण एव अभिन्न-निमित्तोपादानकारणत्वमभिमतं श्रुतिषु । साम्प्रतिके च कल्पे श्वेतवाराहाख्ये भगवतः परब्रह्मणो ब्रह्मणोः विष्णोः महेश्वरादिति त्रितयस्वरूपत्वात्-विष्णोरेव सृष्टिः प्रवर्तितेति मत्वा साम्प्रतिकी वैष्णवीसृष्टिर्व्यवहृताभूत् । पुनश्च यदा कालकर्मस्वभावादीनामुत्पत्तिर्जाता तेषाञ्च प्रतिजीवं विभिन्नरूपेण व्याप्तत्वात् प्रत्येको जीवः स्व-स्वभावानुकूलमेव व्यहरति समाचरति । परञ्च मूलतः सर्वे वैष्णवा एव वैष्णवो धर्मश्च सर्वत्र प्रसृतो बृहत्कार्ये सर्वसमर्थोऽपि बृहत्कायश्चेति । तदितरे समे धर्मा ये ये मिलन्ति ते - सर्वे वैष्णवधर्मे एव समाविष्टास्तदनुरूपास्तदाकारास्तदाचाराश्च - प्रभवन्ति । धर्मस्यास्य स्वभाव एवैषो यत्स्वात्मनि सर्वानेव पोषयति । न कमपि दूषयति नावमानयति - न द्वेष्टि न वा भिन्नमेव प्रकटयत्येषैवास्य महत्ता । सिद्धान्तश्चास्यैष एव यद् "[आत्मनः प्रतिकूलानि-परेषां न समाचरेत्"] स्वात्मानमिव मनुते स्वेतरानखिलान्धर्मान् । यद्वस्तु स्वात्मप्रतिकूलमस्ति यद्वाऽयं न तदनुकूलं मनुते न तद्वस्तु स्वयमपि गृह्णाति न वाऽन्येभ्योऽपि समुपयुनक्ति । यदात्मनः प्रतिकूलं प्रतीयते तदेवान्येषां कृतेऽपि प्रतिकूलमेव मनुते । यथा गालीप्रदानं स्वात्मानं प्रति कश्चित् कुर्यात् तदसह्यमेव भवति स्वात्मनः कृते एवमेव परेषां कृतेऽपि दुःसह्यमेवेति । अस्यैवापरं नाम भगवद्धर्मः स्वयं भगवता विष्णुना प्रसारितत्वात् । परम शान्ति सौख्योत्पादकत्वात् निष्कण्टकत्वाच्च सर्वग्राह्यः सर्वमान्यश्चेति उक्तम् हि- "एष निष्कण्टकः पन्थाः, यत्र सम्पूज्यते हरिः ।"]
[कुपथं तं विजानीयाद् गोविन्दरहिताऽऽगमम् ।" ] इति ।

यादृशी स्वीयात्मैकभावनाऽस्मिन् वैष्णवे धर्मे विद्यते, न तादृशी भावनाऽन्यत्र कस्मिन्नपि धर्मे विलोक्यते । यथा हि स्वात्मन उपरि कश्चित् शस्त्राऽऽघात [करवाल-

घातं स्वग्रीवायां कुर्यात् ] न तस्य तथाविधं कर्म स्वात्मने रोचते तथान्येभ्योऽपि न रोचेतेति निश्चित्यास्मिन् न कुत्रापि हिंसा प्रवृत्तिः प्रसरति। न हि कदाऽपि कस्मिन्नपि स्थले, काले, व्यापारे व्यवहारेऽपि कस्यचन प्रवृत्तिर्भवति हिंसाया मिति नान्यत्र स्थितिः शाक्त-शैवादिधर्मे-तत्र तु बलिदानादिव्याजेन भवत्येव पशुहिंसा तु। यज्ञादावपि यद्यपि न याज्ञिकी पशुहिंसा, हिंसा भवति, यतो हि देवाधिकृता भवति सा एवमेव शाक्तधर्मेऽपि देव्यै बलिर्दीयते न तत्र स्व-मांसभोजित्व-भावना भवतु तथाऽपि यज्ञनारायणो यथा याज्ञिकेभ्यो यज्ञकृति-त्वेन यज्ञकर्तृभ्यः स्वर्गाद्यपूर्वफलं प्रयच्छति तथैव यज्ञे कृता या पशुहिंसा तस्या अपि पापफलभोगस्तु निर्णीत एव-यावन्ति पशुशरीरे रोमाणि तावद् वर्षाणि पापफलभो-गस्योल्लेखोऽपि शास्त्रेषु मिलत्येव। तथापि पशुहिंसा क्रियते सा वैदिकीति मत्वा, किंवा यज्ञजन्यापूर्वरूप-सौख्यविशेषोपलब्धिर्यावद्वर्षाणां कृते भवति तदपेक्षया पशुरोम-संख्यावधिककालपर्य्यन्तं तत्फलभोगोऽपि लघीयानेवेति वा मत्वा तथाऽऽचरन्ति याज्ञिकाः। किन्तु सर्वं तन्निजस्वार्थसाधनपरमिति त्यज्यते वैष्णवैः। वैष्णवस्तु स्वात्मनः सुख-दुःख-सममेवान्येषामपि जीवानां पशुपक्षिप्रभृतीनामपि मनुते अतो न क्लेशयति कमपि जीवमित्येवैषा विशेषताऽस्मिन्। अतोऽस्माकं वैष्णवोधर्मः सर्वहितकरः सर्वप्रियंकरः सर्वशंकरश्चेति। किञ्च जीवो हि यदा भगवच्छरणागतो भवति ततः प्रभृत्येव तस्य सकलोभारः श्रुति-स्मृति-पुराणोपदिष्टो भगवदधीनो भवति जीवश्च स्वतन्त्रः स्वच्छन्दो निर्भयश्च भवति। यथा मुग्धो बालको न विचिन्तयति हिताऽहितं कस्मिन्नपि कर्मणि स स्वच्छन्दं पावकमपि स्प्रष्टुं करगतीकर्तुञ्च यतते। तदा तस्य जननी जनको ह्यभिभावकः संरक्षकोवा सद्यस्तत्र गत्वा तं तस्मादनिष्ट-साधनकर्मणस्तं दूरीकरोति, रक्षति च तमग्निदाहात्। तथैवाऽस्माकं प्रभुर्यस्य शरणागतिरङ्गीकृताऽस्माभिः सर्वात्मभावेन स एवाऽस्मान् सदसत् कर्मप्रवृत्तान् समये समये रक्षति। पापा-चारान्निवर्तयति चाऽस्मान्। अतः शरणापन्नो जीवस्तु सर्वदा सर्वथा निर्भयं विचरति विहरति च। अतो भगवति यादृशी जीवस्य श्रद्धा भवति तादृश्येव फलदात्री भवति। उक्तमपि—

"मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
श्रद्धा तु यादृशी यस्य सिद्धिर्भवति तादृशी॥"

किञ्च "श्रद्धामयोऽयं पुरुषः यो यच्छ्रद्धः स एव सः।" यथा यथा वय भजामः, भगवानपि तथैव भजति नः। "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।" इति। अतो भगवान् वैष्णवानां भावनाऽनुसारमेव प्रयच्छति फलम्। निश्छलेन भावेन सर्वात्मना सर्वतोऽधिकस्नेहेन समुपास्यो भगवानिति

वैष्णवो धर्मो निष्कण्टकः। धर्मानुसरणतत्परो वैष्णवो न क्वचन विषीदति। न वाऽनुभवति किमपि कष्टम्। भगवदिच्छैव तेषामपीच्छा। भगवान् यत्करोति तत्सर्वं सुष्ठु करोत्येवेति दृढ़ाऽऽस्थावन्तः सन्तो महान्तो, भगवदीया महान्त एव भवन्तीति। उक्तञ्च भागवते—

"तथा न ते माधव तावकाः क्वचिद् भ्रश्यन्ति मार्गात् त्वयि बद्धसौहृदाः।
त्वयाऽभिगुप्ता विचरन्ति निर्भया, विनायकानीकपमूर्धसु प्रभो॥ स्कं. १०, अ २, श्लो. ३३

एतद्विरुद्धं तु येहि भगवद्भक्तिरहिताः तेषामधःपतनमेव भवति। अतो भगवद्भक्ताः वैष्णवाः श्रेष्ठाः श्रेष्ठतमश्चास्माकं वैष्णवो धर्मः। न क्वचन दुःख-सम्भिन्नः प्रत्युत निरतिशयसुखरूप एव।

# चतुःपञ्चाशत्तमः परिच्छेदः

तदानीं तत्र विष्णुकाञ्च्यां भगवन्तं महाविष्णुं प्रणम्य प्रदक्षिणीकृत्य सकल वैष्णवान् सन्तोष्य श्रीरामानन्दाचार्याः श्रीरङ्गधाम गन्तुं समस्त-निजपरिकरपरिलसित साधुमण्डलीकाः, निर्व्यलीकाऽऽचार परम्परापावित-स्वान्तः-स्थलीकाः, निर्भीकाऽऽगमनिगमोद्भावितभक्तिमार्गप्रसारप्रचारनिरताः स्थाने-स्थाने समामायोज्य समुपदिशन्तः "श्रीरङ्गम्" प्रापुः ।

ततः पूर्वमेव तेषामागमनसूचनामवाप्य तत्रत्या जनता तेषां दर्शनार्थं मार्गे रथ्यायां, चतुष्पथे, समवेताः समभवन् । स्त्रियोऽपि स्व-स्वभवनद्वारेषु संस्थिताः लाजाक्षतकुसुमसम्भृताञ्जलयः सुवसनालङ्कारभूषितविग्रहा सुलभसौन्दर्या-तिरेक-मोहित-मनोभवाः द्युलोकसम्भवास्त्रिदशललना इव लसन्तिस्म श्रेणिबद्धाः सुश्रोण्यश्चलत्कुचकलशा लुलिताऽलकाः अलकापुरपुरन्ध्र्य इव राजन्तेस्म समन्तान्नगरं कलयन्तिस्म । वाला वृद्धा युवानश्च स्वस्वनारीनिवहसङ्कुलं श्रद्धानुसारं तन्वतेस्म सुमनो वृष्टिम् ।

सकलमिदमभूतपूर्वसमारोहमालक्ष्य, महदीर्ष्या-कषायिताऽन्तकरणाः प्रवर्तितविरुद्धाचरणाः श्रीमद्रामानन्दाचार्यान् सशिष्यान् श्रीरङ्गनाथमन्दिर-प्रवेशार्थं वारं वारमनेकविवापत्तिमुपस्थाप्य न्यरुधान् । यद्धि श्रीमद्भिः सह भूयांसः शिष्याः जन्मना हीनवर्णोत्पन्नाः कथं त्रिवर्णमात्रप्रवेश्यं, किंवा दूरतो दर्शनाय शूद्राणामप्यधिकारः किन्तु न हीनवर्णानामिति भगवन्मन्दिरं प्रवेष्टुमर्हन्तीति भवानेवैकाकी किंवा द्विजातिसंस्कारसम्पन्नशिष्यैः सहापि प्रविशतु न सकलैः, इति अर्थात् [ "कवीर; रयदासः सेनाप्रभृतिभिस्त्रिवर्णेतरैः ] प्राचीनपरम्परानुसारं नैते प्रवेष्टुं योग्या वैदिकमर्य्यादा-विरुद्धत्वादिति ।

तदानीं श्रीरामानन्दाचार्याः सर्वेषामेषामन्तःकरणाऽभिप्रायं विज्ञाय—जीवानां कर्म-शापादि-वशाद् भूमौ नानायोनिषु जन्मादिर्भवति-वस्तुतस्तु जीवा भगवदीया भगवदंशा न तेषां जननमरणादयो भवन्ति भगवत्सेवायां सर्वथा शक्तिहीन जीर्णं शीर्णञ्च कलेवरं परित्यज्य नवीनमेव शरीरं धृत्वा भगवत्सेवायां प्रवृत्ता भवन्ति भगवदीयाः। न तत्र तेषां कृते लोकातीतानां परमहंसभूतानां भगवद्रूपाणां भक्तानां सांसारिकी लौकिकी मायामोहमयी नीचोच्चवर्णमयी जननमरणादिरूपा शोक-मोह-मानापमानमूला महामाया तानुद्वेजयति नहि ते सांसारिकबन्धने निपतन्ति, अनन्य-शरणा भगवच्चरणारविन्दमकरन्दजुषः सर्वदाभक्तिपुषो दिव्यवपुष एव तिष्ठन्ति यत्रकुत्रापि गृहीतजन्मानो महात्मानः, इति तान् सकलान् तत्रत्यसेवकगणानुल्लासयितुं स्वकीय वास्तविकं स्वरूपं प्रकटयामासुः स्वाभिन्नभगवन्निष्ठविशिष्टशिष्टानां भगवदीयानां शिष्याणाञ्चेति—सस्मितं पुनर्जगदुः—

श्रीस्वामिचरणाः—"भवतु यथा भवन्तः कथयन्ति तथैवाचरिष्यामः वयं न मन्दिरं प्रवेक्ष्यामः। अत्रैव स्थिताः भगवतो दर्शनं विधास्यामः भवन्तस्तु यथासुख स्वस्व-सेवाव्यापारं संलग्ना भवन्तु भगवत्सेवायां मा व्याघातं रचयन्तु सेवा वेलाऽप्यति-क्रामति, मैवं चिन्तां विदधतु।" इत्युक्त्वा तान्-सन्तोष्य तत्रैव द्वारोपरिस्थिता भगवद-नुध्यानं चक्रुः।

यदा हि ते तत्रत्याः भगवत्पूजकाः स्नात्वा यथानियमं भगवदुत्थापनादौ सेवाव्यापारे संरता ह्यभूवन् तदा ते पश्यन्ति स्म यद् भगवान् रङ्गनाथः स्वयं स्वकीयैकासने श्रीरामानन्दाचार्यं संस्थाप्य सस्नेहं समालिङ्गति, तथैव परितो भगवतः सेवायां द्वादशभागवताः भक्तास्तत्रैव निजमन्दिरे समुपासते भगवन्तं श्रीरङ्गनाथं—यथा—अनन्तानन्दाचार्यस्तु ब्रह्मणः[१] स्वरूपेण, सुरसुरानन्दो नारदरूपेण,[२] सुखानन्दः शङ्कर[३] स्वरूपेण, नरहर्यानन्दः सनत्कुमारभूतः,[४] योगानन्दः कपिलाचार्यरूपः,[५] पीपा-ज़ीति साक्षात् मनुस्वरूपेण,[६] कबीरः प्रह्लादरूपेण, भावानन्द-स्तुजनकस्वरूपेण,[८] सेनः स्वयं भीष्मस्वरूपेण,[९] धना बलिराजस्वरूपेण, रविदास[१०] (रैदासः) यमराजरूपेण,[११] गालवानन्दः श्रीशुकाचार्यस्वरूपेणेति[१२] तत्रैव निजमन्दिरे विराजमानाः सर्वे सर्वेश्वरं साञ्जलिबद्धकराः स्तुवन्ति।

इति विचित्रचित्रतममालोक्य भगवद्भक्तमाहात्म्यं सर्वे साश्चर्यं पश्यन्तः समुन्मत्ताः स्तब्धाः रुद्धाः करबद्धाः सन्नद्धा अपि, न प्रभवन्ति स्म किमपि वक्तुं किमपि कर्तुं किमपि व्यवहर्तुं वा। सर्वैः पूजकवर्गैः दर्शकगणैः सेवकपरिकरैश्च सर्वैरेवाऽव-लोकित एषोऽद्भुतश्चमत्कारः।

तदा ते सर्वे विस्मय-विमूढचेतसः सचेतसः सहसा समागत्य मन्दिरस्य बहिर्भागे स्थितान् श्रीमद्रामानन्दाचार्यान् सशिष्यान् चरणस्पर्शपूर्वकं वारं-वारं दण्डवन्निपतिताः गृहीतचरणाः प्रार्थयामासुः—यद् भगवन्तो भवन्तस्तु साक्षादेवा तत्र विराजमानाः सर्वानस्मान् समुद्धर्तुमेव बहिः पृथक् शरीरेण विद्यमाना अत्र भवन्तो भवन्तोऽत्र पदं धारितवन्तः । न वयं जानीमो भगवन्माहात्म्यं भागवतानां लीलावैचित्र्यञ्चेति । क्षमावन्तो हि भवन्ति महात्मानस्तु अतोऽस्मत्कृतमपराधं क्षन्त्वा, मन्दिराऽभ्यन्तरं यथेच्छं प्रविशन्तु । समर्थाः श्रीमन्तः किमधिकं निवेदयामः वैदिकी-परम्परा-मर्यादाऽथ लौकिकी यथा न हीना स्यात् दीनानां दैनन्दिनीपरम्परा चेति तथैव प्रवर्तन्तामिति ।

निवेद्य चैवं समन्वितश्रद्धं प्रवृद्धं प्रेमपुरस्कृत्य समर्चयामासुः सशिष्यांस्तान् श्रीरामानन्दाचार्यान् । जय जयघोषपूर्वकं समुचितसम्मानं व्यदधुः ।

ततस्ते सर्वान् सन्तोष्य श्रीरङ्गनाथमनाथवन्धुं करुणान्धिं समर्च्य सम्प्रार्थ्य प्रणम्य परिक्रम्य च सकलशिष्यगणपरिमण्डिताः श्रीरामानन्दाचार्याः "महीशूरं" महिषासुरपुरं [ मयसूरं मैसूर इति ] प्रति प्रतस्थिरे । मध्ये मार्गञ्चैकत्र कतिचन भगवद्भक्ता सतां महताञ्च सत्सङ्ग-समागमसमाराधनसंरताः हीनवर्णा अपि परमोज्ज्वल वर्णा अस्पृश्या अपि सुस्पृश्यभगवच्चरणाः, संसाराऽऽसक्ता अपि विरक्ताः कामभोगादिष्वपि परमभक्ताः प्रवचनादिश्रवणाऽनुरक्ताः सपदि सम्मुख 'समागत्य समुपदेशश्रवणार्थं प्रार्थयामासुः ।

तेषामभ्यर्थनामाकर्ण्य श्रीरामानन्दाचार्याः सहर्षं सर्वांस्तान् स्वस्वरूपानुरूपं यथास्थानं सुयोग्यमर्यादया संस्थाप्य सप्रेम धर्मोपदेशविशेषं समारेभिरे । आज्ञापयामासुश्च यन्-निखिलेऽस्मिन् संसारे मायामोहपारावारे दुस्तारे समस्ताः कर्मक्षेत्र-व्यस्ताः प्रशस्ता अपि निरस्ता इव नानाविधाऽधिव्याधिपीडिता निरतिशयं सौख्यं कामयमानाः, तदर्थं प्रयतमानाः मानाऽवमानाऽवधारणविरहितचेतसः सचेतसोऽप्यचेतस इव परितो बम्भ्रम्यमाणास्तल्लब्धुमितस्ततो धावमाना एव दरीदृश्यन्ते, नास्त्येकोऽपि तथाविधो जनः योऽहि सन्ततरोगाक्रान्तोऽपि मुमूर्षुरपि क्षणमात्रमपि कथञ्चन सुखानुभूतिः केनाऽपि कर्मणा भवेदित्याशाशतसमाकुलितमानसो नितरां न विचिन्तयेदिति । तल्लब्धये चाहरहः प्रयतते सर्वात्मना । यतोहि संसारे यावत्यः प्रवृत्तयः प्रचलन्ति तासां सर्वासां मूलं सुखाशैव । कश्चन निर्धनो धनं कामयते तु कश्चन रोगाक्रान्तो रोगमुक्तिम् । एकः सन्तानकामुकस्तदर्थं यतते त्वपरः, कामिनी-कामुकः कुक्कुर इव शुनीमन्वेति । तात्पर्य्यमेतत्सर्वो जनः ["सुखं मे भूयात्,

क्वचनदुःखं माभूत्, निरतिशयं सौख्यमेवाऽनुभवेयमिति विचिन्तयति। किन्तु भवति सर्वदा विपरीतमेव-यथायथा जनः सुखलिप्सया प्रयततेऽग्रेऽग्रं धावति तथा तथैव अधिकाधिकं दुःखदावाग्निसन्दग्धः सन् व्यथते। कारणमेतस्यैतदेव, यत् मानवो यत् सुखं, वाञ्छति, यच्च लक्ष्यीकुरुते न तत् सुखं वस्तुतः सुखम्। तत्तु प्रायः दुःखमेव क्षणिकत्वात् क्षणमात्रं सुखाऽऽभासरूपमेव। सर्वं हि लौकिकं सुखं क्षणिकोपभोगनाश्यम्। दुःखग्रस्तम्, दुःखाऽन्तञ्चेति क्षणिकत्वात् मृगमरीचिकेव मोहकं समाकर्षकञ्चेति।

वास्तविकं सुखन्तु सुदूरतरमेव। तत्तु नितान्तं दुर्लभमेव।

उक्तञ्च :—"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।

अभिलाषोपनीतञ्च, तत्सुखम्" (स्वः पदास्पदम्)॥

स्वर्गलोकप्राप्तिरूपं सुखमपि न सुखरूपम् शान्तिप्रदम्। तदपि दुःखमय-मेव-यतोहि-पारस्परिक-स्पर्द्धाऽसूयादिदुःखसम्भिन्नत्वात् न शान्तिप्रदम्। प्रतिक्षण-मुद्वेजकत्वात्। परापहरणादिशङ्कासहस्रसङ्कुलितत्वाच्चेति। अतः सत्यं सुखन्तु तदेव विद्यते यत्प्राप्त्यनन्तरं सन्ततमविच्छिन्नरूपेण सुस्थिरं अविनाश्यं भवेत्। न च क्वचन दुःखसम्भिन्नं स्यात्। [ आदि मध्याऽवसानेऽपि दुःखसंस्पर्शशून्यमेव सर्वदा तिष्ठेत् ] यल्लब्ध्वा मनुजः सर्वदाऽऽनन्दसिन्धुसम्मग्न एव विलसेत्।

एतादृशं सुखन्त्वात्मसुखमेव। यन्मनुष्यः स्वात्मनि विद्यमानमपि कस्तूरिमृग इव स्वात्मगन्धमुग्धमानसोऽन्यत्र तमेव गन्धं लब्धुमन्ध इवेतस्ततो धावति स्वा-ज्ञानात् न च तल्लब्धुं पारयति भ्रान्तोमूढधीः तथैव मानवोऽपि प्राप्तुं समर्थोऽपि स्वकीयाऽज्ञानविजृम्भणविलुप्तयथार्थ-वस्तुतत्त्वो न तल्लभते। सर्वसाधनसम्पन्नोऽपि तज्ज्ञानपराङ्मुखो दुःखमेवाऽनुभवति। यथा पार्श्वस्थ मधुरशीतलगाङ्गवारिनि-भृतकलशोऽपि तदवबोधरहितस्तृषार्त एव तिष्ठति वराको ज्ञानाभावात्। तादृश्येव जीवानां स्थितिः। भगवदनुग्रहविरहिताः प्राणिनः स्वस्वकर्माऽनुकूलं शोकमूलं क्षणिक-मेव सुखं परमपुरुषार्थं मत्वा तत्प्राप्तये प्रयतन्ते। तदेव नाश्यम् विनश्वरं दुःखसम्भिन्नं घोरतरश्रमसाध्यं सर्वस्वं मत्वा स्वप्रयत्नेन लभन्ते च।

उक्तञ्च गीतायाम्—त्रैविद्या मां सोमपाः पूतपापाः, यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।

ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥"

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मृत्युलोकं विशन्ति।

एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥" इति (गी० ९।२०,२१)

इत्थम् यावत् पुण्यं तावत्सुखं, पुण्यक्षीणे च पुनर्दुःखमेति सुखं सर्वथैवानित्यम्। भोगनाश्यम् अन्तवद्भवति। न तत्सुखमक्षय्यमिति। यदि च सुखमक्षय्यं काम्येत तर्हि तथाविधं सुखन्तु भगवच्छरणागति-जन्यमेव। एतदेव हि ज्यायः सर्वज्येष्ठं श्रेष्ठमिति। जन्यमप्यजन्यमिव नित्यं शाश्वतम्। भगवदधीनत्वात्। भगवदधीनो भक्तो न क्वचिन्नश्यति।

"कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति।"

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।

स्त्रियो वैश्यास्तथा शूद्राः, तेऽपि यान्ति परांगतिम्॥ (गीता ९।३१।३२)

यतो हि भगवान् तेषां संरक्षको भवति, वितरति च तेषु तथाविधं बुद्धियोगमपि। उक्तञ्च गीतायाम् (अं० श्लोक १०।१०।११)

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।

ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥

तेषामेवाऽनुकम्पार्थमहमज्ञानजं तमः।

नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता।"] इति।

भगवान् स्वयमेव स्वभक्तस्य कायिक मानसिक वाचनिकादि सर्वविध-पातकानि विनाश्य निर्भयञ्च तं विधाय नित्यानन्दसुखाब्धौ निमज्जयति।

अतो मानवजीवनस्यैतदेव ध्येयम् यत् सर्वात्मना भगवतः शरणागतिं विदध्यात्। तेन जीवः सर्वदुःखेभ्यो निवृत्तः सन् सर्वदाऽऽनन्दमेवानुभवति। न तस्य किमपि कर्मबन्धनम्, नवा संसारो न च पुनः पुनर्जननमरणादि-चक्रनिपतनम्। तत्र तु केवलं भगवतो नित्यसुखानुभूतिरेव। अतो यथाकथञ्चन भगवति मनोयोगो विधातव्यः सर्वात्मभावेन भगवानेव सेव्यः।

उक्तञ्चः—"मय्येव मन आधत्स्व, मयि बुद्धिं निवेशय।" (गीता १२।८)

किञ्च-"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।

मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥"

विशेषतस्तु पुनरुक्तम् भगवता स्वानुग्रहेण—

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।

अहं, त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।"] गीता १८।६५।६६]

अतो भगवच्छरणागतिरेव परमपुरुषार्थसाधनम्। असमर्थस्य जीवस्य अकिञ्चन-जनप्रियो हि भगवान् सर्वात्मना ध्येयो ज्ञेयः समाराधनीयश्चेति। भगवानेव परमपुरुषार्थफलम्। तच्छरणागतिरेव तत्प्राप्तिसाधनश्चेति।

यदि च भगवति कथङ्कारं मनोयोगः स्यादिति चेत् तर्हि भगवान् स्वयमेव तदुपायं निर्दिशति,—"अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय।"

यदि च—"अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव।" (गी० १२।८।११) यतोहि "मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि।" "अथैतदप्यसक्तोऽसि कर्तुं मद्योगमाश्रितः। सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्।" इति परमं सुगमं सुसाध्यं समुपायं समादिशत् करुणावरुणालयः। अतः परं किमन्यत्। भगवता गीतायाः द्वादशाध्याये-शरणागति-साधनानामेव (श्लोक सं० २-२० पर्य्यन्तम्) सम्यग् वर्णनं कृतम्। इत्थं भगवतोऽनुग्रह एवायम्। अत्रैव भगवता सङ्केतितम्, यद्-"भक्तिमान् यः, स मे प्रियः।" इति-तर्हि भक्तिः कथं विधीयेत कैर्वा कर्मभिः, मनुजव्यापारैर्भक्तिः सिध्येत्-तदर्थं साधनान्यपि शास्त्रेषु निर्दिष्टानि—तथाहि—

"महता कामहीनेन, स्वधर्माऽऽचरणेन च। कर्मयोगेन शस्तेन वर्जितेन विहिंसनम्।" मद्दर्शन-स्तुति-महापूजाभिः स्मृतिवन्दनैः। भूतेषु मद्भावनयाऽसंगेनाऽसत्य - वर्जनैः॥ बहुमानेन महतां दुःखिताननुकम्पया। स्वसमानेषु मैत्र्या च यमादीनां निषेवया॥ वेदान्तवाक्यश्रवणान् मम नामानुकीर्तनात्। सत्सङ्गेनार्जवेनैव ह्यहमः परिवर्जनात्॥ कांक्षया मम धर्मस्य परिशुद्धान्तरो जनः। मद्गुणश्रवणादेव याति मामञ्जसा जनः॥"]

अर्थात्—स्वधर्माचरणपुरःसरं निष्कामकर्मकरणेन, हिंसाविरहितप्रशस्तकर्मोपासनया, निरन्तरं भगवतः स्वरूपस्य मन्दिरादौ दर्शन-वन्दन-स्तवनार्चनाभिः, सकलप्राणिमात्रे भगवद्भावनयैव व्यवहारेण, मिथ्याच्छलच्छिद्रपरित्यागपूर्वकं, आसक्ति-अनुरक्तिरहितमेव कर्मकरणेन सकललोकव्यवहारसाधनेन, सतां महतां विदुषां महात्मनां सम्मानसहितेन सेवनेन, दुःखितेषु प्राणिषु दयया, स्वसमानेषु जनेषु च मैत्रीभावेन, यम-नियमादीनां समाराधनेन, वेदान्त - वाक्यानुसन्धानपूर्वकं शास्त्र-पुराणादिवचनेषु विश्वासश्रद्धया, सर्वदा महात्मनां सत्सङ्गेन अहन्ताममतादि स्वात्माभिनादिदोषरहितसारल्येन, सर्वात्मना भगवद्धर्माणां प्राप्तेरभिलाषया, परिशुद्धान्तःकरणः सन् भगवद्गुणानुश्रवणमनन - सङ्कीर्तनादिभिरेव सर्वात्मभावेन भगवदधीनो भगवत्सेवापरायणः स्वात्मानमिव परमात्मानं यदि सेवेत तदा तस्य भक्तिः सिद्ध्यति। सर्वदासर्वभावेन, ऋतुकालाद्यनुसारं स्वात्मनि सुखसाधनोपार्जनाद्यपेक्षा यथा भवति तथा भगवति परिकल्पयेत्। एषैव सेवा, एषैव भक्तिः। तथैव जीवः संसारं प्रबलां वा भगवन्मायां संतर्तुं पारयति। नान्यथेति। नाऽत्र भगवद्भक्तेषु कोऽप्यन्तरायो लौकिकव्यवहारो वा बाधको भवितुमर्हति। किं बहुना स्वस्वमर्यादायां भगवतः सेवां कर्तुं सर्वे प्राणिनः साऽधिकाराः सन्ति। अन्त्यज-म्लेच्छादयोऽपि। यावद्धि ते

भगवद्भक्तौ न समाविष्टा तावत्ते लौकिजन्मग्रहणानुरूपव्यवहार-योग्याः। भगवदनन्यभावे सति तु तेऽपि सिद्धा लोकोत्तरा वा भवन्ति परमार्थदशायां ते सम्मान्याः भगवदीयेष्वेव परिगण्यन्ते, अलौकिक रूपत्वात्तेषां भगद्भक्तौ। किन्तु व्यवहारकालेतु यथास्वभावं यथाभावं जनः स्वस्वभावनानुसारं यदि तैः सह व्यवहरति न ते सांसारिक प्रावाहिकजनैर्विहितं तथाविधं व्यवहारं दूषितं परिगण्यन्ति। अहम्भावरहितात्मत्वात्। यदि तेऽपि तथाविधव्यवहारेण खिन्ना उद्वेजिता वा भवेयुस्तदा तेऽपि स्वलक्ष्यच्युताः स्वसिद्धान्तेन सारल्येन समाराधित-निजभगवदीयत्वेनापि विरहिताः च्युता वा भवन्तीति न ते तथाविध व्यवहारेण बिभ्यति। न वोद्विग्ना भवन्ति खिन्नाश्चेति। भगवद्भक्तौ भक्तिसिद्धान्ते तु तेषां भगवदीयत्वेनैव सर्वदासम्मानम्, स्वयमपि भगवत्सेवां कर्तुं प्रभवन्ति, अलौकिकभक्तिमार्गे. लौकिकेतु लोकव्यवहारानुसारिणी प्रवृत्तिर्मानवानां व्यवहृतिश्च, किन्तु भक्तसमाजेतु तेषां तदनुरूपमेव माहात्म्यम् यथा रविदासादीनाम्। इति।

यच्च भगवन्मन्दिरादौ नान्त्यजानां प्रवेशो लोके इति मर्यादिकानां सर्वदैवाग्रहस्तत्र कारणमिदमेव यत् सर्वदा भक्तिस्तु सर्वेषां कृते समानैव, भगवानपि तथैव न तत्र कोऽपि कमपि निषेद्धुं शक्नोति। किन्तु मन्दिरादीनि तु व्यक्तिगतरूपेण यथा निवासभवनानि जनैः स्व-स्वोपभोग्यानि निर्माप्यन्ते तथैव स्व-स्वोपासनास्थाना तद्रूपाण्येव मन्दिराण्यपि निर्मापयन्ति, अतः स्वेच्छया प्रवेशाऽप्रवेशयोग्य-रूपाणि भवन्ति। न तत्र यथेच्छं सर्वे प्रवेष्टुमर्हन्ति। न भवन्ति तानि सार्वजनिकानि। तानि कतिचन तन्मतावलम्बिन एवोपयुञ्जन्ति। दूरतस्तु यथामर्यादं यथानियमं सर्व एव दर्शनादिकं कुर्वन्ति। अतएव तानि व्यक्तिगतानि, जातिसम्मतानि समाजगतानि जातिगतानि वा कथ्यन्ते। तत्तत् समाजस्था एव जनाः तत्राऽपि परिमिता लब्धाज्ञा एव, अभ्यन्तरप्रवेशार्हा भवन्ति न हि सर्वे समाजगता अपि। तेषां स्व स्वधार्मिक-मर्यादानियमानुसारं तन्निर्धारित-व्यवस्थाऽनुकूलमेवं सकलव्यवहारो भवति न यथेच्छमिति-अतएव तथाविधानि मन्दिरादीनि व्यक्ति-जाति-तत्तत्समाजगतानि स्वतन्त्राणि तन्मात्रैकतन्त्राणि, अभिभावकेच्छाविधानतन्त्राणि वा भवन्ति। न तत्र समेषां येषां केषाञ्चन कृते प्रवेशाज्ञा भवति। अतो नान्यथा भावनीयः परिशङ्कनीयः। भगवत्सेवायामपि स्व-स्वसम्प्रदायानुसारिणी भवति व्यवस्था। केचन साक्षादेव भगवतः श्रीविग्रहं स्प्रष्टुं क्षमन्ते यदा ते तथाविधनियमानुरूपशुचितामापन्ना भवेयुस्तत्स्वरूपा नान्यथा तेऽपि। कतिचन निजमन्दिर द्वारपर्य्यन्तमेव गन्तुं शक्तुवन्ति नाग्रे। अन्येतु निर्धारितस्थलपर्य्यन्तमेव गमनाधिकारिणः। नैवाग्रे गन्तुं प्रभवन्ति। इत्थं यावान् यस्याऽधिकारस्तावानेव स तथा कर्तुं पारयति नाधिकं—न वा न्यूनमिति। नात्र सम-

विषमभावना, बुद्धिर्वा विधातव्या। यतोहि शास्त्रेषु यल्लिखितं पूर्वाचार्यैः महर्षिभिराचारसंहितानिर्मापकैः धर्मगुरुभिर्लोक-वेद-व्यवहार - काल - कर्म-स्वभाव - देशकाल-परम्पराभिज्ञैः स्व-स्वसम्प्रदायप्रवर्तकैराचार्यवर्यैः सद्भिर्महद्भिश्च परमाऽऽप्तैर्जनैर्भक्तिप्रवरैर्भगवदीयैश्च यथाऽनुभूतं तथारचितं यथादृष्टं यथाव्यवस्थापितं यथाचरितं तथैव सम्माननीयं व्यवहर्तव्यञ्चेति। नात्र कुतर्कतर्कवादाः प्रयोक्तव्याः। नवाऽन्यथा शोचनीयाश्च। सर्वैः सर्वथा परम्परायाः परिपालनमेव कर्तव्यम्। व्यवहर्तव्यश्च। यथोक्तम् शास्त्रेषु—

"गर्भागारे तु सेवार्थं वैखानसकुलोद्भवः।
वेदाध्ययनविप्रेण, अर्द्धमण्डपसेवितम्॥

"यतीनां विष्णुभक्तानां महामण्डपसेवितम्।
वैश्यशूद्राऽनुलोमानां ब्रह्ममण्डपसेवितम्॥
शेषाणां हरिभक्तानां गोपुरन्तु विधीयते।
प्रतिलोमाऽन्त्यजातीनां, स्तूपं दृष्ट्वा समाचरेत्॥

अर्थात्—निजमन्दिरे गर्भागारे सेवको हि गन्तुं प्रभुर्भवति नान्यः। अर्द्धमण्डपभागपर्य्यन्तं वेदाध्येता वैदिकः कर्मठो ब्राह्मणो गन्तुं शक्नोति। संन्यासी तथा वैष्णवो जनो महामण्डपस्थलपर्य्यन्तम्, वैश्यः, शूद्रः अनुलोमजातीयस्तु ब्रह्ममण्डपान्तम्, प्रतिलोमजो वा तु मन्दिरस्य वाह्य गोपुरद्वारमुपेत्य मन्दिरशिखरं ध्वजं वा दृष्ट्वा तथाविधसेवापुण्यफलभाग् भवति। यत् पुण्यं साक्षाच्छ्रीमदङ्गस्पर्शपूर्वकं भगवत्सेवकेन लभ्यते तदेव सकलैः स्वस्वमर्यादाव्यवस्थानुसार तत्तत् स्थलपर्य्यन्तं गमनशीलैः गोपुरत एव मन्दिरध्वजदर्शनमात्राऽधिकारिजनैरपि तथाविधमेव फलं समवाप्यते न न्यूनाधिकं, शास्त्रोक्तमर्यादापालनात् सद्भक्त्या सच्छ्रद्धया वा परम्पराऽऽचारपरिपालनाच्च ते तदेव फल लभन्ते स्वस्वधर्मस्थाः)

उक्तञ्च :—"चाण्डालः श्वपचो वाऽपि तादृशाः पुल्कसादयः। } पञ्चरात्रेपाद्मतन्त्रे
प्रतिलोमाऽन्त्यजातीनां स्तूपिं दृष्ट्वा समाचरेत्। } चर्यापादे १८ अध्या

किञ्च:— दर्शनं गेहचूडायाः दर्शनं गोपुरस्य च।
अन्त्यजानां तथाऽन्त्यानां विज्ञेयं देवदर्शम्॥
एवमेव "अन्येषामपि सर्वेषां नराणां मुनिपुङ्गवाः।
पूजा देवालयं दृष्ट्वा प्रणामस्तस्य कीर्तितः॥ इति

इत्थम् शास्त्रवचनैः सर्वेषामधिकार - निरूपणं क्रियते तदनुसारं अन्त्यजानां कृतेतु भगवन्मन्दिरद्वारस्य तच्छिखरस्यध्वजस्य च दर्शनमेव साक्षात् भगवद्दर्शन-

-सदृक्षं फलं पुण्यञ्च प्रयच्छति। न तेषां मन्दिराऽभ्यन्तरे प्रवेशाधिकारो न वा प्रवेशस्यावश्यकतैव।

यच्च— "हीनयोनौ यदा जातो ज्योतिर्लिङ्गञ्च पश्यति।
तस्य जन्म भवेत्तत्र विमले सत्कुले पुनः॥"
[म्लेच्छो वाऽप्यन्त्यजो वापि षण्ढो वाऽपि मुनीश्वराः।
द्विजो भूत्वा लभेन्मुक्तिं तस्मात् तद् दर्शनञ्चरेत्॥" इति]

इत्यादिभिः म्लेच्छाऽन्त्यजानां ज्योतिर्लिङ्गदर्शन - माहात्म्यं यच्छ्रूयते, तदपि शास्त्रोक्तरीत्या यथाऽधिकारानुसारमेव - तथाहि शास्त्रेषु सच्छूद्राणां कृते [सत् स्पृश्य शूद्राणां कृते] तु साक्षाज्ज्योतिर्लिङ्गदर्शनेन यथा मुक्तिर्निरूपिता तथैव असच्छूद्र [अस्पृश्यशूद्र] कृते ज्योतिर्लिङ्गमन्दिरद्वारदर्शनेन किंवा दूरतस्तन्मन्दिर-स्थशिखरोपरि प्रस्फुरतोध्वजस्य दर्शनमात्रेणैव मुक्तिस्तत्करगता भवति। "शास्त्र-प्रामाण्यात्" येन शास्त्रेण दर्शनविधानं निर्दिश्यते तेनैव तत्-तदधिकारवर्णन-मपि विहितमस्ति। अतः तदनुसरणमेव करणीयम् सन्देहेऽपि— "तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्य - व्यवस्थितौ।" (गीता) तस्मिन्नेव निर्देशशास्त्रे लिखितम् यदन्त्यजानां कृते न मन्दिरप्रवेशः अपितु मन्दिरद्वारशरणीकरणमेव पर्य्याप्तम् मुक्तिसाधनमिति। मन्दिरध्वजदर्शनतो द्वारदर्शनत एव वा तत्फलं लभते-ऽन्त्यजः। इति

यदि च मन्दिरशिखरस्थध्वजदर्शनमात्रेणैव शिवलिङ्गदर्शनफलं कथं निरूपितम्? किन्तत्रमानम् तदा स्कन्दपुराणे केदारखण्डे द्वादशाध्याये:— "लिङ्गं शिवालयो ज्ञेयो देवदेवस्य शूलिनः।" इति स्पष्टमेव शिवालयशिखरस्य शिवलिङ्गसमत्वं प्रतिपादितम् शिवालयस्यैव निखिलस्य शिवलिङ्गस्वरूपत्वात्। म्लेच्छानामन्त्यजानां षण्ढा-दीनां पृथक् पृथङ् नामनिर्देशात् सादृश्यमेव।

यत्र च स्पृश्याऽस्पृश्य-विवेचनाप्रसङ्गे, "वृहस्पतिस्मृति प्रभृतौ" लिखितम् यद्धि :-

"कल्याणे तीर्थयात्रायां राष्ट्रक्षोभे च सम्भ्रमे।
देवोत्सवे च दारिद्र्ये स्पृष्टदोषो न गण्यते (विद्यते)॥

किञ्च— "देवयात्रा विवाहेषु यज्ञप्रकरणेषु च।
उत्सवेषु च सर्वेषु स्पृष्टाऽस्पृष्टं न विद्यते।"

इत्याद्यापत्तिकालादौ विवशतया, कारणान्तरेण वा स्पर्शाऽस्पर्श - विवेकः प्रदर्शितः। न सर्वत्र सर्वदा मन्दिरादौ प्रवेशोक्तिः। यदाहि भगवान् यात्रादि प्रसङ्गे नगरप्रदक्षिणाद्यवसरे कदाचन वहिर्भागे उद्यानादौ, जलाशयादौ रथयात्रादौ च

विशेषदेवोद्भवादी बहिः पदं धारयन्ति, तदा सर्वेषामेव यथामर्यादं यथास्थानं स्थितानां शूद्राऽन्त्यजानां म्लेच्छादीनामपि साक्षात् भगवद्दर्शनाधिकारः। सोऽपि दूरत एव। किंवा जनसम्मर्दे परस्परं स्पृष्टाः सेवका अपि-भगवत्सेवाधिकारिणः सेवां कर्तुं प्रभवन्ति। अन्यस्मिन् काले तु सेवकाः परस्परं स्पृष्टाः सचैलं स्नात्वैव भगवत्सेवार्हा एव भवन्ति। इत्यादि विवेचनपराण्येवंतानि वचनानि सन्तीति विवेकः।

एतादृशी सकला व्यवस्था तु व्यक्तिगतरूपेण स्थापितानां भगवतोमन्दिराणां सामाजिकसंस्थारहितानां कृते विद्यते। न तु भगवतो भक्तौ पूजनादिविषये वा। यदि च अन्त्यजादयो म्लेच्छादयोऽपि स्वयं भक्ता भवेयुः समुपासनार्थं स्वेष्टदेवसमाराधनार्थं व्यक्तिगतरूपेण स्वकीयं मन्दिरं निर्माप्य तत्र भगवतः सेवां कुर्वन्तितर्हि ते स्वस्थापित-भगवत्प्रतिमार्चनादिकं साक्षाद्भगवतः सेवार्थं स्पर्शादिकं शृङ्गारादिकमपि कर्तुं साधिकारा एव। न तत्र कश्चन दोषो भगवतः सेवाकरणे। यथा शिवपुराणस्य कोटिरुद्रसंहितायाम् काचनचाण्डाली शिवार्चनां कुर्वन्ती स्वर्गं लब्धवती शिवलोकञ्च गतेती "सम्पूज्यैकाऽथ चाण्डाली शिवलोकं गता द्रुतम्।" इति भृगुसंहितायाम्—

अन्यथातु—"चाण्डालैरन्त्यजैश्चैव तथान्यैः प्रतिलोमजैः।
म्लेच्छैश्च नीचचाण्डालैर्गुरुनिन्दादि दूषितैः॥

"एवंविधैश्च संस्पृष्टे देवागारे विशेषतः। स्पृष्टे प्रवेशने बाधा पूजाकाले च दर्शने॥
स्पष्टं निषेधः। बाधाशब्देन द्योतनात्।

किञ्च शास्त्रविधिं समुत्सृज्य स्वेच्छया यदि व्यवह्रियते तर्हि तस्य उभयमेव नश्यति लौकिकमलौकिकमपि, न पुण्यप्राप्तिस्तत्फलं वा, न च मुक्तिरपि—[ "यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।" इति–] ( गीता० १६। २३ ) तात्पर्य्यमेतदेव-यत्–यत्र–व्यक्तिगतरूपेण जाति ( वर्ग ) गतरूपेण किं वा सम्प्रदायविशेषरूपेण-वैदिकविधानेन-वेदमन्त्रैर्भगवत्स्वरूपप्रतिष्ठापनं, मन्दिरादिस्थापनञ्च भवति तत्र वेदबोधितविधानैः कर्तव्यनिर्देशो मर्यादास्थापनैरेव व्यवहर्तव्यम्। नाणुमात्रमपि ततो विरुद्धमाचरणीयमिति निर्देशात् तादृशेपु–मन्दिरादिषु म्लेच्छान्त्यज-हीनानां सर्वथा प्रवेशनिषेधोऽनधिकारित्वात्। विनैव मन्दिरादिप्रवेशश्रमेण तेषां कृते मन्दिरशिखरशिखरस्थध्वज–मन्दिरद्वारमात्रदर्शनादेव पुरुषार्थसिद्धिः भगवत्प्रीतिः तथाविधपुण्यप्राप्तिः, मुक्तिः स्वतः करगता भवतीति तत्रैव वेदस्मृत्यादौ मुक्तकण्ठेन प्रतिपादनात्। अतः शास्त्राज्ञामवहेल्य (परित्यज्य) न मन्दिरादिप्रवेशहठः कार्यः। इति राद्धान्तः।

यतो हि शास्त्रेषु यद्यद् प्रतिपादितम् तत्सनातनधर्मव्यवस्थापरिपालनाय-सर्वथा सर्वात्मना सर्वेषां सर्वविधजाति - वर्ण - समाजसमुत्पन्नानां सौख्य - शान्ति सम्पादको निष्कण्टकः पन्था निर्दिष्टः। न तत्र कुत्रचन शास्त्रकाराणां लेशमात्र-मपि पक्षपातो दुराग्रहो वा न कस्मिन्नपि वर्ण-समाजे वा मैत्री द्वेषोऽथवा परिकल्प-नीयः। सर्वक्षेमचिन्तकाः हितैषिणो भूतभविष्यद्वर्तमानद्रष्टारः समभूवञ्छास्त्रकाराः प्रत्यक्षमन्त्रार्थद्रष्टारो महर्षय एव ते आसन् तैर्निर्दिष्टो मार्ग एव श्रेयस्करः। "किं कर्म, किमकर्मेति" विवेकरहितानां नानाविधकुतर्कतर्कपराहतदृष्टीनां हिताऽहित-ज्ञानान्धानां कृते तु दिव्यं चक्षुः तन्निर्मितम् प्रकटितं वा शास्त्रमेव। तदुक्त प्रकारा-श्रय एव श्रेयस्करः। इति निष्प्रपचः सिद्धान्तः सर्वसम्मतोऽभिमतश्चेति।

यद्यप्यत्र भवत्येका शङ्का—यद्धि शास्त्रेषु चत्वार एव वर्णा निर्दिष्टास्तर्हि-म्लेच्छाऽन्त्यजादिहीनानां कस्मिन् वर्णे गणना कार्या? इति—

तदुत्तरमेतदेव - यदस्पृश्यानामपि चतुर्थे शूद्र एव वर्णे कृता गणना - यत्—सच्छूद्राः स्पृश्याः असच्छूद्रा अस्पृश्या इति-किं वा द्विविधा भवन्ति शूद्राः। एके "निरवसिताः" अपरे "अनिरवसिताः"।

ये हि निरवसितास्तेऽसच्छूद्रा अस्पृश्या मताः, निरुक्तकारमतेऽपि :—"चत्वारो वर्णाः निषादः पञ्चमः" इत्यौपमन्यवः, इति पञ्चमवर्णत्वमपि। यद्यपि निषादादीनामपि वेदानधिकारात् यज्ञयागादिकरणाऽयोग्यत्वात्—"निषादं, स्थपतिं याजेत" इत्यादि वचनैः स्थपतित्वेन यागकरणयोग्यतानिरूपणमिति मीमांसादौ विवेचितम्। इति सर्वं तत एव उन्नेयम्। इत्थं पञ्चम वर्णत्वमिति सिद्धयति।

एवमेव-अन्त्यजादीनामपि नार्वाचीना सृष्टिः सृष्ट्युद्गमकालिकी समुद्भूतिः। अतो हि सृष्ट्यारम्भे भगवतो मुखाद्ब्राह्मणानां बाहुभ्याञ्च क्षत्रियाणाम्, ऊरुभ्याञ्च वैश्यानां पद्भ्याञ्च शूद्राणामेव समुत्पत्तिस्तदनन्तरं शूद्रेष्वपि तत्तत्कर्मव्यवस्थया नाना भेदाः सञ्जाताः। यथा वेदे नानाशाखाः प्रशाखाः स्वरोच्चारणभेदेन प्रसृताः समभूवन्, तथैव तत्तत्कर्मकलापकलनया विभिन्नाः शाखाः, अवान्तरजातिभेदाः शूद्रेष्वपि संवृत्ताः। तेष्वेवान्त्यजानां निकृष्टकर्मादिकरणत्वेन अस्पृश्यत्वादयो गुणास्ते-ष्वेव सम्प्रवृत्ताः।

नैतेन तेष्ववर्चीनत्वं परिकल्पनीयम्। वेदबोधितत्वात् वेदानाञ्च भूतभविष्य-द्वर्तमानविषयप्रतिपादकत्वाच्च सर्वज्ञत्वाद्यलौकिकविषयबोधनत्वात्, भगवतः निःश्वा-सभूतत्वादनादित्वमेव। तत्प्रतिपादितः वर्णाश्रमादिव्यवस्थायाः, तत्तत्कर्मप्रधानपरक-

जातिव्यवस्थाया अपि निर्धारितत्वात्। परमात्मनः स्वरूपत एव सकलवर्णानां समुद्भूतेः पृथक् पृथक्त्वेन व्यवहारसिद्धावप्येकीभावत्वम्, अनादित्वम्, अपूर्वसम्पादन-सामार्थ्यञ्च सर्वं सुगममेव।

यथा हि—"स्वात्मशरीरेऽपि" तत्तत्कालकर्म-गुणभेदेन स्वात्मनि प्रतिजनं स्पृश्याऽस्पृश्यत्वं भवत्येव किन्तु न यत्र कोऽपि स्वात्मनि भेदबुद्धिं जनयति, स्वशरीरे भेदः कल्प्यते केनापि। यदा पुरीषोत्सर्गकाले स्वशरीरेऽप्यशुचित्वम् अस्पृश्यत्वञ्च समुद्भवति न तथा-विधाऽवस्थो जनः भोजनादिकं, भजनादिकं पवित्रतमं कार्यं कर्तुमुद्युक्तो भवति न स्पृशति च स्वकीयान्यान्यवस्तुजातानि स्वयमपि। न वा शुचिः सुस्नातः सन् न स्पृशति स्वकीयान्यपि पुत्रकलत्र-वस्त्रादीनि वा। एवमेव वर्णाश्रमव्यवस्थायामपि परस्परं वर्णेष्वपि तथाविधो व्यवहारो व्यापारो वा न दूष्यः। न तत्रोच्चनीचभावनाऽपि समुन्नेया मानसे। किम्बहुना-स्वकीये शरीरेऽपि मुखे शीर्षणि हस्त-पादादिषु च मूत्र-पुरीषोत्सर्ग कर्म समर्थेन्द्रियादौ च पारक्यबुद्धिं न कुरुते न वाऽन्यदीयत्व कल्पनाञ्च-किन्तु व्यवहारवैषम्यं तु प्रतिक्षणमेव तनुते। गुदस्पृष्टं हस्तं प्रक्षाल्यैव-सप्त-दशवा वारं मृदा वारिणा च संशोध्यैव=भोजनादौ भोज्यपदार्थान् स्पृशति जनस्तद्धस्तेनेति। तथैव सर्वत्र शूद्राऽन्त्यजादौ ज्ञेयम्। इति।

——

# पञ्चपञ्चाशत्तमः परिच्छेदः

इत्थं श्रीरामानन्दाचार्याः सर्वान् सन्तोष्य स्वकीयं गन्तव्यनगरं महिषासुरपुरं ( मैसूरं ) प्रति प्रातिष्ठन् । ततः पूर्वं तदागमनवृत्तान्तश्रवण सहकृतनगरोल्लास-विकासन - क्रमपरम्परापरिलसित-विविधकदलीस्तम्भपरिराजिताऽशोकाऽऽम्रपल्लवपरि-कल्पितवन्दनमालिकान्तरालमुक्ताफलकलापाकलितललितस्रगवलीं समञ्चितसुमनःपुञ्ज-संशोभिततोरणद्वारविभूषितनिखिल - चत्वर - पण्यवीथीविलसितनगरशोभाविशेष-समुत्पादित-पुरन्दरपुरविलासानि समन्ततो व्यजृम्भन्त । प्रतिप्रासादश्च मङ्गलकलश-शतमण्डितमुख्यद्वाराङ्गणविकीर्ण- विविधवर्णकुसुमसुरभिसंघर्षसंजातामञ्जुलपरिमलोल्ल-सितशीतलसमीर-सुखदस्पर्शपुलकितविग्रहाः सविग्रहा दिविषद इवेतस्ततः सञ्चरणशीला समशोभन्त सन्तो महान्तो विबुधाः नगरनिवासिनः सरससमालापसमुल्लासिनो दर्शन-संमुत्कण्ठिता नरानार्य्यश्चेति ।

आकोणकोणं समस्ते व्यस्तेऽस्मिन्नगरे नैकोऽपि तथाविधः प्रासाद आसीद् यत्रा-शेषमाङ्गलिकसुसज्जा सुसज्जिता न स्यात् । नैकोऽपि गवाक्षमार्गं ईदृशो नयनपथ-पथिकीभूतोऽभवद् यत्र यूथशो ह्यहमहमिकया धावमानाः पुरपुरन्ध्र्यो मिथः सङ्घट्टन-सम्मर्दनोद्भूतपरस्परकटाक्षपातसञ्जनितकलकलं प्रणयकलहं समुद्भावयन्त्योऽग्रेऽग्रं प्रसर्पन्त्यः स्ववदनचन्द्रचन्द्रिकानिचयावदातीकृतराजमार्गाः, सुभग सुलभ कुटिल कटाक्षपातसमुज्जृम्भितमन्मथविकारा नाऽभूवन् । नैकाऽपीदृशी वीथी कैश्चनालोकि, यदत्र मलयजागुरुयक्षकर्दमगुग्गुल - कर्पूर मृगमदसुरभिसुरभितानन्दितयातायातप्रिय-मनुजपटलनासिकारन्ध्रसन्तर्पणोल्लासो न सञ्जातः । इति । किम्बहुना समस्तं नगरं मङ्गलमयमिव, सकला हर्म्यमालिका देवसीमन्तिनी सहस्रसमाराधितसुरपुरविला-सोल्लासावलीका विविध - रत्नराशिसमुट्टङ्किताऽऽभरणपरिमण्डिताङ्गलतिकाङ्गनामय्य इव, अखिलपण्यवीथिका अपि वृन्दारकवृन्दविलासानुसारिविविधप्रान्तवास्तव्यदिव्या-लङ्कारसमलङ्कृतवक्षोविलसितमनुजसम्मर्दं ( मेलक ) मय्यः संवृत्ताः । त्रिभुवनप्रसा-

रिताऽऽलोकनकुतूहलकमनीयकेलिकल्लोलितमानसाः भूर्भुवः स्वर्लोक नागलोकनिवासिनः परस्परस्थापित - सद्भावावलीकाः सकलैकलक्ष्याः श्रीमदाचार्यदर्शनमनोरथाः स्व-मनोरथारूढाः प्ररूढानन्दसिन्धुसम्मग्नस्वान्ताः समपहृतस्वान्तान्तरायाः सहृदयाः सुहृद इव प्रकटितप्रणयाः प्रणयापायकातराः स्वीयाऽऽचार्यदर्शन - व्याजेन परि-कल्पितमहामहोत्सवाः समवेताः समभूवन्। तदानीं नाणुमात्रमपि-स्थानं नगर-स्याऽऽसीद् यत्र सज्जनजनसञ्चारो नाऽभूत्।

नैकोऽपि प्रासाद आसीत् यत् प्रमदापटलप्रमोदप्रमुदितगवाक्षवातायना-ट्टालिकाशतसमलङ्कृतो नाभूत्। नैकोऽपि मार्गः कामिनीकेलिकल्लोलालोलाऽञ्चला-पसरणाऽवलोकितकुचकलशावलोकनकुतूहल-हेलितमनोजमनोजोन्मथितमानसकामुककुल-सङ्कुलोऽपि मर्यादानुरूपसदाचार - परिपालनप्रसारितसद्भावोल्लसितसज्जनजनसम्मर्द-मयो नाऽभूत्। यदा श्रीरामानन्दाचार्यापूर्वदर्शनानन्दमहोत्सवप्रतीक्षापरवशानां सकलभावुकानामालोकनकुतुकानि समभूवंल्लोचनानि।

तदानीमेवाऽधीर - शुनासीरदिगङ्गनाविरहापसारणनिपुणसहस्रकर - करसहस्र-समुन्मेष इव सहसा व्यालोकि लोकलोचनसहस्रैः श्रीरामानन्दाचार्य, प्रसादसुन्दरं सुमुखम्। समश्रावि च संततसमुद्घोषित "जय जयराम" श्रीराम नाम ध्वनिर्ध्वानित-भुवनवलयोऽपसारित दिगन्तरालप्रसृतामङ्गलः सुमङ्गलः।

सुचिरं प्रतीक्षमाणाः निरीक्ष्य निजाभिलषितसिद्धिमिव करगतां, सहर्षं सोत्कण्ठं सानन्दं सपरिकराणामाचार्याणां स्वागतीयसाधनसम्भारैः सर्वविधं स्वागतसमारोहोल्लासमासादयामासुः।

नगरोपकण्ठं वैकुण्ठमिवासीत् सुरम्यं सद्धर्म्यं तत्र सुकृतसुलभसर्वविध-साधनसमाराधितप्रवर्द्धितमनुजमनोविलासललित - राजकीयोपवनमध्यमधिष्ठितंप्रतिष्ठित-प्रासादे समाऽऽकालिता तेषां निवासाऽऽवासव्यवस्था सुस्था।

तत्रैव समागतसकलप्रान्तीयो मानवसमाजः श्रीस्वामिनां प्रवचनोपदेशा-मृतपानसन्तृप्तमानसः सत्सङ्गसमाराधनसौख्यमवाप।

तदानीमासीन् मायावादिनां प्रचण्डः प्रभावः परितः प्रसृतः। श्रीरामा-नन्दाचार्याणामाश्रुत्य "प्रपत्तिः" (शरणागतिः) सकलप्राणिनां परमपुरुषार्थ-सम्पादिनीति-प्रवचनमाशङ्कते कश्चन मायावादी।

मायावादी :—भगवन्! आत्मनः स्वरूपलाभाय किमस्ति साधनम्-भगवतः शरणागतिः (प्रपत्तिः) किमुत ज्ञानम्? इति। यदि प्रपत्तिः स्वीक्रियेत तत्साधनम्,

तर्हि न रुचिरमेतद्, यतो ह्यात्मनो भिन्नं नास्त्यन्यत् किमपि समुपास्यं तत्त्वमिति। यच्चात्मनि या जीवबुद्धिः सा तु मायिकी ( मायाकारणिका )। यतो हि वेदार्थज्ञानेन ( वेदान्तज्ञानेन ) भ्रमात्मिकी जीवाऽज्ञानकल्पिता जीवबुद्धिकरी माया यदा प्रणष्टा भवति, तदा जीवबुद्धिरपि स्वतः समपसृता भवति, तदा यथार्थश्चाऽऽत्मस्वरूपं प्रकाशते। अत आत्मनः स्वस्वरूपलाभाय ज्ञानस्यैवाऽऽवश्यकता भवति न तु प्रपत्तेः। ज्ञानेनैव स्वरूपलाभो न प्रपत्त्येति ?

श्रीरामानन्दाचार्याः—भगवन् ! भवत एषा मान्यताऽपि निराधारा, अज्ञानकल्पिता; न शास्त्रसम्मता नवा युक्तिसङ्गता च। यतोहि—जीवेश्वरयोः शाश्वतिकः सनातनो भेदः, पृथक् कर्मप्रवृत्तिश्चेति।

तत्र श्रुतिः— "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्योऽभिचाकशीति।"

प्रतिपाद्यते चानया श्रुत्या जीवात्मनः फलोपभोगः (तज्जन्य-कर्मफलभोगोवा) परमात्मनश्च केवलं साक्षिमात्रत्वम्, फलोपभोगराहित्येऽपि सर्वदा सर्वथा समन्ततः प्रकाशमानत्वम् वेति। किञ्च :—

शतपथे :—"य आत्मनि तिष्ठन् यमात्मा न वेद, यमयत्येष आत्मानमिति।"
तैत्तिरीये— "अन्तः प्रविष्टः शास्ता जनानाम्।"
गीतायामपि (१८-६१):—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति।"
(१०-२०)— "अहमात्मा गुडाकेश सर्वभूताशयस्थितः।"

इत्यादिभिः, स्पष्टं जीवेश्वरयोः परस्परं भेदः शासक-शास्यभावश्चेति।

यच्च भवदुक्तिः "आत्मब्रह्मणि-जीवबुद्धिर्मायाकल्पिता, साऽप्यज्ञानविजृम्भितैव। यतो स्वयं प्रकाशात्मकस्य ज्ञानस्वरूपस्य निर्विकारस्योपरि कथं मायायाः प्रभावः। मायात्वज्ञानरूपा तमःस्वरूपा, कथं तस्याः स्वप्रकाशमये विज्ञानज्योतिःपुञ्जे निर्विकारिणी कुतोऽविद्याकृतविकारादिसम्भवः समुपाधिवश्यता वेति ?

किञ्च :--ब्रह्मणो मायया सह कीदृशः सम्बन्धः ? सहेतुको निर्हेतुकश्चेति। यदि सहेतुकः, तर्हि हेतुः किं भूतः किं रूपः ? आदौ ब्रह्मणोऽतिरिक्तस्य कस्यापि नासीत् स्थितिः- तत्रश्रुतिः—"स ऐक्षत, नाऽन्यदात्मनोऽपश्यत् "इति स्पष्टं ब्रह्मातिरिक्तस्य निषेधः। तर्हि कुतः समुपलब्धिर्हेतोः।

यदि निर्हेतुकः सम्बन्धः, तर्हि सतु सर्वदैव स्थास्यति निर्हेतुकत्वात् तदा सदैव जीवानां बद्धभावत्वमेव, न क्वचनमुक्तिः ब्रह्मणापि सदैव जीवसादृश्यं बन्धनादिकं, तर्हि समस्तश्रुतिव्याकोपः, अपसिद्धान्तश्च समापतति।

यदि च ब्रह्म, स्वशक्त्यैव स्वाऽविद्यां दूरीकुरुते, तर्हि सर्वदा मायया [अविद्यया] बद्धं ब्रह्म कथं तां नाशयितुं प्रभुः स्यात्। मायाकल्पितो वन्धः कथं समपसरेत्। तदपसारणेऽपि कारणं "मायातो ब्रह्मतश्चेत्य" न्यत् किमपि स्वीकृतं भवेत् तत्त्वसम्भवमेव ब्रह्मातिरिक्तस्यानुपलब्धेः।

किञ्च भवदभिलषितं ब्रह्म-मायायाः स्वरूपमपि जानाति नवा ? जानाति चेत् तर्हि कथं जानदपि ब्रह्म तद्बन्धने निपतति। न कोऽपि पुरुषोऽनिष्टं वस्तु विज्ञाय तस्मिन् प्रवृत्तो भवति पतति वेति। तथापि यदि प्रवृत्तिर्भवति तदा ब्रह्मणः सर्वज्ञत्वं नश्यति।

किञ्च अविद्या हि-परमार्थ-वस्तुनि न दोषमुत्पादयितुं शक्नोतिचेत्तर्हि परमार्थ-वस्तुतत्वे ब्रह्मणि-न मायायाः प्रभावो, जीवादि वुद्ध्युत्पादनसामर्थ्यो वा। यथार्थरूपेणैव ब्रह्मणो ज्ञानमपि सुलभमेवास्ति न तत्र ज्ञानसम्पादनाय-"ईश्वरतत्त्व - परिज्ञानाय" क्वचन "कुशसमित्पाणिर्गुरुं मुनिमुपाव्रजेदिति" व्यर्थम् स्यात्। वाक्यान्येव निरर्थकानि भविष्यन्ति सर्वदाऽनावश्यकानि, स्वत एव निर्मायिक ब्रह्मस्वरूपोपपत्तेः।

अतः स्वीकरोतु भवानपि - ईश्वरे जीवे च परस्परं भेदः स्वाभाविकः—सनातनश्चेति। यतो हि ईश्वरस्त्वेक एव जीवास्त्वनेके। ईश्वरो निरुपधिकः जीवः सोपाधिकः। ईश्वरः शास्ता, जीवः शास्यः। ईश्वरस्तु साक्षीमात्रं जीवस्तु फलोपभोक्ता। ईश्वरः सर्वदा वन्धमोक्षरहितः सर्वदैवैकस्वरूपावस्थितिकः जीवस्तु बन्धमोक्षयोरनुभवं कुरुते।

यदि च जीवानां वहुत्वसंख्याकत्वं, जीव-ब्रह्मणोर्वा भेदश्चेत्युभयमप्युपाधिकृतमेवेति स्वीक्रियेत, तर्हि दुराग्रहाग्रहिलोभवान्। स्पष्टमेवोक्तम्:—

गीतायाम्-[५-२५-२८] लभन्ते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः।
छिन्नद्वैधा यतात्मानः सर्वभूतहितेरताः॥
"कामक्रोधवियुक्तानां यतीनां यतचेतसाम्।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम्॥
"यतेन्द्रियमनो बुद्धिर्मुनिर्मोक्षपरायणः।
विगतेच्छाभयक्रोधो यः मद्भक्तः स एव सः"॥

अर्थात् "निष्पापाभवन्तो द्वैधभावविवर्जिता जितेन्द्रियाः सर्वप्राणिहितेच्छवः निर्जितकामक्रोधादय आत्मतत्त्वविज्ञातारो महर्षयो योगिनो मुनयश्च मननशीला महात्मान एव मोक्षं लभन्ते त एव मुक्ताः।

"नत्वेवाहं जातु नासं, न त्वं, नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ।। (गीताः२।१२)

इत्यादिभिर्जनन-मरणादिकं तु प्रचलत्येव । वयमप्यधुना स्मः पुराप्यास्म, भविष्यत्यपि भविष्याम्येव । यथा शरीरे कौमारं, यौवनं जरादय आगच्छन्ति यान्त्यपि च तथैवाऽयं क्रमोऽस्तोऽत्र न विचिन्तनीयम् । एतेन सिद्धयति यदीश्वरो जीवश्चेति सनातनावुभौ सर्वदा वर्तमानौ च परस्परं भिन्नौ च लसतः ।

किञ्चाधुना-"अभेदप्रतिपादक श्रुत्यनुरोधेनापि-जीवात्मनोऽभेदो यदि स्वीक्रियेत, तदप्यनुचितम् श्रुतितात्पर्य्याऽनभिज्ञत्वञ्चेति सिद्धयति । यतो हि अभेदबोधिकाः श्रुतयो न जीवेश्वरयोरभेदं साधयन्ति । अपितु शरीर- शरीरिभावेनोभयोः परस्परमभेदं साधयन्ति । नहीश्वरतत्त्वे जीवतत्त्वे वाऽभेदं प्रतिपादयन्ति ।

अस्माकं विशिष्टाद्वैतसिद्धान्ते तु भगवान् स्वयमेव कारणं स्वयमेव हि कार्यञ्चेति । यतोहि-कारणावस्थापन्नो भगवान् सूक्ष्मः चिदचिद्विष्टः, कार्यावस्थापन्नो भगवान् स्थूलः चिदचिद्विशिष्टः । सर्वाण्येव भगवच्छरीराणि, "यथा' श्रुतौ, "पृथिवीयस्य शरीरं" "यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद, यमयति च पृथिवी" मिति, "एवं तेजो यस्य शरीरम्" वायुर्यस्य शरीरम्, आपः, आकाशो वा यस्य शरीरम् श्रोत्र-त्वगादीनि च यस्य शरीराणि, इति सर्वाः श्रुतयः सर्वविधशरीरमयत्वादभेदप्रतिपादिकाः भवन्तीति ।

इत्थं श्रीरामानन्दाचार्य - वदनारविन्दनिःस्यन्दितप्रवचनपीयूषपरिषिञ्चनसमुत्पन्नभक्त्यङ्कुरितस्वान्तो नितान्तप्रमुदितो भक्तिभावोद्भावित - भगवच्छरणागतिसुमनःसमूहमण्डितस्तदीयाऽनुग्रहस्वरूप - फलप्रकरपूरितमनोरथः स मायावादी सद्य एव सरसभक्तिमार्ग - प्रवर्तनदीक्षामयसामग्री - सम्भार - सम्भृतसर्वार्थः सपदि शरणागतः सन् पञ्चसंस्कार-समन्वितश्रीराममन्त्रश्रवणपावित-श्रुतियुगलः श्रीवैष्णवदीक्षायां सिद्धसर्वस्वः श्रीसुरेश्वराचार्य नाम्ना सुप्रसिद्धः सिद्धो धर्मोपदेष्टा संवृत्तः । तदानीं तदुदन्तजातशातमाकर्ण्य प्रायः समस्तास्तत्रत्या जनता अपि भगद्भक्तिप्रचारप्रसारे श्रीमदाचार्याणां सर्वात्मना - सर्वविधव्यापारेण कायवाङ्मनोभिः संलग्नाः समभूवन् ।

इत्थं स्वकीयां दक्षिणापथकलितां दिग्विजयिनीं यात्रां सम्पाद्य श्रीस्वामिचरणाः महाराष्ट्रदेशं प्रति प्रस्थापयामासुः । ततस्ते सर्वे महात्मानो निखिलसाधुमण्डलीसहिताः शनैः शनैः पन्थानमतिक्रम्य "रामटेक" पण्ढरपुर प्रभृति स्थानानि चाक्षुषीकुर्वन्तो यदा नासिकस्थलं प्रत्यग्रेसराः समभूवन् तदा मार्गे कश्चन सिद्धमणिनामको

जैनसाधुः समागतः सम्मिलितश्च। स च निजजैनसिद्धान्तनिष्णातो नितान्त-मविश्रान्तशास्त्रार्थदक्षः समागत्य श्रीमदाचार्यान् लक्ष्यीकृत्य प्रावोचत्-यद् "वेदे संसारस्य कर्त्ताऽस्तीश्वरः" इति प्रतिपादितम्। सकलमेतन्मनःकल्पितमज्ञानविलसित-मस्तीति न कोऽपीश्वरः संसारस्य रचयिता। संसारस्त्वनादिः। स्वयं समुद्भूत इति।

तद् घोषणामाकर्ण्यमेघनादगभीरया धीरया वाण्या शान्तभावेनैव श्री-स्वामिनः सरलतमया रीत्या तदुदतरन्ः—

संसारस्येदृशीं नियमितां सुव्यवस्थितां रचनां तदीयां गतिविधिश्च लोक्य न कोऽपि प्राज्ञः एवं कथयितुं शक्नोति यदस्य जगतो न कोऽपि कर्तेति। अरे! प्रत्यहं सूर्याचन्द्रमसौ यथासमयं समुदितः, समयेऽप्यस्तं यातः। यथाकालमेव सर्वर्तवः क्रमेण वसन्तः, ग्रीष्मः, वर्षा, शरद्, हेमन्तः शिशिरश्चेति समायान्ति, यान्ति, विलसन्ति विलासयन्ति, जडजङ्गमजीवोजातम्। पञ्चमहाभूतान्यपि यथावस्थितानि, सञ्चारयन्ति जगद् व्यापारम्। न क्षणैकमात्रमपि भवन्ति विपरीतान्यथारूपाणि। कोऽस्य हेतुः कथमेवं मर्यादितानि विलसन्ति चराचरभूतानि ? भवितव्यं केनाऽप्य-स्य नियामकेनाऽपि। नियामकोऽपि नास्य कश्चन सामान्यो भवितुमर्हति पुरुषः पुराण-पूरुषातिरिक्तः। यो ह्यस्य नियन्ता नियामकः सः सर्वशक्तिमान् सर्वविधसमर्थः कर्तुमकर्तु-मन्यथा वा कर्तुमिति।

किञ्च, सूर्याचन्द्रमसौ-पृथिवी जलतेजोवायवोऽपि सर्वे दृश्यमानाः पदार्था विकारिणः सन्ति न ते नित्या अविनाशिनोवा भवितुं शक्ताः। यतोहि प्रलयकाले तु सर्वेषामुपसंहारो भवति तर्हि तेऽनादिभावयुक्ताः कथं भवितुं प्रभवः। यदि च "स्यादस्तिस्यान्नास्तीति" विचित्रतमसिद्धान्तमनुसृत्य संसारस्य नित्यत्वं यदि साध्यते तर्हि परस्पर विरुद्धधर्मयोर्नित्याऽनित्यपदार्थयोः कथमेकत्रैककालिकी स्थितिः सम्भाव्येत ? यदि च सम्भाव्येत तर्हि यत्र नित्यत्वं तत्रैवाऽनित्यत्वमपि सिध्यति। विरुद्धधर्मयोरैकत्रैवोपलब्धेः। उभयसत्तायां नैकस्याऽप्यपलापः कर्तुं शक्यते ? इति भवत्युभयतो गलपाशः।

अतो योहि विनाशधर्मशाली पदार्थः स अनित्यः कार्यरूपश्चेति। यद्धि कार्यं न तद् स्वयं समुत्पन्नं भवति विना कर्ता, अतस्तस्य कर्ता त्ववश्यं भवितव्यः। कर्तरि सिद्धे तथाविधविचित्रतमस्य संसारस्यापि कर्ता विचत्रतम एव स एवाऽस्माकं विचित्रतमो विरुद्धधर्माश्रयो विचित्रशक्तिमान् ईश्वर एव।

जैनसाधुः—भगवन् तथाविध ईश्वरः स शरीरी विद्यतेऽथवाऽशरीरीति ? यदि च सः शरीरी तदा तच्छरीरं दृश्यमदृश्यं वा ?

स्वामिनः—भगवन् ! भक्तभावनानुरूपविग्रहधारी भक्तवत्सलो भक्तानुग्रहकातरो भगवान् भवति सकलदृग्विषयोऽलौकिकविग्रहवान्, लौकिकविकाररहितः शुद्धो निर्लेपः स्वप्रपन्नजननयनगोचरः स्वानुग्रहैकलक्ष्यभक्तजन-चाक्षुषविषयो भवति न . सामान्यजन-ज्ञानविषयः ।

जैनसाधुः—भगवन् ! यदि भवतामीश्वरः शरीरधारी सन् जगद्-कारणमस्ति तर्हि क्षेत्रेषु तृणगुल्मादीनामुत्पत्तिस्तु सुतरामेव वर्षाकाले भवत्येव न तत्र शरीरधारिण ईश्वरस्यावश्यकता भवति तर्हि कथमीश्वरः सकलजनकः ? इति ।

श्रीस्वामिन :—भगवन् अयमेव भ्रमोऽज्ञता वा भवतः । भवतः पिता भवन्तं प्रतिकारणं भवति । किं पुनः स एव भवतः पुत्रपौत्राणामपि भवेत् समुत्पादको जनको वा एवमेवेश्वरोऽपि ।

ईश्वरस्तु सृष्ट्यारम्भ एव चराचरजगत्सर्जनाऽवसरे सकलवस्तूनि सर्वविधान्युच्चावचानि च वीजानि ससर्ज । ततः सर्वविधेभ्यो वीजेभ्य एव प्रतिवर्षमनवच्छिन्नक्रमेण धारावाहिरूपेण यथाकालं तृणगुल्मादीनामुत्पत्तिर्भवत्येव । अतो मूलरूपेणादिकर्ता त्वीश्वर एवेति नाऽत्र काचन शङ्कोदेति । ईश्वरेण यद्विधानं कल्पितं तदनुसारी सर्जनक्रमः प्रचलत्येवेति सुकरमीश्वरस्य कर्तृत्वम् ।

किञ्च सकलनियामकः स एव । यथा मायिको ( ऐन्द्रजालिकः शैलूषो वा ) स्वेच्छया पुत्तलिकादीनि यथा यथा नर्तयति, तथैव नृत्यन्ति पुत्तलिकाः एवमेवेति सृष्टिक्रमे चराचराणां स्थितिः । जगति सर्वत्र कर्तात्वेक एव भवति नाना कर्तृत्वेतु कार्योत्पत्तिविक्षेपो विभिन्नरुचिकत्वादनेकेषाम् । एक एव भगवान् सर्वान्तर्यामी सर्वव्यापकश्चे ति । क्वचिन्निजधर्मभूत-ज्ञानद्वारा, क्वचिच्च निजस्वरूपद्वारा साक्षाद् विग्रहरूपेण भक्तेच्छा-( भावना ) नुसारं सर्वरूपेण सर्वत्रविद्यमानः ।

एवमेव श्रुतौ : "सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्" इति यद्वर्णितम्-इत्यपि न सामान्यमानवदृष्ट्या, अपि तु वस्तुतोऽनन्तरूपस्य कल्पनातीत वाङ्मनोऽगोचर-स्वरूपात्मकस्य वास्तविकं वर्णनम् । भगवतः सर्वरूपत्वात् सर्वत्रैव स्थितिकत्वात् सर्वनियन्तृत्वात्तथा वर्णनम् । वेदादेव भगवतः स्वरूपोद्‌बोधः । वेदानाञ्च, अपौरुषेयत्वात्, साक्षाद्भगवतो निःश्वासरूपत्वात्, आप्तत्वादलौकिकत्वात् सकलप्रमाणमूलत्वात् स्वत एव प्रमाणभूतत्वाच्च सर्वसम्मतः सम्मान्यो वेदः ।

यच्च वेदे भगवतो विरुद्धधर्माश्रयत्वमपि प्रतिपादितम् भूतं - भविष्याद् वर्तमानमतीन्द्रियत्वादीनां, परस्पर विरुद्धकर्मणां व्यापाराणामपि कथनं-तद्भगवतो

माहात्म्यवोधनार्थं भगवतः सर्वगतत्व-सर्वज्ञत्वादिधर्मज्ञापनार्थं किञ्च सृष्ट्यादौ जगति वितताना पदार्थानां ब्रह्मसृष्टानां पृथक् नाम-रूपयोः कथं परिज्ञानं भवेद् यदि भगवता-स्वयमेव स्वसृष्टानां पदार्थानां नामभिः स्वरूपैश्च परिज्ञानं न कारितञ्चेत् । अतो वेदेषु समेषां भूत-भविष्यद्वर्तमानानां चराचरविततानां नानानामभिर्नानारूपाऽऽकृतिभिश्च प्रतिपादन स्वयमेव भगवता विहितमिति मनुष्यबुद्धया तत्राश्चर्यमसम्भवत्वादिकं प्रतीयते ।

किञ्च वेदेषु विरुद्धाव्यवहृतिर्यत्र दृश्यते तत्रापि कारणपरकमेव सर्वम् । काल-भेदेन, कर्मभेदेन च प्रतिपादितम् । न तु सर्वत्र सर्वदा व्यवहारार्थमिति यथा-"मा हिंस्यात् सर्वाभूतानि" इति निर्दिश्य—"अग्नीषोमीयं पशुमालभेत" । इत्यादिकं यत्र वर्णितम्-तत्राऽनेकदृष्ट्या बोध्यम् । आसीत्समयोऽपि तादृशो यदा सर्वे जनाः मांसाशिनः संवृत्ताः प्रत्यहमेव । तदा तेषां नियन्त्रणार्थमेव यज्ञ-यागादिपर्वणि पशुहिंसाया विधान कृतं भवेत् न तु सर्वदा विनायज्ञादिकर्मणा । तेन दैनन्दिनी हिंसाप्रवृत्तिस्तु तेषां शिथिला स्यात् । तदैव याज्ञिकी पशुहिंसा न तथा दूष्या, यथा केवलं जिह्वालोलुपतयाऽशनार्थं क्रियेत ।

किन्तु हिंसायाः फलमप्यनिवार्यमेवेत्यपि वर्णितम् । यज्ञादावपि क्रियमाणा पशुहिंसा हिंसैव, यथा यज्ञादिभिः स्वर्गाद्यपूर्वसौख्यफलप्राप्तिर्भवति पशुहिंसाजन्या-पूर्वदुष्कर्मफलप्राप्तिरप्यवश्यम्भाविनी इति युक्त्यन्तरेण निषेधोऽपि निर्दिष्टः । किन्तु स्वर्गादिसुखलाभापेक्षया [ यज्ञजन्याऽपूर्वसौख्यलाभाद्यपेक्षया ] पशुहिंसाकर्म-जन्यापूर्वनरकादि-दुःखभोगस्यगौणत्वात्तदपेक्षयाऽल्पकालिकत्वात् समुपेक्ष्यते । परन्तु यज्ञद्वारा यथा स्वर्गादिसौख्यभोगस्तथैव पशुहिंसाजन्यदुःखभोगोऽपि ।

यथा जैनधर्मसिद्धान्तेऽपि "अहिंसा परमोधर्मः" इति वर्णयित्वा दैनन्दिना-ऽऽचार वर्णने-उष्णोदकेनैव स्नानविधिः साधूनाम्-येन शीतलजलस्थाः कीटाणवो विनाशमीयुः । इति कीटाणूनां हिंसाऽपि हिंसैव यथा स्थूला हिंसा तथैवातीन्द्रिय-कीटाणूनामपि सूक्ष्मतमा हिंसा । हिंसातूभयत्रैव भवति तर्हि कथमेकत्र हिंसायाः सर्वात्मना निषेधेऽपि कीटाणूनां हिंसा कृतित्वेन विहिता वर्णिता वा ।

एवमेव जैनसाधूनां कृते स्त्रीणां स्पर्शः सर्वात्मना निषिद्धः । धर्मत्वेन निषेधप्रतिपादनेऽपि यदि काचन नवयुवतिर्येनकेनाऽपि कारणेन स्वशरीरं वह्निसात् कुरुते, ज्वलति चेत्, तत्र तदा जैनः साधुः समुपस्थितश्चेत् सद्यस्तां गृहीत्वा समाक्षिपेत् वह्निदाहात् तां रक्षेत् । इति रक्षाविधाने न युवति-शरीरस्पर्शस्यापि विधानमापतितम् । किंवा जलप्रवाहपतितायाः कामिन्याः संरक्षणमपि गौणो धर्मः, मुख्यश्च कामिनी-

शरीराऽस्पर्शः। तथापि समये मुख्यं धर्मं परित्यज्य गौणधर्मस्वीकारेऽपि जीव-रक्षात्मकोधर्मः सिद्ध्यतीति न दोषभाक्भवति साधुः। एवमेवाऽस्मदीये वैदिके धर्मेऽपि विधिनिषेधयोः परस्परं विरुद्धयोरपि विधानम्।

जैनसाधुः—भगवन्! भवदभिमत ईश्वरः स्वतन्त्रः परतन्त्रो वा? स्वतन्त्रश्चेत् कथं मानवेषु समविषमभावेन व्यवहरति यथा कश्चन सुखी कश्चिद् दुःखीति। कथं न सर्वान् विदधाति सुखमयान्?

श्रीरामानन्दाचार्याः—भगवांस्तु सर्वात्मना सर्वतन्त्रः स्वतन्त्र एव। किन्त्वेको जीवः सुखी, अपरश्च दुःखीति व्यवस्थातु तेनैव सुष्टिकालारम्भ एव सर्वतः प्रथमं सुख-दुःखभोगादयः कर्मानुसारिणो भवन्तीति व्यवस्थापिता व्यवस्था। सतु पुनः कर्मणि प्रवृत्तानां जीवानां नियामकः तत् तत् कर्मानुसारं फलं प्रयच्छति। प्रेरकः प्रवर्तकः फलदश्च सः स्वतन्त्रः। यथा न्यायाधीशो जनान् तत् तत् कर्मानुसारमेव निर्णयं वितरति। तद्वदीश्वरोऽपि। एतेन तु भगवतो न्यायपरायणत्वमेव सिद्धयति न सम-विषमभाववत्वम्।

जैनसाधु:—भगवन्!

रक्ताऽस्थि-मज्जा मलमूत्रसम्भृते, देहे विशुद्धिः कुत एव मज्जनात्।
असंख्य कीटाणु विनाशनं जलात्, स्नानेन पापं नहि शुद्धिरान्तरा॥ १॥

स्नानक्रिया वैदिकधर्मनिष्ठा, पापण्डयोगः खलु वैदिकानाम्।
वाह्याविशुद्धिर्वपुषो मतेयं नाऽभ्यन्तरा, नैव मलाऽपहारः॥ २॥

श्रीस्वामिनः—भगवन्, किमेवं व्यर्थं प्रलपसि, न पश्यस्यात्मानम्।

"श्रुत्वा सकोपं परिभर्त्सयन्तो मलीमसज्ञान - विकुण्ठ बुद्धे!
ययाऽङ्गवल्योत्तमकर्मसिद्धिः क्रियेत, तत्स्नानविधि-र्निषिद्धः?॥ ३॥

वाह्याविशुद्धिः खलु वारिणैव देहस्य जन्तोर्भवति, श्रुतं नः।
सत्कर्मभिः शास्त्रविवेचनाद्यै,-राऽऽभ्यन्तरा सिद्धयति शुद्धिरत्र॥ ४॥

पूर्वं ततः स्नानविशुद्धदेहो वाह्यां शुचिं सन्तनुतां, जलेन।
भवन्मते स्नानविधिर्हि दूष्यः, कीटाणुहिंसाभयतोऽन्यथा न॥॥ ५॥

कीटाणवो वारिगता म्रियन्ते स्नानं न कुर्यादिति यो निषेधः।
विधीयते, यद्, भवता मलानामुत्सर्जनं नाऽऽचरणीयमत्र॥ ६॥

अपान - वायूत्सरणेऽपि देहे कीटाणुहिंसा न हि, सम्भवा किम्?
दुर्गन्धतः प्राणनिरोध एव पार्श्वस्थितानां, किमु नैव हिंसा?॥ ७॥

भवन्मतेऽपि :— "स्वरूपहिंसाऽप्यथ हेतुहिंसाऽनुबन्धहिंसा त्रिविधा मतेयम् ।
प्रत्यक्षदृष्टा प्रथमा, स्वतो या जायेत, सा, कारणतस्तृतीया । ॥८॥

तीर्थङ्करैः शास्त्रविवेचनेन ह्यङ्गीकृता, याऽप्यनुबन्धहिंसा ।
इत्थं न ताभ्यो लभते विमुक्तिं जनोऽधुना भूतलगः कथञ्चित् ॥ ॥ ९ ॥

गेहादि निर्माणविधौ सुचैत्य-देवालयस्थापनसंविधाने ।
याताऽनुयातेष्वशनेऽथ वार्ताऽऽलापेऽनिशं सा भवतीह हिंसा । ॥ १० ॥

पदे पदे स्वल्पतमा तु हिंसा प्रतिक्षणं सा भवतीति दृष्टा ।
सूक्ष्माणुरूपा न विलोक्यते सा ततः फलाऽऽप्तिस्त्वधिका, न दूष्या ॥ ११ ॥

एतादृशी सूक्ष्मतमा हि हिंसा, हिंसास्वरूपा न हि गण्यते सा ।
भवन्मते तद्वदहोऽस्मदीये वेदेऽपि हिंसा न हि याज्ञिकीति । ॥ १२ ॥

हिंसोत्थपापादधिकं तु पुण्यं यज्ञादिभिः संलभते मनुष्यः ।
दुःखाऽधिकं सौख्यमवाप्तुकामा यज्ञेषु पश्वालभनं चरन्ति ॥ १३ ॥

देहेन्द्रियाणां स्नपनेनशुद्धिस्तस्याः प्रभावः पतति स्वचित्ते ।
शुद्धान्तरात्मा सविशुद्धसत्त्वो यत्कर्मकारी फलमेत्यनन्तम् ॥ १४ ॥

ततः स साधुः शरणागतोऽभूत् दीक्षां गृहीत्वा विधिना गुरूणाम् ।
श्रीवैष्णवो भागवताऽऽद्यनन्दः श्रीरामभक्तिं प्रससार भूमौ ॥ १५ ॥

# षट्पञ्चाशत्तम परिच्छेदः

इत्थमनेकविध - विचारधाराप्रवाह - पतितपङ्गुमतीन् कुमतीन् सुमतीन् विधाय, हरिद्वारात्प्रस्थाय श्रीरामानन्दचार्याः श्रीवदरिकाश्रममालोकयितु-मनसोऽपि पञ्चाम्बुप्रान्ते नानाविधधूर्तजनैर्जनप्रतारण - सद्बुद्धिसंहारण - सत्प्रथा-पसारणाकारणवागाडम्बराऽकाण्ड - ताण्डवविरचन - निष्णातवचनविन्यासैर्मोह्यन्ते सरलाः प्राणिनः। मुग्धान् सरसमतीन् प्रतारयन्तः सहस्रशः पाषण्डिनः प्रचरन्ति परितः, प्रवर्तयन्ति च कुपथे स्वेच्छाचार-वर्त्मनि। तत्रत्या जना अपि सन्मार्ग-दर्शकाऽभावे च कुपथमेव सुपथं मन्वानाः धूर्तजनप्रचारित - स्वेच्छाचारापारकूपारे निपतन्ति। नाधुना तत्र तेषां मुग्धप्राणिनां कृते समुद्धारोपायो दरीदृश्यते। प्रायः सर्वे कामयन्ते स्वकीयात्मोद्धरणशरणीकरणोपायमेवेति - कर्णाकर्णिकया संश्रुत्य— वदरिकाश्रमगमनविचारं परिहाय तदुद्धारार्थं पञ्चाम्बु प्रान्तमेव स्वगमनलक्ष्य-मङ्गीचक्रुः।

यथानियमं स्थाने स्थाने धर्मोपदेशान् धार्मिककथाऽऽलापांश्च कलयन्तः किञ्चिद्दूरं पञ्चनदप्रान्ते यदाऽयान्ति स्म तदा राजमार्गे सकलयातायात जनपथे प्रत्यक्षमेव विलोकयतां समेषां कश्चन पापण्डताण्डवनिष्णातो धूर्तराण्मद्यपः स्वयमपि दिगम्बरः सन् कतिचन नग्नास्तथैवाचरिता युवतीः सङ्गमय्य ताभिः समं स्वेच्छाविहारं रचयतिस्म निर्लज्जः। इत्थमभद्रकर्मणि प्रवृत्तं तं धूर्तराज-मालोक्य श्रीस्वामिनस्तं तथा व्यापृण्वानं निरभर्त्सयन्। समीपमेवागत्य सिंहनादेन च तं न्यरुन्धन् हन्त भोः दुर्वृत्त! प्रवञ्चक नीच! पाषण्डिन्! कथमेवं घोरतरं पापाचारं प्रवर्तयसि? यद्दृष्ट्वा स्वयमपि भगवती वसुन्धराऽपि विलज्जते दुर्वृत्तभारभरा।

इति श्रुत्वा निर्लज्जतायाः परां काष्ठामुपगतः सोऽपि दुर्वृत्तो निर्भयं साट्टहासं परिहसन् प्रत्युदतरत् श्रीस्वामिनः—

पाषण्डपण्डितः—अरे रे वैष्णवसाधो ! व्यर्थमेव काषायाऽम्बरधारी भवान् भ्रमति स्वात्मज्ञानविमुखः ? हन्त, खेदाकरमेतत् । नान्यथेत्थमाश्चर्यचकितो मे विहारमालोक्य मां भृशं भर्त्संयेत् ? ज्ञायते, यद् भवान् गीताज्ञानमपि विस्मृतवान् । अरे तत्र लिखितमस्ति—

"नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्छृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपञ्छ्वसन् ॥ गीता ५ । ८-९
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥"

इत्थं सर्वाणि देहेन्द्रियादीनि स्वस्वकर्मणि प्रवृत्तानि सन्ति स्वतन्त्राणि विरहन्ति, न तैः सह आत्मनः शुद्धबुद्धमुक्तस्वभावस्य कश्चन सम्बन्धः, इति शास्त्रोक्तदिशैव निर्णयस्तर्हि नास्ति सन्देहलेशोऽप्यस्मच्चरित्रविषयेऽन्यथाकल्पनायाः शङ्काया आश्चर्यस्य वाऽऽवश्यकता । कीदृशस्त्वं ज्ञानीति ? अरे ! वयन्तु स्वयमेव परमहंसायिताः कंसारातिभक्ताः कौला वा ।

तदा श्रीस्वामिनः—अरे धूर्तराज ! प्रवञ्चक !! दम्भोद्धत !!! न त्वं साधुः । साधुवेषपरिच्छन्नो धर्मध्वंसनतत्पर - परललनासतीत्वहरः स्वेच्छाचारसञ्चरः स्व - स्व - धर्मकर्मलोकलज्जादि - लौकिकव्यापारसंहरः कुकर्मतत्परश्चेति नान्यथाऽऽत्मज्ञानस्येत्थमुपहासं विदध्याः । परमपाविन्या भगवत्याः गीताया उदाहरणानि दातुं पावनानां तत्रत्यानां श्लोकानामस्मिन् दुराचारे पापकर्मणि व्यभिचारव्यापारे दुरुपयोगः क्रियते ? निर्लज्ज ! शठ, धूर्त ! मद्यप ! कर्मेदमात्मज्ञानमयं प्रवर्तयसि विज्ञानपि प्रवञ्चयसि वाग्जालं वितन्वन् मोहयितुं कुचेष्टसे विपश्चितः । किमेतदेव ते ज्ञानम् ? अयमेवार्थः किमु ? अरे तत्त्वज्ञानिनां महात्मनां क्वचन विलोकिता ईदृश्यः प्रवृत्तयः ? ते नु विषयवासनास्य; सुदूरमेव स्थिताः समुद्धारयन्ति जनान्, शोधयन्ति च भवादृशान् मूढान् व्यर्थात्मज्ञानमानिनो दाम्भिकान् । सम्प्रति मैरेयमदमत्तो भवान् न विचिन्तयति शास्त्रतत्त्वम्, न स्थिरा भवति प्रज्ञा कामान्धस्य दुराचारिणः । अरे मदान्ध स्वात्मनिष्ठो भव किमुच्यते भगवता ?

शृणु, [ "ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ ]इति (गीता ५ । २२]
एवं विष्णुपुराणेऽपि :—[ 'यावन्तः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ]

अतो देह्यवधानम् "ईदशानि कर्माणि शोकशङ्करूपाणि भवन्ति "जन्तोः"। त्वञ्चेदृग्दुराचाराणि ब्रह्मज्ञानमिव मनुषे ? हन्त ते दुर्बुद्धेर्विकासः ? त्वादृशानुद्दिश्यैव भगवता बादरायणेनोक्तं कलियुगनिरूपणे—

यतः— [ सर्वे ब्रह्म वदिष्यन्ति सम्प्राप्ते हि कलौ युगे ।
नानुतिष्ठन्ति मैत्रेय शिश्नोदर - परायणाः ॥ ] इति,

श्रीस्वामिनो मुखाच्छ्रुत्वा-संक्रुद्धः सः प्रावोचत्—यन्न वयं ब्रह्मज्ञाः ? केवलं शिश्नोदरपरायणा एव दाम्भिकाः स्मः । किमस्माकं परीक्षां चिकीर्षन्ति !

श्री स्वामिनः—ओम्, यदि सत्यं भवान् ब्रह्मज्ञानी तर्हीदं विषपात्रं गृहाण पीत्वाऽथ प्रकटय स्वकीयं ब्रह्मज्ञत्वम् । [ इत्युक्त्वा विषपात्रं प्रयच्छन्ति स्वामिनः ] तदालोक्य सः स्तब्धो रुद्धः क्रुद्धो भवति वदति च—"किमस्मान् विषं पाययित्वा मारयितुं कामयन्ते भवन्तः । एवं चेन्न वयं ब्रह्मज्ञाः, भवानेव चेत् तर्हि स्वयमेव पीत्वा प्रकटय स्वं पौरुषमिति ।

श्रीस्वामिनः—मन्दस्मितं मधुरं संलपन्तः समेषां समक्षे तद्विषपात्रं-समुत्थाप्य हस्ते धृत्वा—"श्रीरामाय नमः" इति भगवन्नामोच्चारणपूर्वकं सद्यस्तद्विषपानमकुर्वन् । तदानीं सविस्मयं पश्यन्तः सर्वे साधु साधु साध्विति जयघोषं कुर्वन्तो ह्यतिष्ठन् । तद् दृष्ट्वा नितान्तं विलज्जितोऽपि सः सम्प्रति पराजितः श्रीस्वामिनां चरणपङ्केरुह - रसास्वादनलोलुपमधुप इव चरणनिलीनः संवृत्तः । दयालवश्च ते तथाविधमपि दुष्टकर्माणं तं समुद्दिधीर्षवः स्वीचक्रुः । ततः प्रभृति सोऽपि सर्वात्मना श्रीस्वामिनां शिष्यः सन् धर्मतत्परोऽभवत् ।

ततः श्रीमदाचार्याः पश्चाम्बुप्रान्ते धर्मप्रचारं भगवन्नामोपदेशं भगवद्भक्तिप्रसारं कुर्वाणाः क्रमेण "जम्बू" प्रदेशं पारयित्वा काश्मीरं परमरमणीयं प्रकृतिसुन्दरी - विलासोल्लासभाजनं सभाजनं सुरसरस्वतीविलासविलसितां स्वान्तानां विद्वद्वरेण्यानाम् सुखाऽऽवासं निजनयनपथपथिकीचक्रुः । तत्र समभवत् सुमधुरः सरसः समागमः सदागमविचारविमर्शं समुद्भूतानन्दसन्दोहदोहदः समालापश्च त्रिविधशास्त्रनिष्णातैः - पण्डितप्रकाण्डैः सह सहानुभुति - परमभक्तिपरिपुष्टः सन्तुष्टिप्रदः ।

यथानियमं प्रतिदिनं सायंतन प्रवचन - प्रकरणाऽवसरे समुपस्थितोऽभून्मूर्ति पूजा विषयकः संप्रश्नः ।

श्रीनंदाचार्याः—प्रावोचन्–सर्वे भगवदीयाः महामान्याः विद्वांसः श्रोतृ प्रवराः सावधाना भवन्तु - सम्यगवदधतु मूर्तिपूजा विषयिकीं प्रक्रियाम्– अस्माकं वेदे १६ षोडशसहस्रमिताः मन्त्राः भगवदुपासनाविषयकाः सन्ति। जीवानां हि सांसारिक कर्मबन्धनान्मुक्त्यर्थं नास्त्यन्यः कश्चन सरलतम उपासनाऽतिरिक्तः सदुपायः यमाश्रित्य जीवः सद्यो मुक्तिमीयात्। उपासनैव केवलमेका मुक्तिसाधिका। एतदतिरिक्तं नास्ति लोके सरलं सरलतमं सुकरमन्यत् साधनम्। अतः समुपासनैव सर्वथाऽनुष्ठेयेति। साच तदा सुदृढा भवति यदा तस्याः कृते सुदृढः कश्चन "आश्रयः" [ यत्र सा ससुखं सुस्थिरा भवेत् ] भवेत्। तथाविधश्चाऽऽश्रयस्तु, भगवतः स्वरूपम्, बिम्बम्, मूर्तिः सर्वाङ्गसुसज्जिता भवति। यत्र ससुखं मनोनियोगो भवेत्। तद्विहाय नान्यत्र मनः प्रसज्येत्। अत एव प्राचीनाचार्यैः, मूर्तिपूजाप्रकारः प्रचारितः प्रसारितश्च उपासनासिद्धये, मूर्तिपूजैव परमं साधनम्। वेद-कालादारभ्यैव मूर्तिपूजायाः प्रभावेण-सहस्रशो भक्ता भगवतः साक्षात्कारं कर्तुं प्रभवः समभवन्। यतो हि सर्वात्मना यो हि ध्यानविषयो भवति स एव कालान्तरेण सुदृढं मनः प्रसक्तो आभ्यन्तरध्यानगम्यमेव स्वरूपं बहिः स्फुट प्रभवति। योगिनामपि समेषामेषैव परिपाटी, यत् पटीयसी तेषां धारणा स्वलक्ष्यपरिग्रहणे सद्य एव प्रकटयति ध्यानगम्यं रम्यं भगवतः स्वरूपं, स्वरूपानुरूपं प्रत्यक्षमक्षिविषयं लक्ष्मीभूतं तनुते परमानन्दकन्दम्। कुतः पुनः सर्वात्मनाऽनन्यशरणानां प्रतिपलमनन्य भावनामनवरत - ध्याना-वधीरिताऽखिल - लौकिक - पदार्थस्पृहाणां, निःस्पृहाणां, भगवच्चरणारवि-न्दामन्दमकरन्दपानैकस्पृहाणां भगवताऽनुगृहीतानां परमभगवदीयानां सतां महतां वा श्रीवैष्णवराजानां कथा।

इतो विपरीतश्च ये हि मूर्तिपूजां प्रति सर्वदा ह्यविश्वस्ताः, मन्यन्ते वा नित्यं निराकारं सर्वव्यापकं वेश्वरं, ते तु मिथ्याऽभिनिविष्टाः भ्रष्टलक्ष्याः प्रच्छन्न-नास्तिका अनीश्वरवादिन एव। स्वयमेव ते वदतो व्याघातं कलयन्ति। यो हि सर्वत्र विद्यमानः सर्वाधारः सर्वव्यापक ईश्वरः सर्वशक्तिमानपि विद्यते, सः कथं न मूर्तौ विद्यमानो भवति। यदि मूर्तौ न स्यात् तर्हि कथं तस्य सर्वव्यापकता, योहि सर्वव्यापकः स तु सर्वत्रैव, सकलस्थले, समस्तवस्तुनि सर्वकाले सदैव स्थितिमान् भवति सर्वरूपसर्वव्यापकत्वात्। स्यवमेव भगवताऽनेकधा स्वभक्तसंरक्षणाय स्वजन-कथन समाधानीय स्वात्मनः सर्वव्यापकत्वप्रकटनाय सार्वकालिकीं स्वात्मनः स्थितिं

प्रवर्तयितुञ्च पाषाणस्तम्भादिष्वपि स्वस्वरूपस्थितिं साधयितुञ्च नृसिंहरूपेण "प्रादुर्भावः स्वात्मनो विहितः।"

[श्रीमद्भागवते सप्तमस्कन्धे ८।१२।३६ अष्टमाध्याये समस्ते वा]

यथा हि हिरण्यकशिपुः स्वपुत्रं हन्तुं खड्गपाणिः समुद्यतोऽभूत् प्रोवाच च [ "सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते। गोपायेत हरिस्त्वाद्य, यस्ते शरणमीप्सितम् । १२ ॥"

एवं दुरुक्तैर्मुहुरर्दयन् रुषा, सुतं महाभागवतं महासुरः।
खड्गं प्रगृह्योत्पतितो वरासनात् स्तम्भं तताडातिबलः स्वमुष्टिना ॥

[तदैव तस्मिन् निनदोऽतिभीषणो बभूव येनाऽण्ड कटाहमस्फुटत्। अग्रे—

["सत्यं विधातुं निजभृत्यभाषितं व्याप्तिञ्च भूतेष्वखिलेषु चात्मनः।
अदृश्यताऽत्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम् ॥"]

इत्यादिभिः स्पष्टमेव भगवतः सर्वत्रविद्यमानत्वम्। तर्हि कथं न मूर्तौ भगवतः स्थितिः। भगवांस्तु भक्तपरतन्त्रः भक्तभावनाऽनुरूपमेव स्वकीयं रूपं सर्वत्र प्रकटयति प्रकटितः नन् भक्तभावनानुकूलमेव सकलं कार्यञ्च कुरुते।

यच्च केचन कथयन्ति "मूर्तिपूजातु" न प्राक्तनी प्रत्युतार्वाचीनैवेति इत्यपि तेषां भ्रमः शास्त्रानभिज्ञता वा। मूर्तिपूजा नाधुनिकी सृष्टिकालादारभ्यैव प्रचलिता, सा च वैदिककालिकी वेदः स्वयमपि मूर्तिनिर्मापकः।

यथा :— ["ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः सर्वागतिर्याजुषो हैव शश्वत्।
तैत्तिरीयसंहिता— सर्वं तेजः सामरूपं हि शश्वत् सर्वं हीदं ब्रह्मणा हैव सृष्टम् ॥"]

किञ्च मूर्तिनिर्माणविधिमपि दर्शयति भगवान् वेदः समुपासना प्रकरणे मूर्तिनिर्माणं नानाविधैर्विभिन्नपदार्थैः क्रियन्ते भगवन्मूर्तयः। नानामृत्पाषाणादिमयं भगवतः स्वरूपं प्रतिपादयत् वेदो वर्णयति :—( यजु० अ० १३ मन्त्र १८ )
अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे— हिरण्यञ्चमेऽयश्चमे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपुश्च मे, यज्ञेन कल्पन्ताम् ॥"
इति अर्थात् सर्वविध धातुमयविग्रहे भगवान्। भगवतो हि समे पदार्थाः स्वविग्रहरूपा एव। अतः अश्मनः मृत्तिकायाः सुवर्णस्य लोहस्य सीसकस्य-त्रपु-जतु-प्रभृतिपदार्थानामेव येषां केषाञ्चन प्रतिमानिर्माणं विधातुं शक्यते। यथाऽवसरं यथादेशं यथोपलब्धिर्वा पदार्थानां सौकर्य्यं भवेत् तथैव तत्तद्धातुभिर्भगवतो विशिष्टां मूर्तिं विधाय स्वमनोयोगं यथारुचं सुदृढ़तरं कृत्वा भगवतः समुपासना विधातव्या। उक्तञ्च (परिचर्य्याप्रकरणे सूत्र २) :—

["स्नात्वा शुचौ देशे गोमयेनोपलिप्य, प्रतिकृतिं कृत्वा गन्धाऽक्षतपुष्पैर्यथालाभमर्चयेत् ।"] तत्र पाषाणविग्रहे भगवतआवाहनं प्रतिष्ठाकाले :—["एह्यश्मानमातिष्ठाश्मा भवतु ते तनुः । कृण्वन्तु विश्वेदेवा आयुष्टे शरदां शतम् ।" ] (अथर्व० काण्ड २ अनु १३ मन्त्र ४ इत्यादिभिरावाह्य - आसन - पाद्य-अर्घ्याऽऽचमन, स्नान वस्त्राऽलङ्कार-यज्ञोपवीतादिभिः परिमण्डय पुष्प-धूप-दीप-नैवेद्य - ताम्बूल - पूगीफल-श्रीफलसुवर्णदक्षिणादिभिः सम्पूज्य प्रार्थयेत्—ततो भगवान् समुपासकाय वितरति तत्तदभीप्सितानि—निर्दिशति च भगवान् वेदः —

"आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम् ।
परिवृङ्धि हरसामाभिसंस्थाः शतायुषं कृणुहि चीयमानः ।।"-यजुः अ; १३ मं.४१

अर्थात् सुवर्णादिधातुनिर्मितं भगवतः स्वरूप ( भगवन्मूर्तिर्वा ) सम्यक् समाराधितं=शतायुषं कुरुते समुपासकमिति भाव: । शतायुषं कृणुहि इत्यनेन शतायुष्ट्वकामना प्रदर्शिता । अतो ज्ञायते मूर्तिपूजा ततः शतायुष्ट्वादिफल - प्राप्तिः । मूर्तिपूजाप्रकारः प्रचारश्च वैदिको वेदकालत एव प्रचलितः । न त्वाधुनिकः येन साकारब्रह्मणि भगवति सुलभतया मनोयोगः सुस्थिरः स्यात् । इत्थं सर्वाकारः सर्वाधारः सर्वस्वरूपः सर्वव्यापकः प्रभुर्यस्मिन् कस्मिन्नपिविग्रहे [ स्वरूपे मूर्तौ वा ] समाराधितः सद्यो भक्ताऽभीष्टं वितरति । भक्तभावनाऽनुरूपं साक्षादपि प्रकटीभूय भक्तवत्सलो भावयति भक्तं भूरिभावेनेति ।

अत्र ये केचन यथेच्छं मन्त्रभागस्य प्रकृत्यनुसारमर्थं कल्पयन्ति ते त्वज्ञाः क्षम्याः, प्रावाहिका जीवा अज्ञानविजृम्भिताः सदसद्विवेकशून्याः भगवदुपेक्षिताः । तथाविधार्थज्ञानविमूढाः स्वयं भ्रान्ता अन्यानपि मुग्धजनान् व्यामोहयन्ति स्वबुद्ध्यनुसारं श्रुत्यर्थं श्रावयित्वा भ्रामयन्ति जनान् । तेऽपि यथावसरं बोद्धव्याः ।

यथा हि श्रुतिखण्डः—"न तस्य प्रतिमा अस्ति" "सपर्यगाच्छुक्रमकाय" इत्यादीनां यथेच्छं "भगवतः प्रतिमा नास्ति" इति वेदे लिखितम् पुनश्च स ईश्वरः "अकायः" अशरीरी-ति० । किन्तु प्रकरणमनालोक्य प्रसङ्गविमुखाः सन्त एवेत्थं कथयन्त्यनर्थमेव कल्पयन्ति । न ते जानन्ति यत् भगवतो न लोकसामान्या प्रतिमा यथाऽस्मदादीन्नमिति तात्पर्य्यम् । न वा भोगायतनं यथाऽऽस्माकीनं शरीरं कायो वा भगवतो भौतिको वा कश्चन शरीरसम्बन्धः । इति सामान्यजनसदृश लौकिक पाञ्चभौतिक शरीरस्यैव निषेधः न त्वलौकिक मायातीताऽप्राकृतगुणगणविशिष्ट-सच्चिदानन्द - घनविग्रहग्रस्य । किञ्च भगवान्नैकविधाऽऽकारवान् नैकविधतनुधारी, तर्हि कथं निर्णीयेत यदेकविधः, एवंविधशरीरवान् वेति । सत्वनन्तविध कायरूपोऽनेक-

विधाऽऽकारवानिति नेत्थंभूतत्वेन परिगणितुं वर्णयितुं वा शक्यते। अतः स्थाने स्थाने वेदेऽपि प्राकृत-हेयगुणविशिष्टशरीरराहित्यमेव भगवति वर्णितमस्ति। प्रत्युत विशेषेण वर्णितमस्ति-यत्- "प्राकृतधर्मानाश्रयः, अप्राकृतनिखिलधर्मरूपः" इति।

एवमेव जनाः केचन ब्रह्मणः स्वरूपं साकारं मन्वते कतिचन च निराकार-मेव। तत्रापि ते भ्रान्ता एव। नैकविधमेव भगवतो रूपम्। इति सर्वत्र स्थाने स्थाने स्पष्टीकृतं वेदे "द्वे वाव ब्रह्मणो रूपे-मूर्तञ्चैवाऽमूर्तञ्चेति"] [शतपथ ब्राह्मणे १४।५।३।१] मूर्ताऽमूर्तरूपेण द्विविधमेव भगवतः स्वरूपम्। अर्थात् सगुणं मूर्तम्, निर्गुणममूर्तमिति। सगुणनिर्गुण-स्वरूपो हि भगवान्। विरुद्धधर्माश्रयश्चेति विरुद्ध-धर्माधारः, अतएव प्राकृतगुण-धर्मविहीनः। ["नारायणोपनिषदि"—] "अन्यत्र नैकस्थलेः "अपाणिवादो जवनो ग्रहीता०"। इति

पुराणेष्वपि "आनन्दमात्र-कर-पाद-मुखोदरादि०","सहस्रशीर्षा पुरुषः सहस्राक्षः, सहस्रपाद्" इत्यादि विरुद्धधर्माश्रयत्वमेव प्रतिपादयन्ति श्रुतयो भगवतः।

अतः सिद्धयति यद् भगवान् निराकारः साकारश्चेति। निराकारस्यार्थस्तु पूर्व-मपि विस्तरेण विहितः-यत् निर्गता आकाराः यस्मात्। नानाविधा आकारा यत एव निर्गता निःसृता अतः स निराकारनामभाग् व्यवहृतः। एवं हि निर्गताः गुणा यस्मात् स निर्गुणः। यथा हि भागवते- "सत्त्वं रजस्तम इति निर्गुणस्य गुणा-स्त्रयः। स्थिति-सर्ग-निरोधेषु गृहीता मायया विभोः", इत्यनेन स्पष्टं प्रकटितं यन्निर्गुणः सः, तर्हि त्रयो गुणाः कुतः समायाताः, कथं वा निर्गुणाद् ब्रह्मणो मायया गुणा गृहीताः। निर्गुणस्य गुणास्त्रयस्तु माययैव गृहीता शेषा गुणा भगवत्येव विद्यमाना यथावस्थिता एवासन्। अतः सगुण एव निर्गुणनामधारी जातः। अतोऽनन्तरूपे अगणितानन्दमये भगवति श्रीरामे स्वचेतो निवेश्य धारणा-ध्यान-समाधीन् कल्पयन्ति मुनयो महर्षयश्च त एव सुस्थिरसमाधिभाजो भवन्ति। अतो यस्मिन् कस्मिन्नपि स्वरूपे सगुणे स्वप्रिये भगवद्रूपे स्वकीयं मनो निवेशयन् जनः कृतकृत्यो भवति नान्यथेति सगुणोपासनैव वरीयसी श्रेयस्करी सद्योमहाफला च, न तथा निर्गुणेऽव्यक्ते विहितोपासना—।

तदर्थन्तूक्तमेव गीतायाम् १२।५—"क्लेशोऽधिकतरस्तेषामव्यक्ताऽऽसक्तचेतसाम्"।

इत्थम् प्रत्यक्षसाधनाश्रयं सगुणाऽऽकारं भगवत्स्वरूपं विना न क्वचन मनोयोगः सुस्थिरो भवति। साकारं परमरमणीयं भक्तमनोभावनाऽनुकूलस्वरूपं विना मनसः स्थिरीकरणम् दुःसाध्यम्। अतएव मूर्तिपूजायाः प्रकारः प्रचारश्च विहितः। मूर्तौ च न प्रस्तरभावना करणीया न वा धातुमय्यां मूर्तौ सुवर्ण-ताम्रादि-भावना

भावनीया । तत्र तु वेदमन्त्रैः सम्यक् प्रयुक्तैः, सर्वात्मभावेनाऽऽवाहितो भगवान् सुप्रतिष्ठितः साक्षात् स्वरूपेणाऽवस्थितश्चेतनात्मको भक्तकामनापरिपूरकः प्रभुः सर्वदा विराजमान एव भक्तेच्छानुसारं सर्वविधं मानवप्रयुक्तं पूजनादि-सामग्रीसङ्कलनं सेवाप्रकारं समर्पितनैवेद्यादिकं महाभोग राजभोगादिकं सर्वं गृह्णाति सर्वमङ्गीकुरुते समुपभुंक्ते । पुनः स्वानुग्रहेण भक्तोपकाराय तथैव सर्वविधां सामग्रीं स्वप्रसादीकृतां तथैव परिपूर्णां स्वकीयाऽधरामृतसञ्जुषां सर्वतोऽधिकाऽऽस्वादपरिपुष्टां परिकल्पयति भगवान् भक्तजनपरिपोषणायेति ।

एषैव समाराधना युगयुगेभ्य एव प्रचलिता समायाता यथा त्रेतायुगे भगवान् श्रीरामः स्वयमाज्ञापयति विभीषणम्—यत्—वाल्मीकीय रामा० उत्तरकाण्डे—
"किञ्चान्यद्वक्तुमिच्छामि राक्षसेन्द्र महाबल । आराधय जगन्नाथमिक्ष्वाकुकुलदैवतम् । आराधनीयमनिशं देवैरपि सवासवैः"] (उ० काण्ड १०८।२८,२९)

किञ्च—रावणस्तु स्वयमेव मूर्तिपूजकः परमोपासक आसीत् । स च सुवर्णमयीमेव मूर्तिं सर्वत्र नयति—

यथा—"यत्र यत्र च याति स्म रावणो राक्षसेश्वरः ।

जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ।।"]

एवं द्वापरे एकलव्यो भिल्लकुमारो द्रोणाचार्यस्य मृण्मयीं मूर्तिं परिकल्प्य शस्त्रविद्याऽभ्यासं कृतवान् । अतः सर्वस्मिन् युगे सर्वस्मिन् काले मूर्तिपूजा प्रचारिताऽऽसीत् परम्परातोऽद्यापि भारतेतु प्रचलत्येव ।

एवमेवाऽन्यत्रापि नास्तिकादीनामपि गृहे कस्याऽपि स्वप्रियस्य पूर्वपुरुषस्य, किंवा स्वाऽभिलषितकान्तस्य च प्रतिकृतिः सर्वे सर्वत्रैव स्व स्व मनोमोदार्थं रक्षन्त्येवेति प्रकारोऽपि रूपान्तरेण मूर्तिपूजा-विधान-बोधकः ।

यतो हि-भगवान् जड जीवान्तर्यामिरूपेण किंवा चराचरजगद्रूपेणैव तिष्ठति तर्हि यः कोऽपि कमपि पुरुषविशेषं कामिनीनिर्विशेषं प्रस्तरशेषं रत्नादिकं धातुमयीं-प्रतिमां वा स्वप्रियां विधाय सेवते सम्मानयति समुपास्ते वा तन्मूर्तिपूजैव ।

इत्थं मूर्तिपूजाविषयक-प्रवचनानन्तरं श्रीमदाचार्याः जनतायाः भावनां विलोक्य सनातन-सदाचार - परिपालन - परिपाटीं प्रति प्रबलेच्छां किं तावच्छ्राद्धं कर्मेति जिज्ञासां वा पूरयितुकामाः शास्त्रोक्तविधानक्रमेण श्राद्धकर्मविवेचनं समारेभिरेः—
महर्षिमरीचिः—

"प्रेतान् पितृंश्च निर्दिश्य भोज्यं यत् प्रियमात्मनः ।
श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्तितम् ।। इति ।।

अर्थात् स्वात्मनः परमप्रियं यादृशं मधुरातिमधुरं यद् भोजनं भवति तदेव स्वपितृ-नुद्दिश्य ब्राह्मणेभ्योऽग्नये, गोभ्यः अतिथिभ्यश्च परमया श्रद्धया यद् दीयते यस्मिन् कर्मणि, तत् कर्म श्राद्धं भवति । एवमेव ब्रह्मपुराणेऽपि—

"देशे काले च पात्रे च विधिना हविषा च यत् ।
पितृनुद्दिश्य विप्रेभ्योदत्तं, श्राद्धमुदाहृतम् ।।"

उभयोः समान एवाशयः । पितृणां तृप्तिहेतवे श्राद्धकर्म विधीयते ।

तत्र श्राद्धकरणे को हेतुः, किमर्थं क्रियते च सः इत्यस्य स्पष्टीकरणमेतत्-यज्जीवात्मा-स्वोत्क्रमणकाले शरीरमिदं परित्यज्य यदा गच्छति तदा तस्य शरीरस्य भावनामयमनुशयं गृहीत्वैव निःसरति जीवः तस्यैव "अनुशयस्य" अपरं नाम "श्रद्धा" अपि । सैव अनुशयरूपा श्रद्धा समयानुसारं ह्रसति-तस्याः पूर्तये तस्य जीवात्मनः पुत्र-पौत्रादिभिः यत्क्रियते तदुद्देशतो ब्राह्मणभोजनादिकं पिण्डप्रदानादिकं वा कर्म तदेव श्राद्धं भवति । तस्यैव नाम श्राद्धमिति, संक्षेपः ।

श्राद्धमपि द्विप्रकारकं भवति, सपिण्डं, पिण्डरहितञ्चेति । पिण्डद्वारा पूर्वजानां शारीरिकी न्यूनता दूरीक्रियते । चन्द्रादिलोके पितृलोकेषु वा ये वसन्ति पितरः ये च तत्रस्थिताः कामयन्ते स्वपुत्रपौत्रादि प्रदत्तमन्न-तोयतिलाञ्जलि प्रभृति (श्राद्धान्नादिकम) तेषामक्षयतृप्तिहेतवे हि श्राद्धादिविधानम् । अतो वेदादीना-माज्ञानुसारं तत्तत्कुलजाता सन्ततिः समेषां शारीरिक्यादिसम्पत्ति पूरयितुं श्राद्ध-माचरति । तथाहि-भौतिक शरीरत्यागानन्तरं-शरीरस्य च वह्नौ भस्मीभूततां गते सति तत्कर्तृकं किमपि कर्तुमसमर्थे च पित्रादौ लब्धसूक्ष्मशरीरेऽपि क्रमेण प्रकृतिज-न्या क्षतिर्भवत्येव तत्पूर्तये ते त्वसमर्थाः स्वयं तां पूरयितुमतः स्वपुत्रादिदत्तान्नजला-द्यपेक्षिणस्तिष्ठन्ति । अतः पुत्रादयः पिण्डप्रदान्नादिभिस्तां क्षतिं पूरयित्वा-प्रार्थयन्ते च स्व स्व पितृन् पुत्रादयः—[अथर्ववेद १८।४।४—]

"यद् वो अग्निरजहादेकमङ्गं, पितृभ्यो गमयन् जातवेदाः ।
तद व एतत् पुनरप्यायययामि साङ्गाः पितरः स्वर्गे मादयध्वम् ।"

अर्थात भोः भोः पितृलोकगताः पितरः । अग्निना जातवेदसा भवतां पाञ्च-भौतिकं शरीरमिहत्यमिहैव भस्मसात्कृत्वा भवन्तः पितृलोकं प्रापिताः जातवेदसा

प्रेषिता हि सूक्ष्मशरीरधारिणः पितृलोके स्थापिताः, पुनर्वः सूक्ष्ममेव शरीरमिद-मनेन पिण्डादिप्रदानेन सर्वाङ्गसम्पूर्णं कलयामि अतो भवन्तः साङ्गाः सन्तः स्वर्गे लोके मोदमानास्तिष्ठन्तु। अत्रेदमाकूतम् यत्-"सप्तदशतत्त्वात्मकं सूक्ष्मशरीरं गृहीत्वा पितरः स्व-स्व प्रवृत्त्यनुरूपं यथायोगं यथातपः-निजनिजबुद्धिप्राण-मनः प्राण-प्राबल्यात् केनापि यथा-देवयानेन, किंवा पितृयानेन अर्चिरादिमार्गेण किंवा धूमादिमार्गेण यदा यान्ति-सूर्य-चन्द्रादिलोकान् (पितृलोकान् वा) तदा तेषांमध्ये ये योगिनो भवन्ति तपस्विनः संन्यासिनो वा, येषां च बुद्धितत्त्वं बुद्धिस्थः प्राणो वा प्रबलो भवति ते तु साक्षात् स्वबुद्धिस्थ प्राणस्य-अग्निरूपत्वात् तैजसत्वाच्च स्वसमष्टिं तेजःपुञ्जं सूर्यं प्रति तदाकृष्टाः यान्ति। तेऽपि स्वयं तेजोरूपाः सन्त सूर्यमेवाऽभिगच्छन्ति, न तत्र तेषां कृते सोमस्याऽपि न्यूनता भवति अतस्ते तु न कामयन्ते पुत्रादिभ्यः पिण्डा-दिकं श्राद्धादिकं किमपि, न वा भूतादिषु वायुप्रभृति कोऽपि तान् मार्गे निरोद्धुं शक्नोति सूर्यस्य साक्षादेवाऽऽकर्षणात्। अतएव दण्डिनां संन्यासिनां कृते गात्रपिण्डादि-प्रदानक्रियाया आवश्यकतैव न भवति। किन्तु ये हि मनस्तत्वप्रधानाः सोमाऽऽकृष्टाः स्वसमष्टिभूतं चन्द्रमेव सोमप्रधानं प्रति गच्छन्ति ते धूमादिमार्गेण पितृयानेनैव यान्ति। तदा मार्गे वायोः प्राबल्यात् वायुप्रभावपतिताः क्वचन ह्रसितसोम-भागाः भवन्ति। किंवा विलम्बेन सोमाऽऽकर्षणं प्राप्तवन्तो हि पितरः सोमं कामयमानाः पुत्रपौत्रादिभिः प्रदत्तस्य सोमप्रधानान्नादेः कामनां कुर्वन्ति तण्डुल-दुग्ध-घृतादि-मयं सोमप्रधानमन्नं कामयन्ते। अतस्तदर्थं पिण्डप्रदानपूर्वकमेव श्राद्धं सम्पादनीयम्॥

अतएव मरणानन्तरं जीवात्मनो गमनकाले पितृलोकप्राप्तेः प्राक् भुवः वायोश्च प्रभावस्तेषां मार्गाविरोधको भवति तेषां सोमभागश्च पूर्वमेव न्यूनो भवति अतः सोमाल्पतयाऽल्पशक्तयो भवन्त्यवरोद्धुं भूवाय्वोः प्रभावम् अतस्तदीयं सोमभागं प्रबलयितुं पुत्रादयः सोमप्रधानादि-पिण्डप्रदानैः क्रियाकर्मादिकं कुर्वन्ति। तेन प्राप्त-सोममयशक्तयः पितरः सबलाः सन्तः भू-वाय्वोः प्रभावं विधूय सद्यश्चन्द्राऽऽकृष्टाः चन्द्रलोकं स्वसमष्टि सोमात्मकं तत्परितः स्थितं पितृलोकञ्च ते ससुखं गच्छन्ति। तथैव च प्रतिश्राद्धं पुत्रादिदत्तमन्नादिकं तत्र सद्यो लभन्ते। अर्थात् सूर्यचन्द्र-मसोर्मरीचिसमाकृष्टः किंवा वायूपनीतस्तत्तत्पिण्डोद्भूतः श्राद्धीयान्नजन्यः-सोमरसस्तत्तन्नामगोत्रोच्चारणपुरःसरं पुत्रादिप्रदत्तमखिलमन्नतिलाम्बुवा सद्यः सोमरस-तत्त्वभूतं सकलविश्वव्यापकं सोमतत्त्वसम्पृक्तं समुद्रे गाङ्गवारि-वदेकरूपं विद्युत्तरंगधारेव सर्वत्र सद्योव्याप्तं तत् तत्क्षणमेव तांस्तान् पितॄन् मिलति। वायुः[2] विश्वव्याप्तः[1] सोमश्च[3] सूर्यमरीचयश्च[4] तत्तत्पितृभ्यः सद्यः प्रयच्छन्तीति। यथाहि जीवात्मा यैः सूर्यादिगमस्तिभिः समाकृष्टो यथैव तत्तल्लो-

कान् गच्छति तथैव तैरेव मरीचिभिः समाकृष्टः सोमोऽपि तत्र तत्रस्थितेभ्यः पितृभ्यः प्रदीयते।

अत एव पित्रादिसम्बन्धि श्राद्धादयः सोमरसोत्पादका भवन्ति सोमप्रधाना अतः चन्द्रस्यैवाधिकतरः सम्बन्धः श्राद्धादीनामतः चन्द्रादिमासक्रमेणैव तिथीनां स्थितिर्भवति तदनुसारं यस्यां तिथौ यस्य भौतिकशरीरत्यागोजातस्तस्यामेव तिथौ भारतीयज्यौतिषगणनाऽनुसारं चन्द्रमसस्तथाभूता स्थितिः तथाभूतांशादयश्च सर्वे तन्मासस्य तस्यामेव तिथौ तस्मिन्नेव क्षणे पुनः सम्मिलिता भविष्यन्ति येषु तज्जीवात्मनः प्राणोत्क्रमणमभूत् अतस्तन्मासस्य तस्यामेव तिथौ सर्वे योगाश्चन्द्रमसः सङ्गता भविष्यन्तीति-पितृणामाधिष्ठाता चन्द्रः सोमः सोमाधिदेवः सोमप्रधाने कर्मणि तदनुरोध एव मान्यः येन चन्द्रकराकृष्टः सोमः चन्द्रमण्डले विद्यमानान् पितॄन् शीघ्रं मिलति अतः तस्यामेव तिथौ करणीयाः श्राद्धादयो नतु खिस्ताब्द तारकाऽनुसारम्। इति विशेषतोऽवधेयमेव।

अत्र पितॄणां श्राद्धकर्त्रासह सम्वन्धस्तु पुरैव परिच्छेदेषु प्रदृष्टः तथाप्यत्रसंक्षेपतो निर्दिश्यते-यत्-सर्वेषु पुरुषेषु स्व-स्वपितृपितामहादीनां 'अंशाः' भवन्ति = तथापि ८४ चतुरशीतिसंख्यकानंशानादायैव जन्म लभते, तत्र तेष्वंशेषु २८ अष्टाविंशत्यंशास्त्वात्मनस्तस्यैव तस्मिन् भवन्ति, शेषेषु ५६ षट्पञ्चाशत्सु २१ एकविंशन्तिरंशाः पितुः (वीजापकस्य) १५ पञ्चदशांशाः तत्पितुः [ पितामहस्य ] १० दशांशाः तत्पितुः [ प्रपितामहस्य ] ६ षडंशाः तत्पितुः [ वृद्धप्रपितामहस्य चतुर्थपुरुषस्य। ] ३ त्रयोंऽशाः तत्पितुः [ वृद्धतरप्रपितामहस्य पञ्चमपुरुषस्य ] १ एकांशः तत्पितुः ( वृद्धतम प्रपितामहस्य षष्ठ पुरुषस्य ) इति क्रमेण-अंशा न्यूनान्न्यूनतराः पूर्णसंख्यावन्तः दशसंख्यकत्नपिण्ड संज्ञा भवति। पिण्डरूपा भवितव्या दशसंख्यातोऽन्यूनाः। अतएव घनीभूतानां १० संख्यांशानां पिण्डसंज्ञा प्रपितामहस्यैव भवति अतः पिण्डदानं प्रपितामह पर्य्यन्तमेव त्रिपुरुषं भवति-अर्थात् [ पिता, पितामहः, प्रपितामहश्चेति त्रय एव पिण्डभाजः तेषामेवपिण्डसंख्याऽप्यंशेषु विद्यते। शेषाः पितरश्च केवलं पिण्डस्थानीयलेपमात्रत एव तृप्ता भवन्ति। न ते पिण्डदानस्यावश्यकतां कामयन्ते।

उक्तञ्च :—"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
सप्तमः पिण्डदस्तेषां सापिण्ड्यं साप्तपौरुषम्॥"

अर्थात् षट्पूर्वजाः पितरः सप्तमस्तु स्वयं पिण्डदाता। ( इति साप्तपौरुषम् )

अतं एव स्वांशजैः पुत्राद्यैः प्रदत्तान् पिण्डादीन् स्व-स्वनामगोत्रोच्चारणपुरःसरं तीर्थादौ श्राद्धादौ स्व-स्वमरणतिथौ महालयश्राद्धादौ च विहितान् पितरः सूर्यमरीचि द्वारा सद्योगृह्णन्ति; सोमात्मभूतान् लब्ध्वाच तृप्यन्ति।

तत्र पितरो हि पञ्चविधा भवन्ति = "अग्निष्वात्ताः, वर्हिषदः" सोमपाः, आज्यपाः, ऊष्मपाश्चेति। ये हि नित्यमुक्ताः पितरः ये च स्वतपोबलेन चन्द्रादि-लोकं विहाय सूर्यमण्डलमपि भित्वोद्ध्वं परमेष्ठिमण्डलं प्रयाताः वैकुण्ठ-गोलोक = नित्य साकेत धामवासिनो जाताः स्वात्मनः सप्तमपुरुषादपि [ वृद्धतम प्रपिताम-हादपि ] ऊर्द्ध्वं अष्टमतोऽग्रेतनाः पूर्वपुरुषास्तु नेच्छन्ति स्ववंशजदत्तश्राद्धान्नादिकं किमपि। न हि तेषां नित्यसोमपानां कृते तथाविधसोमस्यावश्यकता भवति न वा क्वचन सोमोऽपि ह्रासमेति। किन्तु चन्द्रमण्डलस्थाः तत्पार्श्वस्था वा पितृलोकस्थाः स्वर्गस्था अपि पितरः कामयन्ते स्वसन्ततिभ्यः, तैः प्रदत्तं श्रद्धामहितं श्राद्धान्नोद्-गतं सोमं। तत्र प्रमाणम् वेदे:--

"स्वधापितृभ्यः पृथिवीषद्भ्यः। स्वधापितृभ्य अन्तरिक्षषद्भ्यः। स्वधा-पितृभ्यः दिविषद्भ्यः।" ( अथर्व-का० १८ अनु, ४ मं० ७८-८० )

ये च जीवा ये च मृता ये जाता ये च याज्ञियाः।

तेभ्यो घृतस्य कुल्यैतु मधुधारा व्युन्दतीति ॥—अथर्व० का० १८। २। ३४

"ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः।

सर्वांस्तानग्न आवह पितृन् हविषे अत्तवे॥ अथर्व० का० १८।२।३४ (यजुः१९ ५८) "आयन्तु नः पितरः सोऽम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः।

अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रवन्तु तेऽवन्तु, अस्मान्।"]

इति—-ये हि दिव्याः पितरस्ते नित्यमुक्ताः वैकुण्ठाधिवासिन-कैलासःनित्य-साकेत धामवासिनो गोलोकस्थ नित्यलीलाश्रिताः सन्ति "अग्निष्वान्ताः बर्हिषदः ( बर्हिर्नामसोमविशेषो हविर्भागश्चेति केचन ) सोमपाश्चेति। शेषाः आज्यपाः ऊष्मपाश्चन्द्रे-चन्द्रपार्श्वेषु वा लोकेषु पृथिवीचन्द्रमसोर्मध्ये क्वचन तिष्ठन्ति पितृलो-कादौ। ये हि स्वगोत्रजेभ्यः सोमकांक्षिणः। तल्लब्ध्वा च पुत्रादिभ्य आशिषः प्रयच्छन्ति। अङ्गिरावचनञ्च :--"पितृयज्ञादिभिः पितरः स्वास्थ्य वीर्य्यादीनाम् समृद्धि तन्वते।"

अतः सनातनधर्मानुयायिभिः श्राद्धादिकमवश्यमेव कर्त्तव्यम्। अन्यथा दोषः— यथा, "न तत्र वीरा जायन्ते नारोगा न शतायुषः।

न च श्रेयोऽधिगच्छन्ति यत्र श्राद्धं विवर्जितम्॥" इति वचनम्।

किञ्च—"सूर्ये कन्यागते श्राद्धं यो न कुर्याद् गृहाश्रमी ।
घनपुत्राः कुतस्तस्य पितृनिःश्वासपीडिताः ॥ इति पितृसन्तापोऽपि श्रूयते । अतो गृहस्थाश्रमिभिस्तु सावधानैः सश्रद्धमेव श्राद्धंकर्म कर्तव्यमेव । यद्यपि गतानुगतिका अपि यदि पितरः स्वस्वकर्मानुशयाऽनुसारं पुनर्जन्मादिगृहीतवन्तो यत्र क्वचन यस्मिन् कस्मिन्नपि कुले मनुष्ययोनौ-पशुपक्षि-प्रभृतियोनौ वा गृहीत-जन्मानः, किंवा स्वकीयोत्तमकर्मानुशयैः स्वर्गादौ वा सन्ति-सुप्रतिष्ठिताः तत्राप्य-स्मत्प्रदत्तं सत्यसङ्कल्पजन्यं श्रद्धया हुतं दत्तं हव्यं कव्यं वा तत्र तत्रस्थितेभ्यः स्व-स्वपितृभ्यः तत् तत्पुत्रपौत्रादिभिः प्रदत्तं तत्तन्नामगोत्रोच्चारणपुरःसरं - विसृष्ट-मन्नादिकजन्यं सोमभूतं रस सूर्यमरीचयः प्रयच्छन्ति ।

तत्र देवलस्मृतिः— "देवो यदि पिता जातः शुभकर्माऽनुयोगतः ।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥
गान्धर्वे भोग्यरूपेण पशुत्वे च तृणं भवेत् । [सर्पादि योनावपि-]
श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति ।
"पानं भवति यक्षत्वे, राक्षसत्वे तथाऽऽमिषम् ।
दनुजत्वे तथा मद्यं प्रेतत्वे रुधिरोदकम् ॥
मनुष्यत्वेऽन्नपानादि नानाभोगरसो भवेत् ॥" इति ।

इत्थम् सर्वत्र सर्वस्थितौ सर्वलोके सकलयोनौ गतिमन्तः पितरोऽवश्यं लभन्ते । किम्बहुना—श्राद्धे हुतं कव्य स्वयमग्निदेव एव सर्वविधस्थितिजुषः पितृन्-प्रापयति तत्तत्पुत्रादिप्रदत्त - सकलमन्नादिकम् । तथैव प्रार्थ्यते चाग्निः पुत्रैः— "ये निखाताः ये परोप्ताः०" इति निर्दिष्टमन्त्रे-अग्निः स्वयं तानाहूय पितृन् प्रयच्छति ।

किञ्च :— ऋग्वेदः— { "येऽग्निदग्धाः येऽनग्निदग्धाः मध्ये दिवः स्वधया मोदयन्ते ।
तेभिः स्वराड् सुनीतिमेतां यथावशं तन्वं कल्पयस्व ।" इति—
( अष्ट-७-अ-६ व-१९ मण्डल १० अनु-१ सूत्र-१५ )

अर्थात् - हे अग्निदेव = स्वर्गस्थानपि नः पितृन् तथाविधशरीरसम्पन्नान् विधाय प्रदत्तमिदमन्नादिकं हव्यं कव्यं प्राणयुक्तांश्च कृत्वा तान् प्रापयेति ।

एवं यजुर्वेदेऽपिः—"इदं पितृभ्यो नमोस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
अ० १९ मन्त्र ६८ ये पार्थिवे रजस्यानिषत्ता ये वा नूनं सुवृजनासु विक्षु ।"

अर्थात्-भोः भोः अस्मदाहूताः सश्रद्धं प्रार्थिताः समायाताः नः पूर्वजाः पितरः किञ्च अस्मदनुजाः पुत्रादयो वा ये हि पितृभिः सह सङ्गता समाहूताश्च समायाताः सर्वे तेऽ दृश्यरूपेणोपस्थिताः सन्तः श्रद्धया प्रदत्तं यत् किमपि पार्थिव-पदार्थं रजोगुणविशिष्टं भवद्भिर्गृहीतं तदर्थं कृतकृत्याः प्रणमामो भवदनुगृहीता स्मः ।

श्राद्धे हि प्रायो ब्राह्मणा एव निमन्त्रिता भवन्ति तेऽपि वेदविदः, कर्मठाः सन्ध्या-तर्पण बलिवैश्वदेवकर्तारो भवेयुः। प्रथमदिने सश्रद्धं तान् निमन्त्रयेत्। निमन्त्रितेषु च तेषु निमन्त्रयितुः पितरः पूर्वदिवस एव रात्रौ तेषु प्रविष्टाः भवन्ति ततः परेद्युः सश्रद्धं परिवेषितमन्नादिकं सर्वं गृह्णन्ति तृप्ताश्च भवन्ति। तत्र स्मृतिः प्रमाणम्—(मनुस्मृतिः ["निमन्त्रितान् हि पितरः उपतिष्ठन्ति तान् द्विजान्।

३।१८९ वायुवच्चाऽनुगच्छन्ति तथाऽऽसीनानुपासते ।।"] इति।

अर्थात् निमन्त्रयितुः पितरः सूक्ष्मानि सूक्ष्मशरीरैर्दिव्यात्मभिः ब्राह्मणेषु प्रविष्टाः सप्रेम स्वपुत्रादिभिः परिवेषितं श्रद्धाभक्तिसमन्वितमन्नपानादिकं सस्नेहेन सोल्लासमुपभुञ्जते। भोजनान्ते च सत्कृत : दक्षिणोपस्कारादिभिः समर्चिताः ब्राह्मणा यदा स्वगृहं प्रति यान्ति तदा ते पितरोऽपि स्वपुन्नादीनाशीर्भिः वरप्रदानाद्यैश्च सन्तोष्य स्वस्व स्थानं गच्छन्ति।

अस्य प्रत्यक्षोदाहरणञ्च वाल्मीकीये रामायणे यदा श्रीरामश्चित्रकूटे स्वपितुः श्रीदशरथस्य श्राद्धे ब्राह्मणान् भोजयतिस्मः, यदा श्रीजनकतनया सोल्लासं विविधान्नसम्भृतां स्थालीं स्वकरतले धृत्वा परिवेषयति स्म द्विजान् तदा सहसा ब्राह्मणेषु स्वश्वशुरस्य महाराजस्य दशरथस्य साक्षाच्चाक्षुषं (दर्शनं) चकार। ततः सद्यः सा लज्जया नम्रमुखी सद्योऽवगुण्ठनं मुखोपरि कृत्वा कुटजाऽभ्यन्तरे प्रविष्टाऽभवत्। तदा भगवाञ्छ्रीरामः सविस्मयं तामुवाच "कथमेवं राजपुत्रि" इति श्रीराघवेण पृष्टा प्रोवाचः—["पिता तव मया दृष्टो ब्राह्मणाङ्गेषु राघव!।"] इति [पद्मपुराणीयाऽपि तथाविधैव कथा। आयुर्वेदेऽपि —[ "सोमश्च यो ब्राह्मणमाविवेश" ] अर्थात्,- यदि कदाचन निमन्त्रितेषु ब्राह्मणेषु कर्मवशात् कारणान्तराद्वा पितरो न प्रविष्टा भवेयुस्तदानीं तत्र भोजनाऽवसरेऽपि नोपस्थिताः स्युः, तदा स्वयं सोमः स्वकिरणैः ब्राह्मणेषु प्रविश्य श्रद्धान्नजन्यं सोमं ततो गृहीत्वा साक्षात् तत्र तन्नीत्वा तत्पितृभ्यः सद्यः प्रयच्छति। किंवा अग्नौ हुतं कव्यभागं तु स्वयमेवाग्निस्तत्र नीत्वा तेभ्यो वितरति। यतो हि भागवते :—

"ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम्।" इति स्पष्टम् ब्राह्मणानामग्नेश्च मुखमेव सर्वेषां देवानां पितृणाञ्च मुखमेव। तद्द्वारा सद्यो लभन्ते पितरोऽपि पुत्रादिप्रदत्तं श्राद्धीयाऽन्नपानादिकमिति।

किञ्च श्राद्धादिकरणे पुत्राणामेव साक्षादधिकारस्तदभावेऽन्येषां भ्रातृबन्धुबान्धवानाम्। यतो हि पितृ-पितामह-प्रपितामहानां क्रमेण २१,१५,१०,अंशाः भवन्ति पुत्रेषु प्रहृष्दं पूर्वमेव अतस्त एवाधिकारिणः।

—

# सप्तपञ्चाशत्तमः परिच्छेदः

इत्थम्-सकलजनमनस्तोषं विधाय, समीपस्थस्यैव सकलसुराऽसुर-नरकिन्नर-स्तूयमान माहात्म्यस्य भगवतः शैलसुतासमाराधिताऽङ्घ्रियुगलस्य पूरितजगन्मनोरथस्य प्रत्यहं प्रवर्द्धमान हिमलिङ्गविग्रहस्य श्री "अमरनाथ" विम्बस्य दर्शनार्थमेव काश्मीरतः प्रस्थाय साधुमण्डलीसनाथाः श्रीरामानन्दाचार्याः—

काश्मीरोद्‌भव कुङ्कुमाऽरुणलसत् सौरभ्यलुब्धाऽलिसद्-
भक्ताऽऽराधित पादपद्मयुगलाः सन्तर्पिताऽऽराधकाः ।
वाङ् माधुर्य्यं समेधिताद्‌भुत रसानन्दोच्छलच्छीतल-
स्वान्तान् भक्तवरान् प्रतोष्य समगुः सम्मानिताः स्वामिनः ॥

सन्ततं हिमवृष्टिसमुल्लासिताऽऽकारस्य निराकारस्यापि जगदाधारस्य विश्वमूर्तेरप्यष्टमूर्तेः सेवासमाराधनमारचय्य प्रतिनिवृत्ताः सिन्धुदेशं प्रतिजिगमिषवः संवृत्ताः । तत्राऽऽगत्य तत्रत्येषु भगवतो भक्तिभावनामालोक्य सञ्जातमनस्तोषा अपि दोषाऽनुरूपां तत्रत्याऽऽचार विचारविवेकविमोषां विचित्रचरित्रकर्मपोषां दयादाक्षिण्यार्द्रावगीताचरणशोषामालक्ष किञ्चित्समुपजात शेषाऽरुणनयनाः, सद्‌भक्तिचयनाऽऽनन्दप्रसारार्थमेव, समुदाराचारचारप्रचारायैव सर्वदाऽऽहार-विहार संशुद्धि प्रकारं समुपदेष्टुं, तेषु च धार्मिक रहस्यविज्ञान विजृम्भितां सद्‌भावनां सम्भरितुकामाः श्रीरामानन्दाचार्याः सिन्धुदेशैकदेशे विराजमानाः 'सर्वत्रैव स्वकीयाऽऽहार शुद्ध्यर्थमेव विचारः करणीयः" एति लक्ष्यीकृत स्वकीय-प्रवचनविषयीचक्रुर्विषयमेनम् ।

तत्र सर्वतः प्रथममाहारस्ततआहार-समुद्‌भूत-विवेक-विचारः कीदृशो भवतीति विचिन्तनीयः । श्रद्धालवो विवेकशीलाः श्रोतारः ।

उक्तञ्च मनुना—"सर्वेषामेव शौचानामन्नशौचं परं मतम् ।
योऽन्नेशुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥"

महाभारतेऽपि लिखितम् :—"आचार एव मन्तव्यो गरीयान् धर्मलक्षणः।"
अन्यत्रापि :— "आचारः परमोधर्मं आचारः परमं तपः।
तस्य फलमपि :— आचाराद् वर्द्धते ह्यायुराचारात्पापसंक्षयः॥"
किञ्च— "सर्वलक्षणहीनोऽपि यः सदाचारवान् भवेत्।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति॥"
आयुर्वेदेऽपि:— "इत्याचारं समासेन सम्प्राप्नोति समाचरन्।
आयुरारोग्यमैश्वर्य्यं यशो लोकांश्च शाश्वतम्॥"

अतः सद्भिः समाचरितः सदाराधितःशुभाचारः सर्वदा सर्वत्रेप्सित-फलप्रदो भवति। सदाचारेणैव मानवो मानवातीतं योगिध्येयं ध्यानगम्यमपि भगवन्तं भक्त्यैकनिभालितं स्वकीयोत्सङ्गलालितं दुष्टजनसंहारिणं निजमनोविहारिणं कर्तुं शक्नोति। तत्र सर्वदा सात्त्विकैर्भावैः, सात्त्विकैर्वा विचारैः सात्त्विकैरेवाऽऽहारैः स्थातव्यमिति। सात्त्विक आहारश्च, शास्त्रोक्त एव ग्रहीतव्यः— तथाहि गीतायाम्

"आयुः सत्त्व बलारोग्य सुखप्रीति निबन्धनाः (विवर्द्धनाः)।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विक-प्रियाः॥"

अर्थात्- "कट्वम्ल लवणाऽत्युष्ण तीक्ष्णरूक्ष विदाहिनः।
आहारा राजसस्येष्टा दुःखशोकाऽऽमयप्रदाः॥ इत्येते परित्याज्याः।

किञ्च :—["यातयामे, गतरसं, पूतिपर्य्युषितञ्च यत्।
उच्छिष्टमपि चाऽमेध्यं भोजनं तामस-प्रियम्॥"]

इतितु सर्वथैव परित्याजम्। भगवद्भक्तैस्तु सर्वदैव सात्त्विकमेव मधुरं स्निग्धं भोजनमेव कर्तव्यम्। यदमेध्यं, अग्राह्यं मद्यं,-मांस सञ्जुष्टं, पूति-दुर्गन्ध-संयुक्तं लशुनपलाण्डु-सम्मिश्रमपि भोजनं सर्वथा सात्त्विकैः परित्याज्यमेवेति। तादृशं भोजनं न कर्तव्यं येन भगवद्भजने बाधा समुत्पद्येत।

अतएव भगवत्सेवायां भगवदीयानां कृते वैष्णवानां गृहेषु प्रायशो मधु-मधुर-घृत-दुग्ध-शर्कराबहुलः, तण्डुल गोधूम चणक चूर्णादिनिर्मितः पक्वानमयः पदार्थ एव भगवते समर्प्यते गृह्यते च स्वयमपि भगवदीयैर्वैष्णवैः न सात्त्विका भगवद्भक्तास्तु स्वप्नेऽपि-मद्यं मांसं, मत्स्यादींश्च न गृह्णन्ति न स्पृशन्ति, किमुत भक्षणम्? किं बहुना दुर्गन्धबहुलं पलाण्डु लशुनप्रभृत्युग्रगन्धमिश्रितमपि भोजनं न स्पृशन्ति। अतः सर्वथा त्याज्यमेवेदृशं खाद्यम्।

तदानीम्—"मद्यं मांसं पूतिगन्धाक्तमन्नं, दुष्टं जुष्टं तामसैः संगृहीतम्।

त्याज्यं भोज्यं सात्त्विकैः सर्वभावैः,, "श्रुत्वैतत् तान्त्रिकः कश्चिदाह" ॥
तान्त्रिकः— "मद्यं मांसं त्याज्यमेतत्त्वयोक्तं, पूर्वाचार्यैर्वर्णितं स्वाऽऽदिकाव्ये"
तत्रः— रामो ब्रूते लक्ष्मणं तत्तदर्थं वाल्मीकीये, किं न दृष्टं भवद्भिः ?
तथाहिः—"ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् ।" इति ।

अत्र स्पष्टमेव स्वपर्णकुटीरस्य वास्तुपूजायां मृगमांसार्थमादिष्टवान् लक्ष्मणं श्रीरामः । किञ्च जटायोः और्द्ध्वदैहिकीं क्रियां विदधच्छ्रीरामो मांसपिण्डमेव जटायोः कृते प्रदत्तवान् ।

श्रीरामानन्दाचार्याः— भगवन् ! गोस्वामिन् ! सत्यमेव भवान् गोस्वामीति स्पष्टम् ।

यतो हि वाल्मीकीये यस्मिन् प्रसङ्गे भगवता त्रिकालज्ञेन मुनिना श्रीराम-विषये यल्लिखितम् तस्य पूर्वाऽपरसम्वन्धमनालोच्यैव यथेच्छमनर्गलमज्ञान विजृम्भित-मेवार्थमचीकरत्-तदानीं वनगमनावसरे भगवतः सत्यसन्धस्य-स्वप्नेऽप्यन्यथाऽऽचरण-विरतस्य श्रीरामस्य प्रतिज्ञा कीदृश्यासीत्, इति सर्वमनालोचितपूर्वमेव । भवता विवेकशून्यमतिना, सुकृतिनाकृतिना कथमाचरितमिति किमुक्तमिति रामायणे नयनाभ्यां सहैव श्रुतियुगलमपि सफलीकृतमिति विनिश्चीयते-अत एव समुपचीयतेऽनर्गल-प्रलापपातकपङ्कोच्छ्रायः ।

भगवन् ! पुनः श्रूयतां कर्णकुहरमलापसारणपुरःसरमिदं तथ्यम् :—यदाहि भगवान् श्रीरामो वनगमनावसरे स्वजननीसम्मुखे निवेदयति—

"चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ।"

कन्दमूल फलैर्जीवन् हित्वा मुनिवदामिषम् ॥" इति सुस्पष्टमेव । किञ्च "रामो द्विर्नाऽभिभाषते" इत्यपि प्रतिज्ञातमेव । तर्हि स्वप्रतिज्ञां विनैवाग्रहेण विहितां स्वमनःसङ्कल्पितां स्वयमेव कथङ्कारं त्यक्त्वा स्वयमेव भगवान् वने स्वप्रतिज्ञाविरुद्धं मांस मद्यमयं दुर्भक्ष्यं स्वीकर्तुं प्रभवेत् ? नहि मुनीनामीदृशमशनं भवति तर्हि मुनिवत्तिष्ठन् सः कथमङ्गीकुर्यात् ? किञ्च सुमन्तु द्वारा निजं सन्देशं स्वपितृचरणसविधे प्रेषयन्नपि भगवान् तथैव पूर्वोक्त वचनान्येव स्मारयन्नुवाच :—"फलानि मूलानिच-भक्षयन् वने०" तत्रैव च "धर्ममेवाऽऽचरिष्यामस्तत्र मूल - फलाऽशनाः ।" [ अयोध्या० ५४।१८ ] स्थाने स्थाने समये समये तथाविधाशनादि क्रियाकलापान् कुर्वन् कथं श्रीलक्ष्मणं तथा कर्म कारयितुमाज्ञापयेदिति न कश्चन विवेकशीलस्तथा विचिन्तयति । यच्च रामायणे लिखितम्, तस्याऽऽशयस्त्वित्थमेवः—

"ऐणे, यं, मां, समाहृत्य०" अपि लक्ष्मण ! वयम्-"ऐणे" एणसम्बन्धिनि-शुभासने ( अर्थात् मृगचर्मणि ) "यं"=वायव्यात्मकं = प्राणायामं = वायोः पूरक-

कुम्भक-रेचकादिक्रमेण=वायुतत्त्वशोधनपूर्वकं प्राणायामं विधाय ततः "मां" लक्ष्मीं = स्वात्मनः प्रतिमूर्तिमयीं=लक्ष्मीस्वरूपां वा श्रीजनकनन्दिनीम्, किंवा "मां" परमतत्त्व-स्वरूपं स्वात्मानमेव स्वमानसे धारणया-धारयित्वा समाहृत्य = स्वमनसि = सन्धार्य अर्थात्="तेजोवलमयीं" तत्त्वत्रययुक्तां "मां" मदभिन्नां = ममैवाऽपरस्वरूपां=श्रीसीतां-आधिदैविकस्वरूपां="यं" वायुतत्त्वेन सह संयोज्य किं वा स्वप्राणेन सह सम्मिश्रय = स्वप्राणानपि स्वात्मनि संयोज्य सीतया सह स्वप्राणानपि स्वरूपेण सह मेलयित्वा-परब्रह्मणि समाहृत्य एकीकृत्य=आध्यात्मिकरूपेण च विराजमानां तां "मां"=मत्तः अभिन्नां=श्रीस्वरूपिणीं वा किंवा तेजःस्वरूपां ( अग्नि-स्वरूपां अग्नौ वा=प्राणाग्नौ-प्राणानामग्निरूपत्वात्=समाहृत्य निलीय=निलाप्य च तथा च "यं, मां" ईदृशं विचित्रमद्भुततमं सर्वदृग्गोचरं=अदृष्टं लोकदृष्ट्याऽप्यगम्यं कर्म कर्तुं प्रवृत्तं "यं" वायुतत्त्वात्मकप्राणस्वरूपं मां परमतत्त्वरूपं समाहृत्य स्वहृदि संस्थाप्य = सर्वशक्तिमन्तं मां विचिन्त्य=मदभिन्नां वा श्रीजनकनन्दिनीं विज्ञाय = "शक्ति-शक्तिमतोरभेदात्" सर्वदैकरूपां ध्यात्वा="वयं" त्रयः लोकिकदृष्ट्या भिन्न-भिन्नस्वरूपाः सन्तः किंवा सीतां स्वात्मनि स्थापितामपि पृथग्रूपेणभूमौ प्रचलन्तीमिव भौतिकस्वरूपेण वहिर्विराजमानां दर्शयित्वा=शालां एनां पर्णकुटीं = यक्ष्यामहे = समुपास्महे। अर्थात् त्रिविधस्वरूपां सीतां आदिदैविकरूपिणीं सात्त्विकीं तु अहमेव स्वात्मनि निलीय-वर्तिष्ये। आध्यात्मिकीं 'मां' लक्ष्मीस्वरूपिणीं स्वतेजोमयीं राजसीं यजनाग्नौ प्रवेश्य, ततः आधिभौतिकीञ्च तामसीं लोकदृष्ट्या मम भार्याभूतां तां स्वावतारस्वरूपेण रामरूपेण सह संस्थाप्येति सर्वविधलीलासम्भारान् संस्थाप्य समाहृत्य च पुनः लौकिकीं लीलां कर्तुं यक्ष्यामहे = "यज्" देवपूजा सङ्गतिकरणदानेषु" इति धात्वर्थं सर्वात्मना समाराधयिष्यामः। अर्थात् "रावणादि दुष्टदानवादिवधाद्युपकारं देवानां विधाय, देवपूजां = राक्षसान् दुष्टदैत्यान् हत्वा तेषां समपहृत सर्वविधाधिकारैः पुनस्तान् संयोज्य=सङ्गतिकरणेन, देवादीनां बलादपहृतराज्यादीनां दानेन, किंवा विभीषणादि परमभक्तेभ्यः शरणापन्नेभ्यो वा प्रत्यक्षलङ्काराज्यदानाद्यैश्च, तदनन्तरं च राजसूययज्ञारम्भमिषेण च सर्वविधयजनेन राजसूयादियज्ञेन च यक्ष्यामहे, विश्वमयीं शालां स्वलीलास्थलीं वा सेविष्यामहे। इत्याद्याकारकं रहस्यमयमर्थं सुग्रोप्यं कारयितुमेव तथाविधभ्रामकपदविन्यासैः परोक्षार्थं गोपायितुमेव तथा लिखितं भगवता-वाल्मीकिना। यतो हिः—[ "परोक्षप्रिया वै देवाः" ] इति वाक्यात्। अन्योऽप्यर्थः अथवाः—[ "ऐ, णे, यं, मां, सं, आहृत्य०" ] ऐ=इति सम्बोधनम्, अयि प्रिय लक्ष्मण! "णे"=जले, जलकुम्भेवा "वरुणं" इति शेषः। । णः-पानीय-कलशे इति मेदिनीकोषे। यं = वायव्यात्मकं=वास्तुपुरुषम्, वा, "मां" "लक्ष्मीं अम्वां दुर्गाभगवतीं

वा ( इन्दिरा लोकमाता, मा इत्यमरः ) लोकमातरम्=वा, "सं" सर्पाकारं वास्तु-शेषः=विशेषम् [ वास्तु पुरुषा नमस्तेऽस्तु भूशय्याऽभिरत० प्रभो" ] आहृत्य=संस्थाप्य = अर्थात् वास्तुपूजोपयुक्तानि सर्वदेवमण्डलानि स्थापयित्वा ततः शालां यक्ष्यामहे=शालां पर्णकुटीरमेव यज्ञशालां विधास्यामः। अर्थात् तत्तन्मन्त्रैस्तान् सविधि संस्थाप्यार्चयिष्यामः। इति।

एवमेव च- "मृगं हत्वानयाक्षिप्रं लक्ष्मणेह शुभेक्षण!" इत्यस्यापि यथाविध एव परोक्षार्थः। तत्र मृग शब्दः = मदनपालनिघंटौ ( आयुर्वेदीयकोषे ) [ "मृगः पशौ, कुरङ्गे च, गजकन्दे, गदे तथा" ] मृगशब्दस्य हरिणे गजकन्दे, अपस्मार रोगे ( मृगीति ) नानार्थकत्वात् = "मृगं" गजकन्दं "हत्वा" समुत्खात्य=समुत्पाट्य क्षिप्रमानय। यतो हि त्वम् शुभेक्षणः=शुभकर्माऽभिज्ञ कुत्र किं वस्तु समपेक्ष्यते, मुनिव्रतानां कोऽभिप्राय इति सर्वं जानासि। किञ्च नाम्नाऽपि त्वं लक्ष्मणः कन्दादीनां सर्वलक्षणाऽभिज्ञः।

अतएव आनयनेऽपि न ते विलम्बेन समानयनाऽऽशङ्का। अतः क्षिप्रमेव शीघ्रमेव तत्कालमानेष्यतीति=सर्वविधां वा सुव्यवस्थां करिष्यसीति त्वमुक्तः। अतस्त्वामेवोक्तवान्। सद्यः सर्वविधां तथा व्यवस्थां शीघ्रं विधेहि। इति रामोक्तिः। ततः श्रीलक्ष्मणः— "सलक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान्।"

किञ्च :—[ अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि।" ( अयो० ५६।२८ ) ( वाल्मी०:–५६।२७ ) अयो० तत्तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितम्।" यद्यपि = प्रत्यक्षदृष्टोऽर्थस्तु स्पष्ट एव साधारणजनबुद्धिगम्यो लौकिकः। किन्तु-( परोक्षप्रिया वै देवाः ) इत्युक्तेरनुसारं=किञ्च "निष्टप्तम्" पदे मूर्धन्यषकारयोगे "क्त" प्रत्ययीय त-कारस्याऽपि "ट" कारे जाते "निष्टप्त" सिद्धौ सकृदेवाग्निसन्तापदाने, एव "निष्टप्त" पदप्रयोगः क्रियते, अनेनापि स्पष्टं प्रतीयते यद् "गजकन्द" एव सकृदग्नितापं सहते न पशुर्मृतोमृगः। इति। किंवा तीक्ष्णोष्मसन्तापमात्रेण परिपक्वतान्तु गजकन्द एव याति। मांसादीनान्तु सम्यक् क्वथनं विधीयते न तु सकृत्सन्तापः। एवमेव "छिन्नशोणितम्" इत्यस्यापि छिन्नं=नाशितं शोणित = रक्तपित्तादिजन्यं रोगविशेषादिकम्, येनेति रक्तशोधक रक्तविकारनाशकमित्यप्यर्थः। यतो हि कन्दादीनामुष्णभस्मसन्तापेनैव परिपाको भवति समीचीनः प्रसिद्धो लोकसिद्धः। इति परोक्ष एवार्थोऽभिमतः। आसुरजीव - व्यामोहायैव तथाविधपदप्रयोगःकृतो दीर्घदर्शिना मुनिना। किञ्च मृतपश्वादौ तु न भवति परिपाककाले शोणितलेशोऽपि। वधसमकालमेव शोणितापसरणात्।

अपि च दृढप्रतिज्ञः श्रीरामः धृतमुनिव्रतः "धर्ममेवाचरिष्यामस्तत्रमूल-फलाशनाः" इति त्रय एव तथाविधाः कथमीदृशं नृशंसकर्मकर्तुमुद्युक्ताः स्युः, इति विविच्यै परोक्षार्थः प्रदर्शितो मुनिना=परोक्षप्रियत्वात् ।

एवञ्च भगवतः श्रीरामस्याज्ञानुसारं तथाकृत्वा श्रीलक्ष्मणोऽपि तथैव प्रच्छन्न-परोक्षार्थप्रवृत्तिकैरेव पदैः समुत्तरति :—

"अयं सर्वः समस्ताङ्गः शृतः कृष्णमृगो मया" । ] ( अयो० ५६-२८ )

अत्रापि "सर्वाङ्गः समस्ताङ्ग" सर्वः समग्रः शृतः र्भाजतः मारितः उत्खातितः परिपाकतामुपनीत इत्यादि पदैः समन्ततः परिपाको गजकन्दस्यैव भवति ननु कृष्णमृगस्येति । मृगस्य समस्ताङ्गेषु तु शृङ्ग-शफादीनामपि ग्रहणं भवति परन्तु न तेषां क्वचन परिपाकः क्रियते न वा भोजने शृङ्गखुरादीनामुपयोगः अतस्तदर्थ-कथनन्तु व्यर्थमेव । अतः सर्वावयवस्ततः परिपक्व एव देवयजनोपयुक्तो भवति कन्दः । अंशतोऽप्यपक्वः सन्तनुते रक्तविकारमिति । कण्डूं वा सार्वदाहिकीमिति । अतो मृगपदेन गजकन्दस्यैवात्र प्रयोजनम्-न हि मृगपशुमांसादेर्ग्रहणम् । भगवता रामेण स्वाज्ञाप्रदानकाले एव तथाविधविशेषणैः प्रतिबोधितोलक्ष्मणः "कर्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर ।" इति विशेषणैः "शास्त्रदृष्टोविधः कर्तव्यः, धर्मञ्चानुस्मर" इत्यनेन पूर्वविहितप्रतिज्ञामेव स्मारयति भगवाञ्छ्रीरामः— "कन्दमूलफलैर्जीवन् चरिष्यामि मुनिव्रतम्" कन्दमूलफलैर्जीवन् हित्वा मुनिवदामिषम्" इत्यादि सर्वं विविच्यैव त्वयाकरणीयम्=येन स्वोक्तिः पारिता स्यात् "धर्ममेवाऽऽचरिष्याम-स्तत्र मूलफलाऽशनाः" इति । स्मारणानन्तरमपि लक्ष्मणः शुभलक्ष्मणः, कथं तथा-विधं कर्म कुर्यादिति ।

किञ्च जटायोरूर्ध्वदैहिकीं क्रियां कुर्वन् भगवान् रामः जटायुकृते पिण्डं दित्सुरासीत् तदा "स्थूलान् हत्वा महारोहीन् अनुतस्तार तं द्विजम् । [ वाल्मी० आरण्ये ६८।३३ ] "रोहि मांसानि चोत्कृत्य पेशीकृत्य महाशयाः ।"

"अत्र रोहिमांसानि चोत्कृत्य" इति पदेन तथा च "स्थूलान् हत्वा महारोहीन्" इति पदेन च यत्स्पष्टं रोहिनामानं कञ्चन पशुं हत्वा तन्मांसेनैव पिण्डप्रदानादिकं कृतं भगवता रामेणेति । परन्त्वत्रापि "रोहि" शब्दोभ्रामकः "परोक्षप्रिया वै देवाः" इति परोक्षवादार्थमेव श्लिष्टपदप्रयोगः । तत्र "रोहि शब्दो वृक्षे बीजे च ।" इति शब्दस्तोमे । तदनुसारं रोहिनाम्नोवृक्षस्यैव मांसं त्वचोऽन्तर्भागं ।(छालगूदा ) इति भाषायां तस्यापि भोज्यत्वात् मिष्टाऽऽस्वादयुक्तत्वात् पिष्टुस्थाने धृतवान् भगवान् । किंवा खाद्यभूतं बीजविशेषमपि भवति प्रायो बालास्तथाविधस्य

तस्य रक्तवर्णमेवान्तर्भागं मधुरं भक्षन्ति तद्वदेव तथाविध बीजस्यस्थूलकायस्य - कार्यं विदीर्य तदन्तर्भागं निःसार्य तस्य पिण्डमर्पितवान् ) यथा गुर्जरप्रान्ते भवति वातादोपनामा । ( बादाम ) वृक्षः तस्य फलानि साधारणस्थूलानि . भवन्ति=तानि विदार्य बालाः रक्तवर्णं मांसपिण्ड - सदृशमेवनिःसार्य भक्षन्ति तदन्तर्गत बीजमपि विस्फोट्य तदन्तःस्थं वातादगुलिका सदृक्षं सुस्वादु निःसरति भक्ष्यं तद्वदिव रोहि बीजस्य मध्यभागं निःसार्य कल्पितवान् तेनैव पिण्डप्रदानविधिमिति स्पष्टमेव ।

किन्तु जिह्वालोलुपाः मांसाशिनः परोक्षार्थं परित्यज्य भूतार्थमेव गृह्णन्ति, तथाविधमर्थं विज्ञाप्य जनानां मतिं भ्रामयन्तो यथैच्छं अर्थं प्रदर्शयन्तः स्वार्थसाधनं कुर्वन्ति । किमु तत्र वक्तव्यम् ?

किम्बहुना मांसादि - विषयिणी निन्दात्वनेकत्र विहिता-महाभारतेऽपि" अनुशासनपर्वणिः— "स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति ।
नास्ति क्षुद्रतरस्तस्मात् स नृशंसो वृको नरः ॥"

एवमेव मद्यपानमपि जनानां धनं धर्मं आयुः बलं बुद्धिं तेजो हरति ।

यद्यपि मद्यपानादिदूषणं भगवति बलरामे पाण्डवादिष्वपि वर्णयन्ति जनाः । किन्तु तेतु समर्था आसन्—"उक्तञ्चः— "तेजीयसां न दोषाय वह्नेः सर्वभुजो यथे"ति ।

किञ्च :— "अयुक्तं स्वामिनो युक्तं, युक्तं नीचस्य दूषणम् ।
तथाहिः— अमृतं राहवे मृत्युर्विषं शम्भोश्च भूषणम्" ।

अतएवोक्तम् यद्— 'ईश्वराणां वचः सत्यम्, तथैवाऽऽचरितं क्वचित् ।" इति । एतेन हि शिक्षा गृहीतव्या-यद् दुष्कर्मणः मद्यपानादेः फलं महान्तः समर्था अपि भुञ्जन्त्येव । यथा भगवतः श्रीकृष्णस्य वंश्या यादवा मद्यपानेनैव भ्रंशितमतयः सन्तः परस्परमेव युद्धं कृत्वा समाप्तिं गताः । सकलः कुलक्षयोऽभूत् । अतो लोक-शिक्षणार्थमेव भवति भगवतः सर्वविधा लीला । इति बुद्ध्वा व्यवहर्तव्यम् । इत्थं सारगर्भितं व्याख्यानं श्रुत्वा सोऽपि तान्त्रिकः सर्वं मद्यमांसादिसेवनं विहाय श्रीरामानन्दाचार्याणां शरणापन्नः सन् शिष्यत्वमवाप्तवान् ।

---

# अष्टपञ्चाशत्तमः परिच्छेदः

इत्थं श्रीरामानन्दचार्याः सिन्धप्रदेशे सदाचारविषयकं ज्ञानं वितीर्य सदाचारादेव सकलसाधनानि सिद्ध्यन्ति, सर्वोपायाः सद्यः फलन्ति, सिद्धयश्च सर्वाः समुपयान्ति, सम्मानञ्च लभते जनः, सर्वत्रैव तात्कालिकाविध्याधिभ्योऽपि रक्षति मनुजान् सदाचारः। अतः सदाचार एव धर्ममूलम्, समुन्मूलकश्च दुराचाराणां, शश्वद्भगवत्प्रीतिकरश्चेति सर्वात्मना परिपालनीयश्चेति। अयमेव हि भक्तेर्मुक्तेश्चापि प्रथमः सोपानभूतः सदाचारः। इत्यादि समुपदिश्य, सन्तोष्य च सर्वान् सर्वैस्तत्रत्यैर्भावुकवरैः सम्मानिताः समर्चिताः साधुमण्डलीपरिमण्डिताः भवबद्भक्ति - प्रचारैकपण्डिता अखण्डिताऽऽचारपरम्परापरिपालनपटीयांसः श्रीस्वामिनः सशिष्याः मिथिलां प्रति प्रस्थातुकामाः श्रीरामानुस्मरणतन्नामसंकीर्तन - जयजयेति - महाघोष - घोषित-दिगन्तराला नाशितसकलश्रोतृगण - मनःस्थितविविधभावना - जनितजञ्जालाः, मध्येमार्गं नैमिषारण्यक्षेत्रस्थलीमपि भगवन्नामध्वनिभिः पावयन्तो मिथिलाप्रदेशगतां जनकपुरीं प्राप्य तत्रत्यां वसुमतीं प्रणम्य श्रीजनकनन्दिनीबालकेलिविलसितपरागपटलां पावनावनीं स्मारं स्मारं भक्त्युद्रेकाद्द्रुततरहृदयाः श्रीरामानन्दाचार्याः तत्रत्यान् वालुकाकणानादाय शिरसि निधाय मुहुर्मुहुः प्रणमनशतसमादराः समभूवन्।

श्रावं श्रावं समागमनवृत्तान्तं, श्रीस्वामिनां दर्शनार्थं सर्वे मिथिलानिवासिनो दर्शनोल्लासविलसितस्वान्ताः समाजग्मुः। विहिताचारपरम्परानुसारकल्पितसमुपहारं सम्मुखीकृत्य कृतप्रणामाः सभान्तः सकामाः निष्कामा अपि सदुपदेशविशेषश्रवणोत्कण्ठितश्रवणयुगलाः समासादितपरिमण्डलाः प्रवचनाखण्डलाभविचेतुमनसः सुमनसः सज्जनाऽग्रगण्या धन्या धर्मधुरीणाः समुपस्थिताः सञ्जाताः। विशालसभासभाजिता इव समवेताः संवृत्ताः।

तदानीं समुन्नतैकदेशे परिकल्पितोच्चसिंहासने विराजमानाः श्रीस्वामिनः स्वकीयां प्रवचनामृतामोघवृष्टिसृष्टिं कलयामासुः—

प्रवचनारम्भे ["नृदेहमाद्यं सुलभं सुदुर्लभं०"] इति श्लोकव्याख्यापुरःसरमेव धर्माचरणाद् मनुजो लभते सर्वविधं लौकिकसौख्यसन्तानम् उक्तञ्च-

"विद्या रूपं धनं शौर्यं कुलीनत्वमरोग्यता ।
राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्मादवाप्यते ॥" इति ।

सज्जनाः ! भगवदीयाः !! यद्यपि धर्मस्य सत्ता तु लोके जल-स्थलनभश्चरेष्वपि विद्यत एव किन्तु कर्मणां, ज्ञानस्य भक्तेश्च अधिकारिणो मानवा एव, सर्वेन्द्रियसम्पन्नाः । ज्ञान-विज्ञानयोरपि भाण्डागारो मनुज एव भवति नान्योऽपरः कश्चिदपि जन्तुः । अतो मानवशरीरधारिणां कृते परमावश्यकमेव प्रतिपदं प्रतिवेलं स्वधर्माऽऽचरणम् । धर्माचारतोजनो नहि क्वचन विषदिति-उक्तमपि-["नहि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति ।"] इति गीतावाक्यान् मानवः कल्याणमेवाऽऽप्नोति । किन्तु-यो हि जनो धर्मप्रतिकूलमाचरति सः सद्य एवाधः पतत्येव ।

( तथाहि मनुः० ४।१७४ ) "अधर्मेणैधते तावत्ततो भद्राणि पश्यति ।"
ततः सपत्नाञ्जयति, समूलन्तु विनश्यति ॥"

अतः सर्वात्मना जनो धर्ममाचरेत अधर्माच्च विरमेत् । इति सिद्धान्तः । सच धर्मश्चतुर्विधः १—वर्णधर्मः । २—आश्रमधर्मः । ३—सामान्यधर्मः । ४—साधनधर्मश्चेति । "वर्णव्यवस्थानुसारं प्रवर्तितोधर्मो वर्णधर्मः । वर्णाश्च-ब्राह्मणः-क्षत्रियः वैश्यः, शूद्रश्चेति । तदर्थं प्रचारितो हि वर्णधर्मः । आश्रमाश्चापि चत्वार एव - ब्रह्मचर्य्याश्रमः, गृहस्थाश्रमः, वानप्रस्थाश्रमः, संन्यासाश्रमश्चेति । सामान्योहि धर्मः सर्ववर्णैरेव परिपाल्यः सर्वोपयुक्तः सकलजनसाधारणः । यथा-सत्यभाषणम्, दया, अहिंसा, अस्तेयं=अचौर्य्यं, अक्रोधः, त्यागः, तितिक्षा=सहनशक्तिः, इन्द्रियनिग्रहः, स्वाध्यायः, सन्तोषः समता भगवतो भक्तिश्चेति सामान्योधर्मः । सर्वात्मना शुद्धभावेन, भगवदर्थमेव निष्कामभावनया विहितो यो धर्मः सः साधनधर्मः । इति ।

अत्र—सामान्यधर्मः, साधनधर्मस्तु सर्वेषां कृते समान एवेति पालनीयः । वर्णधर्मास्तु आश्रमधर्मस्तु प्रत्याश्रमं भिन्ना एवेति विवेचनीयाः तथाहि :—

ब्रह्मचर्याश्रमधर्मः—मानवजीवनरूपिणः प्रासादस्य सुदृढः शिलान्याससदृक्षः । सम्यक् परिपालिते ब्रह्मचर्याश्रमे - अग्रेतना सर्वं एवाऽऽश्रमाः स्वत एव परिपालिता भवन्ति । २५ वर्षात्मकं वयो यावदयमाश्रमः प्रचलति । अस्मिन्नेवाश्रमे वर्तमानोजनः सकलाश्रमसाधनयोग्यतां सम्पादयति । "विद्यां बुद्धिं श्रियं बलं, आयुष्यमारोग्यं तेजोमेधां प्रतिभाप्रागल्भ्यम् स्वस्तिः, श्रद्धां यशः प्रज्ञाम् सर्वं सम्पादयति ब्रह्मचर्य्यादेव जनः ।

यथानियमं ब्रह्मचर्य्य-पालनाऽभावे एव जनाः सद्यो जराग्रस्तास्त्रस्ताः दीना-हीना इव चङ्क्रमन्ते। न पूर्णायुषो भवन्ति, न वा स्वस्थाः सुदृढाङ्गा एव लसन्ति। अतः स्वास्थ्य - धन - धान्य - समृद्धये, विद्या, बुद्धिबललब्धये, दीर्घायुष्ट्वकाम्यया २५ वर्षपर्य्यन्तन्तु सर्वात्मना ब्रह्मचर्य्यस्य पालनमेव कर्त्तव्यमेवेति।

गृहस्थाश्रमः—ततः २५ वर्षेभ्यः पश्चाद् मनुष्यो गृहस्थाश्रमं प्रविशेत्। गृहस्थाश्रम एव सर्वेषां स्वेताराश्रमाणां सर्वथाऽऽश्रयः। अयमेव ब्रह्मचर्य्यस्य-वानप्रस्थस्य-संन्यासस्य च सेवया, अन्नप्रदानादिभिः सत्कारैश्च संरक्षकः। अस्मिन्नेव गृहस्थाश्रमे वर्तमानोजनः सर्वानेव स्वेतरान् प्राणिनः, मानवान् देवान् पितॄन् पशून् पक्षिणः सर्वानेव कृमिकीटपतङ्गप्रभृतीनपि सन्तर्पयति। दैनन्दिन्या स्वस्वदिनचर्यया-प्रीणयति-तथाहि प्रातः ब्राह्मे मुहूर्ते समुत्थाय भगवच्चिन्तनपूर्वकं स्वदेहकृत्यान्निवृत्य=शौच=दन्तधावन-स्नानादिभ्यः स्वस्थः सन् सन्ध्यावन्दन - पितृतर्पणादिकमखिलं ब्रह्मकर्म सम्पाद्य=दैनिक हवनाद्यैरग्निसमाराधनं विधाय देवादीन् संतर्प्य-देवर्षिपितृतर्पणाद्यैश्च तानाप्याय्य, भगवतः समुपासनां सेवां सम्पाद्य-नैवेद्यं समर्प्य, हविष्यान्नेन च बलिवैश्वदेवविधानेन भोज्यपदार्थादीनां शुद्धिं विधाय-स्वभोजनकाले समागतानतिथिगणान् याचकान् प्राघूर्णिकान् ब्राह्मणान् ब्राह्मणेनरान् - अन्यानपि तदानीमकस्मादेवोपस्थितानाश्वचाण्डालप्रभृतीन् यथाकालं यथादेशं यथास्वात्मनस्स्थितिं यथास्वरूपं यथायोग्यं वित्तशाठ्यविवर्जनपूर्वकं सम्मान्य, सन्तोष्य,वृद्धान् स्व-मातृ-पितृ-पितामहादींश्च भोजयित्वा स्वयमपि सपत्नीकः सप्रेम सानन्दं; समालापपुरःसरं भुञ्जीत। अर्थात् प्रायोगृहस्थाश्रमस्थमेव जनं वटुकाः ब्राह्मणा अतिथयः याचकाः साधवः दीना अनाथाः विकलाङ्गाः सकलाङ्गाः विवशा वा आपद्ग्रस्ताः प्रायः सर्वविधा एव जनाः सन्तोमहान्तोऽपि समागत्य समाश्रयन्ते। अतः समेषामेव यथावकाशं मधुरवचनालापपूर्वकं ससम्मानं सत्कारो विधातव्यः। तेषां गमनावसरे गृहद्वारपर्य्यन्तंताननुवर्तनं कृत्वा सप्रणामं विसर्जयेत्। इति।

यद्यपि सकलसाधारणजनानां कृतेऽपि सर्वदा स्नानादिविधानमत्यावश्यकं विशेषतस्तु विप्राणां ( द्विजन्मनाम् ) कृते त्वनिवार्यमेव। शास्त्रेषु च स्नानादीनां गुणा वर्णिताः। यथा :— "चरकसंहितायामायुर्वेदे—

"पवित्रं वृष्यमायुष्यं श्रम-स्वेदमलापहम्। शरीरबलसन्धानं, स्नानमोजस्करं परम्॥"

एवमेव द्विजन्मनां सन्ध्यावन्दनविधिः। अकरणे च राजदण्डवत् प्रत्यवायः। फलन्तु:—

"सन्ध्योपासनमात्रेण कल्मषात् पूततां व्रजेदिति"।

किञ्च "यदह्नात्कुरुते पापं कर्मणा मनसा गिरा।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु हन्ति तत्।"

"यद्रात्र्या कुरुते पापं कर्मणा मनसा गिरा ।
पूर्वां सन्ध्यामुपासीनः प्राणायामैर्व्यपोहति ॥"
सन्ध्याया अकरणेतु "योऽन्यत्रकुरुते यत्नं धर्मकार्ये द्विजोत्तमः ।
विहाय सन्ध्यां प्रणति स याति नरकाऽयुतम् ॥–कूर्मपुराणे

किञ्च:— अस्नायी समलं भुंक्ते, अजपी पूय-शोणितम् ।
सूर्यायाऽर्घ्यमदत्वातु सूर्यं हन्ति च पापकृत् ॥

एवमेव सनातनधर्मावलम्बिनां कृते "शिखा" संरक्षणमपि परमावश्यकम् । "गोशफ" परिमितविस्तारा शिखैव शिखा यया ब्रह्माण्डस्य शिरस्थसर्वशक्तिसम्पन्नभागस्य संरक्षणमेव क्रियते । मेधाशक्तिः स्मृतिः कर्मदाक्षिण्यम्, नव-नवप्रतिभोन्मेषणं, गाम्भीर्यं, तेजः, ऐश्वर्यं, चाक्षुषं ज्योतिः सुदूरदर्शित्वादिगुणाः समुत्पाद्यन्ते । आर्यसंस्कृतेः प्रतीकम् वैदिककालिकं धार्मिकमिदं चिह्नम् ।

गृहस्थाश्रमिणां कृते पञ्चमहायज्ञा अपि शास्त्रेषु निर्दिष्टाः— यथाहि :— १–ब्रह्मयज्ञः, २–पितृयज्ञः ३–देवयज्ञः ४–भूतयज्ञः ५–मनुष्ययज्ञश्चेति । तल्लक्षणञ्च— 'अध्यापनं ब्रह्मयज्ञः, पितृयज्ञश्च तर्पणम् । होमोदैवो, बलिर्भौतो, नृयज्ञोऽतिथिपूजनम् ॥' 'एते पञ्चमहायज्ञाः नृणां श्रेयोविधित्सया ।-कर्तव्या विश्वसन्तृप्त्यै, भगवत्प्रीतये सदा ॥'

वानप्रस्थाश्रमः—ततोऽपि २५ अर्थात् ५० वर्षात्मकोजनः २५ वर्षपर्य्यन्तं वानप्रस्थाश्रमं भजेत तदा सपत्नीकः किं वैकाकी वनं व्रजेत् । कन्दमूलफलाशनः सन् सर्वान् नित्यनैमित्तिकादीन् धर्मान् सन्ध्यावन्दन-भगवत्सेवादिकं सर्वं कुर्वन् पञ्चमहायज्ञादिविधानमपि विदधत्=जितेन्द्रियः कर्मणा वाचा मनसा सन्तुष्टः सर्वलोकहितचिन्तनोऽद्वेष्टा सर्वप्रियः सर्वहितेरतस्तिष्ठेत् ।

यदि सर्वविधाभगवत्सेवोपयोगिनी सुविधा सुतरामयत्नेनैव गेहेऽपि सर्वथाऽव्युच्छिन्ना प्रचलति-तर्हि वनगमनस्याप्यावश्यकता नास्ति । भगवत्सेवायामेवाहरहश्चिन्तनपरः परित्यक्त - सकललौकिककायक्लेशजनकयगपारः अव्युच्छिन्नधर्माचरणसंरतो भगवच्छास्त्रावलोकनसौख्यानन्ददाननिरतश्चेत् - गृह एव तिष्ठन् सर्वं लभते जन्मसाफल्यम् ।

## संन्यासाश्रमः

संन्यासाश्रमः—वानप्रस्थानन्तरं २५ वर्षेभ्यः पश्चात्, अर्थात् ७५ वर्षात्मके गृहस्थेऽयं संन्यासः सम्यक् प्रकारेण न्यासः । प्रायः संन्यासो द्विविधो भवति लौकिकोऽलौकिकश्चेति । लौकिकस्तु संन्यासः प्रसिद्ध एव यत् गृहादिकं-त्यक्त्वा शिखा-सूत्र-

परित्यागपुरःसरं सकलवैदिककर्मकाण्डाग्निहोत्रादि क्रियाकलापं स्वात्मनि समाहृत्य=मुण्डितमूर्धजः काषायाऽम्बरधारी दण्डधरः परिव्राजकत्व कर्मभरः [ 'भिक्षापात्रोदरामात्र' ] करपात्रो विहितभिक्षान्ननिर्वाहो ब्रह्मचिन्तनपरो नैकत्रनिवसेदिति । परन्त्वलौकिकस्त्वलोकिक एव स हि भगवदुक्तप्रकारकः—

"काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।" इति ( गीता १८।२ )

सं०=सम्यक् न्यासः=सुरक्षितीकरणम् = निर्भयस्थाने संरक्षणम् । इति-यत्र रक्षितं नोच्छिद्यते न क्षीयते नाऽपह्रियते=प्रत्युत प्रवर्द्धत एव । स एव न्यासः संन्यासः=तथाविधस्तु=सर्वविधसुखसाधनवस्तुनिचयस्य यच्च यावद्धनपटलस्य=रत्नाभरणदीनाम्-पुत्रकलत्र - देहगेहादीनां-सर्वविधायाः लौकिककर्मव्यापृत्तेश्च - निजोपास्यस्वरूपे भगवति सर्वात्मभावेन समर्पणमेव सम्यङ्न्यासः । तथाविधः संन्यासस्तु गेहस्थितोऽपि जनः सर्वविधशुभाशुभकर्मफलत्यागपुरःसरमेव भगवते सकलवस्तुनिचयं समर्प्य स्वं देहमपि कर्मणा वचसा मनसा च भगवत्सेवायां नियोज्य समस्तस्य कालस्यवा भगवत्सेवने भजने स्मरणे च यापनम् सर्वदा भगवदाराधनमेव परमं धर्मं मत्वा तस्मिन्नेव भगवत्सेवनव्यापारे सर्वात्मभावेन समासक्तिरेव-संन्यासः । परश्चायमतीवदुर्लभतरः सर्वथाऽसाध्यो न हि साधारणजनसुलभः । यत्र न स्वात्मनः सुखसौविध्यचिन्तनावसरः । केवलं भगवदाराधनमेव भगवत्प्रीत्यर्थमेव सकलकर्मकरणम् । शारीरिकं भरणपोषणमपि भगवत्प्रसादरूपेण भगवदर्पितवस्तुना निर्वाहमात्रम् । सकलं गेह - देहं धनजनदारादिकं भगवत एव न हि जीवस्येतिस्वीकरणम् । न हि सस्तदुपयोगेऽपि स्वतन्त्रः । भगदधीनत्वादात्मनोऽपि न प्रभुः स्वयम् । अत ईदृशस्त्वतीव दुर्लभो दुःसाध्यो दुराराध्यो व्यापारश्चेति । तथाविधो यदि सः संसारे सिद्ध्येत् संन्यासः, तर्हि किमतः परं परमं साधनम्, पुरुषार्थोवा । भुक्ति-मुक्तिरूपोभयविधः पुरुषार्थस्तु करगत एव तस्य ।

इत्थमाश्रमधर्माः सर्वदैव सेवा, निराश्रमस्तु न कश्चित् तिष्ठति, यस्मिन् कस्मिन्नप्याश्रमे वर्तमान एव जनः सर्वदा तिष्ठति "निराश्रमी न तिष्ठे" दिति वाक्यात् । लोकेऽपि प्रायशोजनाः सुखमेव कामयन्ते किन्तु सुखं हि धर्माधीनमेव । योहि धर्मकर्मणि निरतः स एव सौख्यं लभते उक्तम् च—

"सुखं वाञ्छन्ति सकलाः तच्च धर्मसमुद्भवम् ।"

"तृस्नाद्धर्मः सदा सेव्यः सर्ववर्णैः प्रयत्नतः ।" इति धर्मोपरि विवेचनं विधाय प्रवचनसुरतरङ्गिणी-वारिधारा-प्रवाह-पातनपरिपूतान् धर्मप्रसूतानिव सर्वान्

विधाय मिथिलातः "नयपाल" [नेपाल] राज्यं प्रति तत्रत्यमहाराजेन साग्रहं समाहूताः प्रतस्थुः श्रीरामानन्दाचार्याः ।

नेपालीय जनतया तत्रत्यनरेन्द्रवरेण च भूरि भूरि सौभाग्योदयं मन्वानेन सोल्लासं महामहोत्सव इव स्वागतसमारोहः समासादितः । तत्रत्यजनतया प्राथिता श्रीमदाचार्याः तत्रत्यनरेन्द्रस्याप्याशयं विज्ञाय राजप्रजयोः पारस्परिकसम्बन्धं प्रदर्श्य राज्यसञ्चालनशकट्याः राजा प्रजा चेत्युभे एव चक्रे स्तः । चक्रयुगलं विना न प्रचलति साम्राज्यशकटी । अत उभयोः परस्परं प्रेम पारस्परिकः स्वात्मैकभावनिष्ठः सद्भाव-पूर्णो व्यवहारः सहयोगो वा तदैव राज्ये सर्वाः समृद्धचन्ते । सुस्थिरश्च सुप्रतिष्ठितश्च सम्पन्नश्च राज्यं भवति । राजप्रजयोः पारस्परिकः पिता-पुत्रवत् सुदृढः सम्बन्धो भवति । राजाहि स्वकीयां प्रजां स्वसन्ततिमिव पालयति । तथैव प्रजाऽपि स्वपितरमिव सम्मानयति राजानमिति परम्परागतो नियम आसीत् । यथाहि सूर्यः पृथिवीतः स्वकरसमूहैः रसं गृह्णाति पुनः प्रावृषि तदुपरि अनन्तगुणमेव वर्षयति तदर्थमुदकम् तथैव राजापि जनतायाः विविधकररूपेण यद्वसु गृह्णाति समये दुष्कालादौ, प्रजायाः सङ्कटसमये, स्वकोषाद्धनं निष्काश्य वितरति यथाकथञ्च यतः कुतोऽपि धान्यादि-सङ्ग्रहं विधाय प्रजायाः पालनार्थं यथाकाममन्नादिकं वितरति । तस्याः सुखस्वास्थ्य-लाभायापि सर्वविधं प्रयत्नञ्च कुरुते । सर्वदैव स्वप्रजासंरक्षणायैव स विचिन्तयति । प्रजार्थमेव याताऽऽयातसाधनानि मार्गसंशोधनादि वा विविधं कार्यमाचरति । उक्तञ्च "राजा - प्रकृतिरञ्जनात् ।" प्रजायाः सर्वात्मनाऽनुरञ्जनकरणेनैव राजत्वपदं सार्थक्यं भवति । शासनावसरेहि स क्रूरो दृढतरो न्यायपक्षपाती च भवति । स एव सत्यसाक्षी, सत्यप्रियः सत्यशासको भवति योहि यथाऽपराधदण्डो भवति निष्पक्षन्यायकर्ता । रिपौ सुहृदि वा, समदृष्ट्यैव न्यायं विदध्यात् । यद्यपराधीस्वात्मनः पुत्रोऽपि भवेत् स सर्वथा दण्डयः । यश्च निरापराधः शत्रुः स सर्वथा दण्डनिर्मुक्तः क्रियेत, तदैव तस्य न्यायप्रियता । ईदृशेनैव राज्ञा भाव्यम् । एवमेव प्रजाया अपि तथाविधमेव कर्तव्यम् यत्-सा स्वस्वामिनं राजानं न वञ्चयेत् मिथ्याताण्डवमाकलय्य न तं निजसत्पथात् प्रविचालयेत् । यदि कृतश्चेदपराधस्तर्हि स्पष्टं सत्यमेव राज्ञः सविधे प्रकाशनीयो न गोपनीयः ।

राज्ञा कृते राज्यसञ्चालनभारो न सुलभः । तेषामुपरि समस्ताया जन-तायाः उत्तरदायित्वादि कार्यभारः प्रबलतमः । सकलां नैजां सुखसुविधामपि त्यजति किम्बहुनां वस्तुतो न्यायप्रियः पार्थिवस्तु समयोपरि भोजनमपि कर्तुं न प्रभुर्भवति, प्रजाया हितसाधनसंलग्नः । [ "राज्ञांशरीरं ग्रहणं न भोगायेति" ] शास्त्रमपि तथैव प्रेरयति । कर्तव्यञ्चाति क्रूरतमं मोहपरिवर्जितमेव—

यथाहि —"मित्रं वा बान्धवो वापि पिता वा यदि वा गुरुः।
प्रजा-पालनविघ्नाय यस्त्यक्तव्यः स हि भूभृता ॥"

कियत् क्रूरतरं कर्म प्रजापालने विघ्नकर्ता यदि पिताऽपि गुरुरपि वा भवेत् किमुत पुत्रादीनां गणना, सोऽपि परित्याज्यः। कुतश्च प्राचीनैर्भूमिपैः प्रजायां विघ्नकरः स्वसुतोऽपि देशान्निःसारित इति पुराणेषु बहुशः प्रतिपादितम्।

तथैव राज्ञां स्वभाववर्णनमपि "ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनो रिपौ।
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥"]

किञ्चशास्त्रेषु-अन्यायेनार्थसञ्चयस्यापि निन्दा दुष्परिणामोऽपि प्रकाशितः।
यथाहिः —'अन्यायेन नृपो राष्ट्राद् स्वकोषं योऽभिवर्द्धयेत्।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥ इति स्पष्टमेव।

नैतावदेव-राजाहि सर्वेषां कृते त्वादर्शभूतो भवति। उक्तञ्च [यथा राजा तथा प्रजेति]
तथाहि— 'यद्यदाऽऽचरति श्रेष्ठस्तत्तथैवेतरोजनः।
(गीताः ३ २१) स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥"

अतो राज्ञो यादृशमाचरणं भवति प्रजाऽपि तथैवाचरति। राज्ञातु सदैव सावधानेनैव भाव्यम्। सदाचाररतस्य भूपतेर्राज्ये न क्वचन दुराचारिणी प्रजा भवति। राजा यदि स्वयं स्वेच्छाचारी भवति तदा तदाचारानुरूपं कर्म प्रजासु प्रवर्तते नाऽन्यथा। प्रवृत्तिर्हि लोकाऽनुसारिणी भवति।

किञ्च— "यस्मिन् देशे यथाचारो व्यवहारः कुलस्थितिः।
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥" याज्ञवल्क्य-स्मृतिः

राजा हि :—सर्वदा प्रसादसुमुखः सर्वदोत्साही दूरदर्शी विवेकशीलः धृतिमान् नीतिमान् कृतज्ञः वाग्मी सत्यवादी सदाचारः पवित्रः कुलीनः उदारकीर्तिः गाम्भीर्यौदार्यसौशील्पक्षमावान् निर्व्यसनी, विद्वज्जनसेवकः पक्षपातरहितः गुणग्राही, मिथ्या-प्रशंसापराङ्मुखः प्रजापालकः शुभलक्षणो भवितव्यः।

प्रजा च— राज्ञो राज्यस्य च हितकर्मरता, सद्भावमयी, सदाचार परिपालनतत्परा राजाज्ञानुसारचरिता राजप्रिया राजसेविका, स्वदेशभक्ता परम्परागत - स्वधर्म-संस्कृतिसंस्कृतसंस्कारा धर्मानुयायिनी, पारस्परिक द्वेष-क्रोधेर्ष्याकिषाय-विमुखी, मिथ्या-हारविहार - व्यवहारविरता। परप्रवञ्चनपराङ्मुखी, पारस्परिक भ्रातृभावोद्भूत-स्नेह सौजन्य - पूर्णा परोपकारकुशला, गुरुदेव-द्विजगोसेवानुरक्तमानसा, स्व-स्वधर्म-परिपालन - सच्छास्त्रसंश्रवण - मननचिन्तननिरता, स्वदेशोन्नतितति - कृतिप्रसृति-सहयोगदायिनी, देशसंरक्षण स्वक्षणा च भवितव्या।

इत्युभयोः राज-प्रजयोः कर्तव्यं प्रकाश्य=पुनरन्ते राजवंशसम्बन्धे कथयन्ति-यदयं राजवंशोविशुद्धः सूर्यवंशः यस्मिन् भगवाञ्छ्रीरामः प्रादुर्बभूव तस्मिन्नेव राजवंशे लब्धप्रतिष्ठे विद्यते अत एवात्र श्रीरामराज्यस्यैवानुभूतिर्यदि भवति न तत्राश्चर्यम्। स्वाभाविक एवैष धर्मो राघववंश्यानाम्। अतः स्वाशीर्भिरभिनन्दयामि महाराजं नेपालनरेशम्। आशावानस्मि - यदयं नेपालराज्यं भगवतः पशुपतिनाथकृपाभाजनं भवत् सनातनधर्मभावनोद्भावितपरम्परागत भारतीयसंस्कृति-संस्कृत-सदाचार-प्रसार-प्रवर्द्धित प्रतिष्ठन्तिष्ठेदिति।

इत्युक्त्वा समुपदिश्य च सर्वान्-स्वप्रवचनेन सह सभां विससर्जुः। ततः सर्वे राजा-राजपरिकरसहिताः सभासदः ससम्मानं आचार्यपूजनं चक्रुः।

ततस्ततः प्रस्थाय पुनः सकल विद्यावैभवप्रकाशीं काशीं प्रति - समाजग्मुः सशिष्याः श्रीरामानन्दाचार्याः।

समस्ते चाकोणकोणे भारते भगवद्भक्तेः श्रीरामभक्ति - माहात्म्यस्य च श्री-वैष्णवधर्मस्य प्रचारं प्रसारं कृत्वा सर्वत्र स्वविजयवैजयन्ती - विस्फुरण-विनोदं विधाय स्वशिष्यमण्डलमण्डिता अखण्डितधर्मप्रचाराः प्रसारितविविध - विध भक्तिप्रसाराः सर्वमानवमात्रोद्धारण-कर्मनिरताः विनिवर्तिताऽशेषमानस-मलीमसादिदुर्भावाः सद्भाव-भावितसकलस्वान्ताः नितान्तानन्द - निर्झरिणी - निमज्जित - भक्तनिवहाः श्रीस्वामि-चरणाः समागत्य समलङ्कुर्वन्त्यश्रम - मिति सूचना - सर्वत्र काश्यां वायुवेगेन च विद्युत्प्रसार इव व्याप्ताऽभूत्। काशीस्थाः सन्तो महान्तो विद्वांसश्च सानन्दं सोल्लासं सोत्कण्ठमुपकण्ठमाश्रमस्य यूथशः समवेताः समभूवन्।

तत्रत्यानामाश्रमनिवासिनां कृते त्वपूर्व इवाऽभूतपूर्व इव हर्ष - प्रकर्षः समजनि। सर्वे सानन्दम् सोच्चघोषं श्रीरामानन्दाचार्यस्य जय - जयघोषं सकलमन-तस्तोषमिव प्रसारयामासुः।

---

# नवपञ्चाशत्तमः परिच्छेदः

प्रतिक्षणं वयः परिणतिर्भवत्येवेत्यनिवार्यं कार्यमेतद् प्रकृतेः। सूर्यो हि सर्वदाऽहोरात्रं परिकल्पयन् - पक्ष - मासर्तुपरिवर्तनं विदधत् संवत्सरान् पूरयति पारयति च। दिवाकरीयं दैनन्दिनं परिस्पन्दनमेव कालकल्पनां कारयति। क्रमेण शतसंवत्सरात्मकं मानवीयमायुःपरिपूर्णतामेति। मानवीयेऽपि शरीरे प्रकृतिजन्यं परिवर्तनन्तु प्रचलत्येव, यथा शैशवं कौमारं पौगण्ड यौवनं जरादीनि क्रमेणाऽऽयान्ति यान्ति च। प्रकृतिनियमोऽयं समेषां कृते त्वभिन्न एव। श्रीरामानन्दाचार्या अपि प्राकृतनियममनुसृत्य सम्प्रति वार्द्धक्यमुपपेदिरे।

काश्यां स्वकीये श्रीवैष्णवमठे विराजमानाः यथानियममुपदेशामृतपानं कारयन्तः स्वशिष्यान्, सामयिकीं तदानीन्तनीं भूस्थितिं, भारतीयां वा यवनदुःशासनजनितकुकर्मपरिणमनफलमयीं, विचिन्तयन्तः, परस्परं-विद्वत्तल्लजनिजशिष्यैः समं परामर्शं तन्वते स्म। तदानीमेव कतिपयैः सनातनधर्माऽवलम्बिभिः सद्भिर्महात्मभिश्च तत्रत्यैर्वा नागरिकैः समागत्य सप्रश्रयं प्रणतिपुरःसरं व्यजिज्ञपि, यद् भगवन्! अयोध्यायां तु साम्प्रतं धर्मविप्लवः प्रचलति, तत्र यवनानां महानुपद्रवः प्रत्यहं हिन्दूनामधारिणो जना बलाद् धर्मपरिवर्तनपूर्वकं यवनाः क्रियन्ते। हिन्दूनां संस्कृतिरेव प्रणश्यते। किंबहुना मुल्लापदवाच्यैस्तेषां वित्तभोगिभिः सततं यथेच्छं दुराचारप्रसारः येन केनापि व्याजेन हिन्दूनां विहिंसनं, हिन्दुत्व ध्वंसनम्, शिखासूत्रनिकृन्ततम् कामिनीनां सतीत्वाद्यपहरणेनापि धर्मग्रन्थ - विपोथनेनापि, धार्मिकस्थलध्वंसनेनापि सन्तत प्रवर्द्धमानदुराचारैस्तैः कश्चन विचित्रतम एकः प्रकारो निःसारितः-येन-प्रधानमार्गोपरि समवलम्बमानेन हिन्दूपदधारिणां जनानां स्वयमेव शिखामस्तकाद् समुड्डीय कूर्चरूपे परिणमति। तेन परमधार्मिकोऽपि सः शिखासूत्रविहीनो धृतलम्बकूर्चः स्वकीयहिन्दूधर्मचिह्नविहीनो यवनायितमुखाकृतिः सन् परिभ्रमति। यः कोऽपि हिन्दूनामधारी तस्य यन्त्रस्य नीचैः मार्गान्निःसरति स एव यवनतां याति। तेन च पुनः सः स्ववर्गादपि निःसार्य्यते यवनरूपमुखमण्ड-

लात् न कोऽपि तेन सह व्यवहारं कलयति। तेन खिन्नः सन् सर्वात्मना परवशः, क्षुत्-तृड्भ्यां पीडितः, परित्यक्तसकलकुटुम्बो बलाद् यवनमुल्लाशरणगतो यवनीक्रियते। क्रमेणानेन सहस्रशो हिन्दवो यवनाः कृताः कारिताश्च तेन हिन्दूनान्तु संस्कृतेर्मूलोच्छेदपुरःसरं हिन्दूधर्मपालक-परिवारोऽपि विनाश्यते।

भगवन्! यदि भवादृशा महात्मानः सर्वात्मना समर्था अपि नाऽधुना हिन्दूजनतायाः रक्षणं विधास्यन्ति तर्हि जनता कमन्यं शरणीकुर्यादिति। भूमौ भवादृशां प्रादुर्भावोऽप्येतादृशि धर्मसङ्कटे स्वधर्म-धार्मिक - जनसंरक्षणायैव सञ्जातः। अद्यावधिनैकविधं संरक्षणं विहितं श्रीमद्भिः स्थाने स्थाने हिन्दूनां, परम्पराऽऽयातभारतीयायाः संस्कृतेः, धर्मग्रन्थानां, धर्मस्थलानां, धर्माऽऽचरणस्य, च रक्षणं विहितम्ः अधुना त्वपूर्वतम - यन्त्रप्रभावपरित्रस्ता ध्वस्ताः स्वधर्मपरिपालनदृढतमप्रतिज्ञा अपि बलात् भ्रान्त्यापि क्वचन तेन पथा निःसृताः सद्यः परिवर्तितशिखाकूर्चा सम्भवन्ति ततो जातिबहिर्मुखाः स्वज्ञातिबान्धवैरपि परित्यक्ताः निजकुटुम्बपारिवारिकजनैरपि स्वमण्डलान्निःसारिता नारकीयं जीवनमेव यवनायिताकारा यापयन्ति। कामयन्ते स्वात्मनः समुद्धृतिं साम्प्रतं गवेषयन्ति च समुद्धारोपायम्। न विलोकयितुं-शक्यते तेषां तादृशी सर्वथा विवशा दुःस्थितिः। अतः सर्वात्मना श्रीमतां शरणमेव कामयन्ते। सद्यो विचिन्तयन्तु तेषां सङ्कटोद्धारणोपायम्। इति।

इत्थमयोध्यायां यवनातङ्कमाकर्ण्य सर्वथा शान्तस्वभावाः निरस्तक्रोधमोहादि-द्वेषेर्ष्यासूयादि-दुर्भावाः भावावेशवशंवदा वदान्यवर्या धर्माचार्याः सर्वथाऽक्षुब्धसिन्धवोऽपि संक्षुब्धाः दृढधैर्या अपि समपसृतधैर्याः करुणावरुणालया दयार्द्रहृदयाः सपदि सजलनयनाः संवृत्ताः। अयोध्यास्थ-धार्मिक जनतायाः संरक्षणार्थं विचलितधैर्यान् कारुण्योद्रेक - समुच्छलज्जलधिसमागाधहृदयसागर - समुद्भूतोत्तुङ्गतरङ्ग-विच्छुरित-शीकर - विलासविलुलिततरलनयनान् निजाचार्यानालोक्य सम्मुखमेव समासीनाः सुरसुरानन्दादयः शिष्यप्रवराः सञ्जालि निवेदयामासुः

गुरुवरचरणाः! नायमधिकश्चिन्ताया विषयः श्रीमच्चरणारविन्दमकरन्दजुषामेव श्रीमच्छिष्याणामियं शक्तिर्यत् पूज्यपादानामनुग्रहबलमवाप्य श्रीचरणाऽऽज्ञप्ता एव तत्र गत्वा तत्क्षणं यावनयन्त्र - नियन्त्रणं विधाय स्वकीय - श्रीराममन्त्रप्रभावेणैव तदीय यन्त्रप्रभावपरिवर्तनं सद्यो विधास्यामः। अतः श्रीचरणाज्ञाप्रतीक्षापरवशा एवाधुनाशान्ताः तिष्ठामः, अन्यथा तु तान् स्वयन्त्रसञ्चालनपरिपाटीपराङ्मुखीकरणशिक्षयैव शिक्षितान् विदध्याम। किमधिकं निवेदयामो वितीर्यतामभयवरदहस्त संरक्षणं मूर्द्धसु।

इति श्रुत्वा श्रीरामानन्दाचार्याः प्रहर्षोत्फुल्लमुखारविन्दाः सद्योऽभयवरदवाङ्मधुझरीं प्रवर्षयन्त एव समाज्ञापयामासुः। ससुखं ममाशीः परम्पराशतशतगुणितप्रभावाः महानुभावाः भवन्तः सद्यः प्रयान्तु। गत्वा च तत्र हिन्दूजनतायाः सर्वात्मना संरक्षणं यावनयन्त्रप्रभावपरास्तीकरणपुरःसरं श्रीवैष्णवीयं श्रीराममन्त्रसमुज्जृम्भितानेककोटिमाहात्म्ययन्त्रं सर्वत्र प्रतिमार्गं प्रतिप्रतोलि, प्रतिशृङ्गाटकं, प्रतिद्वारं, किं बहुना पार्श्वस्थ पादपशाखास्वपि यन्त्रराजं स्थापयन्तु। येन सर्वतोव्यापिनी यावनयन्त्रशक्तिः सद्यः प्रक्षीणा भवेत्-महायन्त्रराजः स्वकीयं चक्रं च प्रसारयेत्। तेन साम्प्रतिक हिन्दूजनतावत् यावनीजनताऽपि तथाविधमेवानुभुतिं चाक्षुषीकुर्यात्।

इति गुरुचरणानामाशीर्वादमवाप्य साधवः समर्थाः सच्छिष्याः श्रीसुरसुरानन्दाचार्याणां नेतृत्वमवाप्य श्रीरामानन्दाचार्याणां जयजयध्वनिं श्रीरामभक्तिसमुल्लासिनामसङ्कीर्तनं कलयन्तः श्रीधामाऽयोध्यां प्राविशन्। तत्र गत्वा च यथाऽऽदेशं मार्गेषु चत्वरेषु रथ्यासु च यत्र यत्र यावनयन्त्रं विलोकयामासुः तत्र तत्रैव तद् यन्त्रं विध्वस्तं विधाय तत्स्थाने च स्वकीयं श्रीवैष्णवं यन्त्रराजं निवेशयामासुः तदतिरिक्तेष्वपि विभिन्नस्थलेषु येषु यवनानामधिकतमं यातायातं मनसि निश्चितं तत्रतत्रैव श्रीवैष्णवयन्त्रराजं स्थापयामासुः। तेन च सद्य एव यावनयन्त्रप्रकोपं पातालतलं सम्प्रेष्य स्वकीयः प्रभावः प्रस्तारितः। तत्क्षणमेव ये ये तद्यन्त्रराजाधस्तान्निःसृतास्ते सर्व एव तत्क्षणं दिव्यतिलकालङ्कृतभालपट्टाः पट्टाऽभिषिक्ताः शिष्या इव सुदीर्घशिखामण्डितमस्तकाः तुलसीमालामण्डनमहितकन्धराः - वसुन्धराभूषणा श्रीवैष्णवाऽनन्यतमभक्तिभावनाभावित - स्वभावाः भावाऽभिभूतभक्तिभावनानुरूपवाग्विलासाः संवृताः। ये हि यवनयन्त्रप्रभावेण पुरा परिवर्तितशिखाकूर्चा आसन् यवनप्रायास्तेतु तत्क्षणमेव श्रीवैष्णवाः सञ्जाताः किन्तु ये सुदृढतराः यवनसंस्कृतिसंस्कृतसंस्काराः भुवो भारायिता अपराक्रमणादिदुराचारनिरता मुल्लानामधारिणो धूर्ताः लुण्टाकाः घोरयवना आसन् तेऽपि सद्यो मुण्डितकूर्चाः विधृतविशालशिखाः स्वतःसमुद्भूतपूततुलसीमालामण्डितकन्धराः विशालोर्ध्वपुण्ड्रतिलकाञ्चितनिटिलतटा मुखतः श्रीरामश्रीराम रटन्तो ह्यटन्तश्च धरामण्डले विस्मृताल्ला - विस्मिल्लाहिर्रहमानिरहीमाः प्रगीतानन्तश्रीराममहिमानः सर्वतो दृग्गोचरीभूताः सञ्जाता। किं बहुना आबालवृद्धाः समस्ता यवना ये ये हि यत्र यत्र गच्छन्तिस्म तत्र तत्रैव सर्वत्र यन्त्रराजप्रभावेण सद्यः समुत्पाटितकूर्चाः धृतलम्बायमानशिखायुतमुण्डितमस्तका दत्ततिलकमालाः गलस्थिततुलसीमाला एव स्वात्मनः पश्यन्तिस्म। यदा च ते स्वस्वगेहेषु प्रविष्टा भवन्ति स्म तत्र तत्रैव तेषां रमण्यः यवन्यस्तान् निःसारयितुमेव चुक्रुशुः क्रोशन्ति स्म।

विचित्रतममिदमात्मविपर्य्ययमालोक्य दर्पणेष्वपि निजाननं विलोकयन्तिस्म तदा स्वमुखविपर्य्यासिसन्त्रस्ताः सद्यस्तिलकादीन् ध्वंसयितुं यथा यथा यतन्तेस्म तथा तथैव सुदृढतरं स्थूलात्स्थूलतममेव सर्वं तत् तथैव पुनरङ्कितं भवति स्म.। स्व स्व गृहे प्रविष्टानां तेषां कामिन्यो यवन्यः तन्मस्तकेभ्यस्तेषां शिखां यथा यथा समुत्पाटयन्ति स्म तथा तथैव द्विगुणतरंलम्बायमाना विस्तारितविस्ताराशिखाः पुनः पुनः प्ररोहन्ति-स्म। उत्पाटनाऽवसरे च नितान्तकष्टानुभूत्या क्रदन्तिस्म वराकाः तथापि न ततो मुक्तिर्जाता, केवलं कष्टभुक्तिरेव प्रावर्द्धत।

प्रतिक्षणं तत्कामिन्यस्तेषां शिखामाकृष्याकृष्य सावमानं भर्त्संयन्तिस्म तान्। किं कृतं मुल्ला हा अल्ला किमिदं जातं, वस्तुतोऽयमेवास्माकं मुल्ला (पतिः) किमुत कश्चिदन्योधूर्तः प्रवञ्चको वेति वारं वारञ्च तान् लत्ताभिस्ताडयन्ति स्म। तेऽपि हा अल्ला हा अल्ला किमिदं जातं, बीबी, ! मैवं लत्ताभिर्मां ताडय, अल्लाशपथं, अहमेवाऽस्मि ते "खाविन्दः" सम्यक् प्रेक्षस्वेति भूयो भूयो दुर्गतिमेवानुभवन्ति स्म यवनाः दुराचारिणः। स्वकर्मफलं भुञ्जन्ति स्म नासीत् तेषां स्वगृहे निःशङ्का स्थितिः। तेषां कामिन्योऽपि न तेषु श्रद्धाबद्धाः भवन्ति स्म। केवलं दूरत एव रोटिकाप्रदानं-कुर्वन्ति स्म। कथमेवं ते हिन्दूनामिव रामभक्तिरटनां कुर्वन्त्येते तु वञ्चका एवेति मन्यन्तेस्म। इतः पूर्वं यादृशी हिन्दुजनानां स्थितिरासीत् स्वगृहादपि निष्काशनादि-व्यापारः प्राचलत् ततोऽपि दशगुणितो दुर्व्यवहारस्तदीयाभिरेव मुल्लामहिलाभि-र्विधीयते स्म। स्व-स्वगृहेष्वपि निजपत्नीभिरेव तैः सह तथाऽवमानजनको व्यवहारः प्रवर्तितोऽभूत्तर्हि ते यदा अयोध्यातो वहिर्भागविभिन्नप्रान्तेषु स्वस्वसम्बन्धि-बन्धु-बान्धवानां गृहे गच्छन्ति स्म तत्र तत्रैव धूर्ताः हिन्दवः समायाताः मारयत मारयत-ताडयत ताडयत, अपसारयतापसारयतेति घोरतरमपमानं कृत्वा दुर्वचोभिरेव भृशं ताडिताः निःसारिताः सञ्जाताः। किम्बहुना अयोध्यायां यवनानां प्रवेश एव समवरुद्धोऽभूत्।

इत्थं शनैः शनैः दुर्दशाग्रस्तानां समस्तानामयोध्यावासिमुल्लानां स्थितिः देहल्यामपि पातशाह "बहलोललोदी"ति महायवनस्य कर्णे निपतिता सकला परिस्थितिश्च तदा सः श्रीमद्रामानन्दाचार्याणां तथाविधं चमत्कारातिशयं-बहुशः पुराऽप्यनुभूतैः स्वात्मन्येव शिरोवेदनापसारणादिभिः प्रदर्शितचमत्कारैः सर्वं तत्कृतमेवेति ज्ञात्वा स्वकीयं कञ्चन धर्मगुरुं - श्रीमद्रामान्दाचार्यचरणसमीपं काशींप्रति प्रेषयामास। येन पारस्परिकः सद्व्यवहारः प्रसरेत् मनोमालिन्यञ्च नश्येत्। स्नेहसद्भावश्च हिन्दू-यवनयोर्मिथः प्रवर्तेत।

पातशाहस्याज्ञां सहसा तत्क्षणमेव काशीगमनार्थं श्रुत्वा यवनानाञ्चाऽयोध्यावासिनां तथाविधां दुःथितिञ्च ज्ञात्वा स हि यवनधर्मगुरुः काजी-शीघ्रं काशीमागत्य-श्रीवैष्णवमठे श्रीरामानन्दाचार्यचरणौ शरणीकृतवान्। स्वपातशाहोक्तं सर्वं यथावन्निवेदितवान्। तथाविधां तस्य प्रार्थनामाकर्ण्य परमदयार्णवांश्च स्वाचार्यान् विज्ञाय लब्धाज्ञः श्रीकबीरः सद्यस्तं प्रत्युदतरत्–यत्–काजीमहोदयाः! श्रूयन्तां सम्प्रति निजकर्णकुहरं स्वच्छीकृत्य सावधानतया। अद्य स्वकीयोपरि समापतिता विपत् तदातु सद्यो देहलीत इतः पर्य्यन्तं धावमानाः समायाताः किन्तु यदा हिन्दूनामुपरि महामहान्तोऽत्याचाराः पातितः तैर्नीचाधममानसैः न तदा कर्णोपरि यूकाऽपि प्रसृता। समुन्मील्य निजाक्षियुगलमालोकयन्तु आस्माकीनेषु हिन्दूबन्धुषु कियान् प्रवर्तितोऽत्याचारो भावत्कैर्दुष्टशासकैः। अस्ति किमु भवत्सु-यस्मिन् कस्मिन्नापि तथाविधा क्षमता या हि तच्छतांशमप्यस्मत्प्रयुक्तमत्याचारं सोढुं शक्ता स्यात्। किमधिकं गजनिमीलिकामाचरत्सु कथनीयम्। किन्त्वस्ति शान्तेरेकः, समुपायः काम्येत यदि वस्तुत,ः तर्हि सद्यः स्वपातशाहसविधे गत्वा निवेदयन्त्वस्मत्कथनं, स हि सर्वमस्मन्निवेदनं स्वीकुरुते तर्हि भविष्यत्येषा शान्तिर्नान्यथेति। श्रूयन्तामधुनाऽऽस्माकीनां या याः समस्याः—प्रत्यहं प्रवर्द्धमाना नवनवाः समुपस्थाप्यन्ते भावत्कैः शासकाऽधमैः। सन्ति नस्ता द्वादशसंख्यकाः भिन्नभिन्नतमाः या ह्यनिवार्याः सद्य एवाऽपसारणीयाः, या हि हृदि सर्वदा शूलायन्ते हिन्दूजनतायाः। ताश्चैताः—

१—सर्वतः प्रथमा समस्या त्वियमेव यदस्मदीयाः हिन्दूपदवाच्या जनाः स्वतीर्थयात्रार्थं गच्छन्ति तेभ्यस्तीर्थयात्राकरो गृह्यते सहि सर्वथाऽनुचितः सद्य एव स जजियाकरः समपसारणीयः।

२- द्वितीया च सा, या हि हिन्दूनामधारिणो वयं स्वेष्टदेवाराधनार्थं भगवन्मन्दिराणि, मठस्थानानि, आश्रमांश्च निर्मापयन्ति तेषां कृते राजकीयावरोधः प्रतिबन्धो वा प्रवर्तितः सोऽप्यपसारणीयः।

३—हिन्दूनां विवाहसमये वरयात्रायां वाहनारूढो वरोऽपि भवन्मस्जिदसम्मुखे समीपेऽप्यागतः सद्योऽवंतार्यते वाहनादिति महत्तममपमानं हिन्दूनां हृदयशल्यमिव व्यथते। अतोव्यथाकरोऽयं नियमः सद्यःसमपसारणीयः।

४—आस्माकीनस्य हिन्दूधर्मस्य प्रचारे प्रसारे वा न कश्चन व्याघातः समुत्पादनीयः। यथाऽधुना निघ्नीक्रियते तथाविधः प्रचारः। सोऽपि क्षिप्रं समुत्पाटनीयोऽय विषवृक्षः।

५– अस्मन्मातृभूता गावः याहि निर्वैरं सकलोपकरिण्यः यथा हिन्दूनां स्वदुग्धदानेनोपकारं कुर्वते तथैव यवनानामपि न ताः क्वचन भेदभावं कलयन्ति सममेव पयोवितरणेन समुपकुर्वन्त्येव, ता निपराधाः सर्वथा न विहिंसनीयाः स्युरिति त्वरितमेवाऽऽदेशः समस्ते भारते प्रसारणीयः । न कुत्रापि गोहिंसा भारते कर्णगता स्यादिति ।

६—हिन्दूनां धार्मिका ग्रन्था बहुमूल्या अपि भ्राष्ट्रेषु भर्ज्यन्ते, अग्निसात्क्रियन्ते, विदार्य्यन्ते, विपोथ्यन्ते पद्भ्यामिति सपदि निरोद्धव्योऽयं दुराचारो दुर्व्यवहारो वा । अमुद्रितानाञ्च ग्रन्थानां प्रकाशनाऽवरोधोऽपि निरोद्धव्यः ।

७—अस्मद् देवमन्दिराणि विध्वस्तानि विधाय तदुपरि मस्जिदस्थापनादिरूपं दुर्वृत्तमविलम्बमेव निरलम्बितं भवेत् न पुनरितः प्रभृति क्वचन मन्दिरादि - निपातनदुष्टकृतिः कर्णकुहरीभवितव्येति द्रुततरमेव तद्दुष्कर्मविनिवर्तकः शुभसमादेशः प्रसारणीयः । सहैवानेन मस्जिदेषु बलात् हिन्दूभिर्नमाजपठनादि कर्मापि रोद्धव्यमेव ।

८—भवतां "मोहोर्रम" दिनेषु हिन्दूनामपि विशेष व्रतनियमोत्सवादयोऽपि न क्वचन भारते कस्मिन्नपि काले रोद्धव्याः, ईदृश आदेशोऽतिशीघ्र प्रसारणीयः ।

९—अस्मन्मन्दिरेषु च भगवतो जागरणविधौ शङ्खवादनध्वनेरवरोधोऽपि क्षिप्रं निरोद्धव्यः । येन यथेच्छं शङ्खवादनप्रसारो यथावत्प्रचलेत्

१०–सामान्येष्वपि समुत्सवेषु जनसम्मर्दावसरेषु (मेलामहोत्सवादिषु च ) न कदाचन तथाविधाऽवसरजनितः करो ग्राह्यः स्यादित्यादेशोऽत्यरं प्रसारणीयः ।

११–अस्मात् क्षणादारभ्यैकस्या अपि हिन्दूमहिलायाः सतीत्वस्यापहरणं न करणीयमिति साग्रहं संसूचनीयाः समे यवनाः पदाधिकारिणश्चेति-ये प्रत्यहं बलात्कारकरणस्वभावा एव दुःशासन प्रवृत्तयः सन्तीति तेषां कृते (तथाविधदुराचारानां कृते घोरतरोदण्डः (इन्द्रियच्छेदादिरूपः) प्रवर्तनीयो व्यवहरणीयश्चेति ।

१२–बलाच्च न कञ्चन हिन्दूजनं यवनीकरणविधानेन पथभ्रष्टं कर्तुं कारयितुं वा प्रवृत्तिरेव नाद्यप्रभृति भवेत् कस्यापि काजीपदवाच्यस्येति तूर्णमेव भेरीघोषेण निवेधाज्ञा प्रसारणीया । इति ।

इत्थं सर्वविधाः समस्याः श्रुत्वा सहि यवनधर्मगुरुः यथादेशं यथासन्तोषं यथारुचं राजमुद्राङ्कितसन्धिपत्रं विलिख्य सश्रद्धं समर्प्य शीघ्रमेव यवनदुष्कृतदूरीकरणाय अयोध्यां गत्वा शान्तिस्थापनाय च प्रार्थनांचकार ।

तदनुसारं श्रीरामानन्दाचार्याः स्वयमेव स्वशिष्यपटलपरिवृता अयोध्यामागत्य सर्वान् सुरसुरानन्दादीन् सम्बोध्य श्रीवैष्णवयन्त्रराजप्रभावं प्रशमयितुमाज्ञापयामासुः। येन सर्वे ते यवना सङ्कटनिर्मुक्ताः सहबन्धुत्वभावनया हिन्दूभिः समं व्यवहारेयुरिति सद्यो व्यवस्था तथाविधा कृता पारिता च स्वप्रतिज्ञा।

ततः प्रभृति यवना, स्वस्थाः संवृत्ताः न पुनस्तेषां हिन्दूविरुद्धाचरण - प्रवृत्तिस्तेषु क्वचन जागरिताऽभूत्। दासायिता एव तत्रत्याः समे यवनाः ससुखं न्यवसन्।

ततश्च ये हि यवनयन्त्रप्रभावपतिताः समभूवन् हिन्दूजनाः सर्ववर्णवर्गस्थाःस्तान् न पुनस्तत्तज्ज्ञातेयाः बन्धुबान्धवाः साजात्यव्यवहारे स्वीकृतान् ज्ञातिबहिष्कृतान् खिन्नान् दुःखितानपि पुनः प्रायश्चित्तादि व्रतोपवासपञ्चगव्यप्राशनादिभिः विविधशास्त्रीयविधानैः संशोध्य, सपाङ्क्तेयान्विधातुं समेषामयोध्यानगरवास्तव्यचतुर्वर्णानां कृते महाभोजव्यवस्था कारिता सर्व एव साग्रहमामन्त्रिता भोजनार्थमाहूताः। प्रदत्तश्च महाभोजः। किन्तु कतिचन नैव सम्मिलिताः समभूवन्। न स्वीचक्रुश्च पुनस्तेषां साजात्यसहभोजं सपाङ्क्तेयत्वमपि तेषां, येहि यवनयन्त्रनियन्त्रितयवना अभूवन्। सम्प्रति सर्वात्मना कृतप्रायश्चित्तानपि विहितपावनानपि न मन्वतेस्म दुराऽऽग्रहिलाः, मिथ्याऽभिमानमदमत्ताः स्वाधिकारप्रमत्ताः विद्वन्मन्याः।

ततः श्रीरामानन्दाचार्याः-सर्वांस्तान् तथाविधहठधर्मदीक्षितानीक्षित्वा, स्वतपःप्रभावं प्रदर्शयामासुः। ततः सर्व एव जनाः एकत्र समवेता इव महाभोजे परस्परं सम्मिलिता इव सह भुञ्जानाः पार्श्वस्थिता इव प्रतीयन्ते स्म। ये हि भोज्ये न सम्मिलिता जनास्तेऽपि तत्र पार्श्वस्थिताः शष्कुलीः मोदकान् भक्षयन्त इवप्रत्ययमुपगताः। विरुद्धदर्शकाः शङ्कालवो भ्रान्ता पुनःपुनस्तत्तद्गृहं गत्वा पश्यन्ति स्म तदा ते स्व-स्वगृहे स्थिताः दृश्यन्ते स्म, पुनर्भोजनशालामागत्यावलोकन्ते ते तर्हि तत्रस्थिताः परस्परं हसन्तो हासयन्तश्च सानन्दं यथारुचं भोज्यसामग्रीं याचमानाः सानन्दं भुञ्जते स्म। किमत्र तथ्यमिति न ते निश्चिनोतुं शक्यन्तेस्म। सर्वे सम्मिलिता अभूवन् किं वा तटस्था एव गृहस्थाः स्वगृहस्थिता एव सन्तीति न पारयन्ति स्म तपःप्रभावार्णवं पारयितुम्। अतो विरुद्धधर्माणोऽपि समस्ताः भ्रान्तित्रस्ताः श्रीरामानन्दाचार्याणामेव चरणौ शरणीचक्रुः। ततः सर्वान् सम्बोध्यशास्त्रमर्यादां धर्मशास्त्ररहस्यं बोधयन्तः सर्वविधशङ्कापनोदनमेव चक्रुः। ततस्ते सर्वे श्रीरामानन्दाचार्यान् भगवतोऽवतारानेव मानयन्तः सश्रद्धं तदाज्ञापालनमेव निजं परमकर्म मन्वते स्म। इत्थं सर्वान् यवनयन्त्रप्रभावपतितानपतितान् विधाय निजनिजवर्गपङ्क्तिमान् विशुद्धा व्यदधुः।

इत्थं लोके नानाविधचमत्कारचयं प्रदर्श्यं श्रीरामभक्तेः सर्वतो व्यापि-प्रचार-प्रसारञ्च विधाय सर्वत्र प्रसृतं यावनप्रभावतमःपटलं समपसार्य्यं, भक्ति-मार्गप्रभावं परितः प्रसार्य्यं, सद्भावनां धार्मिकीञ्च सुप्तप्रायां प्रवृत्तिं पुनर्जागरितां विधाय, स्थाने स्थाने च धार्मिकमठादीन् सत्सङ्गभवनानि निर्माय, सतत्युत्तर-शतायुरापूर्य-सर्वान् स्वकीयशिष्यान् समयोचितोपदेशैः समृद्धान् विधाय, तत्तत्कर्त-व्यानि समादिश्य, समस्ते भारते विविधप्रान्तीय श्रीवैष्णवदीक्षादीक्षितानां सन्तोषाय तत्तत्प्रान्ते तांस्तान् विबोध्य,-यथा श्रीसुरसुरानन्दं पञ्चाम्बुप्रान्ते ( पञ्जाब ) श्री अनन्तानन्दं तु काशीस्थ-श्रीवैष्णवमठे स्वकीयोत्तराधिकारी, श्रीसुखानन्दञ्च वङ्गप्रान्ते ( बङ्गाल ) श्रीगालवानन्दं काश्मीरप्रान्ते, श्रीभावानंद महाराष्ट्र-प्रान्ते श्री हर्य्यानन्दं कलिङ्ग प्रान्ते ( उडीसा ) श्रीयोगानन्द श्रीपीपाजी प्रभृतिभिः सह गुर्जरप्रान्ते ( गुजरात ) शेषांश्च कबीरदासः सेनः धन्ना रवि ( रय ) दासः ( रैदासः ) सर्वानेव श्री अनन्तानन्देन साकं श्रीवैष्णवमठे एवस्थिता तत्रत्यां सुव्यवस्थां विधातुं मठस्य गौरव-संरक्षणार्थं तत्रैव स्थातुं, तत्तन्निजनिर्दिष्टप्रान्तेषु च यावच्छक्यं श्रीरामभक्ति-प्रचारं प्रसारञ्च कलयितुमेव नियोजयन्ति स्म। समये समये यथावसरं सर्वैरेव सर्वत्र भारतीये धरामण्डले परिभ्रमणं विधाय धर्मोपदेशार्थं यात्राऽपि सर्वैः सर्वात्मभावैः कायकर्ममनोवचोभिः सदुपदेशैः सर्वान् सन्मार्ग-दक्षान् भक्तिभरितमानसान् विधाय लोकान् शिक्षणार्थं करणीया समस्तभारतीया समुपदेशयात्रा। एवं स्वात्मप्रियशिष्यान् यथास्थानं धर्मप्रचारप्रसाराय नियोज-यामासुः। ततः श्रीरामानन्दाचार्याः पुनः काश्यामेव प्रतिष्ठिताः, भगवद् ध्यान-मग्नाः शास्त्रवचनं पद्मपुराणोक्तं सस्मरुः—

"यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति।
विश्रम्य च पुनर्गच्छेत् तद्वद्भूतसमागमः॥" इति।

सम्प्रति लोकस्थं स्वावतारप्रयोजनीभूतमशेषं कार्यं सम्पन्नप्रायमिति नाधिकमत्रस्थेयम् भगवच्चरणसन्निधिरसास्वादनमेव मानवजन्मसाफल्यं चरम-पुरुषार्थो वा। अतः श्रीनित्यसाकेतविहारिचरणाऽम्बुजनिःसृताऽक्षुण्णप्रवाहां मधुर-मधुझरीमेवाऽऽस्वादयेम, इति विचिन्त्य स्वकीयान् सर्वानाहूय पुनरन्तिमं स्वस्व-भक्तजन-श्रीवैष्णवकर्तव्योपदेशं विस्तारयामासुः। भगवदीयाः श्रद्धालवो भक्तवराः श्रीवैष्णवतल्लजाः! सावधानैरवधातव्यम्:—

१—भवन्तः सततं स्वकीयं सन्मार्गं सेवमानाः कदापि न सत्पथाद्विचलिता भवन्तु। सर्वदा सत्यं कदापि न विजहतु यद्यपि सत्ये सन्ति भूयांसि सङ्कटाऽऽपन्नकृत्यानि किन्त्वन्ते तु विजय एव भवति सत्यव्रतस्येति।

२—धर्ममयं कल्पपादपं सर्वदैव सत्कर्मवारिधाराभिः सिञ्चयन्त एव तिष्ठन्तु सांसारिकतापत्रयाद् सर्वात्माशान्ति - सौख्यसम्पादिनीं स्वच्छच्छायामयमेव सम्पादयति ।

३—भक्तिमयीं कामधेनुञ्च सर्वात्मभावेन सेवध्वम्, रक्षतेति । यतो हि मोक्षमयं नवनीतं अस्या भावनामयपयो लाभादेव लब्धुं शक्यते । एषा भक्तिकामधेनुरेव कामान धिनोति ।

४—काञ्चन सदृक्षकान्तकलेवरासु कामिनीषु, काञ्चनेऽपि च न क्वचन समासक्ताः भवेयुः, स्पर्शदोषतोऽपि दूर एव तिष्ठन्तु । यतो हि कामिनीमयीं मोहयामिनीं विलोक्य, धर्माम्भोजं सुविकसितमपि सद्यो मुकुलितं भवति । एवमेव काञ्चनबलविशेषं प्राप्य कलियुगधर्मः प्रावल्यं वहन् वैराग्यं श्रीविरहितं कलयति । अतो विशेषतोऽवधेयमेतद् यत् कामिनीकाञ्चनसंसर्गोऽपि न स्पृशेद् ।

५—स्वकीयशीलरूप - स्वच्छच्छायया सर्वान् समागतान् बन्धून् - भक्तवरान् सर्वदा शीतलयेत् । येन प्रीणिताः प्राणिनः स्व - स्व - हृदयेनैव स्वाशीःपरम्पराभिः समभिनन्दयेयुः ।

६—स्वाश्रमोपरि समायातान् दीनान् दुःखितान् अभ्यागतान् दुर्बलान् न क्वचन तिरस्कुर्युः प्रत्युत मधुरवचनरसझरीभिराप्याययेयुः स्वाश्रयदानेन भोजनादिभिश्च सम्मानयेयुः । एषैव लोकसेवा सत्या वा साधुसेवा समाजसेवा लोकशोकविमोककारिणी ।

७—कदाचिदपि भ्रान्त्या प्रमादतोऽपि वा न क्वचन भगवद्भक्तैर्विवादः करणीयः, न वा कथञ्चनाऽणुमात्रमपि तिरस्कृतिभावनाऽपि स्ववचनरचनां स्पृशेदिति सर्वदा सतर्कैरेव भाव्यम् । भगवद्भक्तावमानन्तु साक्षादेव भगवतोऽवमानमेव । भगवानपि स्वकीयमपमानन्तु स्वजनकृतं सोढुं शक्नोति परन्तु न क्वचिदपि भगवदीयजनापमानमणुमात्रमपि ।

८—यदि कश्चनाज्ञो विज्ञो वा स्वावमानमपि कुर्यात् न सः प्रतिवचनीयः न तदुपरि क्रोधं प्रकटयेयुः । क्रोधो हि नाशहेतुः, निरयदायी च भवति ।

९—सकलप्राणिषु दयामेव विदध्युः । दया हि धर्ममूलमेव ।

१०—सर्वदैव श्रीगीतावचनमेव स्मरणीयम्—"निर्वैरः सर्वभूतेषु०" इति ।

किञ्च :—["अद्वेष्टा सर्वभूतानां, मैत्रः करुण एव च।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥"] गीता० १२।१३]

११—सर्वदा तथैव स्थातव्यम् [ "यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
(गीताः १२।१५) हर्षाऽऽमर्ष - भयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥"]

किञ्च— ["सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पित मनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥"] (गीता, १२।१४)

१२— "वर्णाऽऽश्रम - सदाचारान् पारम्पर्य्यकुलक्रमान्।
सर्वदा श्रद्धया भक्त्या सेवध्वं शास्त्रदर्शितान् ॥
यावन्न भक्तेरुदयः पराकाष्ठाऽथ कर्मणः।
नैष्कर्म्यभक्तिभावस्य पराकोटिर्न सम्भवेत् ॥"

१३— श्रीमद्रामपदारविन्द - मकरन्दानन्द - सन्निर्झरी-
पानोन्मत्त - मधुव्रतायितमनास्तिष्ठेज्जनो लोलुपः।
रामाऽऽसक्तिरतोऽपि संसृतिगतो मोहाच्च तद्वन्धनं
प्राप्तो मुक्तिमुपैति भक्तिमहितः श्रीरामपादार्चनात्।"

श्रीमद्रामभद्रचरणानुरक्तिः, भगवतः समुपासनैव मुक्तिहेतुः।

१४—स्वेष्टदेवे सर्वात्मनाऽनन्यभावोऽपि सर्वत्र भगवत्स्वरूपेष्वेव विविध - विग्रहमयेष्वपि स्वेष्टदेवभावनयैव परमया भक्त्या, श्रद्धया भावनया च भावयेत्। तद्रूपेणैव तं पश्येत् न क्वचन तिरस्कारमयीं भावनां, वाणीं वा प्रकाशयेत्। सैवानन्यभावना या सर्वत्र स्वेष्टदेवमेव समुपस्थापयेत्।

१५—सत्सङ्गतिस्तस्यैव विदध्याद् यो हि वयोवृद्धो ज्ञानवृद्धो वा भवेत् नीचसङ्गतिस्तु पुरीषवत् परित्याज्या, दूरतो वाऽपसरेत्।

१६—मन्त्रोपदेशोऽपि तस्मा एव देयो यो हि सर्वात्मभावेन अधिकारी स्यात् अनधिकारिणि निक्षिप्ता मन्त्राऽऽहुतिर्भस्मनीव निपतति निष्फला।

१७—वेदादि विद्याऽमृतपानमपि तमेव कारयेद् यो हि पिपासुः स्यात्। अन्यथा सर्पदुग्धपानमिव समुपदेष्टृमृत्युकारणं भवति।

१८—संसारे प्रवृद्धचर्थं प्रवृद्धानुसरणमेव सरणी, विना महापुरुषाऽनुसरणेन नाऽनुशासनसिद्धिः। अर्थात् ये प्रवर्द्धमाना अभूवन् तेषामनसरण - मेव समुन्नतिशिखरोपरि समारोहणाय सुलभसोपान पङ्क्तिः।

अयमेव मे भवतां समेषां कृतेऽन्तिमः समुपदेशः। सर्वैः सर्वदा तथा व्यवहर्तव्यम् यथा स्वकीयपरम्परागत मानमर्यादोपरि काचनाऽऽकस्मिकी समापत्तिर्नैवाऽऽयात्।

इत्थं श्रीमदाचार्यणा-मादेशं श्रावं श्रावं सर्वेषां नयनपथात्सकृदेव श्रद्धासमृद्धासुरसरिद्धरैव प्रासरत्। श्रीस्वामिचरणाः सर्वानाशीर्भिरभिनन्द्य, नित्य साकेत-धाम-प्रयाणार्थं समाधिसमाराधन-मारभन्त। काश्यां सर्वत्र तथा-विधान् समाचारान् प्राप्य समस्ता काशी नगरस्था जनता दर्शनार्थ-मन्तिम-प्रणामार्थंञ्च यूथशः समायाति स्म। प्रायशो विद्वांसोऽपि संन्यासिनोऽपि, सन्तोऽपि महान्तोऽपि-साधवोऽपि समवेताः सञ्जाताः। भूयानसमय-मयो जनसम्मर्द इवाऽभूत्। समायातांश्च सर्वान् सम्बोध्य तेषां कृतेऽपि स्वोपदेशमतिदिदिशुः।

महानुभावाः! स्वात्मनः क्षेमकामाः समे भवन्तः सर्वदैव सत्यावलम्बनं विधाय विशुद्ध-चेतसा च परस्परं सप्रणयं व्यवहरन्तु। सहानुभूति-पूर्वकं मिथः सहयोगं विदधतु स्वधर्मपक्षान्मा कदाचन भ्रष्टा भवेयुः। स्वकीयां भारतीयां संस्कृतिं न कदाचन परित्यजेयुः, सदाचार-चर्यातो मा विमुखा भवेयुः। भगवति श्रद्धा-भक्तिं सर्वतो गरिष्ठां प्रेमाशक्तिं प्रवर्द्धयेयुः। कामक्रोध-लोभ-मोह-मात्सर्यहिंसा-निन्दा-द्वेषेर्ष्येन्द्रिय-लोलुपत्वादीन् दोषान् सद्यः परिहरेयुः निज-निज-वर्णाश्रमानुसारं कर्तव्यञ्च परिपालयेयुः। सर्वदोच्च-भावनां स्व-मनःसु स्थापयेयुः—

"सर्वे कुशलिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेदिति।"

सर्वे परस्परं भ्रातृभावं पुरस्कृत्य स्वदेशधर्मरक्षणार्थं स्वार्थत्यागपूर्वकं शुद्धात्मना जननी-जन्म-भूम्यो-सम्मानार्थं संरक्षणाय च कटिबद्धाः भवेयुः ससुखं निवसेयुः।

ॐ शान्तिः शान्तिः शान्तिः। शुभं भवतु।

विक्रम संवत्सरे १३५६ तमे प्रादुर्भूय वि० संवत्सरे १५२६ तमे भगवत्सायुज्यमवापुः श्रीमद्रामानन्दाचार्याः। इतिशम्। भाद्र कृष्णा जन्माष्टमी सं० २०३२ [३०-८-१९७५]

इति श्रीमद्भारते सकल-विभारते-राजस्थान जयपुर मण्डलान्तर्गत महा-
पुरा-ग्राम वास्तव्येन निखिलनिगमागम पारदृश्व दीक्षित-सोमयाजि-
तैलङ्गद्विज-वंशावतंस विविधमन्त्र-तन्त्र-ज्योतिषायुर्वेद-व्याकर-
णकाव्यादि-निर्मातृ-तन्त्र-शिरोमणि गोस्वामि श्रीशिवानन्द

वंशोद्भूतेन-पौराणिकमार्तण्ड पण्डितराज गोस्वामि श्रीगोपी-
कृष्णात्मजेन, न्यायोपाध्याय, शुद्धाद्वैत-वेदा न्ताचार्य-
साहित्याचार्य-शीघ्रकवि-कवि चूडामणि कविसार्वभौम-
गद्य-पद्य-सम्राट् - प्रभृत्यनेको - पाधिसमलङ्कृतेन
राजस्थान सर्वकारद्वारा द्विवारं सहस्र-सहस्र
मुद्राभिः सत्कृतेन गोस्वामि श्रीहरिकृ-
ष्ण-शास्त्रिणा निर्मितः आनन्द-
भाष्यकार अखण्ड भूमण्डलस्य
श्रीसम्प्रदाचार्य त्रिदण्डिस्वामि
परमहंस परिव्राजक श्री-
रामानन्दाचार्य चरण
चरितसुधाऽश्वितः
"आचार्य-विजयः"
सम्पूर्णतामुलतः
भाद्रपद कृष्णाजन्माष्टमी संवत् २०३२ विक्रम (३०-८-१९७५ ई०)

——

## श्री रामानन्दाचार्य-गुरुपरम्परा

श्री रामो, जनकात्मजाऽथ हनुमान्, ब्रह्मा वशिष्ठो मुनिः.
पौत्रः श्रील पराशरः सभगवान् व्यासः शुकार्यः प्रभुः।
श्रीबोधायन वृत्तिकृत् स्वयमहो, गङ्गाधराऽऽर्यस्तथा
तच्छिष्यः समभूत् क्रमेण हि सदानन्दोऽथ रामेश्वरः॥

द्वारानन्द पदं दधत् तदनु देवानन्द वर्यः सुधीः
श्यामानन्द, इति श्रुतार्यमहितः श्रीमच्चिदानन्दनः, ।
पूर्णानन्द वरः, श्रियार्यललितो ह्यर्यौऽद्यस्त्नन्दततः
श्रीमद्राघवदेशिकेन्द्रचरणो,, "रामाद्यनन्दो गुरुः॥

प्रस्थानत्रय भाष्यकृद् व्यरचयत्स्वानन्दभाष्यं पुन-
र्गीता सूपनिषत्सु ब्रह्मकलीते सूत्रोच्चये भाष्यकृत्।
भूमौ यः परिचङ्क्रमन् प्रतिजनं धर्मोपदेशं चरन्
भेदाऽभेदमतिं विहाय भगवन्नाम्नोद्धतिं संव्यधात्॥

रामानन्द जगद्गुरु द्विंशताधिक्याऽऽब्दिकीं सम्प्रति
यावद्, भूमिमलञ्चकार भगवद्भक्तिं प्रपत्तिं मुहुः।
सर्वोद्धारपरायणोऽवरकुलान्यप्युद्धरन्नामतः,
सद्भक्तिध्वज - मुच्छ्रयन् स्म लसति स्वाकोणकोणं भुवि॥

लेखको

हरिकृष्णगोस्वामी

# लेखकस्य कवेर्वंश-क्रमः

"यैवाऽस्मत्पूर्वजानां प्रथम-निवसति - विश्वमान्या वदान्या
स्वाचार्याणां सवित्री सकलभुवि लसत्सम्प्रदायेश्वराणाम् ।
यज्ञै-र्यागोपदेशैः प्रसरित - विभवा कर्मणां वैदिकानां,
वाचां देव्या विलासोल्लसित-वरकृणा दाक्षिणात्या धरित्री ॥ १ ॥

तत्र श्री विष्णुकाञ्ची त्रिभुवनविदिता भोग-मोक्षैक - धाम्नी
नाम्नीत्यन्याऽपि धन्या प्रसृतशिवपथा नीलकण्ठाद्यकाञ्ची ।
पेणा नद्यास्तटस्था विधिविहितमखे यत्र नारायणोऽयं
स्वाविर्भूयाऽद्य साक्षात् सकलजननुतः पूरयत्यर्थिनोऽर्थान् ॥ २ ॥

"पाणिम्पट्टे" ति नाम्नी पुरमथन-पुरस्पर्द्धि सर्वर्द्धिपूर्णा
पूर्णा पूर्णाऽभिषिक्तैः कृतविविधमखैः - र्वेदवेदाङ्गविद्भिः ।
रम्याऽऽरामप्रभूतामर - विटपि सुमोत्सेधगन्धाऽलिबन्धा
स्कन्धावारेव विद्वन्निकर-भटकुलैः सङ्कुला पू-रनन्या ॥ ३ ॥

नानाशास्त्र विचार चारु चतुराश्चेतोहराश्चिन्मया
विद्वांसो - ऽध्वरधूम धूसरगृह - ध्वस्ताऽन्धकारा दिशः ।
वेदोद् - घोषणपूत - कर्मनिरतध्वान प्रतिध्वानित—
ग्रामाऽऽराम महीध्रगह्वरकुलोत्खातांहसोऽध्यासते ॥ ४ ॥

आत्रेय, आर्चनानस-श्वावाश्वेति त्रयो हि सत्प्रवराः ।
शाखा हि तैत्तिरीया गोत्रोऽप्यात्रेयस - श्चैषाम् ॥ ५ ॥

दीव्यन्ति तत्र तेषां कुलेषु षट् - शास्त्रपारदृश्वानः ।
ये द्राविड़ाऽटङ्का नानाशङ्कापनोदने दक्षाः ॥ ६ ॥

श्रीसमरपुङ्गवदीक्षितः—

सेन्द्राः सुराः सततयज्ञविधान-लब्धमाना हविर्ग्रहण तोषवरोद्धता ये ।
स्वाचार्य-वाच-मिव यद्वचनाऽनुबद्धा आसन् हि ते समरपुङ्गव दीक्षितेन्द्राः ॥७॥

आहिताग्निकुलेष्वेषु दीक्षितो यज्ञदीक्षितः ।
वाजपेयादि यागानां धाता समरपुङ्गवः ॥ ८ ॥

श्रीतिरुम्मल दीक्षितः—

'वेदा' मूर्तिधरा इमं ह्युपगताः पित्रोपदिष्टाः स्वयं
यागारम्भविधौ द्विजावलिमुखोद्गीताः स्वराऽलङ्कृताः ।
आचार्यत्व-मवाप्य यो हि यजने शिष्यैरुपेतो लस—
न्नायुर्वेद-मणि - स्तिरुम्मल इति ख्यातोऽध्वरी तत्सुतः ॥ ९ ॥

श्री श्रीनिकेतनः—

"तत्सूनुः स्वकुलक्रमागतमखे - सत्रेऽतिरात्रे महे
सोमेऽनुष्ठित वाजपेययजने देशान्तरा - दागतान् ।
नाना श्रोत्रिय याज्ञिकांश्च विविधैः शास्त्रैः समालङ्कृतान्
प्रज्ञान् लक्षमिता-नतोषयदलं भोज्यै - र्महोपस्करैः ॥ १० ॥

"सः श्रीनिकेतन इति श्रितसोमदीक्षः प्रेक्षावतां परिषदि प्रथमाऽऽसनस्थः ।
शास्त्रार्थ तर्कविजित त्रिदिवेशपूज्यः पूज्यो महेश-चरणाम्बुजचञ्चरीकः ॥ ११ ॥

श्री श्रीनिवासः—

"तत्सूनुः पाणिनीये ह्यपरफणिपति-र्न्यायशास्त्रे कणादो
मीमांसा तत्त्वदर्शी श्रुतिविहित-विधा-वब्जयोनि - र्द्वितीयः ।
नानाकाव्यप्रणेता श्रितविविधमखो ज्यौतिषे भास्करोऽयं
साक्षा-च्छ्रीश्रीनिवासः प्रकटितविभव - स्तन्त्रमन्त्राऽऽगमानाम् ॥ १२ ॥

यात्राव्याज - मुपेत्य यः स्वविभव - प्रख्यातुकामो निजां
याम्यां स्वां जननी-मिवेति विनम-ज्ज्वालन्वराऽऽख्यं गतः ।
तत्र श्री गिरिशावतार विलसच्छ्रीसुन्दराख्यं गुरुं
लब्ध्वा तच्चरणार्चना - दधिगताऽऽम्नायोऽभिषिक्तः स्वराट् ॥ १३ ॥

आज्ञां गुरोः समवगत्य गतः स काशीं, शैवार्थितो भुवि शिवार्चनचन्द्रिकां यः ।
तेने प्रयाग-मुपयात इहापि शाक्तैः सम्प्रार्थितो व्यतनुताऽखिलतन्त्रसारम् ॥१४॥

"सौभाग्य रत्नाकर एष तन्त्ररत्नै-र्महान्यास तरङ्गितैस्तैः ।
सद्योगसिद्धाऽमलमौक्तिकेन्दु-रुज्जृम्भितः . श्रीकरुणाऽमृताम्बुः ॥ १५ ॥

सच्चिदानन्दनाथः श्रीसुन्दरानन्द नामभृत् ।
साक्षा-च्छिवमयो दीक्षां दत्त्वा सिद्धं चकार तम् ॥ १६ ॥

सुन्दराचार्य - वर्य्येण श्रीविद्यामन्त्रदीक्षितः ।
श्री विद्यानन्दनाथाख्यां श्रीनिवासोऽभिधामधात् ।। १७ ।।

स्वयं गुरु गौंरवमिन्द्रियाणामीशित्व मेक्ष्याऽद्भुतसिद्धिवृद्धिम्
लोकोत्तराऽऽकर्षण-निःस्पृहत्वे, गोस्वामिनाम्नीं पदवीं व्यतानीत् ।। १८ ।।

शिष्यैः प्रशिष्यैर्मुनुजैर्नरेन्द्रैः सिद्धैः समृद्धै र्धनिकैः कवीन्द्रैः ।
सम्मानपूर्वं व्यवहारकाले गोस्वामिनाम्ना स समर्चितोऽभूत् ।। १९ ।।

आचार्य्यत्वमुपेत्य तन्त्रविधिना स्वाचारयन् स्वान् गुणान्
मन्त्रन्यास - विधान - तन्त्ररचनाऽनुष्ठान - सेवाविधिम् ।
व्याकुर्वन्नाखिलार्थदं शिवपथं सिद्धि वितन्वन्नभूत्
गोस्वामीत्युपधि दधत् कृतगुणैः साक्षाच्छिवो भैरवः ।। २० ।।

न राजसम्मान समर्चनस्पृहा, गुरुत्व शिष्यत्वविपाश - वन्धनम् ।
न लोकानिष्ठासह संप्रतिष्ठया नतं न तं मोहयितुं शशाक ह ।। २१ ।।

श्री श्री जगन्निवासः—

तस्याऽऽत्मजः प्रणतभूपतिचक्रचञ्चच्चूडामणि भ्रमर चुम्वित पादपद्मः ।
नानापुराण निगमागमतत्त्ववेत्ता ख्यातः स्वतन्त्ररचनो हि जगन्निवासः ।।२२।।

स्वतन्त्रवृत्तिः सुविचारचातुरीधुरीण आसीत् स हि निःस्पृहाग्रणीः ।
न राजसम्मानविधानलोलुपो नृपोत्तमाऽऽराधित - पादपङ्कजः ।।२३।।

स्वतातपादाम्बुजसेवनेरतः स्वतः समुद्‌भूत सुसिद्धिसेवितः ।
पराऽम्बिकायाः करुणाकटाक्षभृद् याजुष्कसंसत् प्रथितः सतांमतः ।। २४ ।।

'चन्देरिका'' धीश्वरदेविसिंहश्रद्धां समृद्धां परमार्थसिद्धिम् ।
दृष्ट्वा तदीयाऽनुनयप्रसन्नः शिष्याय तस्मै व्यतनोत् स सिद्धिम् ।। २५ ।।

विधु नव रसेन्दु [ १९६१ ] वर्षे देवीसिंहोऽददादिषु [ ५ ] ग्रामान् ।
इषमासि पूर्णिमायां शुक्रे [आश्विन शुक्ल १५ भृगौ] गुरवे जगन्निवासाय ।।२६।।

ताम्रपत्रम्—

'लहगवनी', 'वखतरिका', 'अधियारी', 'अमलिया',ऽथ 'सिलगहनीं',
नादेर्य्यां [ नादेरीग्रामे ] ताम्रदले, ग्रामानलिखद्धि ''रामजनु'' सचिवः ।।२७।।

तस्य त्रयः पुत्राः—''शिरोमणिः शिवानन्दो'' ''द्वितीयस्तु ''जनार्दनः'' ।
''चक्रपाणि'' स्तृतीयश्च पुत्रा जाता महात्मनः ।। २८ ।।

देवोसिंहः श्रीगुरोः पादपद्मे पञ्चग्रामानाऽऽर्पयच्चेदिराजः ।
तत्सूनुः श्रीदुर्गासिंहोऽपि तद्वन्‌मानं चक्रे श्रीशिवानन्द सूरेः ॥ २९ ॥

वेदत्रयीवात्मजनित्रयीयं जातेति लोकप्रथिता सुसिद्धा ।
विद्या यशो वीर्यं कला सपर्य्या वर्चस्विनी स्वात्मकुलाऽनुरूपा ॥ ३० ॥

विविच्य ताँस्तत्र निधिस्वरूपान् सिद्धाञ्छिवानन्द जनार्दनादीन् ।
संस्थाप्य दीक्षाविधि मन्त्रतन्त्रग्रन्थादि निर्माणविधौ नियुक्तान् ॥ ३१ ॥

स्वेच्छाचरः सन्नटति स्म भूमौ तीर्थाटनव्याजमुपात्तविद्यः ।
सिद्धाश्रमाऽऽवास समर्चितश्री विद्यापदाम्भोज - मधुद्विरेफः ॥ ३२ ॥

जगन्निवासो हि जगन्निवासो नैकत्रवासं व्यदधाद् वरेण्यः ।
नैवाऽधिकं, काममुपेक्षमाणो राज्याऽऽश्रितत्वं विचचार विद्वान् ॥ ३३ ॥

## [ श्री शिवानन्द गोस्वामी ( शिरोमणिः ) ]

'विन्ध्येलाऽधीश वंशोदधि विविधसमुद्भूत भूपालरत्नै-
र्यत्नैराराधिताऽङ्घ्रि - विबुध वरगणैः सेवितोऽन्यो गिरीशः ।
श्री विद्यापादपद्मप्रसृतमधुझरीपानमानैकतानो—
गोस्वामि श्रीनिवासाऽऽत्मजजनि - रजनि श्री शिवानन्दवर्य्यः ॥ ३४ ॥

चेदीभूपालभालोल्लसितमृगमदो भाति नित्यप्रणामे
दीव्यद् यत्पादयुग्मोज्ज्वल नखनिकरे वेन्दुबिम्बे मृगाङ्कः[१] ।
भूपालाऽभ्यर्थनाभिर्निखिलनिगमभृत् सिंह सिद्धान्तसिन्धु—
र्येन ग्रन्थाः स्वतन्त्रा विविधविषयका निर्मिता लोकहेतोः ॥ ३५ ॥

व्याकृतौ न्याय-मीमांसा ज्योतिषेषु बृहत्तनून्
ग्रन्थान् व्यरचयन्नव्या-नायुर्वेदे शिरोमणिः ॥ ३६ ॥
चिकित्सां मन्त्रतन्त्राभ्यां यन्त्रैरौषधसेवनैः ।
निदानलक्षणेग्रन्थे शिवानन्दोऽदिशत् स्वके ॥ ३७ ॥

## —श्री जनार्दनः द्वितीयः पुत्रः —

शिवानन्दाऽनुजः श्रीमाञ्जनार्दन - समो गुणैः ।
मन्त्र तन्त्रश्रुतीनांच्च तत्वदर्शी "जनार्दनः" ॥ ३८ ॥
तेनाऽनुजेन जगतीश्वर पूजितेन, पाषण्डिचण्डमतखण्डन - पण्डितेन ।
श्रीमज्जनार्दनवरेण कृता ह्यनेक व्याख्या निबन्ध रचना वचनान्तरेऽपि ॥३९॥

[ १—चन्द्रबिम्बे मृगचिह्नमिव भाति ।

पितामहोपदिष्टानां मन्त्राणां ( मार्गदर्शिनी ) ।
विहिताकौल-कह्लार - ह्लादिनी मन्त्रचन्द्रिका ॥ ४० ॥

## —श्री चक्रपाणि—स्तृतीयः पुत्र :—

मन्त्रान् यन्त्राणि तन्त्राण्यखिलविधियुतानीश सिद्धानि भूमौ
भूयः सङ्कीलितानि प्रकटितविभवान्याशु संसाधितुं यत्-
श्री विद्यापाद पद्मार्जनरतिरखिलां सिद्धिमासादयन् यो
राजन्यै - रचिताङ्घ्रिस्तदनु जनिरभूच्चक्रभृच्चक्रपाणिः ॥ ४१ ॥

सिद्धः स मन्त्रशास्त्रे ज्ञाने वृद्धः समृद्धये सिद्धः ।
यः पञ्चदेवसिद्ध्यै "पञ्चायतनप्रकाश" - मातेने ॥ ४२ ॥

राजचक्र परिषेवित कक्षः सिद्धचक्र - परिसेवनदक्षः ।
योगचक्र परिमण्डितवक्षा - श्चक्रपाणि - रकरोन्नृपरक्षाः ॥ ४३ ॥

## —राजस्थाने-समागमनोपक्रमः —

षोढान्यासविधायकेन गुरुणा साकं गतश्चैकदा
स्वीये मारुतिमन्दिरेऽञ्जनिसुतं भक्त्याऽर्चयद् भूमिपः ।
नो किन्तु प्रणमन्त - मेक्ष्य हि गुरुं सम्प्रैरयद् वन्दितुं
यावत् सोऽपि बलान्नमत्यनुपदं मूर्तिर्द्विधा प्रास्फुटत् ॥ ४४ ॥

भूपं प्राह गुरुर्नरेन्द्र ! भवता दुष्कृत्यमापादितं
प्रायश्चित्तमिहाऽऽचर त्वमधुना नोचेदनिष्टं ध्रुवम् ।
नैवाद्यप्रभृति त्वया क्वचिदपि प्रार्थ्यो हठान्मादृशः
षोढान्यास विधायकः स्वविपरीताऽऽचार सञ्चारणे ॥ ४५ ॥

नाऽहं ते हठधर्मि - शासनविधौ स्थास्यामि दुश्चेष्टितें
नकांक्षे गुरुतां न राजमहितां वृत्तिं त्वयाऽप्यर्पिताम् ।
त्यक्त्वा सर्वमिहैव सम्प्रति यथोद्दिष्टं व्रजामो ऽध्वनि—
स्वीयैः सार्कमितो जनैः वयमहो तीर्थाऽऽश्रमान् सेवितुम् ॥ ४६ ॥

लोकक्षेमं कर्तुंकामो विधाता तीर्थोत्तंसं पुष्करक्षेत्रराजम् ।
राजस्थानेऽस्थापयत् कल्मषघ्नं यज्ञव्याजात् कुण्डमेकं प्रकल्प्य ॥ ४७ ॥

स्नात्वा तस्मिन् तत्रवासं त्रिरात्रं कृत्वा स्वेष्ट प्रीतये ध्यानयोगम् ।
सिद्धे पीठे सद्विशेषार्चनाद्यैर्लप्स्येऽपूर्वां सिद्धिमाध्यात्मिकीं स्वाम् ॥ ४८ ॥

निर्णयेत्थं श्री शिवानन्ददेवस्त्यक्त्वा राज्यं प्रस्थितो निःस्पृहात्मा।
पद्भ्यां भूमिं पावयन् लोकशोकं दूरीकुर्वन्नागतो बन्धुवर्गैः ॥ ४९ ॥

प्रासादे प्रेतबाधा परिहृतगतिको रुद्धराज्यैक कार्यो
ह्युत्पातान् रात्रिजन्याननतु तनुमयान् वीक्ष्य भीतः सभार्यः।
नानासिद्धैः प्रसिद्धैः कृतविविध महामन्त्र तन्त्रादि दक्षो
नो यक्षं ब्रह्मरक्षोऽप्यनयदुपगतं, विष्णुसिंहो नरेन्द्रः ॥ ५० ॥

श्रुत्वा दूरादुपगतगुणान् सिद्धसङ्घैरुपेतः
साक्षादस्ति त्रिभुवन तमस्तोमतिग्मांशुमाली।
सिद्धश्चेदीश्वरवरगुरुः सर्वतन्त्रः स्वतन्त्रः (शरण्यः)
षोढा न्यासीविदितविभवः श्रीशिवानन्दवर्य्यः ॥ ५१ ॥

आयास्यत्यचिरेण सः सुरगुरुः साक्षाच्छिवानन्दनः
क्षेत्रे पुरष्करराजराजमहिते स्नातुं सबन्धुव्रजः।
निःशंङ्कं सहि सङ्कटादनुगतानस्मान् समुद्धारयन्
प्रासादं कलयिष्यतीत्यनुपदं सर्वर्द्धिमन्तं पुनः ॥ ५२ ॥

इत्थं तच्चरणाम्बुजाऽऽसवकृते श्रीकच्छवाहेश्वरः
स्वात्मानं खलु शिष्यतामुपगतं सद्यो विधातुं गतः।
आम्बेराऽधिपतिः स्वयं ह्यनुनयं श्रद्धां परां दर्शयन्
आनीयाऽत्र महेश्वरं व्यरचत्तत्रैव वासं गुरोः ॥५३ ॥

षोढान्यास विधायकं शिवमयं प्रेताऽधिराड् दूरतो
दृष्ट्वा त्रासमुपागतो न हि पुरः स्थातुं स शक्तोऽभवत्।
लब्ध्वा तत्करुणाऽमृताऽम्बु सहसा पीत्वा जहौ प्रेततां
नत्वा श्रीचरणौ गतः, स हि शिवानन्दोऽप्यगात् तत्क्षणम् ॥ ५४ ॥

तद् वीक्ष्याऽद्भुतमत्र कर्म महितं हर्म्यञ्च सिद्धेर्गुणै-
र्दूरीभूतभयस्थितिं स्थिरतमां माङ्गल्यं सत्सम्पदम्।
किन्त्वप्राप्य गुरोः स्थितिं ह्यतितरां खिन्नोऽनुयातः पदं
यातस्तच्छरणं नृपः स्वगुरुणाऽऽज्ञप्तश्च यज्ञं व्यधात् ॥ ५५ ॥
यज्ञेऽस्मिन् गुरु-शिष्ययो - र्निजनिजात्कोषादभूत्सद्व्ययः।
राज्ञोऽशीति सहस्रकः ८०००० सममवल्लक्षाऽवशिष्टो गुरोः (२००००)
श्रद्धां भक्तिमवेक्ष्य तन्त्रविधिना कृत्वा च तं दीक्षितं
मन्त्रोद्धारपुरःसरं नृपवरं पूर्णाऽभिषिक्तं व्यधात् ॥ ५६ ॥

आम्बेरेश्वर-विष्णुसिंह नृपतिः पूर्णाऽभिषिक्तो गुरो-
र्ग्रामानब्धिमितान् समर्प्य चरणाऽर्चां तस्य भक्त्याऽकरोत् ।
तेनाऽभ्यर्चित पाद पद्मयुगलः श्रीमच्छिवानन्दनः
देवाराधन-सिद्धिदां क्षितिमिमां मत्वाऽन्वगृह्णान्नृपम् ॥ ५७ ॥

दानपत्र - स्वरूपेण ताम्रपत्र - त्रयेण वै ।
विष्णुसिंह नरेन्द्रेण वेदग्रामाः समर्पिताः ॥ ५८ ॥

"हरिवंशपुरा- "राम-जीपुरा" चिन्मनःपुरा" ।
"महापुरे"ति चत्वारो ऽप्यम्बराधीश्वरार्पिताः ॥ ५९ ॥

नग जलधितुरङ्ग क्षोणि भृद्विक्रमाब्दे [१७४७] नृपतिविशनसिंहो दक्षिणायां गुरूणाम् ।
सचिव विजयरामेणाऽङ्कितात्ताम्रपट्टाच्चरणकमलयुग्मे स्वार्पयद्ग्रामयुग्मम् ॥ ६० ॥

महापुराङ्गभूतोऽयमपरो रामजीपुरा । सहैवानेन सम्प्राप्तः सिद्धेः फलमिव स्वतः ॥६१॥

नन्दसिन्धु मुनिचन्द्र संख्यके वैक्रमेच गुरुदक्षिणाकृते [१७४६ वि० संवत्] ।
विष्णुसिंह नरनाथ आर्पयद् ग्राममेकमभिषेक कर्मणि ॥ ६२ ॥

आश्विने शुक्लापञ्चम्यां भौमेवारेऽथ वैक्रमे-
नन्दाऽब्धिगिरिचन्द्राख्ये [१७४९] हरिवंशपुराऽर्पयत् ॥ ६३ ॥

चत्वारो हि महापूरा नद्याः पश्चिमयाम्ययोः ।
तटयोः संस्थिता सर्वे रम्याऽऽरामसुमश्रियः ॥ ६४ ॥

पूर्णाऽभिषेके गुरुदक्षिणायां गोस्वामिने श्रीगुरवे प्रदत्ताः ।
धत्ते शिवानन्दपदारविन्द - मुपासनां पुष्पफलैर्नरेन्द्रः ॥ ६५ ॥

आम्बेरभूमिपतिना बहुमानपूर्वं सम्मानितः शुचिसमर्पित - पादपद्मः ।
पूर्णाऽभिषेक गुरुपूजनलब्ध-वेदग्रामेषु नैजवसतिं विदधेऽत्र विद्वान् ॥ ६६ ॥

"शिवानन्दानुजेन श्रीजनार्दनवरेण ह ।
तोषितो विष्णुसिंहोऽयं ग्राममेकमदात्ततः ॥ ६७ ॥

ग्रामोऽप्येको विष्णु सिंहेन राज्ञा-
सिद्धायाऽस्मै ह्यर्पितः सिद्धिहेतोः ।
रम्याऽऽरामः सिद्धकुण्डोल्लसच्छ्री
कुक्कुरवाटी त्याख्यशैलान्तरस्थः ॥ ६८ ॥

चन्द्रेषुगिरिभूम्यब्दे [ १४५१ ] वैक्रमे वेतनाय तत्-
जनार्दनाय गुरवे विष्णुसिंहोऽददात्पुरम् ॥ ६९ ॥

महापुरामधिश्रित्य निवासं पर्य्यकल्पयन्-
ससौख्य भ्रातरः सर्वे सिद्धाः सारस्वता हि ते ॥ ७० ॥

यत्रः— तरङ्गारङ्गान्तः शिशिर पवनोद्धूत - नलिनो-
ल्लसद्गन्धाऽन्धानां विहरण मलीना प्रतिमधु ।
कुरङ्गाऽऽसङ्गानामज - गवय - गो - गोपजनुषां
समुल्लासो हासस्तट वटतरुच्छायमभितः ॥ ७१ ॥

मनोमोदं धत्ते प्रतिपलविनोदं सुरणादी-
सहक्षा वृक्षाली विटप - परिराजत्खगकुला ।
त्रिवेणी वेणीव त्रिदशललनानां तरलिताऽ
मिताऽऽनन्दा, कन्दाशन - रतिजुषां मोक्षसरणी ॥ ७२ ॥

महापूरा दूरादियमनुलसत्यब्जसुरभि-
र्जनैर्दृष्टा स्पृष्टा हरति तनुतापं तपनजम् ।
अमन्दं स्वच्छन्दं सुभगसलिला या विभजति
प्रकामं सीमानं ललितमुभयग्राममिलितम् ॥ ७३ ॥

गुणग्रामाऽऽरामान्तर लसितधामा शुचि महा-
पुरानामा ग्रामो लसति सरितः पश्चिमतटे ।
सुवृन्दावृन्दाऽन्तर्नमित वरवृन्दारकनुतः
शिवानन्दाऽऽवासः समजनि सरिन्नाममहितः ॥ ७४ ॥

काशीति लघ्वी गदितो हि लोके ह्यनेकशास्त्राऽभ्यसनेन साकम् ।
मन्त्राद्यनुष्ठान - विधान - दीक्षा - परम्परां यत्र जना लभन्ते ॥ ७५ ॥

विशाल वापी विलसज्जलाशयो महातरुस्तोमसुमण्डपावलिः ।
छायातरूंश्चाश्रित - बर्हिकूजितैर्ग्रामो गुणग्राम महापुरेत्यसौ ॥ ७६ ॥

नमन्निखिल मेदिनी परिवृढोत्तमाङ्गावली-
सुमृष्ट नखचन्द्रिकोल्लसित भक्त हृत्कैरवः ।
समस्त निगमाऽऽगमोल्लुलित मन्त्रतन्त्राम्बुधिः
शिरोमणिरिति व्यधान्निवसति शिवानन्दनः ॥ ७७ ॥

## श्री शिवानन्दतनयः श्रीनिकेतनः

तस्मादयं सकलशास्त्रविदां वरिष्ठो गोष्ठीगरिष्ठ इह काव्यकलानिधीनाम् ।
प्रज्ञा-प्रभा-पटलपूरित तन्त्रसिन्धुः श्री श्रीनिकेतनवरः समभूत् सुधीन्द्रः ॥ ७८ ॥

आर्या सप्तशतीति नाम ललित स्वार्य्या सहस्रात्मको-
ह्यार्य्याणां कुरुकाय, तेन रसिकानां प्रीतये स्वात्मनः ।
तोषायोच्छलदुत्कटाऽच्छविलुल - च्छृङ्गार पुष्पोत्करो
ग्रन्थः कोऽपि सुरद्रुरेष कलितो भूमौ रसोल्लासिना ॥ ७९ ॥

## श्री शिवानन्दस्य द्वितीयः पुत्रः श्रीविद्यानिवासः

तस्याऽनुजोऽपि धरणीश्वरवन्दिताङ्घ्रि र्बालः समुद्भट कवि-र्विबुधाग्रगण्यः ।
धन्यो निजेष्ट चरणार्चन लब्धविद्यो विद्यानिवास इति योऽल्पवयाः, वदान्यः ॥ ८० ॥

## एवमेव श्रीजनार्दनस्यापि पुत्रो लक्ष्मीनिवासः

एक एव सुतः श्रीमाञ्जातस्तस्य महात्मनः ।
लक्ष्मीनिवास इत्याख्यो वाग्मी स्वल्पायुरद्भुतः ॥ ८१ ॥

श्रीमज्जनार्दनजनु निज वाग्विलासैः सन्तोषिताऽखिल नरेश्वरलब्धमानः ।
श्री सुन्दरी चरणपूजन लब्धलक्ष्मी-र्लक्ष्मीनिवास इति यो विदुषां वरेण्यः ॥ ८२ ॥

## श्री श्री निकेतनस्य सुतद्वयी

श्रुति स्मृतीवाऽस्य सुतद्वयी ततः समस्त शास्त्रार्थरहस्य - वेदिनी ।
परम्पराऽऽयात सुमन्तत्रन्त्रभृद् दीक्षा प्रसाराय समुद्गताऽद्भुता ॥ ८३ ॥

देव्याः प्रसाद-फल-मात्मजयुग्म-मेतल्लब्धं निजेष्टकरुणा-कणिका - प्रसादात् ।
श्री राधिकारमण इत्यपरोऽपि पित्रोः प्रेष्ठो रमारमण एव मुद वितेने ॥ ८४ ॥

## श्री रमारमणः

श्री श्री निकेतनसुतः प्रथितः प्रभावः श्रेयोगुणैः स्वजनुषा वपुषा श्रियाऽपि ।
दिव्यो नमन्नृप शिरोमणि मण्डिताङ्घ्रिः साक्षाद्रमारमण एव यथार्थनामा ॥ ८५ ॥
प्रायः समस्त निगमाऽऽगम पारदृश्वा यज्वा सुयाज्ञिक कुलेषु वरासनस्थः ।
एकान्त वास रसिकः शुचियुक्तयोगी स्वीयाऽग्रजे निधिरिवाऽऽहिततन्त्रसारः ॥ ८६ ॥
स्वीयां स्वतातरचितां शुचिकाव्यमालां शृङ्गारसार-सरणीं धरणीश्वराणाम् ।
वृत्तिश्च-पूर्वज कृताऽखिल मन्त्र तन्त्र ग्रन्थावलीमपि निजाग्रजमार्पयद् यः ॥ ८७ ॥

### श्री राधारमणस्तदग्रजोऽपि

तस्याऽग्रजोऽप्यनुगुणैरधिक प्रसिद्धो मातुः पितुः प्रणय-भाजनतामवाप ।
श्री राधिकारमण एव गुणावदातदासीकृताऽवनिपवृन्द समर्चितोऽभूत् ॥ ८८ ॥

मातुः समाज्ञां जनकाऽभ्यनुज्ञां विनम्रमूर्ध्ना धृतवान् सहर्षम् ।
सम्मानितोऽयं जयपत्तनेन्द्रैः श्रीविक्रमेन्द्रं समलञ्चकार ॥ ८९ ॥

भक्ति विशेषां चरणानुरागं श्रद्धामनन्यां परमाग्रहञ्च ।
दृष्ट्वा तदा विक्रम भूभृतोऽपि तत्राऽपिवासं कलयाञ्चकार ॥ ९० ॥

### श्री मद् रमारमणस्तु

संश्लिष्टे निम्बसङ्घैर्विशद वटतरुस्कन्ध शाखाप्रशाखाऽऽ-
च्छन्ने स्तम्भायिताभिर्ह्यधिकरणि जटाराजिभिः शोभितेऽन्तः ।
नानावृक्षैः समन्ताद् व्रततितति - समालिङ्गितैः पुष्पगुच्छै-
र्गुञ्जद्भृङ्गैरनङ्ग क्षुभित खगकुलोद्गीत शान्त्येकगाथे ॥ ९१ ॥

तस्मिन् रम्ये सुरद्रुप्रतिम विटपिभिः सिद्ध-साध्याऽभिलाष्ये
मध्ये ग्रामं स्वयम्भूस्रवदमृतझर - क्षोणिभाग्यैकदेशे ।
तत्राऽऽस्ते दिव्यधाम स्वयमवनिगतं कर्दमस्याऽऽश्रमाऽऽसं
नित्यश्रीयन्त्रसिद्धा स्मरविशिखमिता स्वासते यत्रदेवाः ॥ ९२ ॥

### पञ्चदेवेषु श्री लक्ष्मीनारायणः

लक्ष्मी नारायणाख्या ह्युरसि धृतरमा शङ्खचक्राब्जयुक्ता
मूर्तिः कामेश्वरीया लसति परगुरुस्थापिताऽऽराधतैषा ।
एवामाराध्य बन्धूननुज - सुतसुतान् पुत्रपौत्र - स्वशिष्यान्
शिक्षाऽन्वीक्षाऽधिदीक्षाविधिमनुपगतानानयामि स्वमार्गम् ॥ ९३ ॥

### श्री रमारमणस्य-योगाऽनुरक्तिः

इत्थं विचिन्त्य सहसा सह साधुवादैराराधितो मुनिगणैरिव शिष्यवृन्दैः ।
श्रीमद्रमारमण एव सुशान्तमूर्तिर्नारायणो वदरिधाम्नि चचार योगम् ॥ ९४ ॥

### —ःश्री विद्यानिवासः रमारमणतनयः—

पितुर्गुणानां यशसां प्रकाशः कवीश्वराणां वचसां विलासः ।
ह्रासः श्रियां तन्त्रकलाविकासो विद्यानिवासस्तु तदङ्गजोऽभूत् ॥ ९५ ॥
प्रायः कवीन्द्राः कृतिनः क्षितीन्द्राः सिद्धा मुनीन्द्रा व्रतिनां यतीन्द्राः ।
अमन्द यत्पादसरोजगन्धमाघ्राय शान्तिं परमामवापुः ॥ ९६ ॥

स्नेहर्द्धिमद् वत्सलतानिधानं पित्रोः समाराधित - देवतन्त्रम् ।
"गुलालजी" ति प्रथिताऽभिधानं ख्यातं तदीयाङ्गजनामलोके ॥ ९७ ॥

:—तत्तनयः "श्रीगुलालजी" ति ख्यातः—

सुदूरदूराद्बहवः सुधीन्द्रा अनेकशास्त्रेष्वपि सन्दिहानाः ।
शङ्कापनोदाय समागता ये स्वाऽतीप्सितार्थं सहसाऽलभन्त ॥ ९८ ॥

"गु" गुणावलीमण्डित मञ्जुमालो "ला" लित्यवारांनिधिशब्दजालः ।
"ल" ब्धप्रतिष्ठो विदुषां सुगोष्ठ्यां विद्यानिवासात्मज एष "जी" यात् ॥९९॥

अनेकशास्त्रं समधीत्य शिष्याः साङ्गञ्च वेदं सरहस्यमस्मात् ।
आप्त्वा गुरुत्वं किलतन्त्रशास्त्रे सिद्धाः कवीन्द्रा-सुधियोऽप्यभूवन् ॥ १०० ॥

—श्री गुलालजी तनयाश्चत्वारः सञ्जाताः—

चत्वारश्चारुरूपाश्चतुरुदधिसमाः सर्वदौदार्यपूर्णाः
नानाशास्त्रौघमुक्ताप्रसर परिलसद्दीप्तिमन्तो महान्तः ।
पित्रादेशानुसारं तदुदित सकलां पद्धतिं वर्तमानाः
मर्य्यादां पालयन्तस्तदनुगुणगणास्तत्सुताः प्रादुरासन् ॥ १०१ ॥

ज्येष्ठोलक्ष्मीनिवासः सुलभकृतिगुणैरर्चितः शिष्यवृन्दै-
स्तस्माद्रूपातिरेकादधिकगुणकृताऽऽराधनो रूपलालः ।
अन्यूनोऽस्मात् तृतीयो वरदवररुचिः श्रीशिवोलालयुक्तः
शौर्योदार्य्याऽतिकार्यैर्निजकुलविभवो नन्दपूर्वः किशोरः ॥ १०२ ॥

:—श्रीलक्ष्मीनिवासतनया अपि चत्वारः—

लक्ष्मीनिवासस्य सुताः स्वुतागुणैर्गुणानुरूपोदधिसम्मिता मताः ।
गङ्गाऽनुदत्तः (प्रसादः) प्रथमः सुधीवरः पीताम्बरोऽस्मादनुजोजनार्दनः ॥१०३॥

ततः सुशीलः शुकदेवनामा निजेष्टदेवाङ्घ्रि - सरोजसेवी ।
निजाऽधिकारे शिवलाल एनं नियुक्तवानङ्कगतं पितृव्यः ॥ १०४ ॥

:—श्रीरूपलालतनयौ :—

"श्रीरूपलालस्य सुतावभूतां कुलक्रमाऽऽयातगुणाऽनुरूपौ ।
शिवोऽपि नारायणतां दधानो ज्येष्ठोऽथ गोवर्धन आशुमृत्युः ॥ १०५ ॥

—:श्रीनन्दकिशोरस्य तनयाः—

यो ग्रन्थकर्तुः प्रपितामहः श्री श्रीविद्ययादत्तवरो वरेण्यः ।
विचक्षणस्तीव्रमतिः प्रचण्डश्चण्डांशुभान्छासन कर्मवीरः ॥ १०६ ॥

श्रीमन्नन्दकिशोरात् त्रयस्तु तनयास्त्रयीव सञ्जाताः ।
तेषु ज्येष्ठः श्रेष्ठो नीतिकला कोविदः सुकृती ॥ १०७ ॥

—:श्रीरामचन्द्रः कवेः पितामहः —

श्रीमन्नन्दकिशोर वर्ष्मजनुषोऽजायन्त पुत्रास्त्रयो-
ज्येष्ठः श्रेष्ठ - गुणैर्युतः शुभमतिः श्रीरामचन्द्राऽभिधः ।
वाग्मी नीतिविशारदः पटुतरो ग्रामप्रबन्धे विधौ
बन्धून् यः परिपोषयन् समभवन्नेता शुचिग्रामणीः ॥ १०८ ॥

यस्याऽऽज्ञापरिपालनं, स्म कुरुते ग्राम्यो जनः सर्वदा
आयाति स्म सदैव यस्य सु - परामर्शार्थकामो जनः ।
तन्निर्दिष्ट - पथा चलन् हि विजयी भूत्वोपकारं वहन्
नित्यं दास्यमुपाश्रितो बहुविधं मानं तनोति स्म सः ॥ १०९ ॥

स एकपत्नीव्रतमादधानः परम्पराऽऽसादित संविधानः ।
निधानभूतश्च तदङ्गजेषु श्रीरामचन्द्रो जनुषा प्रधानः ॥ ११० ॥

—: श्रीरामचन्द्रानुजो राधाकृष्णः—

राधाकृष्णोऽपि पूज्याऽनुकरणकुशलः संस्कृतज्ञः सुधीरो
द्रव्याऽऽदान - प्रदानैर्विनिमयकरणेऽन्नादि वृद्धौ प्रवीणः ।
मन्त्रैस्तन्त्रप्रयोगैः क्वचन परिवृतां भूतबाधां विधुन्वन्
लोके सिद्धः, सुवैद्यः प्रथितिमुपगतः स्वौषधादि प्रयोगैः ॥ १११ ॥

किञ्च:—राधाकृष्णो भ्रातृभक्तो द्वितीयस्तन्त्रे मन्त्रे भेषजे लब्धमानः ।
द्रव्याऽऽदाने सम्प्रदानेऽपि दक्षो, ह्यन्योऽल्पायू रामकृष्णः कनीयान् ॥ ११२ ॥

—:श्रीरामचन्द्रस्य-पुत्रा अपि त्रयः—

त्रयोऽङ्गजास्तद्गुणशालिनोऽमी श्रीरामचन्द्रस्य बभूवुरुत्तमाः ।
द्वौ तेषु गोपी-जय-पूर्व कृष्णौ नारायणः स्नेहयुतोऽन्तिमोऽभूत् ॥ ११३ ॥

—: तत्र ज्येष्ठः श्रीगोपीकृष्णः कवेः पितृचरणः —

ज्येष्ठेन तेषां नु सहस्रचण्डी यागादियोगाः समनुष्ठिता ये ।
अभूतपूर्व फलमादधाना सिद्धाः समृद्धाः ह्यभवन् सकामाः ॥ ११४ ॥

सार्द्धद्वयेऽह्नि कृतिना बदरीशधाम्नि-संश्रावितः सकलभागवतस्य पाठः ।
अन्यत्र भारतभुवि प्रथितः पुराण-वक्ता समस्तविदुषां धुरि लब्धमानः ॥ ११५ ॥

श्रीमद्गोकुलनाथपूज्यचरणा गोस्वामि सत्कौस्तुभाऽऽ-
चार्याः पण्डित संसदि प्रथमतः सम्मानमासादयन् ।
"मार्तण्डो हि पुराणेवाचककुले"[1] स्वोपाधिना मानितो
गोपीकृष्ण सुनामधन्य इति यः "श्री पण्डितेन्द्रः"[2] पुनः ।। ११६ ।।

स्वाऽऽयुः शेषान्मासयुग्मं प्रदायाऽनुष्ठानस्थ - स्तस्य नैरुज्यहेतोः ।
रोगाऽऽक्रान्तं राजबन्धुं प्रयोगान्मृत्युग्रस्तं जीवयामास सिद्धः ।। ११७ ।।

राजन्यैः श्रेष्ठिसङ्घैः श्रुत - विविधगुणैः स्वस्वकार्यार्थसिद्ध्यै
स्वाहूतो मानपूर्वं तदुदित सकलोदन्तजातं नितान्तम् ।
श्रुत्वा कारुण्यपूर्ण - स्तदभिलषितकं पूरयन् ध्यानयोगै-
र्गोपीकृष्णः सुधीन्द्रोऽधिधरणि समभूद् रामचन्द्रात्मजाऽयः ।। ११८ ।।

चन्दालालं रोगजञ्जालमाला ग्रस्तं - त्रस्तं ध्वस्त-निःशेषरोगम् ।
स्वस्थं कृत्वा श्रेष्ठिनं लब्धमानो विख्यातोऽभूत् सिद्धचण्डीप्रयोगात् ।। ११९ ।।

वाल्मीकि रामायणसिद्धयोगा कृताः प्रयोगाः सकलाः सुसिद्धाः ।
नानाविधाः पुत्र - कलत्र - वित्तप्रदाः प्रदातृप्रवरे प्रयुक्ताः ।। १२० ।।

समस्त लोक व्यवहार कार्य भोगाऽनुयोगाः शुचिमोक्षदा वा ।
साक्षाद्धरेर्दर्शन शातजाताः कृताः प्रयोगाः खलु वैष्णवीयाः ।। १२१ ।।

श्रीमद्भागवतोल्लास गीताऽभ्यासवर - प्रदाः ।
नानाऽनुष्ठान योगानां प्रयोगा विहिताः शुभाः ।। १२२ ।।

हिन्दी संस्कृत भाषास्थच्छन्दः - सु रचना-प्रियः ।
अबाधगतिकः प्रौढः कविः सद्भाव-भावितः ।। १२३ ।।

नाना विहार वर वर्णन सद्रसाला श्री कृष्णराम गुणगानसुमप्रवाला ।
सद्भक्ति मञ्जुमकरन्द रसालिजाला व्यालेखि सिद्धकृतिना बहु काव्यमाला ।। १२४ ।।

एतस्याऽनुजो भ्राता जयकृष्णः कवेः पितृव्यः

जय-कृष्णो हि विपश्चिद् धीरो वीरः सदैव गम्भीरः ।
स्वात्माऽभिमान - रसिको हास्योल्लासी च हठयोगी ।। १२५ ।।

सङ्गीत - रसिको नाना वाद्यसङ्कलने रतः ।
गृह - संशोभिवस्तूनां सङ्ग्रहेष्वाग्रहाऽऽकुलः ।। १२६ ।।

१-एकदा "पौराणिकमार्तण्डः" इत्युपाधिः । ततः २-"पण्डितराज" इति प्रदत्तः ।

## अपरोऽनुजो नारायणः कवेः कनिष्ठ पितृव्यः

श्रीरामचन्द्रस्य सुत-स्तृतीयः स्वभावमुग्धश्चरितैर्विशुद्धः ।
सपद्यनुष्ठान विधान-तन्त्रै-र्लोकेप्सितानां परिपूरकोऽभूत् ॥ १२७ ॥

अनङ्गरङ्गी वहुभावभङ्गी-सङ्गीत-मङ्गीकरणेऽपि सिद्धः ।
पुराणवक्ता मधुरस्वरोऽभून्नारायणो बुद्धिमतां वरिष्ठः ॥ १२८ ॥

## श्री गोपी-कृष्णात्मजास्त्रयः

श्रीपौराणिकमार्तण्डः शास्त्री पण्डितराजभाक् ।
रामचन्द्रात्मजो ज्येष्ठो गोपीकृष्णः सुधीः कविः ॥ १२९ ॥

वेदान्तशास्त्र-तत्त्वज्ञो ग्रन्थनिर्माण-कोविदः ।
पौरोणिको याज्ञिकश्च ज्योतिर्विद् कर्म-काण्डकृद् ॥ १३० ॥

श्रीमद्भागवताऽनेकाऽनुष्ठान - विनियोजकः ।
कूपोद्यान सुनिर्माण क्षिप्रकर्म विधानभृत् ॥ १३१ ॥

तदङ्गजाताः सन्तोऽपि महान्तो गुणशालिनः ।
त्रयस्त्रिगुण-सम्पन्ना-स्त्रिपुराङ्घ्र्यब्ज षट्पदाः ॥ १३२ ॥

लब्धतातगुणा-स्तातपाद-पङ्कज-सेविनः स्वस्व ।
प्रकृत्यनुगुणां प्रवृत्तिं पालयन्ति हि ॥ १३३ ॥

मातृवात्सल्य सम्पुष्टा-स्तुष्टाः स्वीय भुजार्जितैः ।
स्वभाग्योपहृतैरर्थै-र्मोदन्ते शन्ति-लिप्सवः ॥ १३४ ॥

ज्यायान् समेषां हरिकृष्णनामा रामस्वरूपोऽप्यनुजः सुशीलः ।
रत्नाकरोऽस्मा-दवरो वरोऽयं कार्यैक-लक्ष्यो व्यवहारदक्षः ॥ १३५ ॥

त्रयो हि भगवद्भक्ता, नित्यकर्म परायणाः ।
ध्यान-योग जपोहोम भगवत्सेवने रताः ॥ १४६ ॥

एतेऽभूवं-स्त्रिगुण महिता-स्तत्सुताः शीलवन्तः
सन्तो ह्यन्तः-करण कलिता वृत्तयो वा स्वतन्त्राः ।
ज्येष्ठ-स्तेषां सरसरचनाच्चातुरी शेमुषीकः
सुश्रीकः श्रीगिरिशललना-पाद-पद्मार्चनेन ॥ १३७ ॥

## कवे·र्विशदपरिचयः

श्री विद्या चरणारविन्द मकरन्दाऽऽस्वाद बद्धादरः
कारुण्याऽमृत - पूरपूरित - रसोद्रेकोल्लसन्मानसः ।
नानाकाव्य कलाकलापकलनस्वाचार्यवाचाऽञ्चितो
गोस्वामी हरिकृष्ण आविरभवत्सत्सार्वभौमः कविः ॥ १३८ ॥

साहित्याऽम्भोधिमन्थोत्थित विविध महारत्न मालांशुमाली
शालीनः कोऽपि काव्याऽमृतमधुर रसाऽऽस्वादनोन्मत्तभृङ्गः ।
वेदान्त - न्याय - शाब्दाऽमरतरुविटपोल्लासि पुंस्कोकिलोऽयं
श्रीगोस्वामीत्युपाह्वो लसति भुवि हरे कृष्णनामा कवीन्द्रः ॥ १३९ ॥

श्रीविद्याचरणारविन्द - मकरन्दाऽऽनन्द - मन्दाकिनी-
कल्लोलाऽचलि लोललास्य ललितोल्लासैः समुल्लासितः ।
तत्कारुण्य सुधास्रवत्सुरधुनी संसिक्त मोद - प्रमो-
दाऽऽनन्दाऽञ्चित भात्र - कल्पलतिका प्रासूनपुष्पाकरः ॥ १४० ॥

साम्राज्यं शब्द-सङ्घे मधुररस-गुणाऽलङ्कृति-प्राज्यराज्येऽ-
नुप्रासाली प्रणाली - मनुसरति सुधास्पर्द्धिवाचां प्रयोगे ।
प्रागल्भ्यं प्रातिभं यत् स्फुरति पदचये रम्यभावाऽवलीना-
मालीनां लास्य हेला विबुधवरगिरां वर्वृतीति प्रकामम् ॥ १४१ ॥

स्वच्छन्दाऽमन्द वृन्दारकवर - ललनालोल - लीलारविन्दां
छन्दोऽलङ्कार हार प्रसृत सिततनुत्त्विट् स्फुरद्रत्नजालाम् ।
तालाङ्काऽऽनन्द - हालायित पदरचनाराजितां काव्यमाला-
मातन्वन्नन्दसूनौ स्तुति-मति-नतियुक् भाति सम्राट् कवीनाम् ॥ १४२ ॥

शब्दावली प्रनृत्यन्ती सरसाऽलङ्कृता गुणैः ।
यस्याऽभिनेत्रीवाऽऽभाति हिन्दी-संस्कृत-काव्ययोः ॥ १४३ ॥

राजस्थान वसुन्धरा परिलसत्पाण्डित्य - पाथोनिधिः
सद्यः काव्यकलाकलापकलने सिद्धः प्रसिद्धः कविः ।
तैलङ्गद्विज - वंश - लब्ध - जननः सद् गद्य - पद्याऽधिराड्
गोस्वामी हरिकृष्ण आशु कविता कल्लोलिनी - केलिकृत् ॥ १४४ ॥

तात्कालिकेषु विबुधेष्वमितप्रभावो राजस्थलोद्भव कवीश्वरमण्डन श्रीः ।
सम्मेलनादिषु सदा पदकैः सुहेम्नः सम्मानितो दशशतेन च सर्वकारैः ॥ १४५ ॥

तथैव:—

शतद्वयाभिर्मुद्राभिः समायां बाल्लभोद्भवे।
"गद्य-पद्यैकसम्राडित्युपाधिभिरलङ्कृतः ॥ ( गोस्वामिभिः ) इति शेषः।

कार्यम् :—

गोस्वामि संस्कृत महाविद्यालयवराऽभिधाम्।
संस्थां संस्थाप्य विधिवत्स्वयं तां समचालयत् ॥ १४६ ॥

सम्मान्यतां प्रापयदानुपूर्व्या प्राध्यापयद्ध्याधुनिकक्रमेण।
साहित्य वेदाऽखिलकर्मकाण्ड प्राग् ज्यौतिषाध्यापनमारब्ध ॥१४७॥

सम्प्रति संस्कृतकालेजो राजकीयसमृद्धिमान्।
ग्रामे यो भाति सैवेयं संस्था संस्थापिता पुरा ॥ १४८ ॥

वाण-वेद-नव चन्द्रसंज्ञके राजकीयपरिवत्सरे शुभे [ १९४५ ई० ]
मासि मञ्जुलनवाम्बरेऽमुना स्थापितः सुभग-शिक्षणालयः ॥ १४९ ॥

स्वयं संस्कृत कालेजेऽध्यक्षतां संवहन् पुनः।
सेवानिवृत्तः सञ्जातोऽगरसाङ्केन्दु वत्सरे ( १९६७ ) ॥ १५० ॥

—:जिज्ञासूनां कृतेऽन्यविधोऽपि परिचयः—

सावित्र्या दीक्षितोऽभूद् वयसि मुनिमिते वत्सरे सैष विद्याऽऽ-
रम्भः कालोऽब्दमध्येऽमर-भणितिरधीता (अमरकोषः) ततः कौमुदीयम्।
स्वाऽङ्केन्देऽधीत्य सर्वां विबुधवरदराण् निर्मितां कौमुदीं तां
नाथद्वारे विपश्चित् परिषदि विषयोल्लासनं संव्यधाद् यः ॥ १५० ॥

सद्यो दुर्दृष्टिपाताद् परिहृतमतितामाप्य विद्याविहीनः
काले चैकादशाब्दे त्रिविध-विषयजं ज्ञानमासादयत्सः।
पश्चादाश्रित्य विद्यालयमनुसवनं पाठ्यशास्त्राऽनुचिन्तां
त्यक्त्वा नैवाऽन्यकिञ्चिद्ध्यभिलषितमभूत् तस्य शिक्षाक्रमेऽपि ॥ १५१ ॥

परीक्षा प्रोत्तीर्णा द्विसम-परिपाट्या स्वविषया
द्वितीयस्यां श्रेण्यां मदन-शर मासाख्यसमये।
सुसाहित्ये लब्धा नियत समये शास्त्रि पदवीं
ततो न्याये शास्त्रिप्रथम-सम-पाठ्यं ह्यधिगतम् (पाठ्यात पठितम्) ॥१५२॥

शुद्धाद्वैते ब्रह्मविद्याऽऽख्य (विज्ञान) शास्त्रे स्वाचार्याख्योपाधिराप्ता समानम्।
आद्यश्रेण्यां सद् पुरस्कार पूर्णा लब्धा सिद्धिः पारिताऽऽचार्य श्रेणी ॥ १५३ ॥

विन्ध्येलाऽधीश्वराणां सततगुरुपदं सेदतामोड़छेन्द्रम् (ओडछाराज्य)
सश्रद्धं पूजितानां, नृपकुलविहितां वृत्तिमाचार्यतां ।
धर्माऽध्यक्षत्वकार्यं शुचि परिवहतां, तत्कुलेकुलोयद्विवाहो
"गुल्ला-देव्या" सहैषा नृपगुरु - जयदेवाङ्गजा शीलपूर्णा ॥ १५४ ॥

दाऊजू "जयदेव" राजगुरवोधर्माद्यधीशाः स्वयं
विद्वांसः कवयोऽपि सर्वविषये पारङ्गताः प्रोद्भटाः ।
शास्त्रश्रावण कर्मकाण्ड कलने सङ्गीतवाद्यादिषु
प्रख्याता गुणिनोऽभवञ्छ्वशुरतां याताः कवेः स्नेहिनः ॥ १५५ ॥

गुल्लादेवी तदीयाऽङ्गजनिरजनि या गेहिनी प्रेयसी सा
जाता गार्हस्थ्यधर्मे, सरस रसवती साधने सिद्धहस्ता ।
पातिव्रत्ये द्रढिष्ठाऽतिथिपरिचरणे सर्वदौदार्यभावा
राज्ञीभिर्लालिताऽपि स्वशिशुवयसि, सा निःस्पृहेहाकलापे ॥ १५६ ॥

बाल्ये फुल्ल - कपोल - मुग्धवदना पूर्णेन्दु बिम्बाऽऽनना
मृद्वङ्गी मदिरेक्षणा स्मितमुखी चेतोहरी जित्वरी ।
सद्यः प्रेक्षणमात्रहृद्धृदयगा स्वान्तेश्वरी साऽभवत्
सौभाग्यात् (संस्करात्) सहधर्मिणी समभवत् सम्पन्नगेहोचिता ॥ १५७ ॥

तस्यां पुत्र - चतुष्टयी समभवद्भास्वन्ति रत्नानिवत्
तेष्वेकः पितृ-मातृ-भक्ति - महितोऽल्पायुर्मृतो यौवने ।
ज्यायाञ्छ्रेष्ठकुले समृद्धि - महिते प्रोद्वाहितो यस्तया
स्वायत्तीकृत एव तत्र रमते वाक्कील एमेऽपि सन् ॥ १५८ ॥

द्वावन्यौ निजपूर्वकर्मकलितां वृत्तिं श्रितौ व्यापृतौ
संलग्नौ, पठने रतोऽवरतमो बी. कॉमभूतः स्तुतः ।
अन्यो नैजमनोऽनुकूलमधुरां वृत्तिं श्रयन् सञ्चरन्
ज्येष्ठभ्रातृ - पदाऽनुगोऽपि कलयत्याकस्मिकीं कामनाम् ॥ १५९ ॥

—: कवेर्द्वितीयो भ्राता :—

"रामस्वरूपः"

शीलः शान्तमतिः क्रियासु कुशलो लोकप्रियः कर्मकृद्
वृद्धानां समुपासने स्व-पर-जं भेदं विधुन्वन् रतः ।
व्यापारं व्यवहारमाङ्गिक - विधिं संसाधितुं तृट्क्षुधौ
नैवाऽजीगणदान्तरं क्वचि सुखं "रामस्वरूपो"ऽनुजः ॥ १६० ॥

## —ःकवेः कनिष्ठो भ्राता ( रत्नाकरः )ः —

रत्नाकरः स्वाग्रज सन्निधाने निवद्समासाद्य तदीययत्नात् ।
शिक्षां प्रशिक्षां विधिवत् समाप्य स्वतन्त्रवृत्तिश्च गुणाकरोऽभूत् ॥ १६१ ॥

कस्मैचित् सुखलिप्सवे सुतनुजां रुग्णाय तन्मुक्तिदां
व्यापारे धनवृद्धयेऽथ ललना - प्राप्त्यर्थं - माराधने ।
देवाऽनुग्रह - लब्धिजां मतिमतीं विद्यार्थि - मोदावहां
सिद्धिं यः प्रथितां सतीमतनुत प्रेष्ठां जनेभ्यः कृती ॥ १६२ ॥

गोपालोपासनाऽऽसक्तो भक्तो भागवतप्रियः ।
व्यवहारसदाचार - वाक् - प्रसारण - पण्डितः ॥ १६३ ॥

चातुर्य्यं - मोहिताऽशेष - कार्यालय - जनार्ऽर्चितः ।
सर्वदा पूज्यतां प्राप्तः स्वाध्यक्षैः रक्षताऽऽज्ञकः ॥ १६४ ॥

सद्यः प्रस्फुरितैः सुतन्त्रकलनैः कर्माऽनुरूपैः शुभैः
मन्त्रोज्ज्रृम्भितशक्तिमद्भिरनिशं लोकेप्सितां सम्पदम् ।
देवाऽऽराधनलब्धलोकविभवां सिद्धिं समुल्लासयन्
प्रायच्छत् सुकलत्रपुत्रमहितां लोकाय रत्नाकरः ॥ १६५ ॥

## कविवंशजा पूर्वजाऽवरजाश्चेतरेपि

### श्रीगङ्गादत्त-( बख्श ) तनयौ—

गङ्गादत्तस्यात्मजौ द्वावभूतां "मन्नालालो"ज्येष्ठ आसीत्तयोर्यः ।
राजद्वारे वाग्विवादेऽथ नित्यं जेता नेता ग्राम- धामादि - कार्ये ॥ १६६ ॥

जीवनलालोऽप्यनुजो मनुजोल्लासी सुधीवरो रसिकः ।
"शतरञ्जना"दिकलौ सङ्गीते वेणुवादने दक्षः ॥ १६७ ॥

"जीवनलालो" विद्वान्नात्मश्लाघी विवाहकर्मेच्छुः ।
स्वेतर मनुजोत्कर्षाऽसहिष्णुरासी - द्दिवङ्गतो वयसि ॥ १६८ ॥

### मन्नालाल तनूजौ

— मन्नालालतनूजौ जातौ ज्येष्ठस्तयोर्मृतस्तरुणः ।
भैरवदत्तोऽवरजः कुलभृत् पुरुषोत्तमस्त्वेकः ॥ १६९ ॥

## श्री गङ्गादत्त - भ्रातरावन्यौ

द्वावन्यौ कार्यकुशलौ पिताम्बर-जनार्दनौ ।
वञ्चितौ स्वीय - पुंरूप - सन्तान - सुख - भोगतः ॥ १७० ॥

## श्री शुकदेवात्मजास्त्रयः

शीलवन्तो गुणोदाराः शुकदेवात्मजास्त्रयः ।
रामनारायणस्त्वाद्यः श्रीगोविन्दस्तु मध्यमः ॥ १७१ ॥

श्रीकृष्णोऽवरजः कान्तः कामिनी - हृदयङ्गमः ।
गतावाद्यान्तिमौ हन्त तरुणो भगवद्गतिम् ॥ १७२ ॥

## — श्री गोविन्दो मध्यमः —

श्रीगोविन्दः सुधीः श्रीमान् शास्त्राऽभ्यसन - कोविदः ।
अजात शत्रुः सर्वेषां हितकृच्छिष्य - सेवितः ॥ १७३ ॥

आजीवनं यो द्विजवालकेभ्यो विद्याप्रदानं विधिना चकार ।
विशेषतो ज्यौतिष-कर्मकाण्डग्रन्थान् समध्यापयदात्मशिष्यान् ॥ १७४ ॥

सुदूर दूरादिह सङ्गता ये विद्यामवाप्तुं किल विप्रबालाः ।
अन्ये मुहूर्तादिकमाप्तुकामाः सर्वे सकामाः सफला अभूवन् ॥ १७५ ॥

श्रीमद्भागवताऽऽलाप - देवाराधन - तत्परः ।
स्वदायमकृतो - द्वाहः स्वेभ्यो दत्वाऽऽप सद्गतिम् ॥ १७६ ॥

शिवप्रियोऽभूच्छिवलालनामा न तत्प्रियाऽभूत्त खलु वंशवृद्धिः ।
वंशस्त्रयाणामिह सम्प्रवृद्धः स्वपूर्वजाऽनुग्रह - पुण्यपाकैः ॥ १७७ ॥

## —: श्री शिवनारायणस्य पुत्राः —

रूपलालात्मजा - ज्ज्येष्ठाच्छिवनारायणात्त सुताः ।
चत्वारश्चतुरा जातास्तारुण्ये ह्यन्तिमो मृतः ॥ १७८ ॥

## —: तेषु ज्येष्ठः श्री लक्ष्मीनारायणः :—

लक्ष्मीनारायणोऽभूद् विविधवर - गुणैः शालिहोत्रप्रवीणो-
ज्येष्ठः कार्येषु दक्षो ह्यज-वृष-तुरगोष्ट्रादिलक्ष्यैक वेत्ता ।
नाऽधीतो भूरिशास्त्रः स्फुरितगुणमतिः सर्वतो व्याप्यवृत्ति-
र्ग्रामादेः शासनादा - वधिक - कृतरति - द्वैधनीति - प्रयोक्ता ॥ १७९ ॥

नाड़ीज्ञाने रुङ्निदानेऽपिदक्षो कालज्ञाने ह्यद्वितीयोऽतिमृत्योः ।
चिह्नं दृष्ट्वा गर्भिणीं वीक्ष्य सद्यः पुत्रः पुत्री भाविनीत्याचचक्षे ॥ १८० ॥

—: श्रीप्रह्लादः :—

प्रह्लादोऽप्यनुजस्तस्य चतुर्दिक् चपलो गुणी ।
शीलः स्वकार्यकुशलश्छन्नूलालस्ततोऽनुजः ॥ १८१ ।

—: श्री लक्ष्मीनारायणस्य तनयाः :—

लक्ष्मीनारायण तनुभुवो भान्ति ये पञ्च पुत्राः
कल्याणोऽयं प्रथम तनयः कोपसंश्लिष्टशान्तिः

—: श्री घनश्यामो द्वितीयः :—

सर्वं प्रेयान् सुकृतिषु घनश्याम एषोऽभिरामः ।
श्रेयस्कामः सकलहितकृत प्रस्फुरद्बुद्धि - रास्ते ॥ १८२ ॥

संघर्षं परिकर्षयन्नहरहः संहर्षयन् स्वाऽनुगान्
उत्कर्षं परिवर्षयन्निजगुणैः सन्धर्षयन् दुर्मदान् ।
कर्षं कर्षममर्ष - मुद्भटरिपून् सम्मर्षयंश्चर्षणीन्
सौहार्दस्तुति - वर्षिणीं भुवि घनश्यामः सुधां वर्षति ॥ १८३ ॥

यः स्वात्मीय - कुलाऽभिमानमहितो जन्मस्थलीं मण्डयन्
नाना नव्यकलाकलाप - कलनां सङ्कल्पयन् वर्द्धयन् ।
प्रायो ग्रामसमुन्नतौ व्यरचयच्छिक्षां प्रशिक्षां शिशु-
क्रीडादि - प्रतियोगितां नवनवोल्लासै - र्विधानैः शुभैः ॥ १८४ ॥

स्वमति - कौशलतः समभूत्स्वयं सहनिदेशकतां पदवीं दधत् ।
सतत संस्कृत शिक्षणपद्धतेः प्रमुखकार्य - कलापनिभालकः ॥ १८५ ॥

अनेक हस्तलिखितान् ह्यनेक विषयाऽद्भुतान् ।
आनीयाऽस्थापयद् ग्रन्थान्, "पुस्तकालय" मुत्तमम् ॥ १८६ ॥

विशेषः— प्रह्लादस्त्वकृतोद्वाहो मध्यमं भ्रातृजं - प्रियम् ।
गणेशं कलयामास स्वाधिकार - पदे स्थितम् ॥ १८७ ॥

—: श्री गणेशः :—

गणेशः सर्व कार्येषु सिद्धहस्तः प्रशस्तधीः ।
सर्वप्रियश्च सोत्साहो रञ्जयत्यनिशं जनान् ॥ १८८ ॥

सम्मानितोऽतोऽपि सकलैः सकलैकगुणाकरः।
स्वादरं कुरुते ज्येष्ठान् प्रीणयन् विनयै - र्नयैः ॥ १८९ ॥

—ःश्री देवकीनन्दन—वामनौः—

सुशीलः सुधीर्देवकीनन्दनोऽयं, लसद्वामनो, वामनो, वा मनोऽपि।
चरित्रैर्गुणैः कर्मणा वा 'समस्ता' जनानां मुदं तन्वते मोदयन्ति ॥ १९० ॥

प्रवर्द्धमानः सर्वेषां सर्वदा सन्ततिक्रमः।
शिक्षा - विनयसम्पन्नाः स्वोन्नतिं कलयन्त्यमी ॥ १९१ ॥

—ः श्री छन्नूलाल-सुताः—

छन्नूलाल सुतषु षट्सु च हरिश्चन्द्रः स्वतन्त्रः सुतः
कैलासस्तरुणो विवेकबहुलः स्वर्गं गतो यक्ष्मणा।
आस्ते श्री रघुनन्दनोऽपि विनयी गोपालकृष्णो मृतः
तुर्योऽपि व्रणभूषणोऽन्तिमसुतो दक्षः सुभाषो वटुः ॥ १९२ ॥

—ःकवेर्ज्येष्ठ पितृव्यात्मजः—

पुराणवक्ता सङ्गीत वाद्यवादन कोविदः
हास्यप्रियः सुधीः श्रीमान् जयकृष्णो रसप्रदः ॥ १९३ ॥

तस्याऽऽत्मजोऽपि तद्वत्कार्याऽवेक्षी सदैक निजलक्ष्यी।
सः श्यामसुन्दर इति ख्यातो दक्षः सुपाक - शास्त्रेऽपि ॥ १९४ ॥

संस्कृते शिक्षणस्थाने विभागो प्रमुखे पदे।
कार्यालयाऽधीक्षकतां यातः कार्यपरायणः ॥ १९५ ॥

—ः कवेः कनिष्ठपितृव्यस्यात्मजाः —

भावुकः सुरसोल्लासी ह्यनुप्रास विलास भृत्
"नारायणः" सदामोदः कथावाचन - पण्डितः ॥ १९६ ॥

त्रयोऽङ्गजास्तस्य गुणाऽनुरूपाः समानशीला विनयान्वितास्ते।
सुशोभतेऽन्यो भगवद्दयालुः सुमध्यमो रामदयालु नर्मा ॥ १९७ ॥

प्रभुदयालुरयं प्रभुसम्पदां विभवमेक्ष्य पितुः प्रणयी पुनः।
शुचिपितुर्वचनं रचनामयं स्वमनुताऽग्रजयोरपि सम्मतिम् ॥ १९८ ॥

आङ्ग्ल भाषाविदः सर्वे राजसेवामुपासते।
गुणाऽनुरूप - सम्मान - पदासीनाः लसन्त्यमी ॥ १९९ ॥

## —कवेः कुटुम्बे वर्तमाना सन्ततिः—

### —ःश्री पुरुषोत्तमस्यात्मजाः—

पुरुषोत्तमो हि पुरुषोत्तमतां बिभ्रत्सुशील गम्भीरः
सकलज्येष्ठपदेऽस्मिन्नभिषिक्तो ज्येष्ठगृहजातः ॥ २०० ॥

सन्त्यस्य पुत्राः निजवंशशाखा-सञ्चालकाः स्वीयगुणाऽनुरूपाः ।
दीर्घायुषः सिन्धुमिता गुणज्ञा ज्येष्ठः सुतस्तेषु च बालकृष्णः ॥ २०१ ॥

साधारणं शिक्षणमाङ्ग्लभाषामयं ह्ययं प्राप्य सुराजसेवाम् ।
गोपालकृष्णोऽपि तथैव नैजं कार्यं हि सम्पादयति प्रकामम् ॥ २०२ ॥

अस्याऽनुजौ लालन-मोहनाद्यौ कृष्णौ स्वशिक्षाप्रसरं भृतिञ्च ।
संसाधयन्तौ मुदमादधानौ तन्वात एतौ निजमातृमोदम् ॥ २०३ ॥

### —ः"स्वयं कवेस्तनयाः"ः—

हरिकृष्णात्मजा भान्ति चत्वारः सागरोपमाः
वर्द्धिष्णवो निजं तेजः पैत्र्य पैतामहं यशः ॥ २०४ ॥

एते हि बालभावत्वात्साम्प्रतं गूढतेजसः ।
दीप्तिमन्तो भविष्यन्ति विभूत्याऽऽच्छन्नवह्नयः ॥ २०५ ॥

### —ः श्रीकृष्णचन्द्रो ज्येष्ठः पुत्रः ः—

ज्येष्ठस्तु कृष्णचन्द्रोऽयमाङ्ग्लभाषा विशारदः ।
संस्कृते लब्धसम्मानो योग - तन्त्रस्वरादिषु ॥ २०६ ॥

अध्येत्युभय - विज्ञानं वर्द्धयत्यधिकाऽधिकीम् ।
मतिं वाक्कील वर्य्येषु वरिष्ठत्वमुपागतः ॥ २०७ ॥

वाक्कीलो वाग्वरिष्ठः सकल नियमवित् प्रस्फुरद्वाग्विलासो
न्यायाधीशाऽऽभिमुख्यं प्रकटित - विषयस्तर्कविध्वस्तविद्विट् ।
जेता नेताऽभियोगस्य सकलकलनासाधने सिद्धहस्तो
यं यं यस्याऽभियोगं वहति निजकरे साधयत्याशु कार्यम् ॥ २०८ ॥

गेहकार्यं - समुल्लासी द्वितीयो नलिनः सुतः ।
त्रयोविंशति वर्षाणामायुषि स्वर्गतो युवा ॥ २०९ ॥

राजीवकृष्णः कुतुकी स्फुरद् वाणी विलासभृत् ।
चञ्चलश्चारुदृक् चेष्टः साम्प्रतं स्वेप्सितक्रियः ॥ २१० ॥

गोपालकृष्णो मतिमान् शास्त्रग्रहण - कोविदः ।
क्रीडनेऽध्ययने तीव्रो वाद्यवादन - शक्तिभृत् ॥ २११ ॥

—: कवेः–पौत्रः ( श्रीकृष्णचन्द्र-सुतः ) :—

:– अरुणकुमारः—

श्रीकृष्णचन्द्रस्य सुतः स्वबालक्रीडां विधत्ते जनमोहिनीं याम्-
पुरा व्यतानीद् यदुनन्दनः श्रीकृष्णस्तथाऽयं "ह्यरुणः कुमारः ॥ २१२ ॥

मेधावी प्रस्फुरद् वाणी विलास ललितक्रमः ।
सुयोग्यो भविता नूनं जननीकुलपक्षपः ॥ २१३ ॥

—:कवेर्भ्रातृजास्त्रयः :—

रामस्वरूपस्य लसन्ति पुत्राः त्रयस्त्रिवर्गस्य परप्रतीकाः ।
कृष्णस्वरूपोऽप्यथ भानुरूपो-विष्णुस्वरूपश्च चिरायुषस्ते ॥ २१४ ॥

कृष्णस्वरूपो निर्भीको मधुकूपोल्लसन् मधु ।
सरघावृन्दमध्यस्थमश्नाति कुशलः सुखम् ॥ २१५ ॥

वृषाश्व - श्व - वराहादि दुष्टसत्वनिषूदनः ।
जलोत्क्षेपण यन्त्रादि - पेषिणी यन्त्रचालकः ॥ २१६ ॥

वीरकर्मणि सश्रद्धो नाधिकाऽध्ययने रतिः ।
राजसेवां समाधत्तेऽध्यापकः शास्त्रिशब्दधृक् ॥ २१७ ॥

धत्ते भानुस्वरूपोऽप्यध्ययने कृतधीः पटुः ।
राजसेवा - प्रविष्टोऽयं कुशलः कार्यसाधकः ॥ २१८ ॥

विष्णुस्वरूपस्त्वाकृत्या विष्णुरूपो गुणैः समम् ।
चेष्टतेऽध्ययने गेह कर्मणि प्रवृत्ति वहन् ॥ २१९ ॥

—:कवेर्भ्रातृजाः [ रत्नाकरस्य पुत्राः ] :—

गङ्गातः पञ्चरत्नानि रत्नाकर सामगमात् ।
निःसृतानि विचित्राणि कान्तिमन्ति महान्ति च ॥ २२० ॥

—:तत्र ज्येष्ठः सुधाकरः :—

(१) सुधाकरः सुधाऽऽश्लिष्ट वाचां प्रासरणे पटुः ।
सङ्गीत - लास्य - रसिकोऽप्यधीते विहितश्रमः ॥ २२१ ॥

आङ्ग्लभाषा - मधीत्यैव "एम. ए" विषये द्वये।
राजसेवां वितनुते शीलः शान्तः सुधाकरः" ॥ २२२ ॥

(२) "वसुधाकरो"ऽपि वसुधां वसुधारणतो विभूषयन्नैजाम्।
शिक्षामाधुनिकीमपि गृह्णन् पुष्णाति पद्धतिं स्वीयाम् ॥ २२३ ॥

(३) "पद्माकरः" पद्मपलाशमृद्वीं तनुं दधानस्तनुते मनीषाम्।

(४) "प्रभाकरः" स्वप्रभया प्रकाशं विज्ञानराशेस्तनुते प्रशस्तम् ॥ २२४ ॥

(५) "विभाकरो"ऽयं हि विभाकर - श्रीर्विभावत्यग्रजकार्यजातम्।
सर्वेऽधियन्ति प्रतिभाऽनुरूपं प्रदर्शयन्ति प्रकृतेर्विलासान् ॥ २२५ ॥

—: श्री कल्याणस्यात्मजाः :—

कल्याणस्य सुतौ द्वावरुणकुमारो धनेश्वरोऽप्यन्यः।
द्वावेव बुद्धिमन्तौ शिक्षा-दीक्षां लभतेऽत्र ॥ २२६ ॥

—: श्रीघनश्यामतनयौ :—

घनश्याम सुतो ज्येष्ठः कमलेशः सुवेषभृत्।
राकेश प्रतिभोल्लासी मितभाषी सुघोपमः ॥ २२७ ॥

रामकृष्ण समावेतौ पठनेऽध्यापने रतौ।
मनोविनोदं तन्वाते दर्शकस्योपवीतिनौ ॥ २२८ ॥

—: श्रीगणेशस्य तनयौ :—

अहो चित्रं गणेशस्य पुत्रो ज्येष्ठो गजाननः।
यथानाम गुणोत्कर्षी कुशाग्रप्रतिभः पटुः ॥ २२९ ॥

आनन्दस्तु गुणानन्दः परमानन्द दायकः।
पित्रोः पितामहस्यैव कनिष्ठस्तनुते मुदम् ॥ २३० ॥

—: श्री देवकीनन्दनस्य तनयाः —

अहो देवकीनन्दनस्यापि पुत्राः सुराजेश एषो वरिष्ठो गरिष्ठः।
सुरेशः सुवेषः सुकेशो द्वितीय-स्तृतीयोऽधुनाऽरिष्टशय्याऽधिरूढः ॥ २३१ ॥

—:श्री वामनस्य तनयः :—

राजत्यनिलकुमारो वामनतनयोऽपि चञ्चलो मतिमान्।
सन्तति परम्परेयं सर्वेषामेव वर्द्धमानाऽस्ति ॥ २३२ ॥

## —:श्री हरिश्चन्द्रस्य पुत्राः :।

हरिश्चन्द्रस्य तनयः परमानन्दनामकः।
स्नेहसंसिक्त संलापै-"बबुवा" ख्यां च लब्धवान् ॥ २३३ ॥

## —:श्री रघुनन्दनस्य तनयौ :—

रघुनन्दनस्य तनयौ विविधां बालोचितां चेष्टाम्।
विदधाते निज जनकं मोदयतो मातरं वाग्भिः ॥ २३४ ॥

## —: श्रीश्यामसुन्दर-तनयौ :—

जयकृष्णात्मजाः श्याम सुन्दरो गुणवन्धुरः।
उर्दूमाङ्गल सम्भाषां हिन्दीं यः समधीतवान् ॥ २३५ ॥

राजसेवाऽप्रविष्टोऽयं कौशलं निजकर्मसु।
सर्वदा तनुते धीरो भाषात्रितयकोविदः ॥ २३६ ॥

तदङ्गजातः खलु बाललीलां बिभ्रत् प्रियां लालनकृष्ण नामा।
बालोऽपि योऽध्येति सुशील एषो मनोमुदं सन्तनुते परश्च ॥ २३७ ॥

## —:श्री भगवद्दयालु तनुजौ :—

आङ्गल भाषामधीत्यैव राजसेवामुपाश्रितः।
मादकद्रव्यसङ्घस्य नियन्तृपदकार्यभृत् ॥ २३८ ॥

भगवद्दयालुतनयौ राजेते जन्मभूमि - गुणशीलौ।
ज्येष्ठो हि चन्द्रकान्तः कान्तप्रज्ञः सुशीलगुणधामा ॥ २३९ ॥

अपरोहि सूर्यकान्तः कुशाग्रबुद्धिश्च सर्वदाऽधीते।
एतौ प्रशान्तधीरौ गुणगम्भीरौ सुखं पठतः ॥ २४० ॥

## —:श्रीरामदयालुस्तत्पुत्राश्च :—

सरलो मतिमानुदारचेताः विनयी कार्यरतः प्रदर्शयन्।
लघुवेतनमर्जयन्नहो भजतेऽयं बहुसन्तर्ति गुणैः ॥ २४१ ॥

तनया अपि शीलशालिनोऽध्ययने पूर्णरुचिं भजन्ति ते।
शुचि शिक्षणमेत्य सत्वरं प्रभविष्यन्ति समृद्धिवृद्धयः ॥ २४२ ॥

---

श्रीरामो विजयते

श्रीयतिराजाय श्रीरामानन्दाचार्याय नमः

# प्राक्कथनम्

श्रीस्वामिहरिकृष्णगोस्वामिमहोदयेन विदुषा रचित आचार्य - विजयः प्रवन्धो यर्ह्योवालोकि मया तदैव तत्प्रकाशनाय समजनि समुत्कण्ठा मे मनसि। परं तत्प्रकाशनं द्रव्यसाध्यं मत्वा मौनमभवम्। कतिपयमासान्तर रचयित्रा महोदयेन श्रीस्वामिश्रीसीतारामशरणाः श्रीलक्ष्मणकिलाधीशास्तत्प्रकाशनाय प्रार्थितास्तैरेकसहस्र-मुद्रा मया दीयन्ते इति प्रतिज्ञाय प्रतिज्ञापत्रं च लिखित्वाऽवशिष्टार्थलाभाय आयोध्यका महात्मानः प्रार्थिताः प्रोत्साहिताश्च। ततश्च तत्प्रतिज्ञापत्रं यदा मत्सविधे समागतं तदा मया सर्वेऽपि प्रधाना महात्मानः सादरं समाहूय प्रार्थिताः आचार्य - विजय प्रकाशनाय द्रव्यं दातुम् तैरपि सर्वैर्महात्मभिः सोत्साहं स्वस्वसामर्थ्यानुसारं द्रव्यं समर्पितं यैर्यन्मितं द्रव्यं दत्त तदधः प्रकाश्यते। तद्द्रव्य संग्रहकर्मणि महामान्येन मन्मित्रेण मानसमातंण्ड श्री प्रेमदासेन महती सहायता कृता इति ते धन्यवादार्हाः। अथ च द्रव्यदातारः सर्वेऽपि महात्मानः सर्वदा धन्यवादार्हाः इति विज्ञापयति।

पं० अखिलेश्वरदासः

श्री सीतारामाभ्यां नमः। श्री हनुमते नमः
परमाचार्य श्री रामानन्दाचार्याय नमः

पं० श्री हरिकृष्ण गोस्वामिकृत संस्कृत भाषा में आचार्य विजय नामक ग्रन्थ के प्रकाशन के लिये अधिक सहायता प्रदान करने वाले मान्य सज्जनों की नामावली :

| क्रमसं० | द्रव्यराशिः | नाम | स्थानम् |
|---|---|---|---|
| १ | १००१) | ,, स्वामी श्री सीतारामशरणजी | किलाधीश लक्ष्मण-किला अयोध्या |
| २ | १००१) | ,, ,, श्री मधुसूदनदास जी | राजगोपाल |

| | | | |
|---|---|---|---|
| ३ | ५०१) | श्री महान्त श्री नृत्यगोपाल दासजी | श्री मणिरामदास जी की छावनी, अयोध्या |
| ४ | ५०१) | ,, ,, श्री रामदास जी | गद्दीनशीन की आज्ञा से चारों पट्टी अयोध्या |
| ५ | ५०१) | ,, ,, श्री पं० श्री हरिनाथ दासजीवेदान्ती | जानकी घाट |
| ६ | ५०१) | ,, ,, श्री कौशलकिशोर दासजी | बड़ा भक्तमाली अयोध्य |
| ७ | २५१) | ,, ,, श्री रामायणी श्री प्रेमदासजी | मानसमार्तण्ड महाविरक्त, स्थान अयोध्या |
| ८ | २०१) | ,, ,, श्री रामकृपालु प्रसादाचार्याः | अयोध्या बड़ी जगह |
| ९ | २०१) | ,, ,, श्री हरिराम शरणजी | हनुमत्सदन अयोध्या |
| १० | २०१) | ,, ,, श्री हरिहरदासजी | जन्मस्थान अयोध्या |
| ११ | २०१) | ,, ,, श्री वैदेहीवल्लभ शरणजी | हनुमत् टेकरी |
| १२ | २०१) | ,, ,, श्री अवधशरणजी | वैदेही वल्लभ कुञ्ज |
| १३ | २०१) | ,, ,, श्री वैदेहीरमण शरणजी | हनुमन्निवास |
| १४ | २०१) | ,, ,, श्री रामलखन शरणजी | भगत श्री राम-जन्मभूमि |
| १५ | २०१) | ,, ,, श्री पं० अखिलेश्वर दासजी | रामकुञ्ज, रामघाट |
| १६ | २०१) | ,, ,, श्री रामसूरत शरणजी | गोलाघाट अयोध्या |
| १७ | २०१) | ,, ,, श्री रामकृपालाचार्य जी | बड़ास्थान विद्याकुंड |
| १८ | २०१) | ,, ,, श्री रामसुन्दर दासजी | मुरादाबाद वाले सुन्दर भवन, राम कोट |
| १९ | २०१) | ,, ,, श्री रामउदारदासजी | माँझा श्री मौनी जी का स्थान |
| २० | २०१) | ,, . श्री रामगुलाम दासजी | |
| २१ | १५१) | ,, ,, श्री सत्यनारायण दास जी | बड़ी कुटिया |
| २२ | १२५) | ,, ,, श्री मौनीबाबा करपात्रीजी | रामकुञ्ज, रामघाट |
| २३ | १०१) | श्री रामायणी श्री रामस्वरूप जी | हनुमन्निवास |
| २४ | १०१) | श्री महान्त श्री अवधेशकुमार दासजी शास्त्री | शास्त्रीनगर |
| २५ | १०१) | ,, ,, श्री नारायणदासजी गुजराती | रामकुञ्ज |
| २६ | १०१) | ,, ,, श्री रामलगनदासजी | महाबीरिया हनुमानगढ़ी |

[५४७] आचार्य विजयः

| क्रमसं० | द्रव्यराशिः | नाम० | स्थानम् |
|---|---|---|---|
| २७ | १०१) | श्री महान्त श्री महावीर दासजी | रामचरण संस्कृत महाविद्यालय |
| २८ | १०१) | श्री रामायणी श्री भरतदासजी | जन्मस्थान |
| २९ | १०१) | श्री महान्त श्री राजकिशोरीशरण | फकीरे. रामजी का स्थान |
| ३० | १०१) | ,, ,, श्री वलरामदासजी | रङ्गमहल |
| ३१ | १०१) | ,, ,, श्री मैथिलीशरण जी | मधुर माधुरी कुंज |
| ३२ | १०१) | ,, ,, श्री मैथिलीरमण शरण जी | जानकी घाट, बड़ा स्थान |
| ३३ | १००) | श्री वैद्य श्री रामशरण दासजी | रघुनाथ भवन |
| ३४ | १०१) | श्री रामायणी श्री लक्ष्मणदासजी | सत्सङ्गाश्रम स्वर्गद्वार |
| ३५ | १०१) | श्री रामायणी श्री रामगोविन्द जी | विदेहजा दूल्हा निकुञ्ज |
| ३६ | १०१) | श्री माहन्त श्री सूर्यनारायण दासजी | करतलिया बाबा |
| ३७ | १०१) | ,, ,, श्री छविराम दासजी | इच्छा भवन स्वर्गद्वार |
| ३८ | १०१) | ,, ,, श्री धर्मदासजी | तेरह भाई त्यागी |
| ३९ | १०१) | ,, ,, श्री सियानाथ शरणजी सद्गुरु | पुरुषोत्तम भवन |
| ४० | १०१) | ,, ,, श्री रामअभिलाष शरणजी | सद्गुरु कुटीर |
| ४१ | १०१) | ,, रामप्रियाशरणजी पञ्जाबी | |
| ४२ | १०९) | ,, महान्त श्री मणिरामदासजी | हनुमान प्रताप कुञ्ज |
| ४३ | १०१) | ,, ,, श्री रामदास जी | मारुति सदन प्रमोदवन |
| ४४ | १०१) | ,, ,, श्री त्रिवेणीदासजी | नरसिंह भवन रायगंज |
| ४५ | १०१) | ,, ,, श्री सुरेन्द्रदास जी | राजीवलोचन निवास कनीगञ्ज, अयोध्या |
| ४६ | १०१) | ,, ,, श्री रघुवरदासजी | चतुर्भुजी स्थान; विद्या कुंड |
| ४७ | १०१) | ,, ,, श्री सीता विहारी शरणजी | राघवेन्द्र भवन नोन-हटिया कुण्ड अयोध्या |
| ४८ | १०१) | ,, ,, श्री उपेन्द्रदास पौहारी | मणिपर्वत स्थान |
| ४९ | १०१) | ,, ,, श्री जानकीरमण शरण जी | जयपुर मंदिर, अयोध्या |

| | | | |
|---|---|---|---|
| ५० | १०१) | श्री महान्त श्री रामचरण दासजी | सरयू विहारी मन्दिर, स्वर्गद्वार |
| ५१ | १०१) | ,, ,, श्री राममियाशरण जी | (रमैयाबाबा) हनुम-द्विहार कुञ्ज |
| ५२ | १०१) | ,, ,, श्री मिथिलाशरणजी | सियाराम बिला झुनकी घाट अयोध्या |
| ५३ | १०१ | श्री मैनेजर श्री कनक भवन श्री हरिप्रसादजी | अयोध्या |
| ५४ | १०१) | श्री महान्त श्री अवधकिशोर दासजी | (ज्यौतिषी) वगीरा मन्दिर, अयोध्या |
| ५५ | १०१) | ,, ,, श्री अयोध्यादासजी | (फलाहारी) जानकी निवास, अयोध्या |
| ५६ | १०१) | ,, ,, श्री जानकीजीवन शरणजी | श्री लालसाहब दरबार |
| ५७ | १०१) | ,, डा० श्री रामनारायण खन्नाजी | चौक, लखनऊ |
| ५८ | १०१) | श्री महान्त श्री जानकीजीवन शरणजी | विजयराघव कुञ्ज प्रमोदवन, अयोध्या |
| ५९ | १०१) | ,, ,, श्री प्रेमकला जी | दिव्य कलाकुञ्ज |
| ६० | १०१) | ,, ,, श्री वैजनाथ शरणजी | विबहुती भवन |
| ६१ | १०१) | ,, ,, श्री जगन्नाथ दासजी | लालमणि कोठा |
| ६२ | ५१) | श्री सागर सिंहजी | रामघाट, अयोध्या |
| ६३ | ५१) | श्री महान्त श्री हरिदासजी | लवकुश भवन अयोध्या |
| ६४ | ५१) | ,, ,, श्री रामदासजी | गोकुल भवन वशिष्ठ कुण्ड अयोध्या |
| ६५ | ५१) | ,, ,, श्री रामप्रताप दासजी | बड़ी छावनी अयोध्या |
| ६६ | ५१) | श्री रामायणी श्री रामभजन दासजी | हनुमत् मन्दिर रामघाट |
| ६७ | २१) | भक्तमाली चन्द्रकला शरणजी | |
| ६८ | ५१) | श्री महान्त श्री सत्यदेव दासजी | राघव जी मन्दिर |
| ६९ | ५१) | ,, ,, श्री सीता रमण शरणजी | राघव कुञ्ज रायगञ्ज |
| ७० | ५१) | ,, ,, श्री रामविलासदासजी | परम हंसाश्रम वासुदेवघाट अयोध्या |
| ७१ | ५१) | ,, ,, श्री रामजानकी शरणजी | जानकीवर भवन ऋणमोचन घाट |

| | | | |
|---|---|---|---|
| ७२ | ५१) | श्री महान्त श्री वदरीदाजी | बगही को स्थान, अयोध्याजी |
| ७३ | ५१) | ,, ,, श्री सुदामादासजी | सुदामा भवन रामकोट |
| ७४ | ५०) | रामायणी श्री जगदेवदासजी | अयोध्या |
| ७५ | ४१) | श्री महान्त श्री रामचन्द्रमा दासजी | भक्तमाली मन्दिर |
| ७६ | ३०) | ,, ,, श्री हरिराम शरणजी | प्रेमप्रभाकुञ्ज अयोध्या |
| ७७ | २५) | श्री जगन्नाथ भगत | ,, |
| ७८ | २५) | श्री अधिकारी सन्तदासजी | तपस्वीजी की छावनी |
| ७९ | २५) | श्री रसोइया सत्यनारायण शरणजी, | रायगञ्ज अयोध्या |
| ८० | २५) | श्री रसोइया किशोरी शरणजी | रायायञ्ज अयोध्या |
| ८१ | २५) | श्री महान्त श्री रामदासजी रामायणी | राउत मन्दिर |
| ८२ | २५) | ,, ,, श्री वासुदेवदासजी | राजेश्वरभवन, तुलसीवाड़ी |
| ८३ | २५) | ,, ,, श्री रामदासजी | रामलीलाभवन, तुलसीवाड़ी |
| ८४ | २०) | श्री रामायणी रामप्रेमशरणजी | |
| ८५ | १५) | श्री महान्त श्री रामप्रियादासजी | आरावाले, अयोध्या |
| ८६ | ११) | श्री महावीर शरणजी | हनुमानबाग, अयोध्या |
| ८७ | ११) | श्री महन्त पागलदासजी | सङ्गीताश्रम प्रमोदवन |
| ८८ | १०) | श्री भगवानदासजी | तपस्वी की छावनी |
| ८९ | १०) | ,, श्री रामदेवशरणजी | हनुमत् भवन अयोध्या |
| ९० | १०) | श्री रामभजनदासजी | सन्तनिवास अयोध्या |
| ९१ | ६) | श्री बाबा गोमतीदासजी | हनुमानगढ़ी, अयोध्या |
| ९२ | २) | श्री रामपञ्चमदासजी | विद्याकुण्ड |
| ९३ | १) | श्री बलरामदासजी | शिव उत, गया |

आचार्य विजयः !






श्रीब्रह्मदेवाचार्यः

परब्रह्म श्रीराम , जगजननी श्री कहँ दियो ।
श्री तें मन्त्र ललाम, जहि हनुमत दीन्हों मिथिलि



श्रीवशिष्ठाचार्यः



श्रीपराशराचा



श्रीवेदव्यासाचार्यः



श्रीशुकदेवाचार्यः



बौधायन श्री पुरुषोत्तमाचार्यः



श्रीगङ्गाधराचार्यः



श्रीसदाचार्यः श्रीरामेश्वराचार्यः



श्रीद्वारानन्दाचार्यः श्रीदेवानन्दाचार्यः



श्रीश्यामानन्दाच



श्रीश्रुतानन्दाचार्यः श्रीचिदानन्दाचार्यः



श्रीपूर्णानन्दाचार्यः श्रीश्रियानन्दाचार्यः



श्रीहर्यानन्दाचार्यः



श्रीराघवानन्दाचा



आनन्दभाष्यकार भगवान् श्रीरामानन्दाचार्यः त्रयोदश प्रधान शिष्यों सहित



(चिरञ्जीवी पयोहारी श्रीकृष्णदासजी
भक्तमालकार श्रीनाभास्वामीजी खडे हैं)



श्रीरामचरितमानसकार
गोस्वामीपाद श्रीतुलसीदासजी



श्रीरैदासजी की शिष्या
श्रीमीरां बाईजी

प्रकाशकः–जानकीदास श्रीवैष्णव, श्रीहनुमानवाटिका, श्रीअयोध्याजी ।
व्यवस्थापकः–श्रीवैष्णव-साहित्य-संस्थान, श्रीरामवल्लभाशरणाश्रम, आगरा रोड, जयपुर ।



मुद्रक : साहित्यकार प्रेस भदैनी, वाराणसी